नन्दशब्दः, यथा—स्थूलाभावाद्युपाधयः "[1]अस्थूलमनण्वह्रस्वम्" इत्यादयः शब्दाः । न च विज्ञानानन्दयोरेकत्वमेव, शब्दद्वयप्रयोगवैयर्थ्यात् । कथं चापर्यायशब्दाभिधेय एकत्वम्? तस्माद्दुःखोपरम एवानन्दशब्दस्य ब्रह्मण्यर्थ इति ।

अत्रोच्यते—विशिष्ट[2]स्याह्लादात्मनः प्रकाशस्य चान्द्रमसस्येव शब्दद्वयेन प्रतिपादनान्न दोषः; यथा [3]च—[4]प्रकृष्टः प्रकाशः सविता—इति । न च प्रकृष्टप्रकाशशब्दयोः पर्यायत्वम्; अथ च एक एवाभ्यामर्थविशेषः प्रतिपाद्यते प्रकाशविशेषः; न हि प्रकर्षोऽन्यः प्रकाशरूपात् सवितरि, न [5]प्रकाशरूपो वा प्रकर्षात्, अपि तु प्रकाशभेदः शब्दद्वयोपायः प्रतीयते । तथा "[6]विज्ञानमानन्दं ब्रह्म" इत्यानन्दभेदो विज्ञानभेदो वा ब्रह्मरूपमिति शब्दद्वयेनावगम्यते । परमतामप्यस्य केचित् साधनपारतन्त्र्यलक्षणायाः [7]क्षयितालक्षणायाश्च दुःखताया अभावान्मन्यन्ते । तदपि यथाशब्दं प्रतिपत्तेः शब्दप्रमाणकेऽर्थे नानुमन्यन्ते; न हि स्वरूपतः परमतासंभवे विरोध्यसंसर्गादुपचरिता सा युक्ता [8]भवितुम् । तस्मादात्मप्रकाशप्रकृष्टानन्दस्वभावमेव ब्रह्मेति युक्तम् । एवं च लौकिकानन्द [9]एतस्य मात्रेति युज्यते, अवच्छेदात्; दुःखनिवृत्तौ [10]तु दुर्योजमेतत् । इतश्चानन्दस्वभाव आत्मा, परप्रेमास्पदत्वात् । श्रूयते [11]हि [12]परप्रेमास्पदत्वम्—"[13]तदेतत्प्रेयः पुत्रात्" इति । प्रतीयते च; तथा हि—सर्वस्येयमात्माशीः कृमेरपि 'मा न [14]भूवम्, भूयासम्' इति । [15]सा च प्रियेऽवकल्पते; प्रेमा च सुखात्मनि; न दुःखे, नोभयरूपरहिते, द्वेषात् [16]उपेक्षणाच्च । अन्ये तु सुषुप्ते 'सुखमहमस्वाप्सम्' इति परामर्शादात्मनि सुखानुभवमाहुः; न ह्यननुभवे परामर्श एवं स्यात्, [17]सुषुप्ताभ्युप-

---

[1] Bṛh. 3-8-8.

[2] स्य ह्ला—A.

[3] खलु—A and B.

[4] प्रकृष्टप्रकाशः—A and B.

[5] प्रकाशरूपं प्रकर्षात्—A and B.

[6] Bṛh. 3-9-28.

[7] B omits क्षयितालक्षणायाः.

[8] आश्रयितुम्—A and B.

[9] एकस्य—C.

[10] C omits तु.

[11] च—B.

[12] परप्रेमास्पदं—C.

[13] Bṛh. 1-4-8

[14] भूवः—C.

[15] सापि—B.

[16] उपेक्षणाय—C.

[17] सुषुप्ताद्युपगमश्च—C.

गमश्च ; [1]न चान्यथानुभवे सुखमिति परामर्शः ; न च तत्रात्मनोऽन्यदनुभवनीयमस्ति ; तथा चाहरहर्[2]ब्रह्मलोकावाप्तिः श्रूयते । तत्रान्य आहुः—दुःखोपरमादपि तथा परामर्शसिद्धे[3]र्नैकान्ततः सुखित्वसिद्धिः । तान् प्रत्याहुः—अन्यथाभावेऽवगते दुःखोपरमनिमित्तः सुखशब्द इति युज्यते, अन्यथा मुख्यार्थतैव युक्ता । तत्राहुः—उभयथा व्यपदेशस्य दर्शनादुपपत्तेश्च न व्यपदेश[4]मात्रादर्थसिद्धिरित्यलमतिविस्तरेण ।

अत्र केचित्—भोगव्यवस्थानात्, मुक्तसंसारिविभागोपपत्तेश्च, दृक्छक्तेश्चार्थवत्त्वात् स्वात्मनि वृत्तिविरोधात्, दृश्येन च द्रष्टुरनुमानात्, दृश्यस्य च सुखदुःखमोहभेदवच्छब्दादिविभागोपलब्धेः, एकत्वश्रुतिः जातिदेशकालविभागाभावनिमित्तोपचारान्मन्यन्ते ; "[5]आत्मैवेदं सर्वम्" इति च तादर्थ्यनिमित्तोपचारात् । तान् प्रत्युच्यते—एकमिति । "[6]इन्द्रो मायाभिः पुरुरूप [7]ईयते" इति व्यक्तमेव नानारूपावगमो मायानिबन्धनो दर्शितः ; तत्र कथमेकत्वमुपचरितमिति वक्तुं शक्यम्? तथा व्यक्तो नानात्वनिषेधः—"[8]नेह नानास्ति किंचन" इति ; नानात्वदर्शननिन्दा च—"[8]मृत्योः स मृत्युमाप्नोति" इति; भेददर्शनस्य चाभावः—भेददृष्टिरिव भ्रमात—"[8]य इह नानेव पश्यति" इति इवशब्देन प्रकाशितो नोपचरित एकत्वेऽवकल्पते । काममुपचारादस्त्वेकत्वम्, न तु भाविकस्य नानात्वस्य निवृत्तिः । साप्युपचारेणैवोच्यत इति चेत्, न, प्रयोजनाभावात् ; सति निमित्ते प्रयोजने चोपचारः ; न च नानात्वनिवृत्त्युपचारे प्रयोजनं पश्यामः ; विपर्ययाच्च ; अभ्युदयाय निःश्रेयसाय वा नानात्वानिवृत्तिरुपचर्येत ; सा हि साध्यसाधनादिविभागं निवर्तयन्ती सर्वत्र चात्माभिमानमाविर्भावयन्ती तद्विरोधिनी स्यात् ; तथा हि सर्वतो निवृत्तस्य निःश्रेयसमित्यपि संवादः । तथा "[9]एकमेवाद्वितीयम्" इत्यवधारणाद्वितीयशब्दाभ्यां तस्यैवार्थस्य पुनः पुनरभिधानात् सर्वप्रकारभेदनिवृत्तिपरता श्रुतेर्लक्ष्यते ; अभ्यासे हि भूयस्त्वमर्थस्य भवति, यथा 'अहो दर्शनीया, अहो दर्शनीया' इति ; न न्यूनत्वमपि ; दूरत एवोपचरितत्वम् ।

---

[1] नान्यथा सुखानुभवे—C.
[2] ब्रह्मलोकप्राप्तिः—A and B.
[3] नैकान्ततः—C.
[4] मात्रात्तत्सिद्धि—B.
[5] Chānd. 7-25-22.
[6] Bṛh. 2-5-19.
[7] ईयते युक्ता इति—B.
[8] Bṛh. 4-4-19.
[9] Chānd. 6-2-1.

यत्तु भोगव्यवस्थानादिति, तत्रोच्यते—कल्पितादपि भेदाद्भोगव्यवस्था-सिद्धेरसारमेतत्। तथा हि—एकस्मिन्नप्यात्मनि सर्वगते शरीरपरिमाणेऽणुपरिमाणे वा कल्पितभेदनिबन्धना भोगव्यवस्था दृश्यते—पादे मे वेदना, शिरसि मे वेदना—इति। न हि पादस्य शिरसो वा वेदनयाभिसंबन्धः, अज्ञत्वात्; शरीरपरिमाणात्मवादिनोऽपि नावयवा एव वेदनाभाजः, आत्मनस्तद्विरहप्रसङ्गात्। स्यादेतत्—ऐकात्म्ये [1]तद्वदेव देहान्तरभोगानुसंधानं स्यात्। अन्यदिदानीमेतत्। अस्ति ताव[2]द्भोगव्यवस्था। अपि च तत्रापि न प्रदेशः प्रदेशान्तरवेदनामनुसंदधाति, तथेहापि न जीवो जीवान्तरवेदनामनुसंदधातीति समानम्; तथा मणिकृपाणदर्पणादिषु मुखादीनां वर्णसंस्थानभेदव्यवस्थानमुपलभ्यते भेदाभावेऽपि। एवं च मुक्तसंसारिविभागोऽप्युपपन्नः; तथा हि—एकोऽप्यात्मा प्रदेशैः सुखदुःखादिभिर्युज्यमानः तत्र [3]बद्ध इव इतरत्र मुक्त इव [4]च गम्यते; यथा मलीमसे दर्पणतले मलीमसं मुखं विशुद्धे विशुद्धं दर्पणरहितं च गम्यमानं तदुपाधिदोषासंपृक्तम्। स्यादेतत्—कल्पना प्रतिपत्तुः प्रत्ययस्य धर्मः न वस्तु व्यवस्थापयितुमलम्; न खलु प्रतिपत्तुः प्रत्ययमनु विपरिवर्तन्ते वस्तूनि; न चोपचरितात् कार्यमुपपद्यते; [5]न ह्युपचरिताग्निभावो माणवको दहति। उदाहृता तु व्यवस्था। सत्यम्; विभ्रमो हि सः। अत्रापि विभ्रमत्वं न दण्डवारितम्; कल्पितोऽपि चाहिदंशो मरणकार्याय कल्पते, प्रतिसूर्यकश्च प्रकाशकार्याय।

यदपि दृश्येनैव द्रष्टुरनुमानाद्द्रष्टृदृश्ययोर्भेदः, दृश्यस्य च सुखादिभेदोपलब्धेर्नानात्वमिति, तदप्यसत्; न द्रष्टर्यप्रकाशे यतो [6]दृश्यस्य सिद्धिरस्तीत्युक्तम्। दृश्यभेदोपलब्धिश्च नास्ति, प्रमाणस्यानवच्छेदकत्वादिति वक्ष्यते। दृक्छक्तेश्चार्थवत्त्वं स्वात्मोपयोगात्; न च स्वात्मनि वृत्तिविरोधः; प्रदीपवत् प्रमाणफलवच्चेत्युक्तम्। अपि च एकत्व एवायं द्रष्टृदृश्य[7]भावोऽवकल्पते, द्रष्टुरेव चिदात्मनस्तथातथा [8]विपरिणामाद्विवर्तनाद्वा; नानात्वे तु

---

[1] तद्विदेव देहान्तरे—B.
[2] A and C omit भोग.
[3] बन्ध इव—B; बन्ध एव—C.
[4] A and B omit च.
[5] नोप—C.
[6] दृश्यासिद्धि—B and C.
[7] भागो—B; विभागो—A.
[8] A omits वि.

[1]विविक्तस्वभावयोरसंसृष्टपरस्पर[2]स्वरूपयोरसंबद्धयोः कीदृशो द्रष्टृदृश्यभावः; न हि नित्यासंसृष्टं चेतितमिति युज्यते । एकान्तःकरणसंक्रान्तावस्त्येव संबन्ध इति चेत्, न, चितेः शुद्धत्वात् अपरिणामात् अप्रति[3]संक्रमाच्च । दृश्या बुद्धिश्चितिसंनिधिस्तच्छायया विवर्तत इति चेत्, अथ केयं तच्छायता? [4]अतदात्मनस्तदवभासः; न तर्हि परमार्थतो दृश्यं दृश्यते; परमार्थतश्चादृश्यमानं [5]द्रष्टृव्यतिरिक्तमस्तीति दुर्भणम् । योऽपि मन्यते—दृश्यतयैव दृश्यं व्यवस्थाप्यते, न संबन्धेन; दर्शनं च 'इदम्' इति पराग्रूपविषयम् । स वक्तव्यः—सत्यं पराग्रूपविषयम्; तत्त्वेकस्यैवात्मनस्तथा तथा [6]विपरिणामाद्विवर्तनाद्वा दर्पणतल[7] इवात्मनः; तथा हि दर्पणतलस्थमात्मानं विभक्तमिवात्मनः प्रत्येति; चितेस्तु [8]विभक्तमसंसृष्टं तया चेत्यत इति [9]दुरवगमम् । [10]एवं च द्रष्टुरव्यतिरेको दृश्यस्याम्नायते—"[11]आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति" इति । तस्मात् सुष्ठूक्तमेकमिति ।

क्षणिकज्ञानात्मवादिनस्तु सवासनक्लेशसमुच्छेदाज्ज्ञानोपरमलक्षणामेव ब्रह्मप्राप्तिमाहुः; तथा च श्रूयते—"[12]न प्रेत्य संज्ञास्ति" इति; अन्ये तु समुच्छिन्नसकलवासनत्वाद्विधूतविषयाकारोपप्लवविशुद्ध[13]ज्ञानोत्पादलक्षणाम् । अनादिनिधनत्वे हि नापनेयं नोपनेयं वा किंचिदस्तीति तदर्थानि [14]शास्त्राणि तदर्थाश्च प्रवृत्तयो व्यर्थाः स्युः; तथा हि—विद्यास्वभावं चेत्, न किंचिन्निवर्त्यमवाप्तव्यं वा स्यात्, अविद्याया अभावाद्विद्यायाश्च भावात्; अविद्यास्वभावं चेत्, [15]तस्य नित्यत्वे पूर्वस्वभावात्यागात् स्वभावान्तरानापत्तेश्च; एवमुभयस्वभावत्वेऽपि विद्यायाः प्राप्तत्वादविद्यायाश्चोच्छेत्तुमशक्यत्वात् । तान् प्रत्याह—अमृतमजमिति । न च शास्त्राणां मुक्त्यर्थानां च प्रवृत्तीनां वैयर्थ्यम्, अविद्याया निवर्त्यत्वात्; सर्वप्रवादेषु चानादिरप्यविद्योच्छेद्याभ्युपगम्यते । न ब्रूमोऽनादेर्नोच्छेद [16]इति, किंतु नित्यस्य ब्रह्मणः स्वभावस्य;

---

1 विवृक्त—B.
2 A and B omit स्व.
3 संक्रमत्वाच्च—A and B.
4 अतथात्मनस्तथावभासः—B; अतदात्मनस्तथावभासः—A.
5 द्रष्टुर्व्यं A and B.
6 परिणामात्—A and B.
7 B omits तले.
8 विविक्त—A.
9 दुरधिगमम्—B.
10 B omits एव च.
11 Cf. Bṛh. 4-5-6.
12 Bṛh. 2-4-12.
13 विज्ञानो—A.
14 A adds च.
15 A and B omit तस्य.
16 C omits इति.

अथाविद्या न ब्रह्मणः स्वभावः, अर्थान्तरं ब्रह्मण आपद्येत ; न वा स्यात्, तत्र किं निवर्त्यम्? अथ मतम्—अग्रहणमविद्या, सा कथमर्थान्तरं स्यात्? न चानिवर्त्या, सर्वप्रमाणव्यापाराणामग्रहणनिवृत्त्यर्थत्वात् ; तदप्ययुक्तम् ; तत्त्वाग्रहणात्मिका ह्यविद्या तत्त्वग्रहणात्मिकया विद्यया निवर्त्यते ; सा च नित्या ब्रह्मणि ; न च ब्रह्मणोऽन्योऽस्ति, यस्य तत्त्वाग्रहणं ब्रह्मणि प्रयत्नलभ्यया विद्यया [1]निवर्त्येत ; ब्रह्मणि तु युगपद्ग्रहणाग्रहणे विप्रतिषिद्धे ; अविप्रतिषेधे वा न कदाचिदविद्या निवर्त्येत । यस्य तु विपर्ययग्रहणमविद्या, तस्य ब्रह्मणः स्वभावश्चेत् स नित्यः कथं निवर्त्येत? अस्वभावश्चेदर्थान्तरमापद्येत । कस्य च तदिति वाच्यम्, ब्रह्मणोऽन्यस्याभावात् ; ब्रह्मण एवेति चेत्, विप्रतिषेधः, तस्य विद्यास्वरूपत्वात् ; अविप्रतिषेधे वा[2] केन निवृत्तिः?

अत्रोच्यते—नाविद्या [3]ब्रह्मणः स्वभावः, नार्थान्तरम्, नात्यन्तमसती, नापि सती ; एवमेवेयमविद्या माया मिथ्यावभास इत्युच्यते । स्वभावश्चेत् कस्यचित्, अन्योऽनन्यो वा [4]परमार्थ एवेति नाविद्या ; अत्यन्तासत्त्वे खपुष्पसदृशी न व्यवहाराङ्गम् ; तस्मादनिर्वचनीया । सर्वप्रवादिभिश्चेत्थमियमास्थेया । तथा हि—शून्यवादिनां सत्त्वे यथादर्शनम्, नाविद्या ; खपुष्पतुल्यत्वे न [5]व्यवहाराङ्गम् । विज्ञानमात्रवादिनोऽपि यथावभासं [6]ज्ञानसद्भावे नार्थापह्नवः, नीलपीतादेर्ज्ञेयाकारस्य बहिरवभासानपह्नवात्, अत्यन्तासत्त्वे बहिरवभासायोगात्, खपुष्पवत् । बाह्यार्थवादिनामप्यनित्यादिषु नित्यादिख्यातयो रजतादिविभ्रान्तयश्चावभासमानरूपसद्भावे नाविद्यात्वमश्नुवीरन् ; [7]नात्यन्तासत्त्वे तन्निबन्धनः कश्चन व्यवहारः स्यात् । स्यादेतत्—[8]अवभासमानं रूपं मा भूत्, अवभासस्तु सन्नेव, स चाविद्येति गीयते । नैतत् सारम् ; अवभासमानेऽसति तदवभासोऽपि सत्यतो दुर्निरूपः ; अवभासमात्रं तु स्यात् ; तदवभास इत्यपि भ्रान्तिरेव । तस्मान्नाविद्या सती, नाप्यसतीति । अत [9]एव चास्या निवृत्तिरदृढस्वभावायाः, मायामात्रत्वात् ; अन्यथास्वभावे दृढं व्यवस्थितायाः कथमन्यथात्वम्? स्वभावाहानात् ;

---

[1] निवर्त्तेते—B.
[2] A omits वा.
[3] ब्रह्मस्वभावः—A.
[4] चरमार्थ—C.
[5] व्यवहारः—A and B.
[6] ज्ञेय—A.
[7] अत्यन्ताभावे न—A and B.
[8] अवभासमानरूपं—B.
[9] एवास्या—B.

शून्यत्वे स्वयं निवृत्तत्वात् । एवं च नाद्वैतहानम्, न निवर्तनीयस्याभावो वा[1] ।

यत्तु कस्याविद्येति; जीवानामिति ब्रूमः । ननु न जीवा ब्रह्मणो भिद्यन्ते; एवं ह्याह—"[2]अनेन [3]जीवेनात्मनानुप्रविश्य" इति । सत्यं परमार्थतः; कल्पनया तु भिद्यन्ते । कस्य पुनः कल्पना भेदिका? न तावद्ब्रह्मणः, तस्य विद्यात्मनः कल्पनाशून्यत्वात्; नापि जीवानाम्, [4]कल्पनायाः प्राक् तदभावात्, इतरेतराश्रयप्रसङ्गात्—कल्पनाधीनो हि जीवविभागः, जीवाश्रया कल्पनेति ।

अत्र केचिदाहुः—वस्तुसिद्धावेष दोषः—नासिद्धं वस्तु वस्त्वन्तरनिष्पत्तयेऽलम्, न मायामात्रे; [5]न हि मायायां काचिदनुपपत्तिः; अनुपपद्यमा[6]नार्थैव हि माया; उपपद्यमानार्थत्वे यथार्थभावान्न माया स्यात् । अन्ये तु—अनादित्वादुभयोरविद्या[7]जीवयोर्बीजाङ्कुरसंतानयोरिव नेतरेतराश्रयत्वमप्रक्लृप्तिमावहतीति वर्णयन्ति । तथा चोक्तमविद्योपादानभेदवादिभिः—"[8]अनादिरप्रयोजना चाविद्या" इति; तत्रानादित्वान्नेतरेतराश्रयत्वदोषः, अप्रयोजनत्वाच्च भेदप्रपञ्चसर्गप्रयोजनपर्यनुयोगावकाशः । यदेके पर्यनुयुञ्जते—"[9]प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" [10]इति, तत्र परस्य ब्रह्मणः प्रपञ्चसर्गप्रयोजनं वाच्यम्; न तावत् परानुग्रहः, प्राक् सर्गादनुग्राह्याणामभावात्, दुःखोत्तरत्वाच्च सर्गस्य; नात्मार्थक्रीडादिः, आप्तकामत्वादिति—तस्य अविद्यानिबन्धने सर्गे नावकाशः; न ह्यविद्या प्रयोजनमपेक्ष्य प्रवर्तते; न हि गन्धर्वनगरादिविभ्रमाः समुद्दिष्टप्रयोजना भवन्ति । तथा "[11]पुरुषस्य विशुद्धस्य नाशुद्धा विकृतिर्भवेत्" इत्यपि प्रत्युक्तमविद्यानिबन्धने[12] सर्गविभागे । अपि च कृतार्थानामाप्तकामानामेव क्रीडादिप्रवृत्तिरुल्लासात्; प्रार्थनापरिक्लिष्टचेतसां तु रतिविरहिणामनभिमतैव क्रीडा भवति । न च वैषम्यनैर्घृण्यदोषः; न हि मायाकारस्य विविधं प्रपञ्चं

---

[1] A and C omit वा.
[2] Chānd. 6-3-2.
[3] जीवेनात्मनेति —B.
[4] प्राक्कल्पनायाः—B.
[5] न हि मात्रामायायाः—B.
[6] नार्थे वाहि—(नार्थ एव हि) B.
[7] जीवविभागयोः—A.
[8] . . . . .
[9] Ślōka-Vārtika, page 653.
[10] B omits इति.
[11] Ślōka-Vārtika page, 662.
[12] निबन्धने हि—B and C.

[1]दर्शयतोऽङ्गसाकल्यवैकल्यविभागेन रागद्वेषविभागः । चित्र[2]पुस्तादिकृतां वा विकलाविकलादिभेदेन चित्राणि तानि तानि कुर्वताम्, बालानां च मृन्मयादिभिः प्रतिकृतिभेदैर्विचित्रैः क्रीडतां न तेषु किंचिद्वैषम्यं नैर्घृण्यं वा । कर्माशयानुरोधेन च विदधतो वैचित्र्यं न दोष इत्याचार्याः । न चानीश्वरत्वदोषः; न हि सेवाभेदानुरोधेन फलभेदप्रदः प्रभुरप्रभुर्भवति । तथा शुद्धस्याप्यशुद्धो विकारः; न हि प्रकृतिविकारयोरत्यन्तमवैलक्षण्यम्; प्रकृतिविकारभाव एव न स्यात् । द्रवाणां चापां करकादिः कठिनो विकारः, तथाचेतनस्य गोमयस्य चेतनो वृश्चिक इत्यादि बहुविधं प्रकृतिविकारवैलक्षण्यमुत्प्रेक्षितव्यमित्यलमतिप्रसङ्गेन ।

ननु जीवा अपि ब्रह्मतत्त्वाव्यतिरेकाद्विशुद्धस्वभावाः; तत् कथं तेष्वविद्यावकाशः? वार्तमेतत्; न [3]च तावद्बिम्बादवदातात् प्रतिबिम्बं कृपाणादिषु भिन्नम्; अथ च तत्र श्यामतादिरशुद्धिरवकाशं लभते । विभ्रमः स इति चेत्, समानमेतज्जीवानामप्यशुद्धिर्विभ्रमः; अन्यथा दुरवापैव विशुद्धिः स्यादित्युक्तम् । स्यादेतत्—[4]कृपाणादयो मुखे विभ्रान्तिहेतवः, तथेहापि विभ्रमहेतुर्वाच्यः । अनादौ विभ्रमे हेत्वन्वेषणमसांप्रतमिव । तथाच "[5]स्वप्नादिवदविद्यायाः प्रवृत्तिस्तस्य किंकृता" इति प्रत्युक्तम् । ननु स्वाभाविक्यनादिरविद्या निर्हेतुः, सा कथमुच्छिद्येत? सर्वशास्त्राण्येव तावन्नैसर्गिक्या अविद्याया उच्छेदाय प्रस्थितानि; अपि च पार्थिवानामणूनां श्यामतानादिः पाकजेन वर्णेन निवर्त्यते । ननु स्वाभाविकमपि किंचिद्विलक्षणप्रत्ययोपनिपातान्निवर्तताम्; ऐकात्म्यवादिनस्त्वनागन्तुकार्थस्य तदभावात् कुतो निवृत्तिः? न खल्वात्मस्वभाव एव विद्या अविद्यानिवर्तिका, अविद्यायास्तया सह वृत्तेरविरोधात्; विरोधे वा नित्यनिवृत्तेर्नित्यमुक्तं जगत् स्यात् । न च विद्यान्तरमागन्तुकं विरोधि निवर्तकम्, ऐकात्म्यवादे व्यतिरिक्तस्य तस्यायोगात्, आगन्तुकस्य ब्रह्म[6]स्वभावत्वानुपपत्तेश्च । तदुक्तम्—

"[5]स्वाभाविकीमविद्यां तु नोच्छेत्तुं कश्चि[7]दर्हति ।
विलक्षणोपपाते हि नश्येत् स्वाभाविकं क्वचित् ॥

---

[1] दर्शयतोंश(श)—B.

[2] पुस्तकादि—A and B.

[3] C omits च.

[4] कृपाणादयो भ्रान्ति—C.

[5] Śloka-Vārtika, page 663.

[6] स्वभावानु—A and C.

[7] दर्हतीति—B.

न त्वैकात्म्याभ्युपायानां हेतुरस्ति विलक्षणः ।”

इति । अत्रोच्यते— उक्तमेतज्जीवानामविद्याकलुषितत्वम्, न ब्रह्मणः; तद्धि सदा [1]विशुद्धनित्यप्रकाशमनागन्तुकार्थम्; अन्यथा ब्रह्मभूयं गतस्यापि नाविद्या निवर्तेत; तत्रानिर्मोक्षः । अथ ब्रह्मैव संसरति ब्रह्मैव मुच्यते, एकमुक्तौ सर्वमुक्तिप्रसङ्गः; यतो भेददर्शनेन ब्रह्मैव संसरति, अभेददर्शनेन च [2]मुच्यते; तत्र सर्वविभागप्रत्यस्तमये युगपत् सर्वमोक्षप्रसङ्गः । तस्मादविद्यया जीवाः संसारिणः, विद्यया मुच्यन्ते । तेषां च निसर्गजाविद्याकलुषाणां विलक्षणप्रत्ययविद्योदयेनोपपद्यतेऽविद्यानिवृत्तिः । न हि जीवेषु निसर्गजा विद्यास्ति; अविद्यैव [3]हि नैसर्गिकी; तस्या [4]आगन्तुक्या विद्यया प्रविलयः । अव्यतिरेकेऽपि च ब्रह्मणो जीवानां बिम्बप्रतिबिम्बवद्विद्याविद्याव्यवस्था व्याख्याता । केन पुनरुपायेनाविद्या निवर्तते? श्रवणमननध्यानाभ्यासैर्ब्रह्मचर्यादिभिश्च साधनभेदैः शास्त्रोक्तैः । कथम्? योऽयं श्रवणमननपूर्वको ध्यानाभ्यासः प्रतिषिद्धाखिलभेदप्रपञ्चे “[5]स एष नेति नेति” आत्मनि, स व्यक्तमेव भेददर्शनप्रतियोगी तन्निवर्तयति; [6]स च सामान्येन भेददर्शनं प्रविलापयन्नात्मनापि प्रविलीयते । न [7]च श्रोतृश्रवणश्रोतव्यादिविभागपरिहाण्या विभागान्तरनिवृत्तिविषयाः श्रवणादयः, अपि तु सामान्येन । तथा च तस्मिन्नपि प्रविलीने स्वच्छः परिशुद्धोऽ[8]स्यात्मा प्रकाशते; यथा रजःसंपर्ककलुषितमुदकं द्रव्यविशेषचूर्णरजः प्रक्षिप्तं रजोन्तराणि संहरत् स्वयमपि संह्रियमाणं स्वच्छां स्वरूपावस्थामुपनयति, एवमेव श्रवणादिभिर्भेददर्शने प्रविलीयमाने विशेषाभावात्तद्गते च भेदे, स्वच्छे परिशुद्धे स्वरूपे जीवोऽवतिष्ठते । अविद्ययैव [9]तु ब्रह्मणो जीवो विभक्तः, तन्निवृत्तौ [10]ब्रह्मस्वरूपमेव भवति; यथा घटादिभेदे तदाकाशं परिशुद्धं परमाकाशमेव भवति । स्यादेतत्— कथं भेदेनैव भेदः प्रतिसंह्रि[11]यते? भेदप्रतिपक्षत्वात्, यथा रजसा रजः— इत्युक्तम् । व्यक्तमेव भेदातीत[12]ब्रह्मणि श्रवणमननध्यानाभ्यासानां भेददर्शनप्रतिपक्षत्वम[13]विद्यानुबन्धेऽपि; यथा पयः पयो जरयति

[1] विशुद्धं—B.
[2] विमुच्यते—B.
[3] A and B omit हि.
[4] आगन्तुकया—B.
[5] Brh. 3-9-26.
[6] सा च—B.
[7] हि—A.
[8] ऽप्यस्यात्मा—B.
[9] A and B omit तु.
[10] जीव—A and B.
[11] ह्रियेत—B.
[12] ब्रह्मश्रवण—A.
[13] विद्याकृतत्वेऽपि—B.

स्वयं च जीर्यति, यथा च विषं [1]विषान्तरं शमयति स्वयं च शाम्यति। यथोक्तम्—

"[2]विद्यां चाविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते॥"

एतदुक्तं भवति—विद्याविद्ये द्वे अप्युपायोपेयभावात् सहिते; नाविद्यामन्तरेण विद्योदयोऽस्ति; साध्या तर्हि, तथा च कृतकत्वादनित्यत्वम्, अत आह—अविद्यया मृत्युमिति। एषोऽर्थः—नाविद्या विद्यायाः साधनम्; किंतु अविद्यया श्रवणादि[3]लक्षणयाप्यविद्यैव निवर्तते; मृत्युरित्यविद्यैवोच्यते; तस्यां निवृत्तायां [4]विद्यारूपोपलक्षित[5]ममृतमश्नुते स्वरूपावस्थानं स्फटिकमणिरिवो[6]पाध्याश्रयनिबन्धनोपरागत्यागात्; अन्तरेण प्रयत्नान्तरं [7]विद्यास्वरूपेऽवतिष्ठत इति। अन्योऽर्थः—नाविद्या विद्यारहितास्ति। तथाहि—भेददर्शनमपि न प्रकाशशून्यम्; [8]तदभावे न भेदः प्रकाशेत। तस्मात् पर एव प्रकाशस्तथा तथा प्रकाशते; यथोक्तम्—"[9]तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति; किंतु अविद्यानु[10]बद्धः; यथोक्तम्—"[11]सर्वं दर्शनमन्यूनमविकल्पं [12]विकल्पितमिव त्वयमान्तरः पुरुषोऽभिमन्यते"। तथा न विद्या ऐकात्म्यश्रवणादिलक्षणा विनाविद्यया, श्रोतृश्रवणादिविभागानु[13]बद्धत्वात्; तत्राविद्ययैव विद्याप्रत्यासन्नया विभागदर्शनमविद्यां तीर्त्वा विद्यालक्षणे नित्ये स्वरूपेऽवतिष्ठते, प्रतिबिम्बकलुषितमिवोदकं तन्निवृत्तौ। स्यादेतत्—ऐकात्म्ये विभागस्या[14]सत्यत्वात्, तदधि[15]ष्ठानश्रवणादयोऽप्यसत्याः कथं कस्मैचित् कार्याय स्युः? असत्याच्च [16]सत्यप्रतिपत्तिर्मिथ्यैव, यथा धूम इति मिथ्यागृहीताद्वह्न्याप्यादिति। उच्यते; नायं नियमः—असत्यं न कस्मैचित् कार्याय [17]भवतीति; भवति हि माया प्रीतेर्भयस्य च निमित्तम्, असत्यं च

---

[1] विषान्तराणि—B
[2] Īśa. 11.
[3] लक्षणया विद्यैव निवर्त्यन्ते—B.
[4] विद्यया स्वरूपो—B.
[5] अमृतत्व—B.
[6] C omits उपाध्याश्रयनिबन्धन; उपाश्रयनिबन्धन—B.
[7] विद्यायाः—B.
[8] तस्याभावे—A.
[9] Katha. 2-2-15.
[10] बन्धः—C. Ānandapūrṇa reads "अविद्यानिबन्धनः" in his commentary.
[11] . . . . . . .
[12] विकल्पमिव—A.
[13] बन्धत्वात—C.
[14] स्यासत्त्वात—A.
[15] ष्ठानाः—A and B.
[16] A omits सत्य.
[17] प्रभवतीति—B.

सत्य[1]प्रतिपत्तेः, यथा रेखागवयो लिप्यक्षराणि च। स्यादेतत्—स्वरूपेणेदं सत्यम्, न शून्यम्; ऐकात्म्यवादिनस्तु स्वरूपेणाप्युपायानामसत्यता। उच्यते—सन्तु [2]स्वरूपेण सत्याः; येन [3]तु रूपेण प्रतिपादकाः तदसत्यम्; कार्योपयोगरहिता स्वरूपसत्यता व्यर्था। अपि च अभेददर्शनोपाया अपि न स्वरूपेण मिथ्या, यतो ब्रह्मैवैषां स्वरूपम्; [4]तत्र ब्रह्मैवाविद्यानु[5]बद्धं ब्रह्मप्राप्त्युपायः, यथा रेखादयः 'ककारोऽयम्, गवयोऽयम्' इत्यविद्यमानरूपेणैव वर्णादीनां बोधकाः। योऽपि मन्यते—न रेखागवयो गवयत्वेन गवयान्तराणां प्रतिपत्तिहेतुः, [6]न रेखा वर्णत्वेन; किंतु सादृश्यात्—एतत्सदृशो गवय इति, [7]रेखा च समयात्—ईदृशीं रेखां दृष्ट्वायं वर्णः स्मर्तव्य इति। तस्य लोकविरोधः; तथा हि—बाला [8]हि रेखासु [9]वर्णत्वेनैव व्युत्पाद्यन्ते, लोके[10]ऽभेदेन च व्यपदेशः—'अयं गवयः' इत्याख्यातुः, प्रतिपत्तुश्च—'गवयो[11]ऽयं मया दृष्टः' इति। तथा असत्यात् प्रति[12]बिम्बाच्चादृष्टस्य [13]प्रतिबिम्बहेतोर्विशिष्टदेशावस्थस्यानुमानं न मृषा; शब्दाच्च नित्यादसत्यदीर्घादिविभागभाजोऽर्थभेदप्रतिपत्तिर्न मिथ्या। [14]तथा मिथ्याहिदंशो मरणहेतुः; ततश्च मरणमूर्च्छाद्यनुमानं न वितथम्, कालादिभेदयुक्तात् सत्याहिदंशादिव।

यस्यैव [15]क्षणिकज्ञानमात्मा तस्यैव तूपनेयापनेयासंभवान्मोक्षशास्त्राणां [16]मुक्त्यर्थानां च प्रवृत्तीनां वैयर्थ्यम्; क्षणिकस्य स्वरसेनैव [17]निर्वाणात्, अनाधेयातिशयत्वाच्च; एकस्मिन् क्षणे विशेषाविशेषविभागाभावात्, [18]क्षणस्याभेद्यत्वात्। यदि मतम्—संततावुपनेयमपनेयं च समस्तीति, तदसत्; कर्ता भोक्ता च संसारी; न च संततिरवस्तुत्वात् कर्त्री भोक्त्री वा। कथं वास्तवो मुक्तिबन्धौ? अथ मतम्—नात्यन्तमसती संततिः, नापि सती, कल्पनया तु सती, तद्विमोक्षाय शास्त्राणि प्रवृत्तयश्चेति; कल्पितस्तर्हि संसरति विमुच्यते च; कल्पितविषयौ च संसारविमोक्षावपि कल्पि-

---

[1] प्रतीतेः—A.
[2] A and B omit स्वरूपेण.
[3] A and B omit तु.
[4] तत्र च—A.
[5] बन्धं—A and B.
[6] न च रेखा—B.
[7] रेखाश्च—A and B.
[8] A omits हि.
[9] वर्णत्वेन—A and B.
[10] अभेदेनैव व्यप—B.
[11] C omits अयं.
[12] बिम्बाददृष्टस्य—B.
[13] A adds च.
[14] तथाहि—A and B.
[15] क्षणिकं—B.
[16] मुक्त्यर्थानां प्रवृत्तीनां च—A.
[17] स्वरसेन परिनिर्वाणात्—A.
[18] क्षणिकस्य—C.

तावेव; तदेतदस्माभिरुच्यमानं किं न भवतोऽभिमतम्? उक्तमेतत्—कल्पितविषयावेव संसारमोक्षौ, न परस्मिन् परमार्थे। अपि च अभ्युपगम्यापि क्षणिकं विज्ञानमनादिनिधनाया एव संततेर्मुक्तिसंसारावभ्युपेतौ। तथा हि—संततेः अनादित्वात् संसारस्य अवस्तुत्वाच्च नोत्पादः; नोच्छेदः, [1]अवस्तुत्वात् अन्त्यक्षणानुपपत्तेश्च। स ह्यन्त्यः क्षणः किंचित् कार्यमारभेत वा, न वा; आरम्भे नान्त्य इति तदभावान्नोच्छेदः; अनारम्भे सर्वशक्तिविरहादसल्लक्षणात् तस्यासत्त्वम्; तस्मिन्नसति सर्वेऽप्यनेनैव क्रमेणासन्तः संतानिनः [2]स्युः; तदभावे संतान एव नास्ति, कस्योच्छेदः? अथारभत एव कार्यमन्त्यः संतानान्तरे सार्वज्ञे, सति हेतुफलभावे कथं संतानान्तरम्? न हेतुफलभावादन्यदेकसंततेर्व्यवस्थापकम्। न हेतुफलभावमात्रादेकसंततिव्यवस्था, अपि तु उपादानहेतुफलभावात्; न च सार्वज्ञस्य ज्ञानस्य चरमक्षण उपादानम्; आलम्बनप्रत्ययो हि सः; समनन्तरप्रत्ययश्चोपादानम्; स्वसंततिपतितसमनन्तर[3]प्रत्ययजन्यं च सार्वज्ञं ज्ञानम्; आलम्बनप्रत्ययोऽस्य चरमक्षणः। यदि तुल्यजातीयमुपादानम्, न मुक्तचित्तसार्वज्ञज्ञानयोस्तुल्यजातीयता नास्ति। योऽपि मन्यते—[4]विलक्षणकार्ये संतत्युच्छेद इति, तस्य रूपज्ञान[5]प्रबन्धे विषयान्तरविज्ञानान्निर्वाणप्रसङ्गः; कथंचित्तुल्यतायामनिर्वाणमित्यलमतिप्रसङ्गेन।

केचित्तु—विज्ञानगुणमविज्ञानस्वभावमात्मतत्त्वमिच्छन्तः समुत्खातसकलविशेषगुणे स्वरूपे तस्य स्थितिं ब्रह्मप्राप्तिमाहुः; सा हि तस्यावस्था देहेन्द्रियाद्युपाधिभिरकृतावच्छेदा बृहती ब्रह्मेति गीयते। ज्ञानस्वभावत्वे च सर्वगतस्य देहेन्द्रियनिरपेक्षस्य नित्यत्वात् ज्ञानस्वरूपस्य संनिहितविविधज्ञेयभेदस्य बृहत्तरः संसारः स्यात्। अथ न विजानाति किंचित्, न तर्हि ज्ञान[6]स्वरूपः; सकर्मको हि जानात्यर्थो नासति कर्मसंबन्धे युज्यते। तान् प्रत्याह—विज्ञानमिति। कुतः? श्रूयते हि—"[7]सत्यं ज्ञान[8]मनन्तं ब्रह्म" "[9]विज्ञानमानन्दम्" इत्यादि। न चोक्तदोषः; यथा दाहकोऽपि वह्निरुपनीतं दाह्यं दहति, नानुपनीतमदाह्यं च; यथा च स्फटिकदर्पणादयः

---

[1] A omits अवस्तुत्वात्.

[2] C omits स्युः.

[3] प्रत्ययोपजन्यं त्वसार्वज्ञं—B; प्रत्ययं च सार्वज्ञ—A.

[4] विलक्षणे—A and B.

[5] प्रतिबन्धे—C.

[6] स्वभावः—A and B.

[7] Tait. 2-1-1.

[8] C omits अनन्तं ब्रह्म.

[9] Bṛh. 3-9-28-7.

स्वच्छाः प्रकाशस्वभावा अपि यदेवोप[1]निधीयते योग्यं च तच्छायापत्त्या तदेव दर्शयन्ति; एवमयं पुरुषो भोगायतनशरीरस्थो भोगसाधनेन्द्रियोपनीतान् शब्दादीन् भुङ्क्ते, तच्छायापत्त्या नित्यचैतन्योऽपि; अतश्च न सर्वस्य सर्वदर्शित्वप्रसङ्गः; न च मुक्तौ बाह्यविषयोपभोगः। स्यादेतत्—सर्वगतस्य सर्वमेव विषयत्वेन वर्तते; तत्र किमुपनेयम्? उच्यते—यस्याप्यज्ञस्यात्मनो ज्ञानं मनःसंयोगादिजन्यम्, तस्यापि सर्वमनोभिः सर्वात्मनां संयोगात् कथमुपभोगव्यवस्था? मनःसंयोगमुखेन सर्वे हि तद्विषया विषयत्वेऽस्य वर्तन्ते। अथास्य कर्मनिबन्धनत्वादुपभोगस्य कर्मनिमित्ता व्यवस्था, सा चितिरूपात्मवादिनोऽपि न दण्डवारिता। अपि च अस्याभेददर्शनपरिनिष्पत्त्या सर्वस्मि[2]न्नात्मभावमापन्ने दृश्याभावादेव [3]न दर्शनं दृक्स्वभावस्यापि दग्धुरिव वह्नेर्दाह्याभावान्न दाहः, [4]प्रकाशस्येव च प्रकाश्याभावान्न प्रकाश[5]कता। तदुक्तम्—"[6]न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते, अविनाशित्वात्; न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तम्, यत् पश्येत्" "[7]यत्र त्वस्य सर्वमात्मैवाभूत्" इत्यादि। विज्ञानादिविशेषगुणनिवृत्तिलक्षणा च मुक्तिरुच्छेदपक्षान्न[8] भिद्यते; न हि [9]सतोऽप्यात्यन्तिको दर्शनाभावोऽभावाद्विशिष्यते। कश्च सर्वतः प्रेयस आत्मनोऽभावमभिकाङ्क्षेदित्यपुरुषार्थो मोक्षः स्यात्। स्यादेतत्—विविधदुःखोपशमत्वादात्मोच्छेदोऽपि पुरुषेणार्थ्यते; दृश्यन्ते हि तीव्रपापरोगग्रस्ताः स्वोच्छेदाय यतमानाः। सत्यं प्रवृद्धगदोन्मूलितनिखिलसुखा दुःखमयीमिव मूर्तिमुद्वहन्तः; न त्वेवं संसारिणो विविधविचित्रदेवा[10]द्यानन्दभागिनः; तत्र यथा विविधदुःखो[11]परमत्वात् पुरुषार्थत्वम्, [12]तथा विविधसुखोपरमत्वादपुरुषार्थत्वमपि; यस्य तु निर्मृष्टनिखिलदुःखानुषङ्गा परमानन्दसंवेदनावस्था तस्यैवैकान्तिकं[13] पुरुषार्थ[14]त्वमित्यलमतिप्रसङ्गेन।

अक्षरमिति [15]शब्दात्मतामाह, विशेषेण सामान्यस्य लक्षणात्; अपरिणामित्वं वा, परिणामे पूर्वधर्मनिवृत्तेः क्षरणस्य भावात्, तद्युदासेन। कथं

1 नीयते--A.
2 न्नात्मन्यभाव—C.
3 अदर्शनम्--A and B.
4 प्रकाशस्यैव च—A, B and C; C omits च.
5 B omits क.
6 Bṛh. 4-3-23.
7 Bṛh. 4-5-15.
8 C adds हि after न्न.
9 सत्वे—B.
10 नन्दभोगभागिनः--A.
11 पशम--B.
12 तथाविध--A and B.
13 कः—A.
14 र्थः—A.
15 शब्दात्मकता--C.

तावच्छब्दात्मता? "[1]परं चापरं च ब्रह्म यदोंकारः" इत्यादिश्रुतिभ्यः। न [2]चेदमभिधेयापेक्षम्, कारप्रत्ययान्तस्य [3]शब्दस्वरूपपरत्वात्। अवर्णादपि वर्णसमु[4]दायात् परः कारप्रत्ययो दृश्यते—'एवकारः किमर्थः?' 'किमर्थश्च-कारः?' इति। नन्विदमन्यथैव व्याचक्षते—सर्वविशेषातिगस्य ब्रह्मण उपासितुमशक्यत्वात् प्रतीकोपदेशोऽयम्; अस्मिन्नालम्बने ब्रह्मोपासितव्यम्[5]; यथा देवतायाः साक्षात् पूजासंभवात् तल्लाञ्छने दारुण्यश्मनि वा पूजा-[6]विधानं तद्बुद्ध्या, [7]तथा [8]ध्याता देवता सा प्रसीदतीति[9]; अनेन वाभिधानेन तद् ध्येयम्, प्रणव[10]स्य तदभिधानत्वात्। उच्यते—"[11]ओमित्यात्मानं ध्यायथ" "[12]ओमिति युञ्जीत" इति यत्र योगाङ्गता श्रूयते तत्रैवम्; यत्र तु युञ्जीतेत्यादेरश्रवणात् तादात्म्य एव पर्यवस्यति वाक्यम्, तत्र नेत्थम्; यथा "[13]ओमिति ब्रह्म, ओमितीदं सर्वम्", "[14]तद्यथा शङ्कुना—" इत्यादि "[14]ओंकार एवेदं सर्वम्" इति। अत्र हि सर्ववागनुगमेन तदत्यागादोंकारो वाचस्तत्त्वमिति दर्शयित्वा वाग्रूपात्यागाच्च रूपप्रपञ्चस्य "[14]ओंकार एवेदं सर्वम्" इत्युपसंहरति। यत्रापि "[15]एतेनैव[16] परं पुरुषमभिध्यायीत" इति श्रवणम्, तदपि सर्वात्मभावप्रतिपादनपूर्वकम्। न च सर्वात्मभाव औपचारिकः स्तुत्यर्थ इति युक्तम्, मुख्यार्थत्वेऽप्यविरोधात्; सर्वस्य हि प्रत्यक्षाद्यनवसेयं शास्त्रगम्यमिदं रूपं न विरुध्यते; न हि प्रमाणान्तरेणानवगमः प्रमाणान्तरस्य विषयमपहरति; "[1]तस्माद्विद्वान्" इति च सार्वात्म्यविद एव तेन ध्यानोपदेशः। न च तदन्यतः; तस्मादनन्तरमेव वाक्यं तत्र पर्यवसितम्; ततोऽधिगतसार्वात्म्यस्य सतो ध्यानोपदेशः। अथवा—"[17]वागेव विश्वा भुवनानि जज्ञे वागेवेदं बुभुजे वागुवाच" इत्यादौ वाचः सार्वात्म्यं श्रूयते। तथा वाक्सूक्ते वाचः सर्वात्मत्वं सर्वेशित्वं च प्रदर्शितम्—"[18]अहं रुद्रेभिर्वसुभिश्चरामि" इति वाचैव; यथात्मनि प्रतिबुद्धेन

---

1 Praśna. 5-2.
2 वे—B.
3 शब्दस्य स्वरूप—B.
4 दयात्—B.
5 B adds इति.
6 क्रियते—B.
7 सा—B.
8 C omits ध्याता
9 A omits इति.
10 B omits स्य.
11 Muṇḍ. 2-2-6.
12 Mahānārā. 24-2 (ओमित्यात्मानं युञ्जीत).
13 Tait. 1-8-1.
14 Chānd. 2-23-3.
15 Praśna 5-5.
16 A omits एव.
17 ..........
18 Ṛgv. 10-125-1.

वामदेवेन—"[1]अहं मनुरभवं सूर्यश्च" इति । अपि च प्रकृतिरूपान्विता विकाराः; वाग्रूपान्वितं च जगत्; अतो वाचो विपरिणामो विवर्तो वाव- सीयते । कथं तदनुगमः? तदुपरागविज्ञानवेदनीयत्वात्; तथा हि—न शब्दाच्चक्षुरादिवत् प्रतिपत्तिः, तदसंवेदनेऽर्थे प्रतिपत्त्यभावात् । नापि धूमा- दिवद्व्यधिकरणतया; तथा हि धूमादत्राग्निरिति प्रतिपत्ते[2]र्व्यधिकरणतया व्यक्तं वैलक्षण्यं शब्दादर्थावगमस्य संवेद्यते सर्वेण । इतश्चैतदेवम्—यस्तु शब्दयोर्विशेषणविशेष्यभावोऽ[3]वगम्यते 'नीलमुत्पलम्' इति, अर्थगत एवासौ; अन्यथा यथा 'ऊर्ध्वत्वे काकनिलयनात् स्थाणुः' इति परस्परव्यवच्छिन्नाभ्या- म[4]र्थाभ्यामर्थान्तरप्रतीतिः, तथा स्यात् । अपि च धूम इव शब्दे प्रति- पत्तिहेतौ न ताद्रूप्येण निश्चयः स्यात् । न [5]च धूमात् प्रमाणान्तराद्वाग्नौ निश्चयो धूमरूपानुकारी [6]भवति; भवति तु प्रमाणान्तरादप्यर्थेषु निश्चयः शब्दरूपपरामर्शी; [7]तद्दर्शनात् शब्दादपि प्रतिपत्तौ तथा प्रतिपत्तिः, न त्वा- नन्तर्यनिमित्ता भ्रान्तिरित्यध्यवस्यामः । बालानामपि च येयमन्यपरिहारेण स्तनादौ प्रवृत्तिः, सा न 'इदम्' इत्यनिश्चिन्वतां भवितुमर्हति; नानिश्चिते स्थाणौ पुरुषे वान्यतरनिबन्धना प्रवृत्तिः; न च निश्चयः शब्दा- नुरागशून्य इति तेषामपि पूर्वजन्मशब्दभावनाभाजां वाग्रूपोपरक्तमेव ज्ञानं निश्चीयते । तथा च तद्रूपोपग्राह्यं जगत् तद्विवर्त इति प्रतीमः । अपि च सन्त्यर्था व्यावहारिकाः, येषां न शब्दविवर्तादन्यत् तत्त्वम्; तत्सामान्यादितरेऽ- पि तथावसातव्याः; यथा—'कुर्यात् न कुर्यात्' इति विधिनिषेधौ, वाक्यार्थः, समूहः, असन्तश्चाला[8]तचक्रशशविषाणादयः । तत्र न तावद्विधिनिषेधौ भूते प्रवृत्तिनिवृत्ती, न च[9] वर्तमाने, न भविष्यन्त्यौ; अपाक्षीत् पचति पक्ष्यतीत्यविशेषप्रसङ्गात्; कार्ये इति चेत्; न, कालत्रयातिरेकेण कार्य- त्वस्यानिरूपणात्; तस्मात् प्रवृत्तिनिवृत्त्यनुगुणमवस्तुकं प्रतिभामात्रं विधि- निषेधश्च स्याताम्; न चानालम्बना ज्ञानस्वभावत्वात् प्रतिभा युक्ता; न च सा शब्दरूपपरामर्शविकला; तस्मात् प्रवृत्तिनिवृत्त्यानुगुण्येन शब्दतत्त्वमेव

---

[1] Bṛh. 1-4-10.
[2] व्यधिकरणतायाः—C.
[3] गम्यते—A.
[4] B and C omit अर्था- भ्याम्.
[5] A omits च.
[6] A omits भवति.
[7] तद्दर्शनाच्च शब्दा—A.
[8] शशालातचक्र—A.
[9] A and B omit च.

तथा तथावभासत इति सांप्रतम् । एवं वाक्यार्थः; संसर्गो न संसर्गिव्यतिरेकेण कश्चित्, न संसर्गी असंसर्गिरूपातिरिक्तः; न ज्ञेयशून्यं ज्ञानम्; न विकल्पप्रत्ययो वाग्रूपोपरागरहित इति वाक्तत्त्वमेव तथा तथा[1] विवर्तेत इति न्याय्यम् । एवं समूहे वनादौ असत्सु चालातचक्रादिषु योजनीयम् । अपि च यद्यपि षड्जादिषु गवादिषु च[2] प्राक् शब्दात् ज्ञानमस्ति, तथापि न तादृक्, यादृक् शब्दनिवेशादुत्तरस्मिन् काले; अविविक्ता हि प्राक् प्रतिपत्तिः, स्फुटतरा विवेकवती पश्चात् । तथा च गोपालाविपालादयो विवेकज्ञानसिद्धये संज्ञां निवेशयन्ति । एवं च शब्दसंस्पर्शेऽर्थे बोधोत्कर्षदर्शनात् तत्प्रतिसंहारे च[3] संचेतितानामप्यसंचेतितकल्पत्वात् पथि गच्छतस्तृणादीनामपकर्षात् वाग्रूपाधीनमेव चितश्चितित्वम् । वाक्शक्तिरेव वा चितिः; तत्प्रतिसंहारेऽपि सूक्ष्मा वाक्शक्तिरित्येके; सर्वथा वाग्रूपाधीनो ज्ञेयबोध इति सर्वं ज्ञेयं वाग्रूपान्वितं गम्यत इति तद्विकारस्तद्विवर्तो वा; मृद इव घटादयः, चन्द्रमस इव जलतरङ्गचन्द्रमस इति । अन्ये तु[4]—मृदादिदृष्टान्तदर्शनात् परिणामितां ब्रह्मणो मन्यन्ते; तदपाक्रियते[5]—अक्षरमिति । कुतः? "[6]ध्रुवः" "[7]नित्यः" इति तत्र तत्र श्रुतेः । अथ मतम्—परिणामित्वेऽपि तत्त्वाविघातान्न नित्यता [8]व्याहन्यते; यथोक्तम्—"[9]यस्मिन् विक्रियमाणेऽपि[10] तत्त्वं न विहन्यते तदपि नित्यम्" इति । सत्यम्; तथापि तु यद्विशुद्धमात्मरूपं तस्याभावात् सर्वात्मना परिणतावनित्यत्वम्, एकदेशपरिणतौ सावयवत्वान्नित्यत्वमेकत्वं च [11]व्याहन्येते; तदेतद्विशुद्धत्वं नित्यत्वमेकत्वं चाकाशकल्पे ब्रह्मण्यवकल्पते; कल्पितावच्छेदेऽकल्पितावच्छेदमप्याकाशमनवच्छिन्नमस्त्येव । अथ कल्पितैकदेशपरिणामः स कल्पनयैवेति सुष्ठूक्तम्—अक्षरमिति ।

केचित् "[12]सर्वगन्धः सर्वरसः" इत्यादिश्रुतेः सर्वात्मतां ब्रह्मण उपागमन्; एवं च विषयोपभोगोपपत्तेः प्रकाशस्वभावस्यात्मनो[13] विषयाः, युक्तम्, यत्[14] प्रकाशेरन्; अन्यत्वे[15] तु जडानां प्रकाशनमसंभावनीयमिति ।

---

1 A and B omit तथा.
2 वा—A.
3 A omits च.
4 A omits तु.
5 कीर्यते—A and B.
6 Bṛh. 4-4-20.
7 Śvēta 6-13.
8 व्याहन्येत—B.
9 तदपि नित्यं यस्मिंस्तत्त्वं न विहन्यते Mahābhāṣya 1-1-1.
10 A and B omit अपि.
11 व्याहन्येते—A and C.
12 Chānd. 3-14-2.
13 आत्मानः—A.
14 यत्तत्—B.
15 च—C.

तान् प्रत्याह—असर्वमिति । कुतः ? "[1]अस्थूलमनण्वह्रस्वम्" इति सर्वभेदोपरागप्रतिषेधात् । [2]सर्वभेदावियोगाच्चानिर्मोक्षः ; न हि स्वभावाद्वियोजयितुं वस्तु शक्यम्, वह्निरिवौष्ण्यात् । अथापि कथंचि[3]द्वियोज्येत, तथापि भेदप्रपञ्चप्रबन्धस्यानुच्छेदाद्वियोगाभावान्नित्यसंसारिता स्यात् । सर्वथा अशनायापिपासादिप्रपञ्चोऽस्यात्मा ; तत्प्रपञ्चस्य चोच्छेदो नेष्यते ; तन्नैकात्म्यवादिनोऽ[4]निर्मोक्षः ; आत्मभेदवादिनस्तु कस्यचिदुच्छिन्नः कस्यचिन्नेति मुक्तसंसारिविभागः । तस्मान्न प्रपञ्चात्मकं ब्रह्म, अविद्याक्रीडितमेव प्रपञ्च इति सांप्रतम् ।

यदि तर्ह्यविद्याक्रीडितमेव[5] प्रपञ्चः, प्रपञ्चशून्यता तर्हि परमार्थः ; सैवास्तु ब्रह्म, परमार्थत्वात् । तथा च[6] प्रपञ्चनिषेधेनैव तद्रूपं श्राव्यते—"[7]स एष नेति नेति" "[1]अस्थूलमनण्वह्रस्वम्" इति च । तत्राह—सर्वमिति । एतदुक्तं भवति—ब्रह्मणो न सर्वात्मता ; सर्वं तु ब्रह्मात्मकम्, ब्रह्मरूपेण रूपवत्, न तु[8] शून्यमेव, नित्यमुक्तिप्रसङ्गेन[9] तदर्थोपदेशप्रवृत्तिवैयर्थ्यप्रसङ्गात्[10] । नित्यमुक्तत्वेऽप्यविद्यानिबन्धनः संसार इति चेत् ; यदि ग्रहणाभावोऽविद्या, कथं तर्हि[11] तन्निबन्धनः संसारः ? मुक्तावपि तस्य तुल्यत्वात्, तद्वदेव न किंचित् प्रकाशेत । अथायथार्थग्रहणमविद्या, न तर्हि सर्वशून्यता ; "[12]तेनेदं पूर्णं पुरुषेण सर्वम्" इति श्रुतेः "[13]आत्मैवेदं सर्वम्" इति च सर्वस्मिन्नात्मोपदेशः,[14] "[15]कथमसतः सज्जायेत" इति च स्वयं [16]शून्यताया निषेधात् । भावो हि यथावदप्रकाशमानोऽध्यस्ताविद्यमानरूपः प्रकाशते ; शून्ये तु काध्यासः, किं प्रकाशतामिति निर्बीजतैव स्यात् । "[17]विज्ञानमानन्दम्" इति रूपोपदेशाच्च न सर्वाभावमात्रं ब्रह्म[18], अपि तु सर्वस्यात्मेति ।

केचित्तु—केवलस्य[19] सुखस्यादर्शनाद्दुःखाविनाभावान्नास्त्यवस्था दुःखसंस्पर्शविविक्तेति मन्यन्ते ; न हि कश्चिज्जन्तुः सुख्येवोपलभ्यते, दुःख्येव वा ;

---

[1] Bṛh. 3-8-8.
[2] B adds अन्यथा.
[3] A omits वियोज्येत.
[4] अनिर्मोक्षप्रसङ्गः—A.
[5] मेवेदं जगत्—A.
[6] A omits च.
[7] Bṛh. 3-9-26.
[8] A and B omit तु.
[9] प्रसङ्गात्—A and C.
[10] C adds च.
[11] A and B omit तर्हि.
[12] Mahānārā. 10-4.
[13] Chānd. 7-25-2.
[14] आत्मोपदेशात्—B.
[15] Chānd. 6-2-2.
[16] शून्यता—A.
[17] Bṛh. 3-9-28-7.
[18] B omits ब्रह्म.
[19] A adds च.

दुःखवन एव तु सुखं सुखत्वेऽवतिष्ठते ; तापवत एव[1] चन्दनपङ्कसं[2]स्पर्शः सुखम् । तत्राह—अभयमिति । सर्वभयविनिर्मुक्ता हि ब्रह्मावस्था ; न[3] चात्राल्पीयानपि क्लेशः, असकृदभयश्रुतेः—"[4]अभयं वै ब्रह्म" इत्यादि ; तथा हि—न स्वाभाविकं भयं ब्रह्मणि, आनन्दरूपेण विरोधात् ; नागन्तुकं हेतुमत्, [5]द्वितीयाभावात् ; तदुक्तम्—"[6]द्वितीयाद्वै भयं भवति" इति । न च दुःखनिवृत्तिरूपं सुखम्, येन दुःखितस्यैव सुखं सुखत्वेऽवतिष्ठेत— इति प्रपञ्चितमेतत् पुरस्तात् ।

अपरः प्रकारः—इह केचित् मुक्ताभिमतानामपि पुनरावृत्तिभयं मन्यन्ते । इह हि[7] विज्ञानात्मानो ब्रह्मणो विभक्ताः[8] स्युः, अविभक्ता वा ; स्वतो ब्रह्मणैव वा विभज्येरन् भोगार्थं क्रीडार्थं[9] विभूतिख्यापनार्थं वा स्वभावाद्वा ; अविद्यानिबन्धनो वा तद्विभागः ; विज्ञानात्मान एव वा ब्रह्मशब्दाभिधेयाः, नान्यद्ब्रह्म ; तेषां कर्माविद्यानिबन्धनः संसारः, द्रष्टृदृश्ययोः परस्परयोग्यतानिबन्धनो वा ; तत्र योग्यता[10]निबन्धनत्वे योग्यताया अनपायात् पुनरावृत्तिभयमप्रच्युतम् । अथ कृतकार्यत्वान्न पुनरावृत्तिः, सकृच्छब्दाद्युपलब्धौ न पुनस्तदुपलब्धिः स्यात् । अथानन्तविकारा प्रकृतिः [11]सर्वात्मनोपलब्धौ निवर्तते, अविकृतरूपान्तरोपलब्धये च[12] प्रवर्तत एव ; आनन्त्यादेव तर्हि न सर्वात्मनोपलब्धिः संभवतीति गुणपुरुषान्यताख्यातिमतोऽपि पुनरावृत्तिः [13]संभाव्येत । अविद्यापूर्वकर्मनिबन्धनत्वेऽप्यनादौ संसारेऽनन्तत्वात् कर्मणामनियतविपाककालत्वाच्च प्रतिसर्गावस्थाया[14] इव मुक्त्यवस्थाया[15] अपि प्रत्युदावृत्तिभयं न व्यावर्तते । अविद्यानिबन्धनत्वेऽपि तस्या निर्हेतुत्वान्निष्प्रयोजनत्वाच्च प्रवृत्तेः तथैव पुनः पुनः प्रवृत्तिः केन वार्यते ? तथा च सुषुप्ते ब्रह्मप्राप्तेः प्रत्युदावृत्तिर्दृश्यते । स्वतन्त्रे तु ब्रह्मणि विभक्तानां जीवानां देहेन्द्रियोपभोगहेतौ अविभक्तानां वा विभज्य भोगादिभिर्हेतुभिर्न पुनर्देहादिसंबन्धो न संभाव्यते ; स्वतन्त्रो हि क्रीडया स्वातन्त्र्यख्यापनेन

---

1 इव—A and B.
2 संस्पर्शसुखम्—B and C.
3 न हि तत्रा—B and C.
4 Bṛh. 4-4-25.
5 द्वितयिस्याः भावात्—A.
6 Bṛh. 1-4-2.
7 C omits हि.
8 A and B adds वा.
9 C adds वा.
10 निबन्धने—A and B.
11 सा सर्वात्म—A.
12 A omits च.
13 संभाव्यते—A and B.
14 ग्रामिव—A.
15 ग्रामपि—A.

वा स्वभावेन वा। पुनर्बध्नीयाल्लौकिक इवेश्वरः । अथैष कर्मापेक्षः, न [1]कर्मस्वस्य स्वातन्त्र्यम्; तथापि कर्मणामानन्त्याद्विपाककालनियमाभावाच्च कल्पशतातिक्रमेऽपि प्राप्तविपाककालेभ्यः कर्मभ्यः पुनर्बन्धः संभाव्यते, यतो नैकभाविकः कर्माशयः; न ह्यस्य प्रायणमेवाभिव्यञ्जकम्, अपि तु देशकालादयोऽपि; तथा हि—एकस्मिन्नपि देहे क्रमेण कर्मफलभोगो दृश्यते, विरुद्धजातिभोगनिमित्तानां च कर्मणां युगपदावापगमनानुपपत्तेः; गर्भमृत्यूनां चाक्रमेणां [2]विमुक्तिप्रसङ्गः[3] । तत्रोच्यते—अभयमिति । पराहीयं [4]क्षेमप्राप्तिः श्रूयते । [5]नास्यां पुनः संसारभयमस्ति; न तावत् कर्मनिमित्तः पुनः संसारः, विद्यया प्रायश्चित्तेनेवाकृतभोगानामप्यनन्तानामपि कर्मणां प्रक्षयात् । उक्तं हि—"[6]ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" इति; तथा—"[7]क्षीयन्ते चास्य कर्माणि" इति । अथवा विद्ययाविद्यानिवृत्तौ प्रविलीन एव कर्तृकर्मफलविभागः; तस्य कुतः संभवः? नाप्यविद्यानिमित्तः, तत्प्रवृत्तिहेतोरभावात्; अनादिर्ह्यविद्या, अनादित्वादेव न हेतुमपेक्षते; प्रागभावे हि हेतुव्यापारः; असति प्रागभावे कदा हेतु[8]र्व्याप्रियेत; न हि सतो हेतुकृत्यमस्ति; विद्यया [9]तूच्छिन्ना प्रागसती प्रवर्तमाना नाकस्मात् [10]प्रवर्तितुमर्हति । सुषुप्ते तु विक्षेपमात्रं निवृत्तम्, तत्संस्कारोऽग्रहणं च नैव निवृत्ते; [11]अन्यथा न तुरीयाद्भिद्येत; विक्षेपमात्राभावात्तु ब्रह्मप्राप्त्यभिधानम् । तस्मात् सुष्ठूक्तम् अभयमिति ।

केन पुनः प्रमाणेनास्यार्थस्य समधिगमः? न [12]तावत् प्रत्यक्षेण, तस्यैतद्विपरीतभेदविषयत्वात्; [13]नाप्यनुमानेन, तत्पूर्वकत्वात्; नोपमानेन, सादृश्यविषयत्वात्, तस्य च भेदाधिष्ठानत्वात्; अर्थापत्तिस्तु विपर्यये, न भेदमन्तरेण कश्चिद्व्यवहार उपपद्यते यतः; अभेदोऽपि हि प्रमात्रादिविभागादृते [14]दुरवगमः; अभावोऽपि न भावरूपतत्त्वावगमायालम्; नापि

---

[1] कर्मण्यस्य—A.
[2] A and B omit वि.
[3] प्रसङ्गात्—B.
[4] क्षेमावाप्तिः—A.
[5] न तस्यां—A.
[6] Gitā. 4-37.
[7] Muṇḍ. 2-2-8.
[8] व्याप्रियते—B and C.
[9] विच्छिन्ना—A; छिन्ना—B.
[10] प्रवृत्तिम—C.
[11] अन्यथा तु—B.
[12] A omits तावत.
[13] नानुमानेन—A.
[14] दुरधिगमः—B.

प्रपञ्चाभावावगमाय, प्रत्यक्षादिषु सत्सु तदसंभवात् । आगमोऽपि न तावदाप्तप्रणेतृकोऽत्र क्रमते, प्रमाणान्तराधिगतगोचरत्वात्; नापि स्वतन्त्रः, विधिनिषेधरूपत्वात्, तयोश्च स्थिते तत्त्वेऽसंभवात्; नापि तदनपेक्षं व्यवस्थितवस्तुविषयमेव प्रामाण्यम्, भूतानुवादत्वे प्रमाणान्तरापेक्षत्वात्; लोकाच्च शब्दसामर्थ्याधिगमः; [1]तत्र कार्यपरतयैव कार्यान्वयिष्वर्थेषु पदानि प्रयुज्यन्ते, तथार्थवत्त्वात्; न हि प्रवृत्तिनिवृत्तिशून्यस्य वचसः कश्चिदर्थः । अपि च न भूतानुवादाद्वचसः संबन्धावगमः, अपि तु [2]प्रवर्तकात्; प्रवृत्त्या ह्यनुमायार्थप्रत्ययं तत्र शब्दस्य सामर्थ्यप्रतीतेः । तथा च न प्रवृत्तिसंबन्धरहितेष्वर्थेषु शब्दानां शक्तिर्गम्यते; तथा सत्यनवगतसामर्थ्याः शब्दा भूतेऽर्थे कथं [3]तदवगमयेयुः? अपि च प्रमाणान्तरावसितश्चेत् सोऽर्थः, न शब्दस्य तत्र प्रामाण्यम्; अथानवसितः, नतराम्; अपदार्थत्वे वाक्यविषयत्वासंभवात्; पदार्थ एव हि विशिष्टतया वाक्यार्थीभवति; अत्यन्तापरिदृष्टस्तु पदादनवगम्यमानः पदार्थसंसर्गात्मके वाक्यार्थे न गुणत्वेन प्रधानत्वेन [4]वानुप्रवेशमर्हति । अपि च प्रलीननिखिलावच्छेदं तत्त्वमगोचर एव प्रतिपत्तेः; सर्वा हि प्रतिपत्तिः—'एवम्, नैवम्' इति व्यवच्छेदेन प्रवर्तते; अन्यथा न [5]कश्चित् [6]प्रतिपन्नः स्यात्; सर्वविशेषप्रत्यस्तमये तु कथं प्रतिपत्तिः स्यादित्यत्राह—

> आम्नायतः प्रसिद्धिं च कवयोऽस्य प्रचक्षते ।
> भेदप्रपञ्चविलयद्वारेण च निरूपणाम् ॥ २ ॥

भूतार्थवादित्वेऽप्यपौरुषेयस्य न सापेक्षत्वमिति वक्ष्यते । न च कार्यनिष्ठान्येव लोके वचांसि; तथा हि—प्रियाख्यानानि 'दिष्ट्या वर्धसे, पुत्रस्ते जातः' इति न प्रवृत्तये निवृत्तये वा, दृश्यन्ते च सुखोत्पादनप्रयोजनानि । न च 'सुखी भव' इति तत्र प्रवृत्तिरुपदिश्यते, वस्तुसामर्थ्यादेव तत्सिद्धेरुपदेशस्यानपेक्षणात् । अथ मतम्—अस्ति तावत् तत्र[7] प्रवृत्तिविशेषः, वचसश्च तत्र तात्पर्यम्; सत्यम्; उत्पत्त्या तात्पर्यम्, न प्रतिपत्त्या; [8]प्रतिपत्तिस्तु[9] भूतार्थनिष्ठैव; न च भूतार्थपर्यवसितस्यैव शब्दस्य

---

[1] तत्र च—A and B.
[2] प्रवर्तकत्वात्—B and C.
[3] तमव—A and B.
[4] वा प्रवेश—C.
[5] किंचित्—A and B.
[6] प्रतिपन्नं—A and B.
[7] A and B omit तत्र.
[8] प्रतिपत्तुः—C.
[9] हि—A and B.

प्रयोजनवत्त्वे प्रवृत्त्यवधिर्व्यापारः[1] कल्पयितुं शक्यते । अपि च उपाये वा प्रवृत्तः पुरुषः प्रवर्त्यते, अज्ञातोपायत्वाद्वा उपेये प्रागप्रवृत्त उपायप्रज्ञापनद्वारेण तत्र ; इह न तावदुपाये पुत्रजन्मनि, तस्य निष्पन्नत्वात्; नोपेये सुखे, तदर्थव्यापारान्तराभावात् । तथा दुर्जनवचनान्यप्रियाख्यानानि विपादप्रयोजनानि न प्रवृत्तिं निवृत्तिं वोपदिशन्ति पूर्वेणैव न्यायेन । तथा रज्जुवेष्टितस्य सर्पवेष्टितमात्मानं मन्यमानस्य भयनिवृत्तये तत्त्वाख्यानं दृश्यते, न तु तत्र 'मा भैषीः' इति नियोगः । तत्र हि नियोगो भवति, [2]यत्र नियोगार्थं प्रतिबुध्य[3] पुरुषो बुद्धिपूर्वं नियोगसामर्थ्यादिच्छया वा पुनः प्रवर्तते निवर्तते वा । इह तु तत्त्वप्रतिपत्तिमात्रान्नियोगेच्छानपेक्षस्य हेत्वभावादेव [4]तस्य भयनिवृत्तिः । न च भयनिवृत्तौ पुरुषार्थत्वात् स्वयं प्रवृत्तः पुरुषो [5]नियोज्यः, नापि तदुपाये तत्त्वप्रतिपत्तौ, 'रज्जुः, न[6] सर्पः' इति शब्दादेव तदुत्पत्तेः; शब्दार्थप्रतिपत्त्युत्तरकालस्य[7] च व्यापारस्य विधिनिबन्धनत्वात् । [8]तथा [9]दूरदेश[10]वृत्तान्ताख्यानानि पृष्टवतां कुतूहलिनामौत्सुक्यनिवृत्त्यर्थानि भूतार्थपर्यवसितानि न हानायोपादानाय वा ।

अपि च यत्रापि भूतार्थप्रतिपत्तौ हानमुपादानं वा संभवति, यथा— 'एष प्रतिरोधकवानध्वा, निधिमानेष भूभागः' इति, तत्रापि न हानोपादानयोः शब्दो व्याप्रियते, भूतार्थोपक्षया[11]त् ; शब्दाद्भूतमर्थं प्रतिपद्य तस्य प्रमाणान्तरादवगतामुपकारहेतुतामपकारहेतुतां वा संस्मृत्य इच्छया प्रवर्तते द्वेषेण[12] निवर्तते वा । ननु प्रयोक्ता बुद्धिपूर्वकारी श्रोतुः प्रवृत्त्यर्थं निवृत्त्यर्थं वा वचनं प्रयुङ्क्ते; तथा च प्रवृत्तिनिवृत्तिपर्यवसितमेव; इदं हि तत्र प्रयोक्तव्यं न प्रयुज्यते 'न गन्तव्यमनेनाध्वना' तथा 'गृहाणेतो निधिम्' इति । नैतत् सारम्; भूता[13]र्थपर्यवसितस्यापि वचसो भूतार्थावगम[14]मुखेन प्रवृत्तिनिवृत्त्यङ्गभावो यतो न व्याहन्यते प्रत्यक्षादीनामिव; भूतार्थप्रमापरिसमाप्तव्यापृतयः प्रत्यक्षादयो मात्रयाप्यगोचरीकृतप्रवृत्तिनिवृत्तयो न[15] प्रवृत्ति-

---

[1] अवधिव्यापारः—C.

[2] यत्र हि—C.

[3] पद्य—A and B.

[4] अस्य—A and B.

[5] नियुज्यते—A and B.

[6] नायं सर्पः—A.

[7] कालीनस्य—A.

[8] तथा च—C.

[9] अतिदूर—B.

[10] वृत्तान्तान्वाख्यानानि —A and B.

[11] तु शब्दाद्भूतार्थं—A ; शब्दात्तु भूतार्थं—B.

[12] द्वेषेण च निवर्तते—B.

[13] र्थावसितव्यापारस्यापि—A and B.

[14] मुखेनैव—B.

[15] न च—A and B.

निवृत्त्यङ्गभावं जहति, तथा शब्दोऽपीति न किंचित् प्रदुष्यति। [1]प्रयोक्त्रभिसंहिते प्रवृत्तिनिवृत्ती इति चेत्, न प्रयोक्त्रभिसंधानाच्छब्दार्थत्वम्, अपि तु सामर्थ्यात्; अन्यथा निधिप्राप्तिद्वारिका नानाविधपुरुषार्थावाप्तिरपि तस्याभिसंहितेति शब्दार्थः स्यात्। यदा च प्रवृत्तिं निवृत्तिं वाभिसंधाय [2]किंचित् प्रत्यक्षादिभिर्जिज्ञास्यते, तदाभिसंहिते अपि प्रवृत्तिनिवृत्ती न प्रत्यक्षादिप्रमेये; तथाभिसंहिते अपि प्रवृत्तिनिवृत्ती न शब्दार्थौ। इतश्च तदेवम्—यत् कस्यचिदुपादानबुद्धिः, अन्यस्योपेक्षा; शब्दार्थत्वे हि सर्वेषामुपादानबुद्धिरेव स्यात्।

न च प्रवर्तकवाक्यव्यवहारादेव संबन्धावगमः, येन प्रवृत्तिपरतैवावगम्येत; अन्यथापि दर्शनात्; 'देवदत्तः काष्ठैः स्थाल्यामोदनं पचति' इत्यव्युत्पन्नकाष्ठशब्दार्थो व्युत्पन्नेतरपदार्थो व्युत्पन्नविभक्त्यर्थश्च यत् पचत्यर्थे करणं पश्यति तस्य काष्ठप्रातिपदिकार्थतां प्रतिपद्यते। तथा हर्षविषादाश्वासप्रयोजनेभ्यः [3]तत्त्वाख्यानेभ्यो हर्षादिनिमित्तेषु भवति व्युत्पत्तिः। यथैव हि प्रवृत्तिविशेषदर्शनाद्विशिष्टप्रवृत्तिप्रत्ययस्तन्निमित्तप्रत्ययो वानुमीयते, हेत्वन्तराभावात् शब्दानन्तर्या[4]च्छब्दस्य तत्र सामर्थ्यं कल्प्यते, तथा हर्षाद्युपलब्धेः हर्षादिनिमित्तप्रत्ययानुमानम्, शब्दानन्तर्याच्च [5]शब्दस्य तत्र सामर्थ्यकल्पना। प्रमाणान्तरेण च पुत्रजन्मनो हर्षनिमित्तस्य तस्यावगतत्वादन्य[6]स्याभावात् 'पुत्रस्ते जातः' इतीदं वाक्यमात्रेन तत्र [7]पुत्रजन्मनि प्रयुक्तमिति प्रतिपद्यते; पुत्रजन्मैव चास्माद्वाक्यादनेन प्रतीतमित्यवधारयति; तदेवं प्रयोगप्रत्ययाभ्यामस्मिन्नर्थे वाक्यस्य सामर्थ्यं प्रतिपद्यते।

भवतु वा लोके सर्व[8]वचसां प्रवर्तकता, ततश्च संबन्धावगमः; तथापीदं विचार्यम्—किं विधायकपदव्यतिरेकिणां पदानां स्वार्थमात्रपरता, आहोस्वित् कार्यार्थसंसर्गपरता, उत पदार्थमात्रसंसर्गपरतेति। तत्र स्वार्थमात्रपर्यवसाने वाक्यार्थप्रत्ययाभावः प्रयोगवैयर्थ्यं च [9]स्यात्; तस्मादन्यार्थ[10]व्यतिषङ्गपरता।

---

[1] A omits प्र.
[2] यत्किंचित्—A and B.
[3] तत्वान्वाख्यानेभ्यो—B and C.
[4] च शब्दस्य—B.
[5] शब्दसामर्थ्यकल्पना—B.
[6] स्य चाभावात्—A and B.
[7] A and B omit पुत्रजन्मनि.
[8] वचसामपि—A.
[9] B omits स्यात्.
[10] व्यतिषङ्ग—A and B.

[1]तावता प्रयोगप्रत्यययोरुपपत्तौ न विशेषव्यतिषङ्गे प्रमाणमस्ति; यो हि विशेषव्यतिषङ्गं कल्पयति, कल्पयत्यसा[2]वर्थान्तरव्यतिषङ्गम् । तथा च विनापि कार्येण पदार्थानां परस्परसंसर्गाद्विशिष्टभूतार्थप्रत्ययसिद्धिः । अवश्यं चैतदेवं विज्ञेयम्; अन्यथा लोके विवक्षापरत्वात् पदार्थान्वयस्य, तदभावाद्वेदे वेदार्थप्रतीतिर्न स्यात् । अपि च सर्वेषां कार्यान्वयित्वे परस्परं पदार्थानामनभिसंबन्धः; तत्र न [3]विशिष्टपदार्थविषयो नियोगः प्रतीयेत; एकपदार्थसाध्य एव स्यात् । अथ न विनियोगप्रत्यर्थी नियोगः, विशिष्टविषयत्वात्; पूर्वस्तर्हि विनियोगः, पश्चान्नियोगः । किमतः? अस्ति नियोगातिरिक्तार्थान्वयेऽपि पदस्य सामर्थ्यं नियोगानपेक्षं च, परस्परान्वितानां नियोगान्वयात् । न च नियोगाकाङ्क्षानिबन्धनः संसर्ग इति प्रतिपादयिष्यते । अनधिगतमपि प्रमाणान्तरेणानधिगतसंबन्धं च स्वशब्देन शक्यं शब्देन निरूपयितुं विशेषप्रतिषेधमुखेन, विशेषशब्दानां नञश्च यथायथमर्थैर्विदितसंगतित्वात्; तथा चेत्थमेव तदुपदिश्यते "[4]अस्थूलम्" इति सर्व[5]विशेषातिगम् । एतत् कथयति—भेदप्रपञ्चविलयद्वारेणेति । [6]एतच्च वक्ष्यत इति ।

अन्योऽर्थः; यदुक्तम्—प्रत्यस्तमितसकलविशेषं तत्त्वं प्रतिपत्तेरेवाविषय इति, [7]तत्रोच्यते—विशेषनिवृत्त्यैव तत् शब्देन बुद्धौ निधीयते, सुवर्णतत्त्ववत्; न हि सुवर्णतत्त्वं पिण्डरुचकादिसंस्थानभेदोपप्लवरहितं दृश्यते; न च त एव सुवर्णतत्त्वम्, तत्परित्यागेऽपि भावात् संस्थानान्तरे; अथ चादृष्टसंस्थानभेदोपप्लवविवेकमपि बुद्ध्या भेदापोहद्वारेण स्वयं प्रतीयते, परस्मै च प्रतिपाद्यते; [8]स एष प्रतिपत्तिक्रमः श्रुत्यैव [9]दर्शितः—"[10]स एष नेति नेति" इति; तथान्यैः—"[11]सत्यमाकृतिसंहारे यदन्ते व्यवतिष्ठते"; तथापरैः—"[12]अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते" इति ।

इदमिदानीं विचार्यते—किं कृत्स्न आम्नायो भेद[13]प्रपञ्चविलयमुखेन ब्रह्म निरूपयति, आहोस्वित् कश्चिदस्यैकदेशः? तत्र केचिदाहुः—सर्वत्रैवाम्नाये

1 तावता च—A and B.
2 वन्यार्थव्यतिपङ्ग—A.
3 वद्विशिष्ट—A.
4 Bṛh. 3-8-8.
5 विशेषातिगमेव तत् कथयति—C.
6 एतद्वक्ष्यत—C.
7 अत्रोच्यते—A.
8 स वैष—B.
9 प्रदर्शितः—A and B.
10 Bṛh. 3-9-26.
11 Vākyapadīya 3-2-11.
12 Cf. Sarva V.S.S.S. 295.
13 A omits प्रपञ्च.

क्वचित् कस्यचिद्भेदस्य प्रविलयो गम्यते, यथा 'स्वर्गकामो यजेत' इति [1]शरीरात्मभावस्य प्रविलयः; अत्र [2]हि [3]देहव्यतिरिक्तस्वर्गोपभोगसमर्थोऽधिकारी गम्यते; तेन देहात्मभाव[4]प्रविलयः। तथा "[5]गोदोहनेन पशुकामस्य प्रणयेत्" इत्यधिकृताधिकारादधिकारिभेद[4]प्रविलयः। तथा विधिनिषेधचोदनास्वपि नैसर्गिकीणां रागादिनिबन्धनानां प्रवृत्तीनां [4]प्रविलयः; निषेधेषु साक्षात्, विधिषु [6]प्रवृत्त्यन्तरनियोगेन; लोकेऽप्यनभिप्रेतात् पथः [7]साक्षाद्वा निवारणम्, पथ्यन्तरोपदेशेन वा। एवं च रागादिनिबन्धननैसर्गिकप्रवृत्ति[8]भेदविलयद्वारेण दृष्टेनैव कर्मविधय आत्मज्ञानाधिकारोपयोगिनः। तथा हि—शान्तस्य [9]दान्तस्य समाहितस्य चात्मनि दर्शनमुपदिश्यते; शक्यं च; न हि विषयै[10]राकृष्यमाणस्तदुपायप्रवृत्तिकृतचेताः शक्नोत्यात्मनि समाधातुम्; नैसर्गिकीभ्यस्तु प्रवृत्तिभ्य उपरतो नियतमानस आत्मदर्शनेनाधिक्रियते, सामर्थ्यात्।

अन्ये [11]तु मन्यन्ते—अनवाप्तकामः कामोपहतमना न [12]परमाद्वैतदर्शनयोग्यः; कर्मभिस्तु कृतकामनिबर्हणः सहस्रसंवत्सरपर्यन्तैः प्राजापत्यात् पदात् परमद्वैतमात्मानं प्रतिपद्यत इति। उभयोरपि पक्षयो[13]रनयोः कृत्स्न आम्नाय आत्मज्ञानैककार्यपर्यवसायी।

अन्येषां दर्शनम्—पृथक्कार्या एव सन्तः कर्मविधय आत्मज्ञानाधिकारमवतारयन्ति पुरुषम्, अनपाकृतर्णत्रयस्य तत्रानधिकारात्—"[14]ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्" इति।

अन्ये तु—संयोगपृथक्त्वेन सर्वकर्मणामेवात्मज्ञानाधिकारानुप्रवेशमाहुः "[15]विविदिषन्ति यज्ञेन" इति श्रुतेः, "[16]येन केनचन यजेतापि दर्वीहोमेनानुपहतमना एव भवति" इति [17]च।

---

[1] शरीरात्मत्वस्य—A; शरीरस्य—C.
[2] C omits हि.
[3] देहात्—B.
[4] विलयः—A.
[5] Āpa-Śr-Sū. 1-16-3.
[6] प्रवृत्त्यन्तरोपदेशेन—A and B.
[7] साक्षाद्विनिवारणम्—A.
[8] A omits भेद.
[9] B omits दान्तस्य.
[10] राक्षिप्य—B.
[11] A omits तु.
[12] पराद्वैत—A.
[13] A omits अनयोः.
[14] Manu. 6-35.
[15] Bṛh. 4-4-22.
[16] . . . .
[17] A and B omit च.

अन्ये तु—पुरुषसंस्कारतयात्मज्ञानाधिकारसंस्पर्शं कर्मणां वर्णयन्ति—"[1]महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः", "[2]यस्यैते चत्वारिंशत् संस्कारा अष्टावात्मगुणाः" इति [3]च ।

अन्ये तु—एतदेव विपरीतं वर्णयन्ति, आत्मज्ञानमेव कर्तृसंस्कारतया कर्माधिकारानुप्रवेशीति ।

अन्ये तु—परस्परविरोधिनोः कर्मात्मज्ञानयोः द्वैताद्वैतविषयत्वेनासंबन्ध एवेति मन्यन्ते ।

तत्र न तावत् प्रथमः कल्पः। न हि [4]कर्मादिविधयः स्ववाक्यसमधिगतस्वर्गादि[5]कार्याः कार्यान्तरमपेक्षन्ते ; नाप्यात्मज्ञानविधिर्यथोदितब्रह्मचर्यादिसाधन[6]निराकाङ्क्षः कर्मविधीनपेक्षते; तत्र कुत एकाधिकारत्वम्? अथ अनवगतकार्या [7]एव [8]कर्मादिविधयः, स्वर्गादीनां गुणत्वेन [9]संबन्धादिति ; स्वर्गकामाधिकरणमस्मै व्याचक्षीत । अपि च सर्वविधिनिषेधानां नामरूपप्रविलयकार्यापवर्गित्वे जन्तूनामभ्युदयविनिपाता अकर्मनिमित्ता आकस्मिकाः स्युः ; तथापवर्गोऽपि स्यादिति वैयर्थ्यं शास्त्रस्यापि[10] । अथ स्वर्गादिकार्यद्वारेण कर्मविधीनां ज्ञानाधिकारानुप्रवेशिता मार्गग्रामगमनोपदेशानामिवाभिमतनगरगमनोपदेशानुप्रवेशित्वम्; तदसत्; युक्तं मार्गग्रामप्राप्ते[11]रनभिमतत्वादभिमतदेशप्राप्त्युपदेशानुप्रवेशित्वम् , न हि मार्गग्रामोपदेशेषु पुरुषार्थप्राप्तिः ; अतः [12]साकाङ्क्षत्वाद्यत्र पुरुषार्थप्राप्तिः, तमनुप्रविशन्ति ; न त्वेवं कर्मविधिषु पुरुषार्थस्यालाभः, स्वर्गादीनां पुरुषेणार्थ्यमानत्वात् ; तत्र च नैराकाङ्क्ष्ये कथमन्यानुप्रवेशः? अथ मतम्—यदोपच्छन्द्य नीयत उत्तरोत्तरग्राम[13]गुणोपदर्शनेनाभिप्रेतं देशम् , तदा पूर्वग्रामोपदेशाः प्राप्ताभिमतकार्या उपदेशान्तरानुप्रवेशिनश्चेति ; युक्तं तत्रापि प्रमाणान्तरेण वक्तुरभिप्रायाधिगमात् ; प्रमाणान्तरेण हि तत्रेदमधिगतम्—[14]एतद्देशप्राप्ताविदमस्य समीहितं वक्तुः संपद्यते, तस्मादिदमस्य विवक्षितमिति ; न तु शब्द[15]वृत्तमात्रानुसारेण । इतश्चैतदेवम्—

---

1 Manu. 2-28.
2 Gaut-Dhar. 8-22.
3 A and B omit च.
4 कर्मविधयः—C.
5 कार्यात्—A.
6 निरपेक्षः—A.
7 A and C omit एव.
8 कर्मविधयः—A and B.
9 अभिसंबन्धादिति—B.
10 B and C omit अपि.
11 रनीहितत्वा—A.
12 साकाङ्क्षतान्यत्र—C.
13 गुणप्रदर्शनेनाभिप्रेतं—A and C.
14 तद्देश—A.
15 प्रवृत्ति—A.

यत् प्रतिग्रामं वक्तुः श्रोतुश्च सत्यामर्थप्राप्तौ प्रमाणान्तरेणानधिगते परदेश-प्राप्त्यभिप्राये पूर्वोप[1]देशान् पूर्वार्थानेव पार्श्वस्थाः प्रतिपत्तारः[2] प्रतिपद्यन्ते, परदेशोपदेशं च स्वार्थनिष्ठम्; [3]यद्यपि वस्तुस्थित्या पूर्वोपदेशार्थाः परोप-कारिणः, तथापि न शब्दस्य[4] तात्पर्यम्, द्रव्यार्जनादिविधेरिव क्रतुविध्य-र्थोपकारेऽपि; शब्दवृत्तानुसारेण चेह तात्पर्यम्, प्रमाणान्तराभावादिति। अपि च अध्वग्रामोपदेशानां तत्परत्वाध्यवसायेनैव तत्र गमनम् अर्थप्राप्तिश्च; तत्र परदेशप्राप्तिपरतायां तु न नियोगतस्तत्र गमनम्; मार्गान्तरेणापि तत्प्राप्तेर्विवक्षितत्वात् गच्छेत्; न च नियोगतोऽर्थप्राप्तिः, अन्यपरेषु प्र-योजनश्रुतेरप्यर्थवादत्वात्; तदिह यदि विधिनिषेधाः कार्यान्तरपराः, न स्वर्गा-दिकार्याः; न [5]खलु स्वर्गादिकार्यं प्रयाजादिकार्यतुल्यम्, येन कार्यान्तर-मनुपतेत्। कथं च दृष्टेनैवात्मज्ञानाधिकारोपकारिण इति वक्तव्यम्; यदि तावद्रागाद्याक्षिप्तदृष्टार्थप्रवृत्तिनिरोधेन, भवतु प्रतिषेधानामेवंभावः; कर्मविध-यस्तु कथं निरुन्धन्तीति वाच्यम्; न हि ते परिसंख्यायकाः, [6]न च नियामकाः[7], अत्यन्तमप्राप्तार्थत्वात्; प्राप्तार्थो हि विधिरन्यनिवृत्तिफलो विज्ञायते; न च तुल्यकार्यत्वेन विरोधेन निवृत्तिः; अनियतकालफला हि नैयोगिक्यः प्रवृत्तयोऽदृष्टार्थाः; दृष्टार्थास्तु रागाद्याक्षिप्ताः स्वाभाविक्यः; न च साङ्ग्रहण्याः सेवायाश्च ग्रामोपायत्वे कश्चिद्विरोधः, एतावति प्रमाणत्वा-च्छास्त्रस्य; तत्र युगपत् क्रमेण वा फलभूमार्थिनः सेवासाङ्ग्रहण्यावनुतिष्ठतः को विरोधः? अपि च सकलदृष्टार्थप्रवृत्तिनिरोधे नियोगनिष्ठा अपि प्रवृत्तयो निरु-ध्येरन्, अनार्जितधनस्य साधनविकलस्य तासामसंभवात्। अपि च तुल्ये कामोपायत्वे दृष्टादृष्टार्थप्रवृत्त्योर्न विशेषो रागाद्याक्षिप्तत्वे; तथा हि— 'स्वर्गकामः' इति रागाद्याक्षिप्तप्रवृत्त्यनुवादेन विशेषविधानम्; तथा च प्रपञ्चा-भिनिवेशे तुल्ये केन विशेषेण एका आत्मज्ञानानुगुण्यं भजते, तद्विरोधिन्यपरा? कामाक्षेपो ह्यविशिष्टो मनसः। अथ कामोपायत्वमेव न मन्येत, वर्णित-माकस्मिकत्वम्, उक्तश्च न्यायः प्रत्युद्ध्रियेत; तुल्यकार्य[8]निबन्धनत्वाच्च वि-

---

[1] देशात्—C.
[2] रथ्य—A and B.
[3] यद्यपि च—A.
[4] शब्दस्य तत्र—A.
[5] तु—A.
[6] नापि for न च—A.
[7] नियामका वा—C.
[8] निबन्धनाच्च—A and B.

रोधात् या निरोधाशङ्का सा दूरतो[1] निरस्तावकाशा स्यात्। अथ कामप्राप्त्या कर्मविधयः कामान् प्रविलापयन्तो ज्ञानाधिकारानुगुणाः; यथोक्तम्—

"[2]यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥" इति,

[3]तदप्यसत्; यतो न कामप्राप्त्या कामप्रविलयः, अपि तु दोषपरिभावनाभुवा प्रसंख्यानेन; कलयापि चेत् कामैर्मनः संस्पृश्यते ह्रियत एव हारिभिः; उक्तं हि—"[4]न जातु कामः कामानामुपभोगेन शाम्यति", "[5]भोगाभ्यासमनु विवर्धन्ते रागाः [6]कौशलानि चेन्द्रियाणाम्" इति च। अनुपायत्वादपि तावदयं कामेभ्यो [7]विनिवर्तेत; निखिलक्लेशोपशमरूपं चात्मज्ञानं संश्रयेत; कर्मविधिनिदर्शितविविधोपायस्तु तानेव प्रकृतिहारिणो [8]भोगानभिनिविशेत; तत्प्रविलयरूपाच्चात्मज्ञाना[9]दुद्विजेत। श्रुतोऽपि ह्यात्मन्यानन्दोऽननु[10]भूतो नानुभूतविषयनिबन्धनानन्दाभिलाषं मन्दीकर्तुमप्युत्सहते, प्रागेवोच्छेत्तुम्। तस्मात् प्रसंख्यानमेवैकः[11] [12]कामनिबर्हणोपायः, कर्मविधयस्तु विपर्ययहेतवः। यदपि—[13]सर्वत्रैवाम्नाये क्वचित् कस्यचिद्भेदस्य विलयः, यथा 'स्वर्गकामो यजेत' इति [14]शरीरात्मत्वप्रविलय इति; [15]तदप्यसत्, अनिदंपरत्वात्; न हीदं वचनं देहव्यतिरिक्तात्मतत्त्वावबोधपरम्। अथान्यपरा[16]दप्य[16]र्थादिदमवसीयत इति, तदपि हस्तिनि दृष्टे तत्पदेन तस्यानुमानमिव; साक्षाद्धि[17] "[18]अस्थूलम्" इत्युपक्रम्य देहेन्द्रियविलयो दर्शितः, अर्थाच्च कामादिग्रन्थेः काठिन्यं वैदिकं स्यादिति[19]।

द्वितीयोऽपि कल्पो वर्णितादेव कामानां कामनिबर्हणसामर्थ्याभावात् स्वकार्यनिराकाङ्क्षाणां चान्यानुप्रवेशे प्रमाणाभावादसमञ्जसः; एकाधि[20]कारत्वे तु समुच्चयः सर्वकर्मणां स्यात्; स चाशक्य इति।

---

[1] दूरनिर—A and B.
[2] Katha. 2·3·14.
[3] तदसत्—A.
[4] Manu. 2-94.
[5] Yōgasūtrabhāṣya 2-15.
[6] A omits कौशलानि चेन्द्रियाणामिति च.
[7] निवर्तते—A.
[8] A omits भोगान्.
[9] दुद्विजते—A.
[10] भूतचरो—A.
[11] एकम्—C.
[12] कामप्रविलयो—A.
[13] सर्वत्राम्नाये—A.
[14] शरीरविलयः—B and C.
[15] A and B omit अपि.
[16] अर्थादिदं—A.
[17] C omits हि.
[18] Bṛh. 3-8-8.
[19] A omits इति.
[20] कारित्वे—C.

येऽपि[1] विपर्ययेण ज्ञानकर्मणोरेकाधिकारत्वमाहुः, तैरपि ज्ञानस्य कर्मसंबन्धे प्रमाणं वक्तव्यम्। न तावत् "[2]व्रीहीन् प्रोक्षति" इति यथा; तत्र हि प्रकरणात् प्रकृतकर्मापूर्वलक्षणापरो व्रीहिशब्दः [3]स्वस्वरूप आनर्थक्यात् प्रकृतापूर्वसंबन्धं बोधयति। नापि यथा "[4]यस्य पर्णमयी जुहूर्भवति" इति; [5]तत्र हि जुह्वादि अव्यभिचरितकर्मसंबन्धमसत्यपि प्रकरणे कर्मोपस्थापयति; तत्र वाक्येनैव संबन्धः। आत्मज्ञानं तु न प्रकरणे श्रुतम्; नाप्यात्मा अव्यभिचरितकर्मसंबन्धः; तेनास्य कर्मसंबन्धो दुर्वचः। तथा चाज्ञाते पारार्थ्ये या नाम फलश्रुतिर्न सा अर्थवादिनी भवतीति पृथगधिकारत्वम्। अथ मतम्—वर्तमानापदेशात् "[6]न च पुनरावर्तते" इति कामोपबन्धाभावात् फलं विपरिणमय्य कल्पयितव्यम्; तच्च तदाकाङ्क्षायां सत्याम्; न तु दृष्टे सति तदाकाङ्क्षा; अस्ति चात्मज्ञानविधे[7]र्दृष्टफलं देहान्तरोपभोग्यफलेषु कर्मसु प्रवृत्तिः; तस्मात् स्वाध्यायाध्ययनविधिवदात्मज्ञानविधिः; स्वाध्यायाध्ययनविधिर्हि दृष्टकर्मावबोधनिराकाङ्क्षो नार्थवादतः फलं प्रार्थयते, तथात्मज्ञानविधिरपीति [8]नाधिकारान्तरम्। [9]तदप्यसत्; यतोऽयमन्य एवौपनिषदः पुरुषो वेदान्तेषु जिज्ञास्यते; न च तज्ज्ञानं कर्मप्रवृत्तिहेतुः; न हि तस्य कर्तृत्वभोक्तृत्वे; एवं ह्याह—"[10]न तदश्नाति किंचन" "[11]अनश्नन्न्योऽभिचाकशीति" इति; यस्तु कर्मणां कर्ता भोक्ता च, स एव सर्वप्रत्यक्षसिद्धः; न शब्दप्रमेयः। ननु जीवपरमात्मनोरेकत्वमेव; एवं ह्याह—"[12]अनेन जीवेनात्मना" इति। सत्यम्; तस्यैव तु जीवस्यैवमविद्यानुबन्धं प्रत्यक्षावसेयं रूपम्, तच्च कर्मप्रवृत्तिहेतुः; [13]न च तत् शब्दमपेक्षते; यत्तु स्वयंप्रकाशं सर्वविभागशून्यं तत् शब्दाज्ज्ञातुमिष्यते; तच्च कर्मप्रवृत्तिविरोधि; तज्ज्ञानस्य कथं कर्मप्रवृत्तिर्दृष्टं प्रयोजनं स्यात्? तथा हि—ब्रह्मानन्दमेकमद्वयमात्मानं विजानतः किमर्थं कथं वा प्रवृत्तिः स्यात्, आप्तकामत्वात् साधनाद्युपायाभावाच्च? स्यादेतत्—औपनिषदपुरुष[14]ज्ञानमेव कर्माङ्गत्वेन चोदितम् "[15]यदेव विद्यया करोति श्रद्धयोपनिषदा

---

1 B omits अपि.
2 . . .
3 C omits स्व.
4 Tait-Saṁ. 3-5-7-2.
5 तत्रापि—A.
6 Chānd. 8-15-1.
7 दृष्टं प्रयोजनं—A.
8 नाधिकारान्तरमेतत्—A.
9 एतदप्यसत्—B and C.
10 Bṛh. 3-8-8.
11 Muṇḍ. 3-1-1.
12 Chānd. 6-3-2.
13 न शब्दमपेक्षते—A.
14 विज्ञान—A.
15 Chānd. 1-1-10.

तदेव वीर्यवत्तरं भवति'' इति; तथा "[1]यो वा एतदक्षरं गार्ग्यविदित्वास्मिँल्लोके जुहोति" इत्युपक्रम्य यागादिफलस्यान्तवत्त्वादर्शनेन ब्रह्मविद्यायास्तादर्थ्यं दर्शितम्; "[2]तं विद्याकर्मणी समन्वारभेते" इति च विद्याकर्मणोः साहित्यं दर्शितम्; पूर्वं तावत् प्रकृतोद्गी[3]थविषयम्, "[4]ओमित्येतदक्षरमुद्गी[5]थम्" इत्युपक्रमात्; परेणापि कर्मनिन्दयाक्षरज्ञानस्तुतिः; विद्याकर्मणोश्च समन्वारम्भो भेदेन—विद्यावन्तं विद्यान्वारभते कर्मवन्तं कर्मेति। तस्मादेवमपि न कर्मज्ञानयोरेकाधिकारत्वमिति।

येऽपि विरोधा[6]दसंबन्ध एव कर्मज्ञानयोः 'द्वैतविषयं कर्म, अद्वैतविषयं ज्ञानम्' इति मन्यन्ते, तेषामनुत्पाद एवाद्वैतज्ञानस्य प्रसज्यते, प्रमाणादिविभागाद्वैतप्रतिपत्त्योर्विरोधात्। अथोपायोपेययोरयौगपद्यादविरोधः, प्रलीयत एवाद्वैतप्रतिपत्तौ सर्वो विभागः; न [7]च विरोधोऽनुपायत्वं वा, उपायस्य पूर्वकालत्वात्, तदा च तस्या[8]प्रलीनत्वात्; भेद एव [9]चाभेदप्रतिपत्तावुपायः; न तर्हि कर्मभिरपि विरोधः, उपायत्वादेव। स्यादेतत्—असाध्यत्वाद्ब्रह्मणो न कर्मणामुपयोगो विद्यते; श्रूयते च—"[10]नास्त्यकृतः कृतेन" इति। न च ज्ञानोत्पत्तावुपयोगः, ज्ञानस्य प्रमाणाधीनत्वात्। न च ज्ञानसहकारीणि कर्माणि, ज्ञानस्य साध्यान्तराभावात्; न तस्य मोक्षः साध्यः, अनित्यत्वप्रसङ्गात्। अथ बन्धहेतुविच्छेदः साध्य इति तस्मिन् विच्छिन्ने तदभावान्मुच्यते; कः पुनर्बन्धहेतुः? अनाद्यविद्या, न तर्हि पृथक्तद्विच्छेदः साध्यः, यतो विद्योदय एवाविद्याव्यावृत्तिः। स्यादेतत्—भवत्व[11]ग्रहणलक्षणाविद्याव्यावृत्तिः विद्योत्पादः, यतो भाव एवाभावव्यावृत्तिः; न [12]च विद्योत्पाद एव [13]विपर्यासज्ञानव्यावृत्तिः; न खलु भावान्तरं भावान्तरव्यावृत्तिः; न हि परस्पराभावात्मानो भावाः, अभावत्वप्रसङ्गात्; यदि मन्येत—तत्त्वाग्रहणनिमित्तो विपर्यासो निमित्तनिवृत्तौ स्वयमेव निवर्तिष्यते, तच्च न; न खल्वग्रहणमभावः कस्यचिन्निमित्तम्, मूर्छा-

---

1 Bṛh. 3 8-10.
2 Bṛh. 4-4-2.
3 उद्गीथविद्याविषयं—A.
4 Chānd. 1-1-1.
5 A omits उद्गीथं.
6 असंबन्धमेव—C.
7 C omits च.
8 प्राविलीन—A.
9 A omits च.
10 Muṇḍ. 1-2-12.
11 अग्रहलक्षणा—C.
12 A omits च; खलु—B.
13 विपर्ययज्ञान—B.

दिषु प्रसङ्गात्; किं तर्हि निमित्तम्? "[1]अनादिरप्रयोजना चाविद्या" इत्युक्तम्; तत्र च हेत्वनुयोगो निरवकाशः; विपर्यासतत्संस्कारयोश्च परस्परहेतुफलभावेन व्यवस्थानान्न दोषः; अतो विपर्ययज्ञानस्य निवृत्तिर्विद्यया साध्येति तत्र ज्ञानस्य सहकार्यपेक्षा स्यात्। एतच्च वार्तम्; न खलु शुक्तिकादिषु विपर्यासपुरःसरं [2]समुपजातसम्यग्ज्ञानास्तन्निवृत्तये पृथक् प्रयतन्ते, सहकारि वान्यदपेक्षन्ते; यतो विरोधिभावान्तरोत्पाद एव पूर्व[3]प्रध्वंसः, न शून्यम्; अन्यथा न प्रध्वंसो हेतुमान् स्यात्; विरोधिनी च विद्या विपर्ययज्ञानस्य। तदुत्पत्तौ विपर्यासो नष्ट एव भवति। अथोच्येत—कर्माणि बन्धहेतवः; तत्क्षयो ज्ञानात् सहकारिसव्यपेक्षादिति; तच्च न; यावदविद्यं कर्मफलविभागव्यवहारमात्रम्; तस्य प्रमृष्टाशेषविशेषविशुद्ध[4]ज्ञानोदये कुतः संभवः? तथा च विपर्याससंशयाभ्यां तुल्यवत् प्रसंख्यातानि कर्माणि—

"[5]भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे॥" इति।

अथ विज्ञानवैमल्यायान्यापेक्षा; सापि मुधा, संशय[6]विपर्यासयोर्ज्ञानमलयोः प्रमाणोत्थविज्ञानेऽसंभवात्। अथ मतम्—शाब्दज्ञानादन्यदपि प्रत्यक्षं ज्ञानमिष्यते विगलितविभागोद्ग्राहं सर्वविकल्पातीतम्; तस्य हि ब्रह्म गोचरः, न शाब्दस्य विभक्तपदार्थसंसर्गोद्ग्राहिणः; तदुत्पत्तौ कर्मोपासनाद्यपेक्षेति। कः पुनरस्य विशेषः, येन तदर्थ्यते? स्पष्टाभत्वम्, न तस्योपयोगः; ज्ञानं हि ज्ञेयाभिव्याप्तये, शाब्दज्ञाने चोत्पन्ने आप्तमेव ज्ञेयम्; प्रमितेः प्रत्यक्षपरत्वात् तत्र [7]च नैराकाङ्क्ष्यात् तदर्थ्येत इति चेत्, एतदधिगते प्रमेये किमन्यदा[8]काङ्क्ष्येत? प्रमाणान्तरमिति चेत् न, प्रमेयसिद्ध्यर्थत्वात्तदाकाङ्क्षायाः; पुनः सिद्ध्यर्थमिति चेत् न, पूर्वस्मादप्यसकृत्तत्सिद्धेः; सिद्धस्य च सिद्ध्यपेक्षायां न हेतुरस्ति। उपायान्तरसद्भावश्चेत्, उपायान्तरं तदपेक्ष्येत; प्रमेये तु नैराकाङ्क्ष्यमेव। [9]प्रीतिविशेषश्चेत्, स पूर्वप्रमाणजादपि

---

1 . . . .
2 समुपजनित—A; उपजात—B.
3 ध्वंसः—A and B.
4 विज्ञानोदये—B.
5 Muṇḍ. 2-2-8.
6 विपर्यययोः—B.
7 B omits च.
8 आकाङ्क्ष्यते—B.
9 प्रमिति—C.

दर्शनात् सिध्यति; न तत्सिद्ध्यर्थं प्रमाणान्तरम्; प्रत्यक्षदृष्टमपीतरैस्तत्संभवात् जिज्ञास्येत, विशेषाभावात्; [1]निश्चायकत्वमितरेषामपि, प्रमाणभावात्। हानादियोग्यविषयं प्रत्यक्षम्, संनिकृष्टार्थत्वात्, नेतराणीति चेत्; संनिकर्षहेतुस्तर्ह्यपेक्ष्यताम्; न [2]प्रमाणम्, सिद्धत्वात् प्रमायाः। प्रकृते च प्रमेये नैष विशेषोऽस्ति। सामान्यविषयाः शब्दादयः, विशेषविषयं प्रत्यक्षमिति चेत्; अनधिगत एव तर्हि शब्देन प्रत्यक्षस्य विषयः। बाढम्; उक्तमेतत्[3]—न शाब्द[4]स्य ज्ञानस्य विषयो ब्रह्मेति। यदि तर्हि न शब्देनाधिगतं ब्रह्म, कथं तस्मिन्नुपासना प्रवर्तताम्? न चान्यस्मिन्नुपास्यमानेऽन्यत् साक्षाद्भवति; कस्य च रूपस्य साक्षात्करणाय यज्ञादिविधानम्? शब्दोप[5]दर्शितनिरतिशयानन्दापहतपाप्मादिरूपब्रह्मस्वभावस्यात्मनः साक्षात्करणाय यज्ञादिविधिरुपपद्यते; अविदितपुरुषार्थरूपे तद्विपरीत[6]रूपे वा तस्मिंस्तद्विधिरसदर्थः। तस्मादपहतपाप्मत्वादिगुणब्रह्मस्वभाव आत्मनि निर्विचिकित्सात् प्रमाणात् प्रकठतां प्राप्ते [7]नापरमपेक्ष्यमस्ति। नन्ववगतेऽपि "[8]तत् त्वमसि" इति शब्दाद्ब्रह्मात्मभावे प्रागिव सांसारिकधर्मदर्शनात् तन्निवृत्तये भवत्यन्यापेक्षा। नैतत् सारम्; कथं खल्ववगतब्रह्मात्मभावो विदितात्मयाथातथ्यो मिथ्यादर्शननिमित्तैर्धर्मैर्युज्यते? श्रूयते च—"[9]ब्रह्म वेद ब्रह्मैव भवति" इति। न च ब्रह्मण्यपहतपाप्मनि तेषामवकाशः; तथा—

"[10]आत्मानं चेद्विजानीयादयमस्मीति पूरुषः।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्॥"

तथा "[11]अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति। मिथ्याभिमाननिमित्तः शरीरसंबन्धः; तस्मिन् याथातथ्यदर्शनान्निवृत्तेऽशरीरत्वम्; [12]तत्र प्रियाप्रिययोरसंबन्ध आख्यायते। तस्मान्नावगतब्रह्मात्मभावः प्रागिव सांसारिकधर्मभाक्; यस्तु तथा, नासाववगतब्रह्मात्मभाव इति।

---

1 निश्चयात्मकत्वम् is the reading found in the MSS. of the text but the commentator, Śaṅkhapāṇi, gives two readings निश्चायकत्वम् and निश्चायकत्वे.

2 प्रमाणान्तरम्—B.

3 मेवम्—B.

4 B omits स्य.

5 शब्दोपप्र—A and C.

6 B omits—रूपे.

7 न पर—B.

8 Chānd. 6-8-7.

9 Muṇḍ. 3-2-9.

10 Bṛh. 4-4-12.

11 Chānd. 8-12-1.

12 ततः—B.

अत्रोच्यते—निश्चितेऽपि प्रमाणात् तत्त्वे सर्वत्र मिथ्यावभासा निवर्तन्ते, हेतुविशेषादनुवर्तन्तेऽपि ; यथा द्विचन्द्रदिग्विपर्यासादय आप्तवचनविनिश्चितदिक्चन्द्रतत्त्वानाम् ; तथा निर्विचिकित्सादाम्नायादवगतात्मतत्त्वस्यानादिमिथ्यादर्शनाभ्यासोप[1]चितबलवत्संस्कारसामर्थ्यान्मिथ्यावभासानुवृत्तिः ; तन्निवृत्तयेऽस्त्यन्यदपेक्ष्यम् ; तच्च तत्त्वदर्शनाभ्यासो लोकसिद्धः ; यज्ञादयश्च शब्दप्रमाणकाः ; अभ्यासो हि संस्कारं द्रढयन् पूर्वसंस्कारं प्रतिबध्य स्वकार्यं संतनोति ; यज्ञादयश्च केनाप्यदृष्टेन प्रकारेण ; श्रेयःपरिपन्थिकलुषनिवर्हणद्वारेणेत्यन्ये, नित्यानां कर्मणां दुरितक्षयार्थत्वात् । स्यादेतत् —अनुवर्तन्तां मिथ्यावभासाः ; प्रमाणात्तु निश्चयः ; यथातत्त्वं यथानिश्चयं च व्यवहारः ; तस्मान्नावगतात्मतत्त्वस्य काचन शुभाशुभा वा प्रवृत्तिरुपपद्यते । उच्यते—जातेऽपि तत्त्वदर्शने, अनाहिते च पटौ संस्कारे, द्रढीयसि [2]च मिथ्यादर्शनजे संस्कारे निश्चया अपि मिथ्यार्था भवन्ति ; यथा दिङ्मूढस्याननुसंहिताप्तवचसः, प्रागिव प्रवृत्तिदर्शनात् ; तथा प्रमितरज्जुभावाया अपि [3]रज्ज्वाः प्रमाणाननुसन्धाने सर्पभ्रान्त्या भयदर्शनम्[4] । तस्माज्जातेऽपि प्रमाणात् तत्त्वदर्शने अनादिमिथ्यादर्शनाभ्यासपरिनिष्पन्नस्य द्रढीयसः संस्कारस्याभिभवायोच्छेदाय वा तत्त्वदर्शनाभ्यासं मन्यन्ते । तथा च “ [5]मन्तव्यो निदिध्यासितव्यः ” इत्युच्यते ; शमदमब्रह्मचर्ययज्ञादिसाधनविधानं च ; अन्यथा कस्तदुपदेशार्थः ? स्यादेतत्—ब्रह्मचर्यादिसाधनोपकरणादेवाम्नायात् तत्त्वविज्ञानम् । तदसत् ; शब्दमानात् प्रतिपत्तेरुत्पत्तेः ; न हि प्राक् साधनविशेषेभ्यस्तत्त्वप्रतिपत्तिपर आम्नायोऽवाचकः, नाप्यनिश्चायकः, अशेषाशङ्कानिर्मोक्षात्[6] ; अन्यथा तदुपदिष्टेषु [7]साधनेष्वपि दुर्लभा प्रतिपत्तिः । अपि च अन्यथानिश्चयेऽपि रङ्गगता भरतादयो मिथ्याव[8]भासेन शोकभयादिहेतवः ; निश्चितेऽपि गुलस्य माधुर्ये तत्र मिथ्यातिक्तावभासोऽवितथ इव दुःखयति, अवितथस्येव तस्यापि थूत्कृत्य [9]त्यागात् ; तस्मात् तन्निवृत्तये विनिश्चितब्रह्मात्मभावेनापि साधनान्यपेक्ष्याणि ;

---

[1] हित—B.
[2] B omits च.
[3] रज्जोः—B.
[4] दर्शनात्—B.
[5] Bṛh. 2-4-5.
[6] मोक्षात्—B.
[7] साधनविशेषेष्वपि—B.
[8] भासेनेव—B.
[9] त्यागदर्शनात—B.

[1]यथैव प्रमाणात् तत्त्वाभिव्यक्तौ न मुक्तेः कार्यता, तथाभिव्यक्तिविशेषेऽपि साधनेभ्यः । श्रुतयस्त्वभ्यासपरिनिष्पत्त्यवस्थाविषयाः शब्दसाधनज्ञानापेक्षा वा भवन्तु, [2]तद्धेतुत्वादुत्तरस्य—इत्यलमतिविस्तरेण ।

यदपि—पृथक्कार्या एव कर्मविधयो ज्ञानाधिकारमवतारयन्ति, अपाकृतर्णत्रयस्य तत्राधिकारात्—तदपि न नियोगतः, आश्रमविकल्पस्य स्मरणात्—"[3]तस्याश्रमविकल्पमेके" "[4]यमिच्छेत्तमावसेत्" इति, "[5]यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्" इति श्रवणात्; "[6]एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रिरे" तथा "[7]किं प्रजया करिष्यामः" तथा "[8]किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" इति कर्मत्यागदर्शनात् । प्रतिपन्नगार्हस्थ्यस्यात्मविद्ययैव कृतकृत्यतां मन्वानस्य ऋणापाकरणं प्रत्यनादृतस्य विहिताकरणनिमित्तस्य पाप्मनो विद्योदय[9]प्रतिबन्धृत्वं दर्शयति—"[10]ऋणानि त्रीण्यपाकृत्य" इति ।

इदं तु युक्तम्—कार्यान्तर[11]निराकाङ्क्षाणामपि कर्मणां संयोगपृथक्त्वात् "[12]तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन" इति विद्याङ्गभावः; सोऽप्युत्पत्त्यर्थतया, न प्रयाजादिवत् कार्योपयोगेन; विद्यायाः कार्यान्तराभावात् । संस्कारपक्षो वा, स्मृतेः; संस्कृतस्य हि विद्योत्पत्तेः; तदुक्तम्—"[13]विहितत्वाच्चाश्रमकर्मापि" इति ।

ननु दृष्टोपाय एव विद्योत्पादः; तत्र दृष्टैवेतिकर्तव्यतानपेक्ष्यतां शमदमादिसाधन[14]विशेषाश्चित्तविक्षेपस्य विहन्त्री, समाहितचित्तस्याभ्यस्यतो ज्ञानप्रसादोत्पत्तेः; न तु यज्ञादयः, तैर्विनाप्यभ्यासेन तत्संभवात् । सत्यम्; तथा चोर्ध्वरेतसां [15]चाश्रमिणां विनापि तैर्विशुद्धविद्योदय इष्यते; किं तु कालकृतो विशेषः; साधनविशेषाद्धि सा क्षिप्रं क्षिप्रतरं च व्यज्यते; तदभावे चिरेण [16]चिरतरेण च । तदुक्तम्—"[17]सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्"

---

1 यथैव च—B.
2 तद्बीज—B.
3 Gaut.-Dhar. 1-3-1.
4 ...........
5 Jābāla. 4.
6 Kauṣ. 2-4.
7 Bṛh. 4-4-22.
8 ...........
9 विद्योदयस्य—A and C.
10 Manu. 6-35.
11 निरपेक्षाणा—B.
12 Bṛh. 4-4-22.
13 Brahm.-Sū. 3-4-32.
14 विशेषादि—A and C.
15 B omits च.
16 B omits चिरतरेण.
17 Brahm.-Sū. 3-4-26.

एषोऽर्थः—"[1]यज्ञेन दानेन" इति श्रवणात् कर्माण्यपेक्ष्यन्ते विद्यायामभ्यासलभ्यायामपि, यथान्तरेणाप्यश्वं ग्रामप्राप्तौ सिद्ध्यन्त्यां शैघ्र्यायाक्लेशाय वाश्वोऽपेक्ष्यते ।

ननु विद्यारूपं ब्रह्मैव; न विद्या ब्रह्मणोऽन्या; तच्च नित्यमकार्यम्; तत्र कथं किंचिदपेक्ष्येत[2]? उच्यते—यथोपधानतिरोहितरूपस्फटिकमणिरुपधानावकर्षणं [3]स्वरूपाभिव्यक्तयेऽपेक्षते तथेहापि द्रष्टव्यम्; न हि स्फटिकमणेः पूर्वरूपं विनष्टमुपधान[4]संनिधेः, तदपगमे वान्यदुत्पन्नम्; न ह्यकस्मादनेकविसभागक्षणव्यवहितस्य पूर्वसभागक्षणस्योत्पत्तिः संभवति; न ह्यग्निविगमेऽङ्गारेभ्यः पुनः काष्ठसंततिप्रवृत्तिः । तस्माद्यथैवाकार्यं स्फटिकरूपमुपधानावकर्षणमपेक्षते तथात्मरूपमपि । स्यादेतत्—ज्ञानं तत्र सापेक्षम्; तच्च स्फटिकाद्भिन्नं कार्यम्; पुरुषप्रयत्नो हि तत्र ज्ञानार्थः । किं पुनर्ज्ञानं स्वरूपेणैवार्थितम्, आहोस्विदर्थस्वभावसिद्धये? न तावत् स्वरूपेण, अर्थेन व्यवहारात्; न [5]विज्ञानमात्रनिबन्धनो व्यवहारः, मिथ्याज्ञानेनापि प्रसङ्गात् । अथार्थस्वभावाय ज्ञानमर्थ्येत[6], तदर्थो व्यापार[7]स्तेनार्थितो भवति । न च ज्ञानादर्थे कश्चिद्विकारः, तयोरसंबन्धात्; योग्य[8]देशतायाः सर्वत्र भावात्; सर्वप्रतिपत्तॄणां[9] च विदितत्वप्रसङ्गात्; ध्वस्तानागतेषु च तदसंभवात् । तस्माद्यथातिरोहितमपि तिरोहितमिवाभि[10]व्यज्यत इव प्रयत्नापेक्षम्, [11]तथात्मतत्त्वमप्यतिरोहितं[12] तिरोहितमिव प्रयत्नादभिव्यज्यत इवेति पुष्कलम् ।

संहृताखिलभेदोऽतः सामान्यात्मा स वर्णितः ।
हेमेव पारिहार्यादिभेदसंहारसूचितम् ॥ ३ ॥

यतश्च विशेषप्रत्यस्तमयमुखेन तन्निरूपणम्, अतोऽन्यैर्ब्रह्मविद्याभियुक्तैः सामान्यरूपं ब्रह्म निरूपितम्—"[13]स एष महानज आत्मा सत्तालक्षणः" तथा "[14]सत्तैव सर्वभेदयोनेः प्रकृतिः परा" इति । यथा सुवर्णतत्त्वं कटकाङ्गुलीयादिविशेषोपसंहारेण निरूप्यमाणं तत् सामान्यमिति । ये वा[15]—

---

1 Bṛh. 4-4-22.
2 दपेक्ष्यते—B.
3 B omits स्व.
4 सन्निधौ—B.
5 हि for वि—B.
6 मर्थ्यते—B.
7 तेनैवार्थितः—B.
8 देशकतायाः—B.
9 यक्तॄणां—A and C.
10 व्यज्यमानमिव—B.
11 तथात्मैकत्व—B.
12 B adds अपि.
13 Cf. Bṛh. 4-4-24.
14 . . . . .
15 च—B

"[1]निर्विशेषं न सामान्यं भवेच्छशविषाणवत्" इत्यभावमाहुः, तान् प्रत्युच्यते —संहृताखिलभेद इति । यदि तावदसामान्यत्वं साध्यते सिद्धसाधनम्; विशेषाणामभावे केषां तत् सामान्यम्? सामान्यं तूक्तं ब्रह्मवादिभिः विशेषप्रत्यस्तमयमुखेन निरूपणादुपचारतः । अथाभाव एव साध्यः, विशेषैरेवास्य निर्विशेषैर्व्यभिचार इति ।

[2]इति श्रीमन्मण्डनमिश्रविरचितायां ब्रह्मसिद्धौ
ब्रह्मकाण्डः समाप्तः ।

---

[1] Ślōka-Vārtika, page 548.

[2] इत्याचार्यमण्डनमिश्रकृतौ ब्रह्मकाण्डं समाप्तम्—A and C.

ओम् ।

## ॥ तर्ककाण्डः ॥

ननु प्रत्यक्षादिभिर्व्यावृत्तानां भावस्वभावानामवगमान्नैकस्मिन्नद्वये शब्दः प्रमाणम्, प्रत्यक्षादिविरोधात्, [1]ग्रावप्लवनाद्यर्थवचोवत् । उच्यते—

आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः ।
नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यते ॥ १ ॥

ननु प्रमाणान्तरपरतन्त्राणां पुरुषवचसां तद्विरोधाद्युक्तमप्रमाणत्वम्; स्वतन्त्रस्य[2] त्वाम्नायस्यानपेक्षितप्रमाणान्तरप्रवृत्तेस्तद्विरोधेऽपि कस्मादप्रमाणत्वम्? आम्नायविरोधादेव तु प्रत्यक्षादीनि प्रमाणतायाः किमिति न च्यवन्ते? तुल्येऽनपेक्षत्वे न विशेषहेतुरस्ति । तत्र वृथा प्रमाणान्तरविरोधपरिहार-परिश्रम इति ।

तत्र केचिदाहुः—प्रत्यक्षादिविरोधे आम्नायस्य दौर्बल्यम्, सापेक्षत्वात्; तथा हि—स्वरूपसिद्ध्यर्थमेव तावत् प्रत्यक्षादीन्याम्नायोऽपेक्षते; तथा च तेषां प्रामाण्यमनुमन्तव्यम्, तदपबाधने स्वरूपस्यैव तावदसिद्धेः; न त्वेव-माम्नाये प्रत्यक्षादीनां काचिदपेक्षा। दृष्टव्यभिचारत्वाच्च शब्दस्य,[3] प्रत्यक्षस्य चादृष्टव्यभिचारत्वात् । अपि च सावकाशानवकाशयोरनवकाशं बलवत्; अनवकाशाश्च प्रत्यक्षादयः, सावकाशस्तु शब्दो गौणेनार्थेन ; तथा हि— शक्यमेकत्वमभेदश्रुतीनामुपचरितमवकाशो वर्णयितुम्; अविवक्षितार्थानां वा वेदान्तानां जपोपयोगोऽवकाशः; उपनिषदो वेदान्ता इति [4]वर्णितम् । किं च व्याकुलत्वादाम्नायस्य अव्याकुलत्वात् प्रत्यक्षादीनाम्; कर्मविधयो हि भेदाश्रया अभेदाश्रयाश्च वेदान्ताः परस्परपराहता असत्यपि प्रमाणा-न्तरविरोधे दुर्लभप्रामाण्याः; किं पुनरव्याहतप्रतिष्ठितप्रामाण्यप्रत्यक्षादिविरोधे । तस्मादिदमविरोधाय प्रयत्यत इति । मुख्यत्वाच्च; मुख्या हि प्रत्यक्षादयः: जातस्य जन्तोरपरकाल आम्नायः; स तैः प्रतिष्ठितार्थैरपहतविषयः कल्पनीयार्थो बाध्यते, तदनुसारेण वार्थकल्पनामर्हति । अर्थतोऽपि च मुख्यता प्रत्यक्षादीनाम्; पदपदार्थविभागाधीन [5]आम्नायार्थपरिच्छेदः, स च प्रत्यक्षादिष्वायतते । अतोऽविरोधाय [6]प्रयत्यत इति ।

---

[1] शिला—A and C.
[2] स्याम्नायस्य—B
[3] B omits—स्य.
[4] वर्णिताः—A ; वर्णितः —B.
[5] आम्नायादर्थे—B.
[6] प्रयत्न इति—A.

अन्ये मन्यन्ते—तुल्यबलत्वेऽपि प्रत्यक्षादीनामाम्नायस्य च वस्तुनि विकल्पानुपपत्तेर्विरोधे संशयः स्यात्; तेनाविरोध उपपाद्यत इति ।

अन्यद्दर्शनम्—आम्नाय एव बलवांस्तद्विरोधे; "[1]पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्"; "[2]पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति" इति । तथा हि—सर्वस्य निसर्गजः प्रत्यक्षादिनिबन्धनः किल विभक्तवस्तुपरिच्छेदः; तदपेक्षस्तु तत्पूर्वकोऽनिसर्गजः कस्यचिदेवा[3]गन्तुरद्वैतावगमः; स पूर्वमनुपमृद्योदेतुमशक्नुवंस्तदपबाधात्मोदीयते । इतश्च—संभवद्विचित्रविभ्रमहेतुत्वात् प्रत्यक्षादीनाम्, विगलितनिखिलदोषाशङ्कत्वाच्चाम्नायस्य; पुरुषाश्रयाणां हि दोषाणां शब्दे पुरुषाभावेऽसंभवात् । शक्यो ह्याम्नायादेवानादिरविद्यासंस्कारो विभ्रमहेतुः प्रत्यक्षादिषु संभावयितुं निश्चेतुं च देहात्माभिमान इव; न त्वेवमपौरुषेये शब्दे [4]काचिद्दोषाशङ्का; सत्यां वा प्रमाणमेव न स्यात् । प्रत्यक्षादीनां तु व्यावहारिकं प्रामाण्यम्, अविद्यासंस्कारस्य स्थेम्ना[5] व्यवहारविपर्ययाभावात्; यत्र च व्यवहारविपर्ययो न तत्र प्रामाण्यम् । शब्दे तु संभावितदोषे न तत्त्वावेदनेन प्रामाण्यम्; न व्यवहाराविपर्ययेण; अदृष्टार्थत्वात् दोषेभ्यो व्यवहारविसंवादिज्ञानदर्शनाच्च । प्रत्यक्षादीनां तु [6]व्यवहारे संवादान्न शक्यते व्यवहारविसंवादिज्ञानहेतुर्दोषः कल्पयितुम्; व्यवहारविपर्ययाद्धि स [7]कल्प्येत; तत्त्वदर्शनस्य तु वेदान्तजन्मनः प्रतिपक्षत्वात् तत्त्वप्रतिहतिमात्रहेतुरेवानादिरविद्यानुबन्धः कल्प्यते; ततो दोषानुबन्धः प्रामाण्यं चेति न विरोधः । शब्दस्तु संभावितदोषो दुर्लभप्रामाण्य एव स्यात्; दृश्यते हि दोषेभ्यो व्यवहारविसंवादिज्ञानोत्पत्तिः; तत्र दोषाशङ्कया व्यवहारविसंवादस्य शङ्कितत्वात् तत्त्वप्रतिघातस्य च, न तत्त्वावेदनलक्षणं प्रामाण्यम्, न व्यवहाराविसंवादलक्षणमिति । तस्मात् शब्दस्य प्रामाण्याभ्युपगमे प्रमाणान्तरविरोधेऽपि तस्यैव बलवत्त्वमिति सांप्रतम् । यत्तु प्रत्यक्षाद्यपेक्षणादिति, तत्रोच्यते—न प्रमितावपेक्षावत्ता शब्दस्य प्रत्यक्षादिषु, किंतु स्वरूपसिद्धौ; अन्यथा प्रमाणमेव न स्यात् । तथा च स्वकार्येऽनपेक्षत्वान्न प्रत्यक्षादिभ्यो हीयते । प्रत्यक्षादयोऽपि स्वरूपसिद्धौ नान्यानपेक्षाः; कार्ये हि सापेक्षत्वं

---

[1] Mim.-Sū. 6-5-54.

[2] Ślōka-Vārtika, page 62.

[3] वावगन्तु—A.

[4] कापि दोषाशङ्का—A.

[5] स्थेम्नो—A and B.

[6] व्यवहार—A.

[7] कल्प्यते—A.

सामर्थ्यमपकर्षतीति[1] । यच्चैतेषां [2]प्रामाण्यमनुमन्तव्यमिति, को वान्यथाह ? व्यवहाराविसंवादिलक्षणं तु तत्, न तत्त्वावेदनलक्षणम् । व्यावहारिकप्रामाण्योपेतेभ्यः प्रत्यक्षादिभ्यः सिद्धादाम्नायात्तत्त्वदर्शनम्, तद्विरोधात् तेषु तत्त्वदर्शनांशमे[3]वापबाधते, न व्यवहाराविसंवादांशम् । दृष्टं च हेतुत्वेनापेक्षिताया अपि पूर्वस्याः प्रतिपत्तेः परस्याः प्रतिपत्तेर्बलीयस्त्वम्; यथा दूरस्थेषु वनस्पतिषु हस्तिप्रतिपत्तिभ्यो वनस्पतिप्रतिपत्तेः; अपेक्षिता हि हस्तिप्रतिपत्तयो व्यक्तवनस्पतिप्रतिपत्त्या हेतुत्वेन; न तस्या इन्द्रियार्थसंनिकर्षमात्राज्जन्म, आपातेऽभावात्; न च[4] देशविशेषात्, तद्देशस्थस्यै[5]वोत्पत्तेः; तस्मात् पुरोवर्तिषु वनस्पतिषु प्रणिहितमनसः प्राच्यविपर्यासानुगतमतिसंस्कारसचिवेन्द्रियादि[6]संयोगकारिता सेति मन्तव्यम् । एवमेकादिसंख्याबुद्ध्युपाया विंशत्यादिबुद्ध्योऽप्युदाहार्याः । एवं च यदेके वर्णयन्ति— स्वयमेव व्याहता वेदान्तार्थप्रतिपत्तिः; नाभेदो भेदमन्तरेण शक्योऽवसातुम्; भेदोपाया हि तस्य प्रतिपत्तिः; तत्राभेदः समाक्षिप्तभेद एव प्रतायत इति व्याघातः—तदपास्तम्; यत उपायमाक्षिपति प्रतिपत्तिः, नोपायस्य परमार्थताम्, मिथ्याज्ञानादपि[7] तत्त्वप्रतिपत्तेः । व्यावहारिकं च भेदस्य सत्यत्वमिष्टमेवेति । व्यभिचारदर्शनं च दुष्टहेतुजन्मनोः शब्दप्रत्यक्षयोः समानम्; इतरयोरपि तुल्यमव्यभिचारित्वम् । तथानवकाशत्वमपि; यदि खल्वेकमद्वयं वेदान्तार्थः, कस्तेषामन्योऽवकाशः ? अथौपचारिकमेकत्वं तदर्थः अविवक्षितार्थता वा जपोपयोगिनाम्, तत्र विरोध एव नास्तीति बलाबलचिन्ता नावतरति । तत् कुतः सावकाशत्वेन दौर्बल्यम् ? कथं च मुख्यमर्थमतिलङ्घ्योपचरितोऽवकाशः ? कथं [8]वौत्पत्तिके शब्दस्यार्थं प्रति शेषभावे— "[9]दृष्टो हि तस्यार्थः कर्मावबोधनम्" "[10]अविशिष्टस्तु वाक्यार्थः" इति च—अविवक्षितार्थता ? प्रमाणान्तरविरोधादिति चेत्, वार्तमेतत्; न प्रमाणस्य प्रमाणान्तरापेक्षं प्रामाण्यम्, येन तद्विरोधे स्वरसं जह्यात्; तदपेक्षत्वे हि तदनुगुणतया वर्तेत । निरपेक्षस्य[11] कः प्रमाणान्तरानुसरणे

---

1 A omits इति.

2 अनुमन्तव्यं प्रामाण्यमिति—B.

3 वापबाधते—B and C.

4 A and C omit च.

5 A omits एव.

6 B omits सं.

7 ज्ञातादपि—A.

8 चौत्पत्तिके—A.

9 Śābarabhāṣya I-1-1.

10 Mīm.-Sū. I-2-40.

11 स्य तु—B.

हेतुः ? लौकिकास्तु शब्दाः प्रमाणान्तरापेक्षं [1]स्वार्थमभिदधतीति युक्ता तेषां तदनुसारिणी वृत्तिः । तुल्ये त्वनपेक्षत्वे किमिति न विपर्ययः, उभयोर्वा व्याघातादप्रामाण्यम्, "[2]पौर्वापर्ये पूर्वदौर्बल्यम्" इति वा रजतज्ञानस्येव पूर्वस्य बाधः ? न खलु रजतज्ञानविरोधाच्छुक्तिज्ञानमन्यविषयमविषयं वा । कथं तर्हि वेदे गुणवादः ? यत्र श्रौतैरर्थैः प्रमाणार्थनिष्पत्तेरसंभवः, तत्र द्वितीयस्या अपि वृत्तेः शब्दानां प्रवृत्तिदर्शनात् तया प्रमाणविषयलाभः; यत्र तु शब्दाः स्वरसेन लभन्ते विषयम्, तत्र न प्रमाणान्तरविरोधादपावर्तन्ते; न ह्येषां प्रमाणान्तरनिबन्धनोऽर्थः, येन तद्वशादपावर्तेरन् ।

अथ मतम्—[3]उभयानुग्रहादेवं कल्प्यते; एवं हि शब्दः प्रत्यक्षादयश्चानुगृहीता भवन्ति; अन्यथा प्रत्यक्षादयोऽत्यन्तमे[4]व बाधिताः स्युः । नैतत् सारम्; प्रमाणसामर्थ्यानुसारेण प्रमेये काचित् कल्पना स्यात्; प्रमाणे तु स्वरससिद्धं परित्यज्य [5]कल्पनायां न निबन्धनमस्ति । तस्मात् प्रमाणानुसारेण विकल्पसमुच्चयव्यवस्थाः कल्प्यन्ते, नोभयानुग्रहात्; नोभयमनुग्रहीतव्यमिति प्रमाणमस्ति । ते एव प्रमाणे इति चेत्—यदि मतम्, न प्रमाणस्य प्रमाणान्तरादनुग्राह्यत्वम्; अपि तु स्वत एव; प्रमाणत्वादेव हि तस्य तेनार्थव्यवस्था[6]पना—यथा तर्हि ततोऽर्थोऽवगम्यते तथा व्यवस्थापनीयः; एवं तदनुगृहीतं भवति; अन्यथा बाधितं स्यात् । अप्रमाणिका चार्थव्यवस्था, ततः स्वरसेनाप्रतीतेः अन्यस्य चाभावात् । इतरेतराश्रयप्रसङ्गाच्च; प्रामाण्यात् सिद्धादर्थान्तरे प्रतीतिः प्रामाण्यान्यथानुपपत्त्या कल्पनीया, तत्प्रतीतेश्च प्रामाण्यम्; स्वरसलभ्ये त्वर्थे प्रतीतित एव प्रामाण्यमिति नेतरेतराश्रयता । तस्माद्विरोधे बाध एव पूर्वस्य प्रमाणानुसारी, तथा प्रतीतेः; नोत्तरस्य विषयान्तरकल्पना । न खलु रजतज्ञानानुग्रहाय [7]शुक्तिशकलज्ञानस्य गोचरो[8]ऽपरः कल्प्यते । न च प्रत्यक्षादीनामनन्यगतित्वादनवकाशत्वम्; या खलु रजतादिविभ्रमाणां गतिः, सा तेषामपि; यदि तेषामुपचरितः कल्पितो वा विषयः, प्रत्यक्षादीनामपि तथा; अथासत्त्वात् तस्या विषया अविद्यमानार्थाः; प्रत्यक्षादयोऽप्येवम् । तस्मादविवक्षितार्थत्वमुप-

---

1 स्वमर्थं—A.
2 Mim.-Su. 6-5-54
3 उभयत्रानु—B.
4 मप—A.
5 कल्पनायाः—A.
6 पनात—A and B.
7 शुक्तिक—A and C.
8 अपरोऽपि—A and B.

चरितार्थत्वं वा गतिरुभयोरविशिष्टा। एतेनेदमपि पराकृतम्, [1]यदाहुः—शब्दस्य प्रमाणान्तरविरोधे दृष्टमुपचरितार्थत्वमविवक्षितार्थत्वं वा लोके; तस्मात् प्रत्यक्षादिविरोधे वेदान्तानां तथाभाव इति, प्रत्यक्षादिष्वपि तथा दर्शनादिति।

यत्तु मुख्यत्वात् प्रतिष्ठितार्थैरपहृतविषय आम्नाय इति; अत एव बाधकः, शुक्तिज्ञानवत्। न च तदनुसारेणार्थकल्पनामर्हति, अनपेक्षत्वात्; न तदधीनमस्य प्रमाणत्वम्; न तैः संभूयकारित्वम्, [2]नाम्नायस्य प्रत्यक्षादी[3]नां चैकवाक्यभावः; परस्परानपेक्षो ह्युभयत्र बुद्ध्युत्पादः। तत्र परबलीयस्त्वं न्याय्यम्; यथोक्तम्—

"[4]पूर्वात् परबलीयस्त्वं तत्र नाम [5]प्रतीयताम्।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्॥"

यत्र त्वेकवाक्यतया संभूयकारित्वं तत्रानुपजातविरोधितया स्वरसवृत्त्या मुख्ये स्थिते, प्रथमया वृत्त्या तदेकवाक्यत्वं प्रतिपत्तुमशक्नुवन्ति तदपेक्षितार्थसमर्पणानुपपत्तेः परपदानि द्वितीयया वृत्त्या पूर्वापेक्षितमर्थं समर्पयन्त्येकवाक्यतासामर्थ्यादिति मुख्यबलीयस्त्वम्। यत्तु व्याकुलत्वादिति, तत्रोच्यते—स्याद्व्याकुलत्वम्, यदि कर्मविषयो भेदप्रतिपादनपराः स्युः; ते तु सिद्धं भेदमुपाश्रित्य 'इदमनेनेत्थं साधयेत्' इति पुरुषहितानुशासनप्रधानाः। स्यादेतत्; असति भेदेंऽशत्रयप्रत्यस्तमयात् कुतो हितानुशासनम्? उच्यते—यथा खलु श्येनादिषु "[6]न हिंस्यात् सर्वा भूतानि" इति प्रतिषेधात् साध्यांशप्रत्यस्तमयेऽप्यनुशासनम्, एवं सर्वत्र सर्वांशप्रत्यस्तमयेऽपि; तथा हि—निषिद्धानर्थोदया कथं [7]हिंसा साध्या स्यात्? अथ भवति कस्यचित् तीव्रक्रोधाक्रान्तस्वान्ततया समुद्धतध्वान्ततिरस्कृतविवेकविज्ञानस्यानर्थमप्यर्थत्वेन पश्यतः शास्त्रोपदेशमतिक्रामतः, तथा ज्योतिष्टोमादिषु निसर्गजाविद्योपप्रदर्शिता अप्रतिबुद्धानां त्रयोऽप्यंशाः, तानुपाश्रित्य तेषामनुशासनम्। प्रतिबुद्धास्तु कर्मविधिभिर्नानुशिष्यन्ते; यथा श्येनादिविधिभि[8]रपजितक्रोधारातयः। तदेवं व्यवहारसिद्धभेदा[9]श्रयेषु कर्मविधिषु यद्यपि भेद-

---

[1] यदाह—B.
[2] C omits न.
[3] नां चैकवाक्यताभावात्—C.
[4] Tantra-Vārtika, page 819, reads पौर्वापर्ये.
[5] प्रतीयते—A.
[6] .......
[7] हिं सा—B and C.
[8] रवजित—A.
[9] श्रयेषु—A.

प्रतीतिरस्ति, तथापि तेषामतत्परत्वान्न तत्र प्रामाण्यं वृत्तान्तेष्विवा[1]र्थवादपदानाम् । तथा च कुतस्तैर्वेदान्तानां पराहतिः, वेदान्तैर्वा तेषाम्? अपि च प्रत्यक्षादिष्वेव पराहतिरुप[2]लभ्यते, बाध्यबाधकभावदर्शनाद्रजतशुक्तिशकलादिज्ञानेषु; भेदाभेदप्रतीतेश्च सर्वत्र । तदेवं बलवत्त्वेऽप्याम्नायस्य यो नाम मन्दधीर्लौकिकवचसां प्रत्यक्षादिविरोध उपचरितार्थत्वदर्शनाल्लोकवद्वेदेऽपि शब्दवृत्तमिति मन्यते, यो वा निरूढनिबिडतया भेददर्शनान्धकारस्य प्रत्यक्षादीनामेव बलवत्त्वं [3]मन्यते, लोकवचसां च दैर्बाधदर्शनात्, तत्प्रतिबोधनाय विरोधो निरस्यते; न हि यो नाम मन्दविषेण वृश्चिकेन दष्टो म्रियते, नासौ न चिकित्स्यत इति ।

तत्र प्रत्यक्षे त्रयः कल्पाः—वस्तुस्वरूपविधिः, वस्त्वन्तरस्य[4] व्यवच्छेदः, उभयं [5]वेति; उभयस्मिन्नपि त्रैविध्यम्—यौगपद्यम्, व्यवच्छेदपूर्वको विधिः, विधिपूर्वको व्यवच्छेद इति । तत्र वस्त्वन्तरव्यवच्छेदे उभयस्मिन् वा भेदः प्रत्यक्षगोचर इति भवति विरोधः । स्वरूपविधिमात्रे तु कस्यचिद्व्यवच्छेदेन शून्ये न भेदः प्रमाणार्थः; न हि व्यवच्छेदादृते भेदसिद्धिः । विधिमात्रव्यापारं च प्रत्यक्षम्; अतो न विरोधः । कथमित्युच्यते—

लब्धरूपे क्वचित् किंचित् तादृगेव निषिध्यते ।
विधानमन्तरेणातो न निषेधस्य संभवः ॥ २ ॥

न तावद्व्यवच्छेदमात्रं प्रत्यक्षव्यापारः, न युगपदुभयम्, न व्यवच्छेद[6]पूर्वकं विधानम्; यतः सिद्धे विषये सिद्धरूपमेव निषिध्यते—'नेदमिह' 'नायमयम्' इति सिद्धे भूतले सिद्धो घटः, गवि वा अश्वः । न प्रतिषेध्याद् प्रतिषेधविषयाच्च विना प्रतिषेधोऽवकल्पते । कथं तर्ह्यत्यन्तासतां प्रधानखपुष्पादीनां प्रतिषेधः? न हि [7]तत्र क्वचिद्देशे काले वा निषेधः, आत्यन्तिकत्वात्; नापि कुतश्चित् सिद्धिः, अत्यन्तासत्त्वात् । [8]तत्र केचिदाहुः—खपुष्पादिषु तावत् सिद्धेषु खादिषु तद्विधाः पुष्पादयो निषिध्यन्ते; 'प्रधानं नास्ति' इति जगत्कारणे सुखदुःखमोहात्मताविभक्तकार्यत्वादीनि [9]निवार्यन्ते ।

---

[1] र्थवादानाम्—A.
[2] लक्ष्यते—A.
[3] मनुते—A and B.
[4] B omits स्य.
[5] चेति—A.
[6] पूर्वं—A.
[7] B and C omit तत्र
[8] अत्र—A.
[9] न वार्यन्ते—C.

अन्ये तु—कुतश्चिन्निमित्ताद्बुद्धौ लब्धरूपाणां बहिर्निषेधः क्रियत इति वर्णयन्ति; अन्यथा दैवनिषिद्धे कः प्रतिषेधोऽप्राप्तरूपे? [1]प्राप्तरूपे वा कथमत्यन्ताय प्रतिषेधः? अपि च अनपेक्षितविषयनिषेध्ये व्यवच्छेदे शून्यता प्रमाणार्थः स्यात्, न भेदः; सर्वस्य सर्वत्राविशेषेण निषेधात्। यस्तु भेदाय व्यवच्छेदः स भेद्ययोः सिद्धिमपेक्षते; न च सा विधाना-[2]द्दृत इति प्राग्विधानमेषितव्यम्; विधिपूर्वक एव [3]च निषेधोऽङ्गीक्रियत इति।

नापि विधिपूर्वको व्यवच्छेदः; यतः—

क्रमः संगच्छते युक्त्या नैकविज्ञानकर्मणोः।
न संनिहितजं तच्च तदन्यामर्शि जायते ॥ ३ ॥

न खल्वेकप्रमाणज्ञानव्यापारौ सन्तौ विधिव्यवच्छेदौ क्रमवन्तौ युज्येते, क्षणिकत्वात्; क्रमवतोर्हि व्यापारयोः पश्चात्तनो न तद्व्यापारः स्यात्, व्यवधानात्। अपि च जन्मैव बुद्धेर्व्यापारोऽर्थावग्रहरूपायाः; सा चेदर्थविधानरूपोदया, विधिरेवास्या व्यापारः, यौगपद्यस्य निषेधात्, उत्पन्नायाश्च[3] पुनरनुत्पत्तेः। अपि च संनिहितार्थालम्बनं प्रत्यक्षं नासंनिहितमर्थमवभासयितुमर्हति; न चानवभासमान[4]रूपं व्यवच्छेत्तुं पर्याप्नोति; अनवभासमाने हि तत्र व्यवच्छेद्ये व्यवच्छेदमात्रं स्यात्, न व्यवच्छेदः कस्यचित्; सर्वस्य वा स्यात्। तस्मान्नानवभासमाने व्यवच्छेद्ये [5]व्यवच्छेदः; न च संनिहितार्थावलम्बने प्रत्यक्षेऽसंनिहितावभासो युक्तः। कथमिदानीं बाधकं प्रत्यक्षम्? तत्र हि पूर्वार्थनिषेधपुरःसरोऽन्यविधिरेकज्ञानेऽभ्युपेयते, असंनिहितनिषेध्यावभासश्च; तस्मान्नैष नियमः, यतः पूर्वो निषेधः, एक[6]ज्ञानव्यापारे च क्रमः, [7]प्रत्यक्षेण [8]चासंनिहिता[9]र्थावभासः। नैतत् सारम्; तत्रापि पूर्वविज्ञानविहिते रजतादौ 'इदम्' इति च संनिहितार्थसामान्ये निषेधो विधिपूर्व एव; शुक्तिकाविधिस्तु विरोधिनिषेधपूर्व उच्यते; विधिपूर्वता च नियमेन निषेधस्योच्यते, न विधेर्निषेधपूर्वक[10]ता निषिध्यते; न च तत्रैक-

[1] अप्राप्तरूपे—B.
[2] द्दतमिति—B.
[3] A omits च.
[4] A and B omit रूप.
[5] अन्यव्यवच्छेदः—A and B.
[6] ।विज्ञान—A.
[7] प्रत्यक्षे—A.
[8] B omits च.
[9] A omits अर्थ.
[10] A omits क.

ज्ञानस्य क्रमवद्व्यापारता, उभयरूपस्योत्पत्तेः[1]; पूर्वज्ञानप्रापितत्वाच्च विषयव्यवच्छेद्ययोर्नासंभवः; पूर्वज्ञानावभासिते च व्यवच्छेद्ये व्यवच्छेदस्य वृत्तेर्नासंनिहितार्थावभासप्रसङ्गः, पूर्वापेक्षस्य तस्योत्पत्तेः; पूर्वापेक्षयैव च तत् द्विरूपमुदेति; अन्यथा एकरूपमेवोदीयात्। अपि च सर्वव्यवच्छेदान-पाकुर्वतः को व्यवच्छेदोऽभिमतः, येन प्रत्यव[2]स्थीयेत? सिद्धः स लोक इति चेत्, अयं वा किं न लोकसिद्धः—'नाश्वो गौः, न गौरश्वः' इति?

यत्तु मतम्—एकविधिरेवान्यव्यवच्छेदः; तथा हि—दर्शनं यथैव तदाकारतया तद्रूपं विदधाति, तथा तदेकाकारप्रतिनियमात् 'तदेव, नान्यत्' इत्यन्यद्व्यवच्छिनत्ति; तत्सामर्थ्यप्रभावितौ च 'इदम्, नेदम्' इति विकल्पौ भावाभावव्यवहारं प्रवर्तयतः। न ह्येकाकारप्रतिनियता[3]दनन्यसंसर्गिणो ज्ञानादन्योऽन्यव्यवच्छेदः। [4]तत्रोच्यते—

विधानमेव नैकस्य व्यवच्छेदोऽन्यगोचरः।
मा स्म भूदविशेषेण मा न भूदेकधर्मिजुषाम् ॥ ४ ॥

नैकप्रतिनियमोऽन्याभावनिश्चयनिमित्तम्, उपलब्धिलक्षणप्राप्तस्येतरस्य[5] चाविशेषेण व्यवच्छेदप्रसङ्गात्; तत्प्रतिनियमो हि ततोऽन्यस्यासंसर्गः। तथा चासंस[6]र्गाद्व्यवच्छेदे तस्य दृश्यादृश्ययोरविशेषादुभयोर्व्यवच्छेदः स्यात्। अथ मतम्—भवत्येव; तथा हि—यावन्तोऽस्यानात्मानस्तानविशेषेण तदात्मनियमाद्दर्शनमपाकरोति; तथा च नास्यान्य आत्मानः; तद्देशकालास्तु भवेयुः, रूपादिवदविरोधात्; तत्रोपलब्धिलक्षण[7]प्राप्तिर्विशेषस्तद्देशकालव्यवच्छेदावधारणाय; संभवति ह्यनुपलभ्यस्तद्देशकालोऽनात्मानुपलभ्यमानोऽप्यन्योपलब्धौ, रूपोपलब्धाविव रसः; न [8]तु तुल्योपलम्भयोग्यतः, नियमेनोपलम्भात्, इतरवत्; अन्यथा न तुल्योपलम्भयोग्यतः स्यात्। सत्यमस्त्ययं विभागः, न त्विदानीं दर्शनप्रतिनियमस्य सामर्थ्यम्; तथा हि—प्रतिनियतमपि तत्र [9]देशे काले च रूपे दर्शनं तयोर्यथा[10] रूपविधिमात्रो-

---

[1] स्यैवोत्पत्तेः—A.
[2] स्थीयते—A.
[3] दन्यासं—C.
[4] Śaṅkhapāṇi and Citsukha read अत्र in their commentaries.
[5] स्याशेषेण—B.
[6] सर्गाद्व्यवच्छेदे—B.
[7] प्राप्तिविशेष—B.
[8] B and C omit तु.
[9] काले देशे—A.
[10] A omits यथा.

पक्षयान्न रसं व्यवच्छिनत्ति, तथा भूभागदर्शननियमोऽपि [1]भूभागविधिमात्रव्यापारत्वान्न घटदृश्यमपि व्यवच्छिन्द्यात्; व्यवच्छेदे वा सर्वस्य[2] व्यवच्छेदः। तस्मात् दृश्यव्यवच्छेदेऽपि हेत्वन्तरमुपास्यम्, न दर्शनप्रतिनियममात्रम्। [3]तथा चात्मान्तरव्यवच्छेदोऽपि न ततः सिद्धिमुपाश्नुते। कामं विधेर्विधेयासत्त्वव्यवच्छेदरूपत्वात् तदभावो व्यवच्छिद्येत; नात्मान्तरसत्ता, तद्देशकालयोरिवानुपलभ्यसत्ता। नैकस्य बहव आत्मान इति चेत्, अन्यतस्तर्हि विरोधाद्व्यवच्छेदः; न दर्शननियमात्। असति च व्यवच्छेदे कुतो बहुत्वम्, कुतो वा विरोधः? इतरेतराश्रयं वा; तस्मान्नैकविधिरन्यव्यवच्छेदः। अपि च एकनियमादन्यव्यवच्छेदे चित्रादिषु नीलादीनामेकदर्शनभाजां भेदो न सिध्येत्, एकज्ञानसंसर्गादेकत्र ज्ञानस्यानियमात्।

ननु प्रकृत्यैव भिन्ना भावाः; तांस्तद्विधान् विदधदेव दर्शनं परस्परतो व्यावर्तयति; न हि व्यावृत्तिरन्या व्यावृत्तिमतः; तत्र व्यावृत्तिमद्विधौ [4]सापि विधीयत एव; यत्प्रकृतिः खलु यः पदार्थः स तयैव प्रकृत्या विधेयः; अन्यथा न तस्य विधिः स्यात्; व्यावृत्तस्वभावाश्च भावा यथायथं दर्शनेषु निर्भासन्ते; तस्मात् तथैव विधीयन्त इति। अत्राप्यसं[5]स्पृष्टनिर्भासनादसंस्पृष्टस्वभावत्वे दृश्यादृश्ययोरविशेषेण व्यवच्छेदस्तदवस्थः। अपि च

न भेदो वस्तुनो रूपं तदभावप्रसङ्गतः।
अरूपेण च भिन्नत्वं वस्तुनो नावकल्पते ॥ ५ ॥

न व्यावृत्तिर्वस्तुस्वभावः; सा खल्वेकानेकाधिष्ठाना [6]प्रतिज्ञायते प्रज्ञायते च। तथा च तस्या [7]एकस्या अनेकवृत्तेर्वस्तुस्वभावत्वे वस्तूनामपि भेदो न स्यात्; नैकस्मादभिन्नमभिन्नस्वभावं भिन्नं युज्यते तद्वदेव। अथ मा भूदेष दोष इत्यर्थान्तरमेव व्यावृत्तिरा[8]स्थीयते, तथापि व्यावृत्तेररूपत्वात् स्वरूपेण न भावा व्यावृत्ताः स्युः। अपरः कल्पः—भेदः परस्परानात्मस्वभावः; स चेद्वस्तुनः स्वभावः वस्तूनामभावप्रसङ्गः, [9]अभावात्मकस्वप्रतिज्ञानात्। अपरः

---

1 B omits भू.
2 B omits स्य.
3 तथापि चा—A and C.
4 A omits अपि; B omits सापि.
5 स्पृष्ट—A and C.
6 B omits प्रतिज्ञायते.
7 B omits—एकस्याः.
8 श्रीयते—A.
9 अभावात्मकत्वज्ञा- नात्—B; अभावात्मनोऽप्रतिज्ञा- नात्—C.

प्रकारः—भेदश्चेद्वस्तुनः स्वभावः, नैकं किंचन वस्तु स्यात्, भेदेनैकत्वस्य विरोधात् । परमाणुरपि भेदादनेकात्मक इति नैकः । तथा च तत्समुच्चयरूपोऽनेकोऽप्यस्यात्मा नावकल्पते ; तत्रैकत्वानेकत्वयोरनुपपत्तेस्तृतीयप्रकारासंभवाच्च वस्तुनो निःस्वभावत्वप्रसङ्गः । अन्या व्याख्या द्वितीयार्धस्य—व्यतिरेकाव्यतिरेकविकल्पे प्रत्यवतिष्ठते ; वस्तुगत एष विभागः—तत्स्वभावत्वमन्यत्वं [1]चेति, नावस्तुनि विकल्पविरचितशरीरे भेदेऽवतारमर्हति । तथा हि—तत्त्वान्यत्वाभ्यामनिर्वचनीयोऽनादिविकल्पवासनोपादानविकल्प[2]परिदर्शितशरीरः 'अयमस्माद्भिन्नः, अयमनयोर्भेदः' इति व्यवहारं [3]प्रवर्तयति ; न भेदो नाम किंचिद्वस्तु, यस्य तत्त्वमन्यत्वं वा [4]किंचि[5]द्विचार्येत । तत्रेदं पुनरुपतिष्ठते—अरूपेण च भिन्नत्वं वस्तुनो नावकल्पते । यदि तर्ह्यरूपो निःस्वभावो भेदः—न हि वस्तुस्थित्यास्ति, विकल्पैरेव केवलमुपदर्श्यते—[6]न तर्हि वस्तुनो भिन्नत्वम्, परमार्थतो भेदाभावात् ; न हि कल्पितेन स्वभावेन पारमार्थिकी तद्वत्ता युज्यते ; कल्पितैव स्यात् । तदेतदस्माभिरुच्यमानं किमिति भवान्ना[7]नुमन्यते ? वयमप्येतदेव ब्रूमः—न भेदो भावतोऽस्ति, अनाद्यविद्याविलसितमेतदिति ।

यदुक्तम्—भेदात्मत्वे वस्तुन एकवस्त्वभावः ; तदभावादितरस्यापीति वस्त्वभावः ; तत्राहुः—परापेक्षं वस्तुनो [8]भेदस्वभावं ब्रूमः, नात्मापेक्षम्, येन विरोधादेकवस्त्वभावः स्यात् ; स्वरूपेण त्वेकं वस्तु परापेक्षया[9] भिन्नमिति । तत्रोच्यते—

पौरुषेयीमपेक्षां च न हि वस्त्वनुवर्तते ॥ ५½ ॥

नापेक्षा नाम कश्चिद्वस्तुधर्मः, येन वस्तूनि व्यवस्थाप्येरन् ; न खलु स्वहेतुप्रापितोदयेषु [10]स्वभावव्यवस्थितेषु वस्तुषु स्वभावस्थितये वस्त्वन्तरापेक्षा युज्यते । तत्र पुरुषप्रत्ययधर्मोऽयम् । न च पुरुषप्रत्ययानुविधायीनि वस्तूनि, स्वहेतुभ्यः [10]स्वस्वभावव्यवस्थितेः । अतो न तदनुसारेण वस्तुरूपं व्यवतिष्ठते । व्यवस्थितवस्तुस्व[11]रूपानुसारेणैव तस्य व्यवस्था न्याय्या, तत्पूर्वकत्वात् । परस्परापेक्षायां च

---

[1] चेति—A.
[2] विरचितशरीरः—A and B.
[3] B and C omit प्र.
[4] A omits किंचित्.
[5] विचार्यते—B and C.
[6] B omits न.
[7] भिमन्यते—C.
[8] भेदं—A.
[9] A adds च.
[10] A and B omit स्व.
[11] C omits स्व.

वस्तुस्वभावस्थितावितरेतराश्रयप्रसङ्गात् । अथवा यदुक्तम्—एकस्माद्भेदादव्यतिरेकाद्वस्तुनो भेदाभावप्रसङ्ग इति, तत्राहुः—न भेद एकः, रूपविरोधात्; एकत्वे च तन्निमित्तं वस्तूनामेकत्वं स्यात्; तस्मात् प्रतिभावं भेदो भिद्यते; कथं तर्ह्यनेकाश्रयत्वम्? अपेक्षातः; तथा हि प्रतियोग्यपेक्षं तस्य [1]स्वरूपं व्यवस्थितम्; तथा च यथा[2]यथं भेदैः प्रतियोग्यपेक्षैरात्मभूतैर्भिन्नाः सर्वे भावा इति । तत्रोच्यते—पौरुषेयीमिति । पुरुषो ह्येकमर्थं गृहीत्वा परमपेक्षते कार्यार्थम्; स्वहेतुभ्यस्तु प्रतिलब्धाविकलस्वभावानां भावानां भावान्तरेषु किमर्थापेक्षा? ननु स्वभावस्थितये; नानाविधा हि भावस्वभावाः; तत्र कश्चित् प्रतियोग्यपेक्षयैव व्यवतिष्ठते [3]वस्तुतत्त्वे; यथायमेव भेदः । न तर्हि हेतुभ्यो भावस्याविकलात्मलाभः, भेदाख्यस्य रूपस्य प्रतियोग्यपेक्षत्वात् । हेत्वन्तराच्च प्रतियोगिनः संपद्यमानः पश्चाद्भेदो न स्वभावः स्यात् ।

स्यादेतत्—अवि[4]कलरूप एव भावो हेतुभ्यो जायते । तत्र भेदाख्यं रूपं प्रतियोग्यपेक्षम्, नानपेक्षं कदाचिदिति तस्य तद्विधत्वात् तेन तद्विधेनैव सह जायत इति न विकलरूपप्रादुर्भावः । तत्रोच्यते—भवतु तद्विधस्य प्रादुर्भावः; अपेक्षार्थस्तु वक्तव्यः; यस्य हि यत्र किंचिदायतते, तत् तदपेक्षत इत्युच्यते; नान्यो [5]विशेषः सापेक्षनिरपे[6]क्षयोर्व्यपस्थापको निरूप्यते । तत्र न तावदुत्पत्तिः प्रतियोगिन्यायतते, स्वहेतुभ्योऽविकलस्योत्पत्तेः; नार्थक्रिया, तदसंनिधानेऽपि तस्यार्थक्रियादर्शनात् । प्रतीतिश्चेत्—तथा हि, नानपेक्ष्य प्रतियोगिनं भेदः प्रतीयत इति—न तर्हि भेदस्वभावः सापेक्षः; तस्मिन्नवस्थिते वस्तुस्थित्युत्तरकाला प्रतीतिरर्थान्तरमेव प्रतियोगिनमपेक्षते; यथा व्यवस्थितानपेक्षस्वभावा रूपादयश्चक्षुराद्यपेक्षायां प्रतीतौ न सापेक्षस्वभावाः कथ्यन्ते । इतरेतराश्रयाच्च न प्रतीतिरपि परस्परायत्तावकल्पते । न च वस्तुमात्रादनवगृहीतभेदाद्भेदसिद्धिः, एकस्मिन्नपि तत्प्रसङ्गात् । तस्मात् [7]पौरुषेयीमपेक्षां न वस्त्वनुवर्तते; [8]अतो न वस्तुस्वभाव इत्यर्थः ।

---

[1] C omits स्व.
[2] B omits यथं.
[3] C omits वस्तु.
[4] कल्परूप—B.
[5] हेतुः—A and B.
[6] क्षत्वयोः—A.
[7] पौरुषेय्यपेक्षा—C; पौरुषेय्यपेक्षा—B.
[8] तां—A.

अन्या व्याख्या—न भेदो वस्तुनो रूपम्; आपेक्षिको हि स प्रतीयते। न चापेक्षां पुरुषप्रत्ययं वस्त्वनुवर्तते, व्यवस्थितवस्तुपूर्वकत्वादिति।

कथं तर्हि [1]पित्रादयः? न हि तेऽपेक्षया विना; न च खपुष्पगन्धर्वनगरादितुल्याः, अविसंवादिव्यवहाराङ्गतया लो[2]कसिद्धत्वात्। उच्यते—भेदोऽप्येवं किं न लोकसिद्धः?

अपि च

पित्रादिविषयेऽपेक्षा जननादिप्रभाविता ॥ ६ ॥
एकक्रियाविशेषेण व्यपेक्षा ह्रस्वदीर्घयोः ॥ ६½ ॥

व्यवस्थिते [3]एव जन्यजनकशक्ती पितृपुत्रशब्दयोरभिधेये; ते तु समानजननव्यापारविषये तावास्कन्दतः, स्वभावभेदात्। अतो येन समानत्वम्, तत्रापेक्षा। एतदुक्तं भवति—शब्दार्थस्तत्र सापेक्षः, न वस्तु; अपेक्षाहेतुश्च तत्र साधारणी क्रिया विद्यते व्यवस्थितयोरपि वस्तुनोः। भावभेदे स्वयं वस्तुतत्त्वगतो विचारः; न चापेक्षाहेतुः कश्चिदुपलभ्यते। ह्रस्वदीर्घयोरप्येकजातीयायां क्रियायां देशव्याप्तौ न्यूनाधिकभावा[4]देवं द्रष्टव्यम्।

यदि तर्हि कार्यभेदादप्यपेक्षा; हन्त! अर्थक्रियाभेदादेव भावानां [5]परस्परापेक्षो भेदः सेत्स्यति। किंच असत्यामपि दर्शनाद्भेदसिद्धौ विधिमात्रव्यापारत्वात् कार्यभेदादेव कारणभेदमनुमिमीमहे; नैकत्वे कार्यभेदः कल्पते, कारणस्वभावापेक्षत्वात् कार्यभेदस्य। [6]तज्जननं चेदस्य स्वभावः, नान्यजननः; तस्मात् कार्यान्तरस्यान्यतो जन्मेति। तदिदं [7]भेदेनैव भेदप्रसाधनं नातिचतुरश्रम्। अपि च

अर्थक्रियाकृते भेदे रूपभेदो न लभ्यते ॥ ७ ॥
दाहपाकविभागेन कृशानुर्न हि भेदवान् ॥ ७½ ॥

नार्थक्रियाभेदाद्भावानां परस्परापेक्षो रूपभेदः प्रतीयते; नाप्यनुमातुं शक्यते; व्यपदेश[8]भेदमात्रं तु स्यात्, एकस्मिन्नपि वह्नौ दाहपाकादिकार्यभेददृष्टेः। अथ मतम्—रूपादिसमूहो वह्निः; तत्र रूपात् प्रकाशः, स्पर्शाद्दाह इति।

---

[1] पितृत्वादयः—A.
[2] के—B.
[3] एव हि—A.
[4] देव—C.
[5] परापेक्षो—B.
[6] तज्जननः—A.
[7] भेदेनोद्भेदः प्रसाधनं—B.
[8] B omits—भेद.

कामम्, दाहपाकौ तु स्पर्शादेव; तौ च [1]लोके प्रतीतभेदौ सत्यपि संयोगिद्रव्यविक्रियासामान्ये; कर्म चैकं संयोगविभागसंस्काराणां हेतुः, आत्मा चेच्छादीनाम्, सत्त्वादयश्च प्रत्येकमभेदाल्लाघवप्रकाशादीनाम्, रूपादयो ज्ञानविशेषाणां सजातीयक्षणानां [2]चेत्युत्प्रेक्षितव्यम्। ननु नार्थक्रियाभेदमात्राद्गेदं ब्रूमः, अपि तु तत्रासंभाविन्या अदृष्टायाः; यथा चक्षुषि सत्यप्यदृष्टायाश्च[3] बधिरे तत्रासंभाविन्याः शब्दबुद्धेरिन्द्रियभेदः; परस्परासंभविकार्याश्च प्रायेण भावाः, अन्यकार्यस्यान्यत्रादर्शनात्; अथ कार्यासंभवः कथं प्रत्येतव्यः? ननूक्तं तत्रादर्शनात्; न तर्ह्यसंभवः; यस्य खल्वद्वयं जगत् तस्य कार्यजातमेकत्रैव दृश्यत इति कथमदर्शनम्? तत्र सिद्धे भेदे तत्रादर्शनम्, तत्रादर्शनाच्च[4] भेदसिद्धिरितीतरेतराश्रयान्न भेदानुमानम्। अथ मतम्—अदृष्टस्य दर्शनादिति; तदसत्, [5]एकस्मादपि क्रमवतां कार्याणां दर्शनात्। स्यादेतत्—एकान्ततोऽभेदे कार्यदर्शनादर्शने न युक्ते, विशेषाभावात्। न तर्हि कार्यभेदोऽभेदम[6]पबाधते; तदनुपमर्देन विशेषमात्रानुमानं स्यात्; तच्च कल्पनाविषयं नैवावजानीमहे, वस्तुसतस्तस्यायोगात्, तत्त्वान्यत्वयोरसंभवात्। यस्तु क्षणिकवादी तत्त्वमेव विशेषस्य [7]न मन्यते, तस्यासति कारणस्वभावाभेदे कथं तुल्यस्वभावकार्योत्पादः? अथ निरन्वयविनाशानामपि कल्पनाविषयादभेदात् कार्यस्य तुल्यता; हन्त! [8]तर्हि भेदादेव कल्पनाविषयात् कार्यभेदसिद्धेर्मुधा कारणभेदकल्पना। अथ न कार्याभेदेन कारणस्वभावाभेदोऽ[9]पेक्ष्येत, भिन्नस्वभावेभ्यः [10]सहकारिभ्य एककार्योत्पत्तेः यथा चक्षुरादिभ्यो [11]रूपादिज्ञानस्य; यथा तर्हि कार्यस्वभावाभेदाय न कारणस्वभावाभेदोऽपेक्ष्यते, तथा तद्भेदाय कारणभेदोऽ[12]पि नापेक्षितव्यः। अपि च अनेककारणजन्येऽप्येकस्मिन् कार्ये कारणव्यापारविषयभेदस्तेनैव वर्णितः, यथा रूपज्ञानस्य—चक्षुषो रूपग्रहणनियमः, समनन्तरज्ञानादुपलम्भात्मता, विषयात्तदाकारतेति। यदि च कार्यतुल्यत्वं न हेतुसाम्यकृतम्, न कार्याद्धेत्वनुमानं स्यात्, भिन्नजातीयादपि तुल्यजातीयोत्पत्तिसंभवात्। हेत्वभेदश्चेन्न

---

1 लोक—B.
2 चेत्यायुत्प्रेक्षितव्यम्—A.
3 B omits श्च.
4 A omits च.
5 एकस्यापि—C.
6 व—A and C.
7 A and C omit न.
8 A omits तर्हि.
9 अपेक्ष्यते—A and B.
10 B omits सहकारिभ्यः.
11 रूपज्ञानस्य—A and C.
12 B omits अपि.

कार्यभेद उपयुज्यते, कस्तुल्यजातीयाद्विजातीयस्य जन्म निवारयेत्? तत्र यथा व्यावहारिकादभेदात् कार्यभेदः, तथा व्यावहारिकाद्भेदात् कार्यभेद इति न विशेषः। स्यादेतत्—कल्पितश्चेद्भेदः कार्यभेदाय प्रभुः, न तर्हि कल्पितः; न ह्यन्यत् परमार्थसतो लक्षणमर्थक्रियासामर्थ्यात्; तुल्यमिदमभेदेऽपि।

योऽ[1]पि मन्यते—युगपद्विरुद्धार्थक्रियादर्शनाद्भेदावगतिः; तथा हि—जननमरणवृद्धिक्षयस्थानगमनशोकहर्षादिविविधविरुद्धधर्मसमुपेतमेकदा विश्वमुपलभ्यते; तद्भेदवदिति गम्यते; तस्यापीदमेवोत्तर[2]मावृत्त्या—दाहपाकविभागेनेति। कथम्? इदं तावदयं प्रष्टव्यः—को विरोधार्थः? यद्येकत्रासंभवः, सोऽसिद्धः। अथ परस्परव्यवच्छिन्नात्मता, जननादयश्च [3]परस्पररूपनिवृत्त्यात्मान इति; न तर्ह्यतो भेदसिद्धिः, एकस्मिन्नपि वह्नौ दग्धृत्वपक्तृत्वदर्शनात्; न हि परस्परव्यवच्छेदमन्तरेण नानात्वं धर्माणाम्; ततश्चेद्भेदः, नानेकधर्मकमेकं[4] किंचित् स्यात्। अथ परस्पराभावात्मतैव विरोधः—नैकस्मिन् स एव भवति, न च भवतीति; ततो भेदावसायः; तदसत्; न ह्येवं धर्मावेव; कुतस्तयोर्विरोधाद्भे[5]दावगतिः? खपुष्पादिषु [6]चोभयाभावादुभयप्रसङ्गः। अथ [7]वध्यघातुकभावो विरोधः—हर्षः शोकं हन्ति, शोकश्च तम्; एवमितरेष्वपि; तत्रापि नाजात एकोऽन्यं नाशयति, नान्याधिकरणम्; तस्मादेकाधिकरणो भूत्वा नाशयतीति वाच्यम्; एवं च तयोरेकाधिकरणत्वदर्शनान्न तद्दर्शनेनाधिकरणभेदानुमानमव्यभिचारम्। अथ भावरूपतद्व्यवच्छेदात्मानो धर्मा विरोधिनः—नित्यत्वानित्यत्वमूर्तत्वामूर्तत्वादयः; तत्संबन्धाद्भेदगतिः; तदपि न; यतो नावश्यम्, यो यत्र भवति, स तं व्याप्नोति; न हि रथादयस्तत्सं[8]योगादयो वा नभो व्यश्नुवते, अन्यान्वा संयोगिनः पृथिव्यादीन्, अवच्छिन्नत्वात्। एवमव-

---

[1] A and C omit अपि.
[2] रं सामर्थ्यावृत्त्या—B
[3] परस्परानात्मात्मानः—B.
[4] A omits एकं.
[5] द्भेदगतिः—A.
[6] B omits च.
[7] बाध्यबाधकभाव—B.
[8] संयोगा वा—A and B.

च्छिन्ना धर्मा अनवच्छिन्नमनन्तमर्थमाश्रयन्तोऽपि न व्यश्नुवते; अतो नैकस्मिन्नपि भावाभावविरोधः ।

यस्तु मन्यते—अर्थक्रियाभेदोऽर्थक्रियाव्यवस्था; ततो भेदाधिगमः; एकत्वे हि न व्यवस्था युज्यते; तथा च पयसोऽपि तैलं तिलेभ्यश्च दधि स्यात्; तथैकस्मिन् जायमाने सर्वं जायेत, नश्यति च नश्येत्; अन्यथा भेद एव शब्दान्तरेणोक्तः स्यात्; तदुक्तम्—"[1]सहोत्पत्तिविनाशौ सर्वं च सर्वत्रोपयुज्येत" इति; तस्यापीदमेवोत्तरम्—दाहपाकविभागेनेति । यदि कार्यनानात्वं व्यवस्था, न[2] तथा तिलानां पयसश्च[3] भेदं प्रतिपद्यते । अथ पयसो दध्नो जन्म, नान्यत इति व्यवस्था; नान्यत्वं सिद्धया व्यवस्थया प्रमित्सितं तल्लक्षणमनुप्रवेष्टुमर्हति, तस्या असिद्धिप्रसङ्गात् । तस्माद्दधिजननशक्तिस्तदभावश्च व्यवस्था; ततो भेदः; न ह्येकविषये एकस्य शक्त्यशक्ती युज्येते इति—स चायं विरोधिधर्मयोगो भेदहेतुरनन्तरमेव निरासि; यथा खलु दीर्घकालाः पदार्था मितकालैर्धर्मैः संबध्यमानास्तद्धर्मणोऽतद्धर्मणश्च न विरोधपदभाजः, तथा परिमितदेशैर्विपुलदेशा अनन्ताश्च । कथमनन्तस्यान्तवान् धर्म इति चेत्, व्यतिरेकेऽनिर्वचनीयत्वे वा नास्त्यसंभावनावकाशः; अव्यतिरेकेऽपि दीर्घकालस्येव मितकालः । योऽपि दीर्घकालमर्थं न प्रतिपद्यते तं प्रतीदं पुनः पठितव्यम्—दाहपाकविभागेनेति । एकोऽपि वह्निः किंचिदेव दहति पचति च; तथा च दाहकश्चादाहकश्च न भिद्यते; तथा न दाहान्तराणि पाकान्तराणि वा करोति तस्मिन्नेव दाह्ये पाक्ये च; [4]तथा बीजादयः प्रत्येकं समर्था अपि नाङ्कुरान्तराणि जनयन्ति, नापि सामग्री; तथा च जनकत्वमजनकत्वमिति । अथैकस्मिन्नेव जनकशक्तिः, अन्यं प्रध्वस्तमागामिनं [5]वैकं किं न जनयति? अथ तत्रैवेषां सामर्थ्यम्, नान्यत्र तुल्यजातीयेऽपि; कुतः? तस्यैवोत्पत्तेः, कार्यगम्यत्वाच्च सामर्थ्यस्य; तथा च न शक्तिरशक्तिश्चेति विरोधः । अभेदेऽपि तर्हि पयसस्तिलानां दध्नोऽनुत्पत्तौ न विरोधः; तथा हि—यस्य तावद्दध्नः पयसो जन्म न तस्य तिलेभ्योऽनुत्पत्तिः, येन शक्त्यशक्ति-

---

1 ..........
2 A omits न.
3 B omits च.
4 तथापि—B.
5 चैकं—C.

विरोधाद्भेदः स्यात्; कुतः? तिलानां पयसोऽभेदात्। अथ दध्यन्तरस्यानुत्पत्तेर्विरोधः; तच्च न, अन्यत्राशक्तेरत्रैव शक्तेर्बीजादीनामिव; न हि समर्थमित्येव कारणं सर्वं तुल्यजातीयं जनयति, एकस्मादेव सर्वतुल्यजातीयकार्योत्पत्तिप्रसङ्गात्। अथ मतम्—अर्थक्रियासु भेदेन विनियोगाद्भेदमध्यवस्यामः; [1]दध्नि हि पयो विनियुज्यते, न सिक्तेति; तदप्यनैकान्तिकम्, एकत्वेऽपि भेदेन [2]विनियोगदर्शनात्; तदेवार्थवस्तु सहकारि[3]समेतं विनियुज्यते, न केवलम्। अथ मतम्—भिन्नमेव तत्, सहकारिसंनिधानोपाधिभेदात्; औपाधिकस्तर्हि प्रत्ययमात्रनिवेशी भेदः, न [4]परमार्थतः; तथाभूतश्च भावभेदो ह्यनुज्ञायत एव। योऽपि क्षणिकत्वेन भेदमाह, तस्यापि भेदस्य तुल्यत्वात् सर्वं सर्वत्र [5]विनियुज्यते, न वा किंचित् क्वचित्; अदृष्टसामर्थ्यत्वात्। अथ कल्पनाविषयाद्भेदात् तत्सिद्धिः, परस्यापि तादृशाद्भेदादिति न विशेष इत्युक्तम्। योऽप्येकस्योभयं प्रतिजानीते—भेदमभेदं च, तेनैकत्रापि विरुद्धधर्मावेशमभ्युपयता दुर्लभ एव दध्नो जनकत्वाजनकत्वाभ्यां तिलपयसोर्विभाग इति।

तदेवम्—

एकस्यैवैष महिमा भेदसंपादनासहः ॥ ८ ॥
वह्नेरिव यदा भावभेदकल्पस्तदा मुधा ॥ ८½ ॥

एकत्र क्रियाभेदोपलब्धेः; असंभवस्य चासिद्धेः, अदृष्टदर्शनस्य चाभेदापबाधने सामर्थ्याभावात्, विशेषमात्रहेतुत्वात् तस्य च तत्त्वान्यत्वाभ्यामनिर्वाच्यस्य कल्पनास्पदत्वात्, अभेदादिव च तादृशात् कार्यभेदस्य भेदादपि तद्विधाद्भेदस्योपपत्तेः, विरोधस्य चानैकान्तिकत्वादसिद्धत्वाद्वा व्यवस्थायाश्च, विनियोगभेदस्य चानैकान्तिकत्वात्, अभेदादिव च कल्पिताद्भेदात्तत्सिद्धेः, भेदाभेदयोश्चैकत्र[6] समवाये शक्त्यशक्त्योर्विनियोगाविनियोगयोश्चैकसमवायसंभवात् एकस्यैवैष कोऽप्यचिन्त्यः[7] सामर्थ्यातिशयो निखिलभेदप्रपञ्चसंपादनाय प्रभुः पावकस्येव पाकक्लेदशोषादिप्रविभागनिमित्तं यदोपपद्यते

---

[1] Śaṅkhapāṇi reads दध्नि in his commentary.
[2] A omits वि.
[3] समवेतं—B.
[4] परमार्थः—A.
[5] नियुज्यते—B.
[6] A omits त्र.
[7] चिन्त्यसा—B.

तदा भेदकल्पनमकारणम्, एकस्मादपि तत्सिद्धेः—इति पूर्वोपसंहारः। तदेतदृचाभ्यनू[1]क्तम्—"[2]एतावानस्य महिमा" इति; एतत्परिमाणमस्य सामर्थ्यम्—यदेकोऽपि "[3]सहस्रशीर्षा" इति "[4]यद्भूतं यच्च भव्यम्" इति। पूर्वर्ग्द्वयनिर्दिष्टविविधविरुद्धा[5]भिमतधर्मकार्यव्यवहाराश्रयः कथमिति? "[2]अतः" प्रत्यक्षाभिमतात्, "[4]पुरुष एवेदं सर्वम्" इति वाद्दष्टनिर्दिष्टात्, "[4]उतामृतत्वस्य" इति वा देवमनुष्यलोकभेदेन प्रपञ्चादेकैकस्मात् समस्ताच्च वृद्धतरः पुरुषः; तेनास्मिन् परिमितानां विरुद्धाभिमतानामप्यनन्ते न समावेशो न युज्यते। तदेव ज्यायस्त्वं दर्शयति—"[2]पादोऽस्य विश्वा" इति; कृत्स्नोऽपि तावद्भूतप्रपञ्चोऽस्य कनीयान् भाग इति, किं पुनः प्रत्येकम्; तथा हि—"[2]त्रिपात्" इवा[6]परिमितमनन्तं मरणादिभूतप्रपञ्चधर्मशून्यं रूपं "[2]दिवि" प्रद्योतावस्थायां वर्तते, प्रमोदावस्थायां वा, सूर्यमण्डले, द्युस्थाने वा; तत्र हि तदुपास्यम्; ताद्धि तस्योपलब्धिस्थानमिति तत्रेत्युच्यते।

अपरः कल्पः—कल्पितेऽपि कार्यभेदाद्व्यवस्थाया[7] वा कारणभेदे किमिति न कार्यान्तरम्? किमिति वा न संकरः, [8]विपरीता वा व्यव[9]स्था? भेदेऽपि पयसः, तिलेभ्य एव तैलं न सिकताभ्यः? भिन्ना अपि चैककार्याश्चक्षुरालोकादयः, शरशृङ्गादयश्च[10]; भेदेऽपि च तिलेभ्यस्तैलं पयसो दधि, न तु पयसस्तैलं तिलेभ्यो दधि? यदि मतम्—अचिन्त्येभ्यो भावसामर्थ्येभ्यः—अचिन्त्यान्युपपत्तितो भावसामर्थ्यानि 'कस्मात्? कथम्?' इति, कार्यदर्शनोन्नेयव्यवस्थानि—तेभ्यः कार्यस्य भेदः, व्यवस्था, न विपर्ययश्चेति; यद्येवम्, एकस्यैव सोऽस्तु सामर्थ्यातिशयः—यदनेकं व्यवस्थितमविपरीतं च कार्यम्; तन्मात्रेण तत्सिद्धेरप्रामाणिका भावानां भेदकल्पनेति।

स्यादेतत्—वह्नेरपि शक्तिभेदनिबन्धनः कार्यभेदः; तन्नैकस्मादनेकं

---

1 सूक्तम्—B.
2 Puruṣa-Sūkta 3.
3 Do. 1.
4 Do. 2.
5 B reads विरुद्धाविरुद्धा.
6 B reads परिमित.
7 व्यवस्थया—B.
8 B omits वि.
9 B omits व.
10 श्चापि—B.

कार्यम् । तत्र यदि वह्निरपि कारणम्, कथं नैकस्मादनेकं कार्यम्? अथ शक्तीनामेव कारणत्वमभिप्रैति; तत्रोच्यते—

यथैव भिन्नशक्तीनामभिन्नं रूपमाश्रयः ॥ ९ ॥
तथा नानाक्रियाहेतुरूपं किं नाभ्युपेयते? ॥ ९½ ॥

एकस्यानेककार्ययोगविरोधाच्छक्तिभेदः कल्प्यते । यदि चैकस्यानेकसंबन्धविरोधः, कथं नानाभूताभिः शक्तिभिरेकः संबध्यते? तत्र यथैकस्यार्थस्वभावस्य नानाशक्तियोगः, तथा नानाकार्ययोगोऽपि किं नानुज्ञायते? अथ नानाकार्ययोगे विरोधः, न नानाशक्तियोगे; विशेषहेतुर्वाच्यः । अपि च शक्तीनामव्यतिरेकादेकमनेकात्मकमिष्टम्; तत्रैकत्वं स्वाश्रयसमवायिनानेकत्वेन न विरुध्यते; कार्यगतेन त्वाश्रयान्तरसमवायिना विरुध्यत इति सुभाषितम्! अथार्थान्तरत्वमेव शक्तीनाम्, आश्रयार्थो वाच्यः; संश्लेषश्चेद्, न भिन्नत्वे रूपाविभागलक्षणः संश्लेषः[1]; भेद एव न स्यात्; न नैरन्तर्यम्, तच्छक्तिद्रव्यसंयुक्तस्य द्रव्यान्तरस्यापि तच्छक्तित्वप्रसङ्गात्; न हि द्रव्यस्यानन्तरं तच्छक्तेर्व्यवहितं भवति; न [2]हि चक्षुर्द्रव्यस्यानन्तरं रूपस्य नानन्तरम् । विभुत्वाच्चाकाशादीनां सर्वार्थशक्तिव्यवधानाभावात् सर्वशक्ति[3]त्वप्रसङ्गः । तस्मादुपकारविशेषात् कुतश्चिदाश्रयः; तत्र यथा भिन्नासु शक्तिषु तद्भेदादुपकारान् भिन्नानेकोऽर्थस्वभावः करोति, तथा कार्याण्यपीति कस्मान्नेष्यते? एवं तावन्नानुमानेनापि भेदाधिगमः, नार्थापत्त्या च[4] ।

ये तु मन्यन्ते—सत्यमेतत्, न प्रत्यक्षं भेदाधिगमायालम्; इतरेतराभावांशो हि भावानां भेदः, न सोऽक्षगोचरः; "[5]भावांशेनैव [6]संयोगो योग्यत्वादिन्द्रियस्य हि"; तथा च न लिङ्गगम्योऽपि, अदृष्टसंगतित्वात्; अर्थापत्तिरपि कार्यव्यवस्थाहेतुका स्यात्; सा असिद्धे भेदे [7]कार्यव्यवस्थाया एवानुपपत्तेस्तत्रायुक्ता । तस्मात् सदुपलम्भहेतुभ्यः प्रमाणान्तरमेवाभावायोपासनीयम्; विधायकाद्वा प्रमाणान्तरमेव व्यवच्छेदकमभावाख्यम्; तन्निबन्धना

---

[1] षा—B.
[2] C omits हि.
[3] B omits त्व.
[4] वा—A.
[5] Ślōka-Vārtika page 479.
[6] संबन्धो—C.
[7] C omits कार्य.

हि भावानामसंकीर्णस्वभावता; यदवोचन्—"[1]वस्त्वसंकरसिद्धिश्च तत्प्रामाण्य[2]समाश्रया" इति तान् प्रत्युच्यते—

अन्योन्यसंश्रयाद्भेदो न प्रमान्तरसाधनः ॥ १० ॥
नास्मि[3]न्नयं नायमयमिति भेदाद्विना न धीः ॥ १०½ ॥

न खलु यद्यवच्छिद्यते, यतश्च व्यवच्छिद्यते, तयोरप्रतिपत्तौ व्यवच्छेदगतिः; नानपेक्षितविषयनिषेध्यो निषेधोऽस्ति; सन् वा शून्यतामापादयेत्, न भेदमित्युक्तम्। तेषामपि वचः—

"[4]गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया ॥"

तयोश्च प्रतिपत्तिर्यदि नासंकीर्णस्वभावयोः, अपि तु वस्तुमात्रत्वेन, व्यवच्छेद्यव्यवच्छेदावधिविभागाभावात्; न निषेधसंभवः अर्थमात्रे ह्यविभागे; विषयत्वेनापेक्षिते न निषेध्यम्; निषेध्यत्वेनापेक्षिते न विषयविशेषः; तत्रात्यन्ताय निषेधः स्यात्; स च न सिद्धत्वेनासिद्धत्वेन वा युज्यत इत्युक्तम्। कस्य चित् कुतश्चिच[5] भेदप्रतिपत्तौ सर्वस्य सर्वतो भेदगतिः स्यात्, [6]अविशेषात्। तस्मादनेनासंकीर्णस्वभावेन भिन्नावेव प्रतिपद्य विषयनिषेध्यौ 'नेदमिह,' 'नायमयम्' इति व्यवच्छेदः प्रतिपत्तव्यः, संभवात् नियमाच्च। न चान्यथा प्रतियोगित्वम्, सामान्योपलब्धौ [7]च स्थाणौ [8]पुरुषाभावप्रतिपत्त्यभावात्। तथा च सिद्धविषयनिषेध्याङ्गीकरणेन व्यवच्छेदमात्रविधायिन्यभावप्रतिपत्तिः प्रत्यात्ममुपलक्ष्यते। तथा च इतरेतराश्रयत्वम्—असंकरपूर्वमभावज्ञानम्, ततश्चासंकरसिद्धिरिति। अपि च न प्रमाणानुत्पादमात्रादभावज्ञानम्, सुषुप्तादावनुत्पत्तेः; तस्मात् सत्सु प्रमाणकारणेषु प्रमाणानुत्पादोऽभावज्ञानहेतुरिष्टः। न च तस्य स्वरूपभेदः कश्चित्, येन सामर्थ्यातिशयाच्चक्षुरादिवद्बोधकः, किं तु नान्तरीयकत्वात्; नान्तरेण प्रमेयाभावं सत्सु प्रमाणहेतुषु प्रमाणानुत्पादः; असत्सु तु सत्यपि प्रमेये तदभावात् स्यादिति। तथा च लिङ्गवत् ज्ञानापेक्षः प्रतिपत्तेर्जनकः; स च यदि वस्त्वन्तरज्ञानम्,

---

[1] Ślōka-Vārtika page 473.
[2] समाश्रयात्—C.
[3] न्निदं—A.
[4] Ślōka-Vārtika page 482.
[5] A omits च.
[6] C omits अविशेषात्.
[7] C omits च.
[8] पुरुषस्याभाव—A.

नासिद्धे वस्तुभेदे सिध्यति; ज्ञेयभेदानुमेयो हि ज्ञेयानुमेयानां ज्ञानानां भेदः। तथा च वस्तुभेदसिद्धिपूर्विकैवाभावा[1]द्भेदावगतिरितीतरेतराश्रयत्वम्। [2]अथात्मनोऽपरिणामः; न स स्तिमितावस्था, सर्वाप्रतिपत्तौ कस्यचिदभावस्यानवगतेः; तस्मात् सत्यपि वस्त्वन्तरज्ञानरूपपरिणामे तज्ज्ञानरूपपरिणामाभावोऽभावज्ञानहेतुः। न चैष विशेषः प्राग्वस्तुभेदसिद्धेः सिध्यतीति तदेवेतरेतराश्रयत्वम्।

ये त्वाहुः——दर्शनादेव भावानां भेदः सिध्य[3]ति; तथा हि—निर्विकल्पस्य प्रत्यक्षस्य सामान्यविषयत्वमपाकुर्वतोक्तम्——"[4]तदयुक्तं प्रतिद्रव्यं भिन्नरूपोपलम्भनात्" इति; यस्तु संयोगात् समवायाद्वा संकरः, सोऽभावाख्येन प्रमाणेनापनीयत इति; ते प्रागेव प्रत्युक्ताः।

येऽपि—विधायकप्रत्यक्षपुरःसरं प्रत्यक्षान्तरमेव वस्तुग्रहणप्रतियोगिस्मरणेतिकर्तव्यतानुगृहीताक्षप्रतिलब्धजन्म व्यवच्छेदकं मन्यन्ते; यथैव सविकल्पस्य वस्तुग्रहणस्य पश्चाज्जन्म, शब्दस्मरणव्यवधिश्च—न चानैन्द्रियकत्वम्, इतिकर्तव्यताविशेषानुगृहीतादिन्द्रियात् तदुत्पत्तेः—एवं नास्तीत्यपि ज्ञानस्येति ब्रुवन्तः; तान् प्रतीदमेव वक्तव्यम्—अन्योन्यसंश्रया द्भेदो न प्रमान्तरसाधनः। प्रत्यक्षान्तरसाधन इत्यर्थः; 'अयमसौ न भवति' इति ज्ञानं प्रत्यक्षं वा प्रमाणान्तरं वा; सर्वथा विषयनिषेध्यविभागाद्दते न निषेधसंभव इति।

किं च

मीयमानैकरूपेषु न निषेधोऽवकाशवान्॥ ११॥

अपि च सन्मात्ररूपे सर्वत्र [5]प्रतीयमाने तत्स्वभावेषु वस्तुषु नेतराभिमत इतराभिमतप्रमाणानुत्पादः, सत्स्वभावत्वात् तयोः; 'सत्' इति च सर्वत्र प्रमाणसद्भावात्; प्रमाणाभावाच्चेतरेतराभावज्ञानमिति। ननु नार्थानां किंचिदभिन्नं रूपम्; प्रत्यभिज्ञानाद्धि [6]तद्गम्येत; न चार्थमात्रं दृष्टवतोऽर्थान्तरे स एवायमिति प्रत्यभिज्ञास्ति, [7]यथा एकां गां दृष्टवतो गवान्तरे; सच्छब्दप्रत्ययानुवृत्तिस्तु पाचकादिवद्योगनिबन्धना; प्रमाणविषयो हि 'सन्'

---

[1] भेदगति—A.

[2] अथाध्यात्मनो—A.

[3] C adds इति.

[4] Ślōka-Vārtika page 170.

[5] प्रमीयमाणे—A.

[6] तदवगम्येत—A.

[7] C omits यथा and दृष्टवतः.

इत्युच्यते । नैतत्सारम्; न चेदभिन्नरूपप्रतिपत्तिः, निर्विषयत्वमेव प्रमाणस्यापद्येत; यतो न व्यवच्छेदमन्तरेण भेदप्रतीतिः; [1]न व्यवच्छेदः केवलः, न विधिसहितः, न विधेः पश्चात् प्रमाणस्य व्यापारः; न विधिरेव व्यवच्छेद इति वर्णितम्; तत्र यद्येकमपि न गम्यते निर्विषयतैव स्यात् । अप्रत्यभिज्ञानं च यदि गोवैलक्षण्या[2]दुच्येत सत्यपि [3]सन्मात्ररूपानुगमे, गवान्तरेऽपि तन्न स्यात्, देवदत्तवैलक्षण्यात्; न हि यादृशो देवदत्तस्य पुनर्दर्शने [4]एकत्वप्रत्ययस्तादृशो गवान्तरे । अथास्ति तत्र तावत् पूर्वापरानुसंधानम्, न तु सतः सदन्तरे; किं च भोः! अनुसन्धानादेकत्वम्, नाभिन्न[5]रूपसंविदः; नेदानीमभिन्नदेशकालोऽर्थ एकः स्यात्; देशकालभेदे हि 'सोऽयम्' इति पूर्वापरानुसंधानम् । गोमण्डले च महिषमण्डलविलक्षणे देशभेदेऽप्यभिन्नरूपानुगतात् प्रथमादेव निर्विकल्पकात् प्रत्ययादेकार्थप्रतिपत्तिरिष्यते; न च तत्र कालभेदाभावात् 'सोऽयम्' इत्य[6]वमर्शः; यथोक्तम्—

"[7]निर्विकल्पकबो[8]धेऽपि द्व्यात्मकस्यापि वस्तुनः ।
ग्रहणं लक्षणाख्येयं ज्ञात्रा शुद्धं तु गृह्यते ॥"

न [9]च यथा मणिकं दृष्टवतो मणिकान्तरेऽनुसन्धिः तथा शरावं दृष्ट्वा; तत्र मृज्जातिरप्यपह्नूयेत । अथास्ति तत्रापि; न तु यथा मणिकान्तरे सामान्यरूपाणां भूयस्त्वादुत्कटः, अल्पसामान्यानुगमात्; सदन्तरेऽपि तथैव स्यात् । विस्तरेण चैतदुपरिष्टादभिधास्यत इत्यलमतिप्रसङ्गेन ।

भेदाभेदावभासे द्वे विज्ञाने चेत् परीक्ष्यताम् ॥ ११½ ॥

यदि मतम्—विद्येते तावद[10]नुवृत्तव्यावृत्ताभे द्वे विज्ञाने; न हि तयोरभावेऽनुवृत्तव्यावृत्तव्यवहार[11]संभवः; न च विज्ञानरूपादन्योऽर्थव्यवस्थाहेतुः; तस्याहेतुत्वेऽभेदोऽपि न सिध्येत् । नैतत् सारम्; न हि विज्ञानमित्येवार्थतत्त्वं व्यवस्थापयति; तदपि हि परीक्ष्यम्—युक्त्या विरुध्यते नेति, प्रमाणोत्थं नेति; न खल्वलातचक्रादिज्ञानेभ्योऽर्थतत्त्वव्यवस्था । स्यादेतत्;

---

1 न च—C.
2 उच्यते—A.
3 सन्मात्रावगमे—A.
4 तत्त्व—A.
5 A omits रूप.
6 अवमर्शोऽपि—C.
7 Śloka-Vārtika page 171.
8 बोधेन—A.
9 हि—C.
10 अनुवृत्तिव्यावृत्त्याभे—A.
11 सद्भावः—A.

न प्रत्यक्षं युक्त्यापबाध्यते; सत्यम्; प्रत्यक्षतैव भेदज्ञानस्य नेत्यावेदितम्, यथा क्षेपीयस्सर्वतोदिक्संयोगकारितस्यालातचक्रज्ञानस्य; तत् सदप्यप्रमाणोत्थं प्रत्यक्षसरूपं स्वप्नदृश्यालातचक्रादिज्ञानवन्न तत्त्वावगमनिमित्तम्। ननूक्तेन प्रकारेण प्रमाणादन्यतोऽपि भेदज्ञानस्योदयो न संभवति; को वान्यथाह? न हि परमार्थतो भेदावगमोऽस्ति; यदि स्यात्, कथं भेदोऽपह्नूयेत? अपह्नवे [1]वा कथं तदवगमः? नावगम्यमस्ति, अवगम्यते चेति दुर्घटम्। किं तर्हीदम्? अविद्या विभ्रमः; यथावभासं च वेद्यसद्भावे न विभ्रमः, किं तु सम्यग्ज्ञानम्; असति चावगमोऽनुपपन्नः। तस्मान्न परमार्थतः सत्त्वेन [2]निरुच्यते, नाप्यसत्त्वेन, लोके सिद्धत्वात् सर्वप्रवादेष्वित्युक्तम्।

अपि च ज्ञानद्वयेऽस्मिंश्चतस्रः कल्पनाः संभवन्ति— ज्ञानभेदात् सामान्यव्यक्तिविभागेन वस्तुद्वयम्, यथाहुः संसर्गवादिनः। एकं वा सामान्यविशेषात्मकं [3]वस्तु, यथाहुरनेकान्तवादिनः। विशेषा एव वा वस्तूनि; तेषामात्यन्तिकभेदनिश्चयासामर्थ्यात् तदुपादानस्तद्विषय एवाभेदः कल्पनाज्ञानगोचरः; दृष्टा हि भिन्नेष्वभेदकल्पना 'वनम्' इति—यथाहुरात्यन्तिकभेदवादिनः। अभेदो वा परमार्थः; तस्यानवच्छिन्नस्यानन्तस्य तथा निश्चेतुमशक्तेरनादित्वाच्चाविद्यायास्तदुपादानास्तद्विषया भेदपरिकल्पनाः; दृष्टा हि तरङ्गभेदादभिन्ने चन्द्रमसि भेदकल्पना। तन्नापरीक्ष्य तत्त्वनिश्चयः। तत्र परीक्षायाम्—

न तावद्द्वयमैकात्म्यप्रख्यानानवकल्पनात्॥ १२॥
समवायकृतं तच्चेन्न भेदस्यापरिच्युतेः॥ १२½॥

न तावद् द्वे वस्तुनी सामान्यविशेषौ, प्रख्याभेदात्; समानाधिकरणत्वेन हीमे प्रख्ये जायेते 'सन् घटः, गौः स्वस्तिमती' इति; न व्यधिकरणत्वेन यथा नीलपीतप्रख्ये, यथा वा 'दण्डो देवदत्तः' इति; नापि विशेषणविशेष्यभावेन यथा 'दण्डी' इति, संबन्धस्याप्रतिभासनात्; न च वस्तुभेदविषयत्वे सामानाधिकरण्यमवकल्पते सत्यपि संबन्धे; संबन्धिद्वयं विशेषणविशेष्यत्वेन द्वाभ्यामेकया वा बुद्ध्या [4]गृह्यते, न तु परस्परात्मत्वेन; परस्परा[5]त्मत्वेन चेह प्रतिपत्तिः प्रत्यात्मवेदनीया; विप्रतिपत्तेश्च सामान्यविशे-

[1] A adds तस्य.
[2] निरूप्यते—A.
[3] A omits वस्तु.
[4] अवगृह्यते—A and C.
[5] त्मना—A and C.

षयोर्भेदे; नान्यथा विप्रतिपद्येरन्। सामान्यप्रत्यक्षे च विशेषप्रत्यक्षाभिमानात्; अन्यथा धूमदृष्टाविवाग्नौ परोक्षाभिमानः स्यात्। स्यादेतत्—न संबन्धमात्रादभेदप्रतिपत्तिः, अपि तु संबन्धविशेषात् समवायात्; स हि वस्तुसंश्लेषात्मकः। तन्न, समवायेऽपि ताभ्यां रूपभेदस्यानपायात्, अन्यथा भेदाभावादसं[1]बन्धात्। तथा च नैकात्म्येन प्रख्या युज्यते। अस्ति चेयम्। अतस्तया विरुद्धः प्रख्याभेदो न वस्तुभेदव्यवस्थायै प्रभवति; स्वयं [2]वा व्याहतत्वात्, एकाधिकरणत्वेनोपपत्तेः।

ननु भेदेऽपि परस्परात्मत्वेन प्रतिपत्तेर्निमित्तं समवायः; तस्य खल्वेष सामर्थ्यातिशयः, येन भेदवतामर्थानां भेदं तिरोदधाति; तथा च तेऽभेदेन प्रकाशन्ते। अत्रोच्यते—

भेदान्तर्धानसामर्थ्यं तस्य भेदेऽपि चेन्मतम् ॥ १३ ॥
हन्तैकस्यैव तत् किं न यदेवमवभासते ॥ १३½ ॥

समवायसामर्थ्याच्चेद्भेदवतोरभेदावभासः, हन्त! एकस्यैव वस्तुनः सामर्थ्यविशेषान्ना[3]नावभासोऽभ्युपेयताम्; व्यर्था वस्तुभेदकल्पना; न ह्यस्ति विशेषः—यतो भिन्नयोरभेदप्रकाशसंभवः, नैकस्य नानावभाससंभव इति।

ननु ज्वलनायोगुडादिषु दृष्टमेवंविधं संसर्गस्य सामर्थ्यम्; तत्र दर्शनात् संभवी संसर्गाद्भेदवस्त्वभेदावभासः; नैकस्मिन्नानावभासः, अदर्शनात्। उच्यते—

दृष्टः संसर्गधर्मोऽयं यद्येकमपि वै तथा ॥ १४ ॥
नानावभासते चित्रं रूपमेकं[4] तथा मतिः ॥ १४½ ॥

दृष्टं खल्वेकमपि विविधावभासम्, यथा चित्रं रूपम्; तद्धि खलु न नीलादिसमाहारमात्रम्; तेषामवयवसमवाये रूपान्तरानभ्युपगमे [5]चावयविनो नीरूपत्वप्रसङ्गात्; न च नीरूपत्वमेवावयविनः; रूपसंस्काराभावे हि न [6]स चाक्षुषः स्यात्; न च रूपिसमवायात् संख्याकर्मादिवच्चाक्षुषत्वम्; एवं ह्युक्तम्—"[7]महत्यनेकद्रव्यसमवायाद्रूपाच्चोपलब्धिः" इति; सर्वश्चेत्थमवयवी नीरूपः स्यात्। अथ नारूपः प्रतीयत इति नायं प्रसङ्गः,

[1] संबन्धाभावात्--B.
[2] च—A and B.
[3] नानात्वावभासो—B.
[4] का--B.
[5] C omits च.
[6] A and B omit स.
[7] Cf. Vaiś-Sū. 4-1-6.

चित्रोऽपि तथेति नारूपः; तच्चास्य रूपं नीलपीतादिनिर्भासः । तथा [1]नगर-त्रैलोक्यादिबुद्धयो विविधविषयाकारा निर्भासन्ते भेदाभावेऽपीति विषयाकार-ज्ञानवादिनो मन्यन्ते । न चैक[2]बुद्धितत्त्वाव्यतिरेकाद्विषयाकाराः परस्पर-तोऽपि व्यावर्तन्ते, प्रागेव बुद्धेः ।

स्यादेतत्—चित्रमपि रूपं संसर्गादेवैकार्थसमवेतसमवायलक्षणात् तथा-वभासते । [3]तदसत्; यतः—

न च संबन्धिसंबन्धः संसर्गो व्यवधानतः ॥ १५ ॥

संश्लेषो हि संसर्गः; ततश्च परस्पररूपावभासः; स चाव्यवधाने युज्यते; न तु स्वाश्रयाभ्यां व्यवधाने; अवयवावयविरूपयोरेकव्यवधानेऽ-प्यसंश्लेषः, किमु द्वय[4]व्यवधाने ।

किं च

व्यवहारे परोपाधौ सर्वा धीर्व्यावहारिकी ।
अयथार्था यदा भावभेदकल्पस्तदा मुधा ॥ १६ ॥

यस्य खलु 'शुक्लो गौः' इत्यादिबुद्धयो व्यवहाराङ्गभूता द्रव्येषु गुण[5]जा-त्युपाधिनिबन्धनाः [6]तस्यैता न यथावस्तु, जातिगुणद्रव्याणामन्योन्यमर्था-न्तरत्वात् । तथा च न वस्तुनिबन्धनो व्यवहारः, बुद्ध्यानुपदर्शितस्याव्यव-हाराङ्गत्वात् बुद्ध्युपदर्शितस्य च तथाभावात् । एवं [7]च प्रत्ययविर-चितेनैवायमर्थेन व्यावृत्तो व्यवहारोऽनुवृत्तश्चेति व्यर्था वस्तुभेदकल्पना, कल्पितस्यापि तस्य व्यवहारेऽनुपयोगात् इतरस्य चोपयोगात् । यथार्थ-त्वाय [8]हि व्यावहारिकीणां बुद्धीनां वस्तुभेदः कल्प्यते; कल्पिते [9]च तस्मिन् परोपाधित्वात् तासां नायथार्थत्वपरिहारः ।

स्यादेतत्—असति वस्तुभेदे अयथार्थमप्यनुवृत्तव्यावृत्तावभासं व्यावहारिकं विज्ञानं नोदेतुमर्हति, बीजाभावात्; न खलु स्थाणुशुक्तिशकलादिषु पुरुष-रजतादिविभ्रान्तयो निर्बीजाः, सामान्यनिबन्धनत्वात् । उच्यते—

अयथार्थधियो बीजमवश्यं बाह्यमेव न ।
दृष्टस्तिमिरकामादिरान्तरोऽपि ह्युपप्लवः ॥ १७ ॥

---

[1] A omits नगर.
[2] बुद्धित्वाद्व्यतिं—C.
[3] तदप्यसत्—A.
[4] द्वयः—A.
[5] जात्युपधाननिबन्धनाः—A.
[6] तस्यैतत्—B.
[7] C omits च.
[8] च—B.
[9] अपि च—B.

न विषयदोषादेव सादृश्यादेरयथा[1]र्थज्ञानम्, आध्यात्मिकेभ्योऽपि तु दोषेभ्यस्तिमिरकामशोकादिभ्यः; तत्रासति वस्तुभेदे आध्यात्मिको दोषोऽविद्यालक्षणो व्यावहारिकज्ञानबीजमिति नार्थो वस्तुभेदेन ।

अस्तु तर्हि एकं द्व्यात्मकम्; एवं हि परस्परात्मप्रतिपत्तिश्च सामान्यविशेषयोः कल्पते; वस्तुविपरीतश्च नार्थसामर्थ्यातिशयः कल्पयितव्यः; वस्तुनिबन्धनो व्यवहारः, न व्यावहारिकज्ञानानामयथार्थो[2] वृत्तिः । स्यादेतत्—एकस्य द्व्यात्म[3]कता विरोधवती; एकं [4]च द्व्यात्मकं चेति विप्रतिषिद्धम्[5]; अपि च सामान्यं भेदान्तरानुयायि; ततो व्यावृत्तस्वभावो भेदः; तयोरेकत्वं [6]हि विरोधादशक्यावगमम् । नैतत् सारम् । विरुद्धमिति नः[7] क्व संप्रत्ययः? यत् प्रमाणविपर्ययेण वर्तते; यत्तु यथा प्रमाणेनावगम्यते तस्य तथाभावे विरुद्धत्वाभिधाने कं बतायमाश्रित्य हेतुं विरुद्ध[8]त्वाविरुद्धत्वे व्यवस्थापयेत्? प्रमाणं चैकस्य सामान्यविशेषात्मक[9]तामवगमयति, व्यावृत्त्यनुवृत्तिभ्यां प्रख्यारूपभेदात् ऐकाधिकरण्यावगमाच्च । तदिदमसांप्रतम्; यतो नेदृशां [10]विप्रतिषिद्धार्थज्ञानानां प्रामाण्यमेव युज्यते संशयज्ञानवत्; अन्यथा संशयविषयोऽपि द्व्यात्मा [11]स्यात्, द्व्याभासत्वात्तस्य सामानाधिकरण्याच्च तदवभासयोः ।

अथ मतम्—न संशयिने रूपसमुच्चयावगमः, यथा सामान्यविशेषवति, 'अयं वा, अयं वा' इति प्रतीतेः; मा भूत् समुच्चयः, विकल्पः स्यात् । सोऽपि न, वस्तुनो विकल्पानुपपत्तेः । एकमपि तर्हि न द्व्यात्मकम्, एकस्य द्व्यात्मकताविरोधात् । तत्र यथा संशयज्ञानं विप्रतिषेधादप्रमाणं तथा सामान्यविशेषप्रतिपत्तिरपि, ऐकाधिकरण्यात् ।

स्यादेतत्—न संशयज्ञानं विप्रतिषेधादप्रमाणम्, निर्णयज्ञानेन तु बाधनात् । यत्र तर्हि न निर्णयस्तत्र विकल्पात्मता स्यात् । अपि च यथा बाधायामेकस्याप्रामाण्यं निराकरणात्, एवं विरोधेऽपि द्वयोरेकस्य वा ज्ञानस्य विरुद्धरूपोपग्रहे तद्रूपाधिगत्योरन्योन्यनिराकरणात्; तत्रैकनि-

---

1 र्थे—B.
2 र्थे—B.
3 A omits क.
A and B omit च.
5 B adds इति.
6 C omits हि.
7 न—C.
8 A omits त्व.
9 B omits ता.
10 विप्रतिषिद्धार्थानां—A and B.
11 B omits स्यात्.

राकरणे इतरस्मान्निश्चयः; परस्परनिराकृ[1]तौ तुल्यबलत्वे सन्देह इति न संशयज्ञानादेकस्य सामान्यविशेषप्रतिपत्तिर्विशिष्यते । तस्मादिहानैकान्तिकं वस्त्वित्येवं ज्ञानं सुनिश्चितमिति स्वपक्षोपवर्णनम् ।

अपि च एकत्वमविरोधेन भेदसामान्ययोर्यदि ।
न द्व्यात्मता भवेदेकतरनिर्भक्तभागवत् ॥ १८ ॥

अवश्यमनेन पदार्थानां भेदाभेदौ व्यवस्थापयता—यथा तावत् सामान्यमभिन्नं विशेषा भिद्यन्त इति—भेदाभेदयोर्लक्षणं वाच्यम्; तत्र [2]रूपविरोधोऽन्योन्याभावो भेदलक्षणम्; विपर्ययोऽभेदलक्षणम्; रूपविरोधाद्यन्योन्याभावपर्यायाद्विशेषा भिद्यन्ते; भिद्यमानेष्वपि तेषु सामान्यमभिन्नम्, विपर्ययात्; तत्र सामान्यविशेषयोर्यदि स्वरूपविरोधोऽन्योन्याभावः, नैकत्वं भेदानामिव परस्परम्; अथ सामान्यविशेषबुद्ध्योरैकाधिकरण्येनोत्पत्तेः स्वरूपविरोधोऽभ्युपेयते, न तर्ह्येकं द्व्यात्मकम्; सामान्यविशेषयोः स्वरूपविरोधाभावादसति भेदे द्वित्वानुपपत्तेः । यथा न सामान्यांशो द्विरूपो विशेषांशो वा, रूपविरोधाभावात्—तत्रैकस्मि[3]न्निर्भक्ते द्वित्वाभावात्—तथा सामान्यविशेषयोरपि सामानाधिकरण्यबुद्धेर्यदि न रूपविरोधः, न[4] [5]परस्पराभावः; द्वित्वं न युज्यते । अथ रूपविरोधः, नैकत्वमिति ।

यदि मतम्—न स्वरूपविरोधान्नानात्वं, तदभावाच्चैकत्वम्, येन सामान्यविशेषयोः स्वरूपविरोधाभावाद्द्वित्वं न स्यादन्यतरस्येव भागस्य; किं तु बुद्धे रूपभेदाभेदाभ्याम्; सामान्यविशेषयोश्च परस्परात्मत्वेन प्रतिपत्तेरसत्यप्यन्योन्याभाव[6]लक्षणे स्वरूपविरोधे बुद्धे रूपभेदाद्द्वित्वम्; अंशे तु रूपाभेदादेकत्वम्; अतो वस्तुनो द्विरूपबुद्धिग्राह्यत्वाद्द्व्यात्मतेति । तत्रोच्यते—

ऐकात्म्यबुद्धेर्भोगे चेदेवं वस्तुनि तर्ह्यसौ ।
न चेत् कुतस्त्यमेकत्वमस्ति चेद् द्व्यात्मता कथम् ॥ १९ ॥

यदि तर्हि बुद्धेरेकरूपोपग्राहित्वादभेदोऽशस्य, वस्तु विचार्यम्—

---

[1] ते—B.
[2] रूपे—C.
[3] न्निर्विभक्ते—B.
[4] C omits न.
[5] परस्परात्मताभावो—C; परस्परात्माभावो—B.
[6] प्रमाणे रूपविरोधे—C.

तत्रापि बुद्धिः किमेकरूपोपग्राहिणी नवेति । तत्र यदि नैकरूपोपग्राहिणी वस्तुनि बुद्धिः—सामान्यविशेषात्मकं हि वस्तु—तद्द्विरूपबुद्ध्युपग्राह्यम्, कथमेकत्वं वस्तुनः? बुद्धिरूपाभेदस्याभेदलक्षणस्याभावात्, रूपभेदस्य च भेदलक्षणस्य भावात् । अथैकरू[1]पोपग्राहिण्येव वस्तुनि बुद्धिः, न द्व्यात्म[2]कत्वमंशवदेव । अथ मतम्—बुद्धिरूपभेदः परस्परात्म[3]ताभावश्च भेदलक्षणम्; तत्र गवादयो भेदा भिन्नरूपबुद्ध्युपग्राह्याः परस्परानात्मानश्च, न तु सामान्यविशेषौ, बुद्धिरूपभेदेऽपि परस्परात्मत्वेन प्रतिपत्तेः । एवमपि सामान्यविशेषयोर्भेदलक्षणेन विरहान्न द्व्यात्मता, अंशवदित्युक्तम् ।

यदि मन्येत—[4]बुद्धे रूपाभेदः परस्परात्म[5]त्वप्रतिपत्तिश्च द्वे अभेदलक्षणे; तत्रांशस्य रूपाभेदादेकत्वम्, उभयोस्तु परस्परात्मत्वप्रतीतेः; विशेषाणां तु न बुद्धे रूपाविभागः, न परस्परात्मप्रतिपत्तिरिति भिन्ना इति । एवमप्यभेदलक्षणे सति परस्परात्मप्रतिपत्तौ, उभयाभावे च भेदलक्षणेऽविद्यमाने, न द्व्यात्मता : न चैकस्याभेदस्य द्वे लक्षणे युज्येते; लक्षणाभेदो ह्यभेदं व्यवस्थापयति, तद्भेदश्च भेदम्; लक्षणभेदेऽपि चेत् तत्त्वम्, अन्यत्वं च लक्षणाभेदेऽपि यदि, व्यर्थतैव लक्षणस्य स्यादिति ।

अपि च सामान्यविशेषयोरभेदे,
बुद्ध्यन्तरस्य वैयर्थ्यमेकांश इव चापतेत् ।
नानात्वादर्थवत्ता चेदेकत्वाद्व्यर्थता न किम् ॥ २० ॥

बुद्ध्यन्तरप्रवृत्तिरेव सामान्यविशेषयोरेकवस्त्वात्मतामपाकरोति; सा हि नानात्मत्वे भेदेष्विवार्थवती, अनधिगताधिगमात्; एकत्वे तु यथा सामान्यविशेष[6]विभागयोः स्वबुद्धिसमधिगतयोर्न विलक्षणं बुद्ध्यन्तरमर्थ्यते, तथा सामान्यबुद्धेर्न बुद्ध्यन्तरं विलक्षणं विशेषाधिगमाय [7]प्रार्थ्येत; तथा विशेषबुद्धेर्न सामान्याधिगमाय । अथ नात्यन्तमव्यतिरेकः सामान्यविशेषयोः, व्यतिरेकोऽपि तु; तत्र व्यतिरेकादर्थवत्तेति । तदसत्; एवमपि कुत एतत्—व्यतिरेकादर्थवत्त्वं भेदवत्, न पुनरव्यतिरेकादेकांशवद्वैयर्थ्यम्?

---

[1] B omits पा.
[2] B omits क.
[3] A and B omit ता.
[4] बुद्ध—B.
[5] A omits त्व.
[6] B omits वि.
[7] प्रार्थ्यते—B and C.

तुल्ययोर्हि भेदाभेदयोः कुत एतत्—भेदादेकया बुद्ध्या न ग्रहणम्, न पुनरभेदाद्ग्रहणमिति बुद्ध्यन्तर[1]वैयर्थ्यम्? औत्सर्गिकश्च हेत्वभावे फलाभावः स्वभावसिद्धः; तस्य हेतुभावे फलभावोऽपवादः; तत्राभेदे हेतु[2]भावादेकयैव बुद्ध्योभयाधिगमो युक्तः; नैकत्वेऽन्यतराधिगमहेतुर्नास्तीति शक्यं वक्तुम्। अथापि [3]कथंचिन्नास्तीत्यु[4]च्येत; तथाप्यस्ति तावत्, एकत्वात्; तत्र हेतुभावात् फलभावः स्यात्, तस्य कारणत्वात्; न त्वभावोऽभावस्य कारणम्; स्वभावसिद्धस्त्वभावः फलस्य; तस्य हेतुनिबन्धनः फलभावो निवर्तकः; स च हेतुरुभयत्रास्ति तावत्; असत्त्वं[5]त्वनुपयोगम्, अकारणत्वादिति।

अपि च

सामान्यं न हि वस्त्वात्मा न भेदश्चित्र एव सः।
तस्यानन्वयतो भेदवादः शब्दान्तरादयम् ॥ २१ ॥

यस्यैकमुभयात्मक वस्तु, न तस्य सामान्यमात्रं वस्तुन आत्मा, न विशेषमात्रम्; तन्मात्रत्वे वस्तुभेदप्रसङ्गात्। तस्मात् संभिन्नोभयरूपः शबलो वस्त्वात्मा; न च शबलस्यान्यत्रानुगमः; यस्य [6]त्वनुगमः, स वस्तुरूपं न भवति। तथा च शब्दान्तरमवलम्ब्य भेदा एव सत्या इत्येतत् प्रतिपाद्यते, शब्दान्तरेण वा हेतुना द्व्यात्मकमेकमिति; अनुगन्तुरवस्तुस्वभावत्वे कल्पनाविषयत्वात्। स्यादेतत्—मा भूद्वस्तु[7], [8]तदंशत्वं तु न वार्यते; अन्यथा [9]निर्बीजा कल्पनापि न भवेत्। कः पुनरयमंशो नाम? न तावद्वस्त्वेव; तन्मात्ररूपत्वे वस्तुनो भेदप्रसङ्ग इत्युक्तम्; नापि वस्तुनोऽन्यत्[10] स्वयं वस्तु, सामान्यविशेषतद्वतां त्रयाणां वस्तूनां प्रसङ्गात्। अथ न वस्त्वेव, [11]नान्यत् स्वयं वस्तु; परिशेषात् कल्पनाविषयस्तत्त्वान्यत्वाभ्यामनिर्वचनीयः। ननु नांशः अंशिनोऽर्थान्तरम्, नापि स एव, उभयथानंशत्वात्; नाप्यवस्तु, अत एव; न हि खपुष्पं कस्यचिदंशो भवति; तत्रांशानुगमे वस्त्वेवानुगतं भवति, तस्य तदव्यतिरेकात्। नैतत् सारम्;

---

[1] A adds स्य.
[2] सद्भावा—A.
[3] B omits कथंचित्.
[4] उच्यते—B.
[5] तत्त्वनुपयोग—A and B.
[6] C omits तु.
[7] C adds तद्वस्तु.
[8] तद्वदंशत्व—C.
[9] निर्बीजकल्पना भवेत्—B.
[10] अन्यः—B and C.
[11] नान्यः—C.

अननुगमादंशान्तरस्य किं न वस्तुनोऽननुगमः? अपि च अननुगम एव, तस्य समुदायात्मकत्वादेकाभावेऽप्यभावात् । तथा हि—इतरेतरापेक्षौ वा[1] सामान्यविशेषौ वस्तु, तत्समाहारो वा; उभयथार्थान्तरे [2]विशेषस्याभावान्न वस्त्वन्वयः । प्रत्येकमनपेक्षयोर्वस्तुत्वे नोभयात्मकमेकं वस्तु स्यादिति सुष्ठूच्यते—तस्यानन्वयतो भेदवादः शब्दान्तरादयमिति ।

यदि वाखिल[3]भावानामभेदान् तदतत्त्वतः ।
अभेदवादाश्रयणं स्यादन्यविधया गिरा ॥ २२ ॥

अंशानुवृत्त्या वा वस्त्वनुगमेऽद्वैतवादः । तथा हि—गौः स्वतस्तावद्गौः, सद्द्रव्यादिरूपानुगमादश्ववस्तुनोऽनुगमादश्वः; तदेवं गौर्गौश्चाश्वश्च; अश्वोऽपि तावदश्वः, सद्द्रव्यादिरूपानुगमेन गोवस्तुनोऽन्वयाद्गौः; तदेवमश्वोऽप्यश्वो गौश्च; तदेवं सर्वभावानां तद्भावान्यभावाभ्यामभेद इत्यद्वैतं जगदित्युक्तमन्यप्रकारया वाचा । सत्यम्, द्वैतमप्यस्ति; यतस्तद्भावान्यभावाभ्याममेदः । नैतत् सारम्; गौरपि चेदश्वो गौश्च, अश्वश्च[4]; तत् कुतोऽन्यत्वम्? गौश्चाश्वश्चेत्यपि भेदाभिधानमनिबन्धनमेव; सिद्धे हि गवाश्वभेदे [5]एतदुपपद्यते; गवाश्वस्य तु प्रत्येकं गवाश्वत्वे भेदाभावादनिबन्धनमेव[6] तत् । ननु विशेषांशानां व्यावृत्तेरन्यत्वासिद्धिः; तथा च द्वैताद्वै[7]तात्मकं जगदिति । अथ विशेषव्यावृत्तेरन्यत्वसिद्धिः; किमुभयरूपत्वाद्वस्तुनो वस्त्वन्तरेऽनुगमो नास्ति, अश्ववस्तु गोवस्तु न भवति? अथास्त्यनुगमः, अश्वोऽपि गौर्भवति? तत्र पूर्वस्मिन् कल्पे वस्तुनोऽनन्वयाद[8]नुयतश्चावस्तुत्वाद्भेदवाद इत्युक्तम् । अथ विशेषव्यावृत्तावपि तद्वस्त्वनुगतम्, भवत्यश्वोऽपि गौः; कुतोऽन्यत्वसिद्धिः? यदि मतम्—अनुगतं चाननुगतं चाश्वे गोवस्तु; भवति चाश्वो गौः; गौस्तु गौरेव; भवत्येव हि तत्र गोवस्तु; ततोऽन्यत्वसिद्धिरिति । अथ गोवस्तु कथं वक्तव्यम्? किं यद्गौर्भवत्येव, अथ यन्न भवत्यपि? तत्र पूर्वस्यां कल्पनायां न वस्तुनोऽनुगम इत्यनन्वितानि वस्तूनि; द्विती-

---

[1] B omits वा.
[2] B omits वि.
[3] भेदानां—B.
[4] A omits च.
[5] एवं तदुपपद्यते—B. and C.
[6] B omits व.
[7] द्वैतं—B.
[8] अनुगतस्यावस्तु—B; अनुयायिनश्चावस्तु—C.

यस्यां वस्तुनो वस्त्वन्तरेऽन्वयादद्वैतम् । सर्वथा येन विशेषेणायमश्वाद्गोवस्तु व्यवस्थापयत्यन्यत्, तद्विशेषयुजस्तु तस्यानन्वयाद्भेदवादः; अथानन्वयदोषान्न विशेषमाश्रयति, अभेदवाद इति न द्वैताद्वैतकल्पनोपपद्यत इति ।

द्रव्यपर्यायार्थिकानां नय एतेन वारितः ।
तेषामपि द्रव्यनयः पर्यायनय एव वा ॥ २३ ॥

येऽपि—द्रव्यं नित्यं मृत्सुवर्णादि; तस्य च[1] घटरुचकादयः पर्याया विशेषाख्या अपायिन उपायिनश्चाव्यतिरेकाः; न च ते द्रव्यमेव, तस्य स्थितिमत्त्वात्; न च ततोऽत्यन्तं व्यावर्तन्ते, भेदेनानुपलब्धेः; द्रव्यस्यैव रुचकादिरूपेण प्रत्ययात् । एवं द्रव्यपर्यायरूपं वस्तु । [2]अथ द्रव्यमेव स्यात्, वर्धमानकभङ्गेन रुचकक्रियायां न किंचिदुत्पन्नं नष्टं वेति प्रीतिशोकौ तदर्थिनोर्न स्याताम् । अथ तु पर्यायमात्रम्, हेमार्थिनो मध्यस्थता न स्यात्; पर्यायमात्रे हि हेम्नि हेम्नो विनाशात् पर्यायविनाशे कथं मध्यस्थता? उत्पादे वा? तस्माद्द्रव्यपर्यायरूपत्वाद्वस्तुन उत्पत्तिस्थितिभङ्गानामेकत्र संभवाद्द्रव्यरूपस्थितेर्माध्यस्थ्यम्, पर्याययोरुत्पत्तिविनाशाभ्यां प्रीतिशोकाववकल्पेते इति—मन्यन्ते; तन्नीतिरप्यनेनैव निराकृता प्रकारेण । तथा हि—तेषामपि वस्तुनो वस्त्वन्तरान्वयेऽपि भागाभावाद्द्रव्यमात्रं स्यात्; अथ न वस्त्वन्वेति द्रव्यपर्यायरूपत्वाद्वस्तुनः, पर्यायान्तरे च पर्यायान्तरस्याननुगमादनन्वितानि [3]तर्हि व्यावृत्तस्वभावानि वस्तूनि; यस्यानुगमः कल्प्यते तन्मात्ररूपस्यावस्तुत्वात् पर्यायमात्रम्; अवस्थितं हि द्रव्यमुच्यते; न चैवमवस्थितं किंचिदेकं वस्त्वस्ति; वस्तुनस्त्वपो[4]द्धृतस्यांशस्यावस्थानकल्पना कल्पनैव; वस्तुनश्चित्रत्वात्, तस्य चातथाभावादिति ।

अपि च—

उत्पा[5]दस्थितिभङ्गानामेकत्र समवायतः ।
प्रीतिमध्यस्थताशोकाः स्युर्न स्युरिति दुर्घटम् ॥ २४ ॥

[1] तु—A.
[2] अथ तु—B.
[3] C omits तर्हि.
[4] उद्धृतांशस्य—A.
[5] उत्पत्ति—A.

यस्य खलु द्रव्यात् पर्याया भिद्यन्ते तस्य—द्रव्यमात्रार्थिनो द्रव्यस्य[1] स्थितेर्विनाशाभावादपूर्वस्यानुत्पादान्मध्यस्थता, रुचकार्थिनस्तस्यापूर्वस्योत्पत्तेः प्रीतिः, वर्धमानकार्थिनस्तस्य विनाशाच्छोकः—इति व्यवस्था कल्पते। [2]यस्य तु पर्यायेभ्योऽनन्यद्द्रव्यं न द्रव्यादन्ये पर्यायाः, तस्य—उत्पत्तिस्थितिभङ्गानामेकत्र[3] समवाये द्रव्यार्थिनो मध्यस्थता भवेत्, न भवेच्च; प्रीतिशोकौ स्याताम्, न स्याताम्। न हि तद्द्रव्यमवतिष्ठत एव, विनश्यत्य[4]पूर्वं चोत्पद्यते; तत्र विनाशादपूर्वोत्पत्तेश्च प्रीतिशोकौ स्याताम्, न मध्यस्थता; मध्यस्थता च स्थितेः स्यात्—इति दुर्घटमापद्येत[5]। तथा वर्धमानकार्थिनस्तन्नाशाच्छोकः स्यात्; न च स्यात्, स्थितेः; प्रीतिश्च तस्यापूर्वस्यो[6]त्पादात् स्यात्, न च स्यात्। तथा रुचकार्थिनस्तस्यापूर्वस्योदयात् प्रीतिः स्यात्; न च भवेत्, पूर्वस्यैव स्थितेः; विनाशाच्च शोकः स्यादिति। अथ भेदोऽप्यस्तीति नायं दोषः; अभेदोऽप्यस्तीति किं न भवति? अथ नात्यन्तमभेदः, तेन न संकरः; नात्यन्तमभेद इति व्यवस्थापि न युज्यते; न चास्य [7]किंचित् क्वचिदे[8]कान्ततः सर्वत्रानेकान्तमभ्युपयतः, येनायं विशेष उच्यते—नात्यन्तमभेद इत्यसंकर इति। तथा च

नैकान्तः सर्वभावानां यदि सर्वविधानतः।
अप्रवृत्तिनिवृत्तीदं प्राप्तं सर्वत्र ही! जगत्॥ २९॥

यदा हि सर्वप्रकारेष्वनैकान्तिकत्वं भावानां, तथा सति—नायं लोकः क्वचिदभिमतसाधनताप्रकारमवधार्य प्रवर्तेत, यतो नासौ तथैव; नापि निवर्तेत, यतो [9]नासावतथैव; तथा दुःखहेतोर्न निवर्तेत, यतो नासौ तथैव; नापि न निवर्तेत, यतो नासावतथैव—इति कष्टां बत! दशामापद्येत।

अथ वा यदुक्तम्—प्रीतिमध्यस्थताशोकाः स्युर्न स्युरिति दुर्घटमिति, तत्र ब्रूयुः—सर्ववस्तुषु सर्वप्रकाराणामनैकान्तिकत्वात् का दुर्घटता? तथा [10]हि—प्रीतिमध्यस्थताशोका नैकान्ततः सन्ति, नैकान्ततो न सन्तीति। [11]अत्रोच्यते—नैकान्तः सर्वभावानामिति। यदि खलु प्रीत्यादीनां सदसत्त्वेऽ-

---

[1] A omits स्य.
[2] यस्य तु न पर्यायेभ्योऽन्यद्द्रव्यं—A.
[3] A omits त्र.
[4] A adds प्य.
[5] आपद्यते—A.
[6] उदयात—A.
[7] कश्चित्—A.
[8] एकान्तः—C.
[9] नातथैव—A.
[10] C omits हि.
[11] तत्रोच्यते—A.

नै[1]कान्तिके—न प्रीत्यर्थी प्रीतिसाधनेषु [2]प्रवर्तेत, प्रीतेर्विद्यमानत्वात्; नापि [3]न प्रवर्तेत, तस्या अभावात्; तथा दुःखनिवृत्त्यर्थी न दुःखसाधनसंपर्कं परिहरेत्, [4]तस्यासत्त्वात्; नापि न परिहरेत्, [5]तस्य सत्त्वात्—इत्यप्रवृत्ति-निवृत्तिकं बत! विश्व[6]मापन्नमिति ।

एवं तावन्न द्वे वस्तुनी, नैकं द्व्यात्मकम्; तत्र द्वयमवशिष्यते—भेदः सत्यः, तदुपादानाभेदकल्पना; अभेदो वा सत्यः, तदुपादाना भेद-कल्पनेति । तत्र—

आपेक्षिकत्वाद्भेदो हि भेदग्रहपुरस्सरः ।
नैकज्ञानं समीक्ष्यैकं न भेदं तत्त्वहानतः ॥ २६ ॥

न भेदमुपादायाभेदकल्पना । कुतः? आपेक्षिको हि भेदो नान्यम-नपेक्ष्य शक्यते ग्रहीतुम्; न चागृहीतो भेदोऽभेदकल्पनाया उपादानं भवति । परापेक्षत्वे चास्य ग्रहणमनुपपन्नम्; यतो नागृहीते[7] भेदे[8]परात्मानौ व्यव-तिष्ठेते; न च परात्मव्यवस्थामन्तरेण भेदग्रहोऽस्तीति प्राक् प्रपञ्चितम् । न [9]चैवमभेदग्रहणमभेदग्रहणापेक्षम्; नापि भेदग्रहणापेक्षम्, अभेदहानप्रस-ङ्गात्; न हि भेदे गृहीतेऽभेदस्यावकाशोऽस्ति । तत्राभेदं गृहीत्वा तमुपा-दाय तस्य यथावन्निश्चयाशक्तौ व्य[10]वच्छेदकल्पनोपपद्यते, यथैकबुद्धिनिर्ग्रा-ह्येषु घटादिष्ववयव[11]विभागकल्पना । न तत्र भेदोपादानाभेदकल्पना; भेदो हि परमाणुषु व्यवतिष्ठ[12]ते; ते चातीन्द्रियाः । ननु चैकत्वमप्यनु-सन्धानप्रत्ययावसेयम्; स च न भेदमन्तरेण; भेदासंस्पर्शे हि किं केनानु-सन्धीयतामिति । प्रत्युक्तमेतत्—नेदानीमभिन्नदेशकालो[13]ऽर्थ एकः स्यात्; असति चैकस्मिन् किमाश्रया भेदा[14]शङ्का स्यात्, यस्यानुसंधानादेकत्वमुच्यत इति ।

अपि च सर्वप्रत्यात्मवेदनीयमेतदभेदोपादानो भेद इति । तथा हि—

आलोच्यते वस्तुमात्रं ज्ञानेनापातजन्मना ।
अचेत्यमानो भेदोऽपि चकास्तीत्यतिसाहसम् ॥ २७ ॥

---

1 नैकान्तिकत्वेनैकान्तिकेन—B.
2 प्रवर्तते—C.
3 निवर्तेत—A and B.
4 तस्याः सत्वात्—B.
5 तस्या असत्वात्—B.
6 मनुपपन्न—B.
7 त—A.
8 द—B.
9 त्वेवं—A.
10 अवच्छेद—A.
11 वावयविभाग—B.
12 ष्ठेत—A.
13 लेऽर्थे एकत्वं—A.
14 द—A.

वस्तुमात्रविषयं प्रथममविकल्प[1]कं प्रत्यक्षम्; तत्पू[2]र्वास्तु विकल्पबुद्धयो विशेषानवगाहन्त इति सर्वप्रत्यात्मवेदनीयम् । स्यादेतत्—विशिष्टरूपोपग्राह्येव प्रत्यक्षम्; स तु भेदः शब्देनासंस्पर्शान्न तथोपलक्ष्यते, यथा विकल्पबुद्धौ । तदयुक्तम्, विप्रतिषेधात्; न चोपलक्ष्यते प्रत्यक्षबुद्धौ विशेषः प्रकाशते चेति विप्रतिषिद्धम्; अतोऽतिसाहसमित्युच्यते । यस्तु संवित्तावेव विप्रतिपद्यते सर्वानात्मव्यावृत्तस्पष्टप्रतिभासं प्रत्यक्षमिति वदन्, तस्योत्तरम्—"आहुर्विधातृप्रत्यक्षम्" इत्याद्युक्तमेवेति ।

किं च

प्रतिष्ठितं च विज्ञानमर्थमात्रावलम्बनम् ।
भेदेषु त्वप्रतिष्ठत्वमस्तीन्द्रियधियामपि ॥ २८ ॥

वस्तुद्वयानुपपत्तेरेकस्य [3]च द्व्यात्मता[4]योगादवश्यकल्पनीयेऽन्यतरस्य मिथ्यात्वे युक्तं विशेषावभासस्य मिथ्यात्वम्, रजतादिविभ्रान्तिषु दर्शनात्; न च वस्तुमात्रावभासस्य । न हि वस्तुमात्रव्यभिचारः क्वचिज्ज्ञाने दृष्टोऽस्ति, अन्ततस्तस्यैव वस्तुनः प्रतिभासनात्; दृष्टतद्भावस्यैव तत्कल्पना लघ्वी, क्लृप्तत्वाद्योग्यतायाः; इतरत्र [5]तु कल्प्यत्वात् । स्यादेतत्—मानस एव बुद्धयः क्लृप्तयोग्यभावा मिथ्यात्वं प्रति, नेन्द्रियजन्मानः; इन्द्रियबुद्धिसमधिगम्याश्च भेदा इति । एतच्च वार्तम्; इन्द्रियदोषविशेषानुविधायित्वाद्भ्रान्तीनामिति ।

अपि च यस्य मतम्—व्यावृत्तस्वलक्षणा भावाः; तेन तेऽन्योन्याभावस्वभावा व्याकर्तव्याः, तद्विशेषणा वा; नान्यथा व्यावृत्तशब्दोऽर्थवान् भवति, तस्येतरेतराभावनिमित्तत्वात् । तत्र

अन्योन्याभावरूपत्वं सर्वेषां न प्रकल्पते ।
तत्रोपाधौ प्रतीयन्तां तथा भिन्ना न रूपतः ॥ २९ ॥

एकस्मिन्ननपेक्षे स्थिते तदभावरूपोऽन्यो व्यव[6]तिष्ठते; सर्वे तु नान्योन्याभावरूपाः कल्पन्ते, परस्पराश्रयस्थितित्वात् । अथ विशेषणमन्योन्याभावः; कामम्; अतदात्मानो[7]पि विशेषणानुरागात् तथावगम्यन्ताम्; न तु स्वभाव-

---

[1] ल्पं—A and B.
[2] पूर्व(र्वं)का—C.
[3] B and C omit च.
[4] कत्वा—A.
[5] A omits तु.
[6] A omits व्य.
[7] A and B omit अपि.

भेदः स्यात् । ननु नान्योन्याभावो नाम कश्चित्, यो भावानां तत्त्वं विशेषणं वा स्यात्; अर्थसिद्धिरेवैषा । न चेदन्योन्याभावो नाम कश्चित्, [1]सिद्धस्तर्ह्यभेद इति ।

अपि च भेदत्वादेव विश्वस्य भेदोऽभेदोपादान इति शक्यतेऽनुमातुम्; दृष्टो हि मणिकृपाणदर्पणादिष्वभिन्नमुखोपादानस्तद्भेदः; न च तत्र भावान्तरोत्पत्तिः, विरुद्धपरिणामत्वात् । स्यादेतत्—अभेदोऽपि शक्यो भेदोपादानोऽनुमातुम्, वनाभेदस्य तरुभेदोपादानत्वात् । न, भेदाभावप्रसङ्गात्; एवं हि न कश्चिदेकोऽभिन्नः परमाणुरपि; तदभेदोऽपि हि भेदोपादानः स्यात् वनादिवत् । तथा तदंशाभेदोऽपीत्यनवस्थायामेकस्याभावात् तत्समुच्चयरूपोऽभेदो न स्यात् । अथ क्वचिदवतिष्ठते, स एकः; तदभेदो न भेदोपादान इति व्यभिचारः । तदिदमुच्यते—

दर्पणादौ मुखस्येव भेदोऽभेदावलम्बनः ।
भेदावलम्बनोऽभेदो न तथा तदभावतः ॥ ३० ॥

अपि च

प्रत्येकमनुविद्धत्वादभेदेन मृषा मतः ।
भेदो यथा तरङ्गाणां भेदाद्भेदः कलावतः ॥ ३१ ॥

अभेदानुविद्धत्वात् प्रत्येकं विश्वस्य भेदो मृषा; यथा जलतरङ्गेषु चन्द्रमसः; तत्र हि प्रत्येकं चन्द्रमा इत्यभेदान्वयः, तथा विश्वस्य भेदेऽपि प्रत्येकम् 'इदम्' 'तत्' 'अर्थः' 'वस्तु' इत्यभेदान्वयः । तरुभेदस्तु यद्यपि न मृषा, वनमित्यभेदानुगमश्च न प्रत्येकम्; न हि प्रत्येकं तरुषु वनमिति बुद्धिः; अतो न तेन व्यभिचारः । एतदर्थं च प्रत्येकमित्युक्तम् ।

अपि च—

एकस्यैवास्तु महिमा यन्नानेव प्रकाशते ।
लाघवान्न तु भिन्नानां यच्चकास्त्यभिन्नवत् ॥ ३२ ॥

इदं तावदयं भेदवादी प्रष्टव्यः—कथमयं व्यावृत्तस्वलक्षणेष्वभेदावभासोऽनुवृत्तव्यवहारश्च? यदि सादृश्यात्, तदत्यन्तमनन्वितेष्वनुपपन्नम् । अथ व्यावृत्तेरग्रहात्—को हि गुञ्जाप्रवालादीनां रागव्यावृत्तिमवग्रहीतुं क्षमते—

[1] सिद्धोऽभेद—A.

इति; तदसत्; व्यावृत्तस्वभावस्य तदग्रहे ग्रहणमेव [1]हि न स्यात्। अथ निश्चयप्रत्यक्षयोरात्मभेदादनिश्चयात्; तदसत्, उभयरूपव्यवहारदर्शनात्। तथा हि—कालाक्ष्यां गोसामान्यनिबन्धनश्च व्यवहारो गवान्तरव्यावृत्ति[2]श्च दृश्यते; न च गवान्तरव्यावृत्तेरनिश्चये स युज्यते। अथैकार्थक्रियाकारित्वादतत्क्रियाकारिव्यावृत्तेस्तुल्यत्वात्; तदप्यसांप्रतम्, अर्थक्रियाणामपि भेदादतत्क्रियाकारिव्यावृत्तेस्तुल्यत्वायोगात्; नैकसाध्यान्य[3]स्यार्थक्रिया, येनातत्कारिव्यावृत्तिस्तुल्या स्यात्। वस्तुस्वभावश्च व्यावृत्तिः प्रतिवस्तु भेदान्न तुल्या। अथास्वभावाः, तेषां कथं तुल्या? अथानादिवासनोपादानो न वस्तुगतविशेषापेक्षः; तदप्ययुक्तम्, नियमात्; कासुचिदेव हि व्यक्तिषु कश्चिदेवाभे[4]दावभासः. स वासनामात्रोपादानत्वे न युज्यते; तस्मात् प्रकृत्यैव केचित् कस्यचिदभेदावमर्शस्य योग्याः केचिन्नेति स्वभावविपरीता भावानां सामर्थ्यातिशयाः कल्पयितव्याः; तथा सत्येवं गौरवात् कल्पनायाः, एकस्यैवास्तु माहात्म्यं यदेकोऽपि नानेव भासते, लघुत्वात् कल्पनायाः; न तु भिन्नानां ते सामर्थ्यातिशयाः, यदमी अभिन्ना इवावभासन्ते।

भेदव्यवहाराश्च यथावभासं भेदवादिनामिवाभेदव्यवहारा उपपद्यन्ते; तथा हि—आत्यन्तिकभेदवादिनां यथावभासमभेदव्यवहारः, न यथावस्तु संं[5]सर्गवादिनामपि सामान्यस्यार्थान्तरत्वाद्यथावभासमेव भेदेष्वभेदव्यवहारः। येऽप्यनर्थान्तरवादिनः तेषामपि शबलत्वाद्वस्तुनस्तस्य चानन्वयात् यथावभासमे[6]वोभयव्यवहारः; न वस्त्वनुपातीति दर्शितमिति।

यथानुवृत्तव्यवहारसिद्धिं यथावभासं कथयन्ति बाह्याः।
तथैव भेदव्यवहारयोगं वदन्ति वेदान्तविवेकभाजः[7] ॥ ३२ ॥

इति श्री[8]मन्मण्डनमिश्रविरचितायां ब्रह्मसिद्धौ
तर्ककाण्डः[9] समाप्तः[10] ॥

---

[1] B and C omit हि.
[2] त्त—A.
[3] अन्यार्थक्रिया—A and B.
[4] B omits भेदा.
[5] संसर्गादीनामपि—B.
[6] मेव व्यवहारः—A and B.
[7] B and C add इति.
[8] श्रीमण्डनमिश्रकृतौ—A and C.
[9] काण्डं समाप्तम्—B.
[10] द्वितीयः—A.

ओम् ।

## ॥ नियोगकाण्डः ॥

एवं प्रत्यक्षादिविरोधात् कर्मविधिविरोधाच्च श्रुतार्थपरिग्रहे, ये मन्यन्ते वेदान्तानामुपचरितार्थत्वं तत्प्रति[1]बोधनाय विहितः प्रयत्नः । संप्रति तु— कार्य एवार्थे वेदस्य प्रामाण्यम्, न भूतरूपे; एवं ह्युक्तम् "[2]चोदनालक्षणोऽर्थो धर्मः"; चोदनाप्रमाणको वेदार्थ इति यावत्; चोदना च प्रवर्तकं वचनम्; तस्मात् [3]कार्यार्थे वेदः प्रमाणम्, वेदान्तानामपि तु प्रतिपत्तिकर्तव्यताप्रामाण्यभाजां तन्मुखेन तदनुगतभूतात्मतत्त्वविषयबोधकत्वम्; अतस्तेऽपि कार्यनिष्ठतां[4] नातिवर्तन्ते; तथा च कथं तर्हि मन्त्रार्थवादाः सोपनिषत्का इत्याशङ्क्य "[5]चोदना हि भूतं भवन्तम्" इत्या[6]द्युक्तम्; एतदुक्तं भवति, कार्यमर्थमवगमयन्ती चोदनैव भूतादिकमप्यर्थमवगमयतीति —ये मन्यन्ते, तत्प्रतिबोधनाय प्रयत्यते । तिस्रश्च प्रतिपत्तयो ब्रह्मणि; प्रथमा तावच्छब्दात्, अन्या शब्दात् प्रतिपद्य [7]तत्सन्तानवती ध्यानभावनोपासनादिशब्दवाच्या, अन्या[8] ततो लब्धनिष्पत्तिर्विगलितनिखिलविकल्पा साक्षात्करणरूपा । तत्र प्रथमामधिकृत्योच्यते—

शब्दाद्यदात्मविज्ञानं तन्न तावद्विधीयते ।
भवत्यधीतवेदस्य तद्धि कर्मावबोधवत् ॥ १ ॥

ब्रह्मणो हि प्रमाणान्तरा[9]नधिगमनधिरू[10]पत्वाच्छब्दाधिगम्य[11]स्वभावविषयं ज्ञानं विधेयम् । तत्र यच्छब्दादेव ज्ञानं तदविधेयम्, विधिमन्तरेण भावात् कर्मावबोधवत् । यथैव "[12]स्वर्गकामो यजेत" इति श्रुतवाक्यस्य वाक्यार्था[13]वबोधस्तद्वाक्यप्रामाण्यादेव भवति, न विध्यन्तरमपे[14]क्षते; तथात्मस्वरूपाभिधायिवाक्यप्रामाण्यादा[15]त्मावबोधो विध्यनपेक्षः

---

[1] बाधनाय—C.

[2] Mim.-Sū. I-1-2.

[3] कायऽर्थे—A.

[4] निष्ठता—B.

[5] Śābara-Bhāṣya I-1-2.

[6] B and C omit आदि.

[7] C omits तत्.

[8] अन्या तु—A.

[9] रेणा—A and B.

[10] B omits रूप.

[11] स्वभावतद्विषयं—B.

[12] Tait.-Saṁ. 2-5-5.

[13] र्थबोध—A.

[14] क्ष्यत—B.

[15] देवात्म—A.

संजायते; सति प्रमाणे तत्सामर्थ्येनैव प्रमेयबोधोत्पत्तेः। न खलु सोपकरणे समग्रे प्रमाणे सतीच्छापि पुरुषस्यापेक्ष्यते ज्ञानं प्रति, अनिष्टानामप्यवबोधात्; प्रागेव विधिः।

तामेव विधेरनपेक्षतां कर्मावबोधे दर्शयति—

स्वर्गकामो यजेतेति बोधेऽस्मिन्न व्यपेक्ष्यते।
विधिरन्योऽनवस्थानान्नायं कर्मन्यवस्थितेः॥ २॥

न कर्मविधिवाक्यार्थज्ञानप्रवृत्तौ विधिरपेक्ष्यतेऽन्यः, न तद्गत एव वा; अन्यस्मिन्ननवस्थादोषात्, तदर्थज्ञानेऽपि विध्यन्तरस्यापेक्षणीयत्वात्; तद्गतस्य च कर्मविषयत्वेन तद्बोधं विधातुमसामर्थ्यात्।

ननु यथैषां ग्रहणे विध्यन्तरमपेक्ष्यते "[1]स्वाध्यायोऽध्येतव्यः" इति, न चानवस्था; तद्वत् तदर्थबोधेऽपि स्यात्। अस्ति च विधिः—"[2]वेदः कृत्स्नोऽधिगन्तव्यः" इति। विषम उपन्यासः—अप्रवृत्तोऽपि हि स्वाध्यायाध्ययनविधिवाक्याध्ययने पुरुषान्तराधीतान् ततः तस्य [3]चान्येषां च वाक्यानामध्ययने प्रवर्तते, शाखान्तरीयाङ्गोपसंहार इव श्रवणमात्रात्; न खलु स्वाधीतमेव वाक्यं प्रवर्तयति; यथैकस्तथा पुरुषान्तराण्यपि, अनादित्वाद्वेदवत् तदध्ययनस्यापि। अनवबुद्धार्थस्त्ववबोधविधिर्नावबोधे प्रवर्तयति, तदर्थबोधश्चेद्विध्यपेक्षः; न तत्र स एव प्रवर्तयति, अनवबुद्धार्थत्वादितरेतराश्रयं स्यात्—तदर्थबोधात् प्रवृत्तिः; प्रवृत्तस्य च तदर्थबोध इति। तस्माद्विध्यन्तरमपेक्षितव्यमित्यनवस्था। न च "[2]वेदः कृत्स्नोऽधिगन्तव्यः" इत्यपूर्वार्थविधिः; "[4]दृष्टो हि तस्यार्थः कर्मावबोधनम्" इति न्यायप्राप्तोऽर्थः प्रदर्श्यते। अथाप्येष विधिः—स्वाध्यायाध्ययनविधिनार्थाक्षिप्तसमर्थज्ञानम्—[5]उच्येत; तथापि ब्रह्मस्वरूपाभिधायिवेदवाक्यप्रभवे बोधे न पृथग्विधिरपेक्षितव्यः, कर्मविधिवाक्यवत्। यथैव "[6]स्वर्गकामो यजेत" इति[7] सामान्यविधिना [8]सिद्धे नान्योऽपेक्ष्यते, अनवस्थानात्; सत्यपि विधावन्य-

---

[1] Tait.-Āraṇ. 2-15.
[2] Manu. 2-165.
[3] B omits च.
[4] Śābara-Bhāṣya. I-1-1.
[5] च्यते—B.
[6] Tait.-Saṁ. 2-5-5.
[7] इत्यादि—B.
[8] सिद्धौ—B.

स्यापेक्षणात्; न चैतद्गत एव, कर्मविषयत्वात्; एवं तत्त्वप्रतिपत्तिपरेष्वपि वाक्येषु न विधिरपेक्षितव्यः, वाक्यसामर्थ्यादेव तत्त्वबोधोत्पादादिति ।

इतश्च—

फलं विधेयावगमात् प्रवृत्तिश्चोत्तरा विधेः ।
अन्योन्यसंश्रयान्नैष शाब्दो बोधः स नो परः ॥ ३ ॥

शब्दादवगम्य विधेयं या प्रवृत्तिः सा [1]विधेः प्रयोजनम्, न तु शब्दप्रभवो विधेयावगम एव; अन्योन्यसंश्रयात्—अवगते शब्दार्थे प्रवृत्तेः, प्रवृत्तस्य चावगमात् । शब्दार्थबोधादेव वा शब्दार्थबोध इत्यात्माश्रयः; अन्योन्यसंश्रयस्तु तुल्यानुपपत्तित्वादुक्तः । यस्तु तत्त्वावबोधपराद्वाक्यात् तत्त्वावबोधः, नासौ शब्दार्थबोधात् पराचीनः[2]; किंतु स एवेति ।

अपि च

जाते बोधे न प्रवर्त्यो नतरां खल्वबोधके ।
शब्देन निश्चये तस्मादन्यस्मादन्यवाञ्छनम् ॥ ४ ॥

उदपादि चेत् "[3]सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयम्" इत्युपक्रमात् "[4]तत्त्वमसि" इत्यन्ताद्वाक्यादात्मतत्त्वावबोधः, पदानां परस्परा[5]न्वितार्थत्वात्; किमन्यद्विधिः करिष्यति? न [6]प्रवृत्त एव प्रवर्त्यः । अथ पदार्थसमन्वयमात्रान्न तत्त्व[7]बोधोत्पादः, सुतरामप्रवर्त्यः; शाब्दस्य तत्त्वावबोधस्यासंभवात् । स्यादेतत्—उत्पन्नेऽपि तत्त्वावभासे शब्दात्, निश्चये प्रवर्त्यः—'एव[8]मिदम्' इति । तन्न; यदि तस्माच्छब्दान्निश्चयः, [9]स जात एव; अथान्यतो निश्चयः, अन्यवाञ्छनं प्रमाणान्तरापेक्षा; न तत्र तत्त्वनिश्चयनि[10]बन्धनं शब्दः स्यात् । एवं तावन्न तत्त्वनिश्चयाय विधिरर्थ्यते ।

अथाविवक्षितार्थत्वनिवृत्त्यै प्रार्थ्यते विधिः ।
अर्थो ज्ञातव्य इत्युक्ते[11] ज्ञेयः स्यान्नाविवक्षितः ॥ ५ ॥

---

[1] विधि—A; प्रवृत्तिः— B.
[2] चीनः—B.
[3] Chānd. 6-2-1.
[4] Chānd. 6-8-7.
[5] रसम—A.
[6] प्रवर्त्यत—B.
[7] त्वे—A.
[8] इदमिति—B.
[9] स—C.
[10] निबन्धनः—B.
[11] क्तौ—A.

यदपि मतम्—सत्यपि वाक्यादर्थोपप्लवे तात्पर्यं दुर्लभम्, भूतार्थपरस्य वैयर्थ्यात्; सांशयिकत्वं वा, अतात्पर्यस्यापि दर्शनाज्जपमन्त्रेषु। विधौ तु सत्यर्थज्ञानस्य चोदितत्वान्नार्थोऽविवक्षितो भवितुमर्हति। तस्माद्विवक्षितार्थत्वाय विधिः प्रार्थ्यः।

तद्वार्तमर्थपरता शब्दानां लोकवेदयोः।
"[1]अविशिष्टस्तु वाक्यार्थ" इत्युत्सर्गवती यतः ॥ ६ ॥

औत्सर्गिकः शब्दानामर्थं प्रति शेषभावः; निमित्तान्तरात्तु स्वरूपप्रधानत्वमविवक्षितार्थत्वमपवादो लोके; तथा वेदेऽपि, लोकावगम्यत्वाच्छब्दसामर्थ्यस्य; तदुक्तम्—"[1]अविशिष्टस्तु वाक्यार्थः" इति।

दृष्टार्थता च स्वाध्यायविधेरत्र न भिद्यते।
भवेदितरथा कृत्स्नः सविध्यर्थोऽविवक्षितः ॥ ७ ॥

यथैव कर्मविधीनां "[2]दृष्टो हि तस्यार्थः कर्मावबोधनम्" इति नाविवक्षितार्थानामध्ययनात् फलान्तरकल्पना तथा दृष्टत्वादात्मतत्त्वावबोधस्य वेदान्तानाम्; न च[3] भूतार्थप्रतिपत्तौ वैयर्थ्यमिति वक्ष्यते; प्रतिपत्तिविधौ च तुल्यम्। अवश्यं चैतदेवं विज्ञेयम्; अन्यथा सह विधायकेन कृत्स्नस्याविवक्षितार्थता स्यात्; यतो विधायकशब्दनिबन्धनमन्येषां विवक्षितार्थत्वम्, विधायकस्य तु[4] न तन्निबन्धनमस्ति; एवं च तस्याविवक्षितार्थत्वे इतरेऽपि तथा स्युः अथ विधायकः प्रकृत्या दृष्टार्थत्वेन [5]चार्थपरः, इतरेऽपि तथेति व्यर्थोऽसौ विधिः।

ज्ञानस्य पुरुषार्थत्वसिद्धये विधिरिष्यते।
सर्वत्र पुरुषार्थत्वं विधेरित्यप्यपेशलम् ॥ ८ ॥

विध्यधीनः पुरुषार्थसाधनतावबोधः, तच्छब्दतो लब्धजन्मनोऽप्यात्मतत्त्वावबोधस्य पुरुषार्थसाधनत्वावगमो विधेरित्येतदपि न शोभनम्।

ज्ञेयाभिव्याप्तितो यस्मान्न विज्ञानात् फलान्तरम्।
इष्यते मोक्ष इति चेन् साध्यस्तत्त्वच्युतेर्न सः ॥ ९ ॥

---

1 Mim.-Sū. I-2-40.
2 Śābara-Bhāṣya 1-1-1.
3 B omits च.
4 B and C omit तु.
5 वा—A.

ज्ञानस्य हि दृष्टमेव फलम्—ज्ञात्रा ज्ञेयस्याभिव्याप्तिः, ज्ञातारं प्रति तस्य प्रकाशता—न त्वदृष्टं कालान्तरभावि, यदर्थो विधिः स्यात्। स्यादेतत्—आत्मज्ञानस्य फलान्तरमपीष्यते मोक्षः। तन्न, असाध्यत्वात्; न हेतुजन्योऽसौ मोक्षः, तत्त्वच्युतेः, कार्यत्वे विनाशात् तस्य, पुनः संसारात्; आत्यन्तिकी च संसारनिवृत्तिर्मोक्ष इत्युच्यते। ननु कार्योऽ[1]पि नाशो न नश्यति। सत्यम्; भावरूपं तु मोक्षं निरतिशयानन्दलक्षणं निरतिशयैश्वर्यलक्षणं चाभिप्रेत्यै[2]तदुच्यते, भावस्य कार्यस्य नाशेनाविनाभावात्। आगामिशरीरेन्द्रियबुद्धिसंयोगाभावस्य प्रागभावस्य कार्यत्वमनुपपन्नमेव। बन्धहेतुनिवृत्तिस्तु यद्यपि कार्या, कार्यत्वेऽपि च नास्या अनित्यत्वप्रसङ्गः; तथापि नासौ तत्त्वज्ञानात् पृथगिति न तेन साध्या; अविद्या हि बन्धहेतुः, तत्त्वज्ञानोदय एव च तन्निवृत्तिः।

अथवा "[3]परं ज्योतिरुपसंपद्य स्वेन रूपेणाव[4]तिष्ठते" इति स्वरूपस्थितिर्मुक्तिरुक्ता; साध्यत्वे च न स्वरूपस्थितिः स्यात्; अतो मोक्षत्वाच्च्यवेत। यत्तु—"[5]न च पुनरावर्तते" इति श्रुतेः प्रामाण्यात् कार्यस्यापि मोक्षस्य नित्यत्वमिति; दृष्टविपरीतमपि तदाश्रीयेतानन्यगतित्वे श्रुतेः। यदा तु विदितात्मतत्त्वस्याद्वयं विशुद्धप्रकाशमात्मानं पश्यतः समुत्खाताया मनवयवेनाविद्यायां हेत्वभावात्[6] पुनर्बन्धस्यासंभाव्यत्वात् प्राप्तमेवार्थं वर्तमानापदेशादनुवदति श्रुतिरर्थवादत्वेन, तदा कुतस्तत्प्रामाण्यादनन्तफलत्वम्? तथा हि—वर्तमानापदेशादेव नापुनरावृत्तिः साध्यत्वेना[7]वगम्यते; न च कामोपबन्धोऽस्ति, यतः साध्यता गम्येत; तस्मादर्थवादः। अर्थवादादपि च या फलकल्पना, सापि ज्ञाने ज्ञेयतत्त्वावभासदृष्टफलनिराकाङ्क्षेऽनुपपन्ना। पुरुषार्थता चास्य वक्ष्यत इति।

अन्ये पुनराहुः—

विधेर्विना कार्यशून्यं भूतार्थमनुवादकम्।
वचः स्यादनुवादश्च प्रमाणान्तरगोचरे ॥ १० ॥

---

[1] वि—B and C.
[2] त्येदमुच्यते—A.
[3] Chānd. 8-12-2.
[4] भिनिष्पद्यते—A.
[5] Chānd. 8-15-1.
[6] म—A.
[7] न गम्यते—A.

तत् प्रमाणान्तरापेक्षं प्रामाण्यमतिवर्तते ।
मानान्तरस्याविषये विध्यर्थे तु प्रतिष्ठितम् ॥ ११ ॥
अनपेक्षं प्रमाणत्वमश्नुते कर्मवाक्यवत् ।
परप्रवृत्त्यभावेऽपि प्रामाण्यायैव तद्विधिः ॥ १२ ॥

विधिमन्तरेण न कार्योपदेशप्रतीतिः ; [1]यथावस्थितं वस्तु तद्विधस्यानुवादमात्रत्वं गम्यते; अनुवादश्च प्रमाणान्तरविषय इति तदपेक्षो भूतार्थो नार्थ उच्यत इति सापेक्षत्वादप्रामाण्यम् । विध्यर्थस्य तु प्रमाणान्तराविषयत्वात् तन्निष्ठमनपेक्षं प्रमाणं कर्मविधिवाक्यवत्; प्रमाणान्तराविषयश्च विध्यर्थः; न हि 'कुरु' इति शब्दज्ञानादन्यतः प्रतीतिः । एवं च सति तत्त्वप्रतिपत्तिपरे वाक्ये यद्यपि वाक्यार्थबोधात् पराचीना प्रवृत्तिर्विधिफलं नास्ति, प्रामाण्यायै[2]व तु विधिनिष्ठत्वमेषितव्यमिति ।

अत्रोच्यते—

प्रमाणान्तरयातार्थभावः किमनुवादता ।
उत भूतार्थता तत्र सि[3]द्धार्थमपि यद्वचः ॥ १३ ॥
न मानान्तरलब्धार्थतया तस्यावबोधकम् ।
न तत् सापेक्षमेषा चेदभिप्रेतानुवादता ॥ १४ ॥

कः पुनरनुवादः—अधिगमान्तरसंभिन्नार्थत्वम्, मानान्तरेणाधिगत इति प्रतिपादनम्? आहोस्विद्भूतार्थतामात्रम्? तत्र पूर्वस्मिन् कल्पे भवत्वधिगमान्तरसंभिन्नार्थं सापेक्षम् । यत्तु भूतार्थमपि न मानान्तराधिगत इति बोधयति न तदनुवादकम्, न सापेक्षम्; पूर्वाधिगमसंस्पर्शेन प्रतिपत्तेरभावात् ।

अथापरः कल्पः—

सापेक्षतायाः को हेतुः शुद्धा सिद्धार्थता यदि ।
प्रमाणान्तरसंभेदस्तद्व्यपेक्षणकारणम् ॥ १५ ॥
अनृषीप्रभवे नास्ति भूतार्थेऽपि स वैदिके ॥ १५½ ॥

भूतार्थमात्रं चेदनुवादता न सापेक्षत्वहेतुरस्ति; न भूतार्थतैव सापेक्षत्वहेतुः, भूतार्थयोरपि प्रत्यक्षानुमानयोरनपेक्षत्वात् । तस्माद्भूतार्थेऽभूतार्थे वाधिगमान्तरसंस्पर्शः प्रमाणान्तरापेक्षाहेतुः, स्मृतौ दर्शनात्; सा ह्यधिगमान्तरसंभिन्नार्थेति

---

[1] यथात्व—A. [2] B and C omit एव. [3] भूतार्थं—A.

तत्साधनमपेक्षते । एवं च पुरुषबुद्धिप्रभवं भूतार्थमभूतार्थं वा वचो भवति सापेक्षम्; ततो हि तत्संभिन्न एवार्थे प्रत्ययः, न त्वनपेक्षितपूर्वाधिगमः स्वातन्त्र्येणार्थे । यथोक्तम्—"[1]अपि च पौरुषेयाद्वचनात् 'एवमयं पुरुषो वेद' इति भवति प्रत्ययः, [2]न 'एवमर्थः' इति" । अपुरुषबुद्धिप्रभव-[3]त्वाद्वेदवचसि भूतार्थेऽपि न सापेक्षत्वहेतुः, पुरुषसंबन्धकृतत्वात् पूर्वाधिगमसंभेदस्य ।

स्यादेतत्—अपौरुषेयेऽपि भूतार्थे तद्विषये प्रमाणान्तरस्य संभवात्तदपेक्षा; तथा हि—संभवति प्रमाणान्तरे तद्विषये तद्विसंवादोऽपि शङ्क्येत; तस्मात् तदभावाय तत्संवादोऽपेक्षणीयः; असंभवति तु कार्येऽर्थे न [4]कुतश्चिद्विसंवादाशङ्केति नापेक्ष्यमस्ति । अत्रोच्यते—

न च संभवमात्रेण तदपेक्षावकल्पते ।
विशेषो नहि गम्येत सापेक्षत्वे तदा तयोः ॥ १६½ ॥

द्वयोरेकविषयसंभवे कुत एतत्—शब्दस्तदपेक्षः, न पुनस्त[5]त् प्रमाणान्तरं शब्दापेक्षं स्यादिति[6]? [7]अथ शब्दः प्रमाणान्तराधिगतविषयो लोके दृष्ट इति, प्रमाणान्तरस्याविषये तर्हि नतरां प्रामाण्यं तस्य भवति; प्रमाणान्तरविषये हि प्रमाणान्तरसंभवादपि तावत् स्यात्, अन्यत्र तदभावाद्दुर्लभं तत्। अथ पौरुषेयत्वकारिता लोकवचसां प्रमाणान्तराधिगतार्थता, [8]न शब्दसामर्थ्यकारिता; शब्दस्य प्रमाणान्तरासंभि[9]न्न एवार्थे सामर्थ्यम्; न तर्हि प्रमाणान्तरसंभवाच्छब्द एव सापेक्षः; तदपि शब्दसंभवाच्छब्दापेक्षं स्यात् । किमतस्तस्य? सापेक्षत्वेनाप्रमाणं[10] स्यात् । न शब्दस्य तत्रापेक्षा युज्यते; सति हि तस्य प्रामाण्ये तत्संवादविसंवादावपेक्ष्येयाताम् । अथ शब्दस्याप्रामाण्यान्न तत् शब्दापेक्षया प्रमाणम्; प्रमाणमेव, अनपेक्षत्वात् । शब्दस्याप्रामाण्यं कुतः? प्रमाणान्तरापेक्षत्वात् । तस्य च प्रामाण्यमनपेक्षत्वात्, अनपेक्षत्वं च शब्दस्याप्रामाण्यादितीतरेतराश्रयम्; प्रमाणे हि शब्दे तद्विषये संभवति तदपि सापेक्षं स्यात् तत्संभव इव शब्दः, विशेषाभावात् ।

1 Śābara-Bhāṣya 1-1-2.
2 Śābara-Bhāṣya reads नैवमयमर्थः.
3 त्वात्तु वेद—A.
4 कदाचित्—A.
5 A omits तत्.
6 A omits इति.
7 यदि—A.
8 न च—A.
9 भिन्नेऽर्थे एव—A.
10 णत्वात्—A.

अथ शब्दसंभवेऽपि न तत् सापेक्षम्; तत्संभवेऽपि न शब्दस्य सापेक्षता, विशेषाभा[1]वात् ।

अपि च

प्रत्यक्षानुमयोरेवं वृत्तेरन्योन्यगोचरे ॥ १७ ॥
परस्परव्यपेक्षत्वमविशे[2]षं प्रसज्यते ।
स्यादक्षमपि सापेक्षं यदक्षान्तरगोचरे ॥ १८ ॥

संभवमात्रेण सापेक्षत्वे प्रत्यक्षानुमयोरेकस्मिन् विषये संभवादन्योन्यापेक्षत्वादप्रामाण्यप्रसङ्गः । तथा स[3]त्तागुणत्वद्रव्येष्वनेकेन्द्रियग्राह्येष्विन्द्रियान्तराणामिन्द्रियान्तरसापेक्षत्वप्रसङ्गः । अथ शब्दस्यैव प्रमाणान्तरसंभवे सापेक्षत्वम्, विशेषहेतुर्वाच्यः । प्रमाणान्तरादधिग[4]तार्थत्वदर्शनादिति चेत्, उक्तमत्र— यदि शब्दमात्रधर्मोऽयमसंगवादेव तद्विषये प्रत्यक्षादेर्बुद्धादिवाक्यवदप्रामाण्यं प्राप्नोति, संभवे त्विन्द्रियविषये प्रत्ययितपु[5]रुषवचोवद्युज्यते प्रामाण्यम्; यथोक्तम्—"[6]तच्चेद् प्रत्ययितात् पुरुषादिन्द्रियविषयं वा, अवितथमेव तत्" इति; अथ पौरुषेयशब्दधर्मोऽयम्, न संभवत्प्रमाणान्तरविषयस्याप्यपौरुषेयस्य शब्दस्य सापेक्षत्वम् । अपि च प्रत्यक्षाधिगतविषयं किंचिदनुमानमिति न सामान्यतो दृष्टस्य तथा प्रत्यक्षसापेक्षता, यथा चागमपूर्वकं पङ्कजादिविवेकविषयं प्रत्यक्षमिति न सर्वं प्रत्यक्षं तथा, एवं पुरुषवचसां प्रमाणान्तराधिगतविषयत्वदर्शनेऽपि नापौरुषेयस्य तथाभावो भूतार्थस्यापि; अन्यथा सुतरां प्रमाणान्तरासंभवादप्रामाण्यं स्यादित्युक्तम् ।

अपि च

असंभवादौषधादिनियोगस्यानपेक्षता ।
लौकिकस्य प्रसज्येत नरप्रत्ययपूर्वकः ॥ १९ ॥
त्रिनियोगस्तत्र तेन व्यपेक्षा वैदिके पुनः ।
अबुद्धिपूर्वकः सोऽपीत्यनपेक्षत्वमुच्यते ॥ २० ॥

यदि कार्ये नियोगार्थे प्रमाणान्तरस्यासंभवाद्वेदवचसां तन्निष्ठानामनपेक्षत्वम् 'ज्वरवियोगकाम इदमौषधं पिबेत्', 'स्वर्गकामः सिकता भक्षयेत्' इति

[1] भावादिति—A.
[2] शेषः—B and C.
[3] सत्त्वगुणत्व—B and C.
[4] गतार्थत्वादिति—B and C.
[5] A omits पुरुष.
[6] Śābara bhāṣya 1-1-2.

लोकवचांस्यपि कार्यनिष्ठान्यनपेक्षाणि प्रामाण्यमश्नुवीरन् । अथ यस्तत्र साध्यसाधनभावः स पुरुषविवक्षापूर्वकः, तेन तत्र सापेक्षता, वेदे तु साध्यसाधनभावोऽपि न पुरुषविवक्षापूर्वक इत्यनपेक्षत्वम् । यो वा विषयनियोज्यनियोगानां संबन्धः, स पुरुषबुद्धिविरचितो लोकवाक्ये; वेदे तु न केवलं नियोगोऽपुरुषबुद्धिपूर्वकः; सोऽपीत्यनपेक्षत्वम् । उच्यते—

नृबुद्धिपूर्वतैवेत्थं हन्तापेक्षानिबन्धनम् ।
मानान्तरासंभवेऽपि ततः सापेक्षता यतः ॥ २१ ॥

असंभवत्प्रमाणान्तरकार्यनिष्ठेऽपि चेद्वाक्ये पुरुषसंबन्धात् सापेक्षत्वम्, पुरुषबुद्धिपूर्वतैव तर्हि प्रमाणान्तरव्यपेक्षाकारणमन्वयव्यतिरेकाभ्याम्; तद्भावे लोके सापेक्षत्वात्, तदभावे वेदे निरपेक्षत्वात्; न विषये प्रमाणान्तरसंभवः, तदभावेऽपि लोकनियोगे सापेक्षत्वदर्शनात् ।

अथ मतम्—

वेदे नियोगनिष्ठत्वं विनियोगप्रधानता ।
लोके वेदे न व्यपेक्षा तल्लोके च व्यपेक्षणम् ॥ २२ ॥

नियोगपर्यवसितं वैदिकं वचः, स च प्रमाणान्तरस्यागोचर इत्यनपेक्षत्वम्; साध्यसाधनभावनिष्ठं तु लौकिकं व[1]चः, [2]स प्रमाणान्तर[3]विषय इति सापेक्षता;

न शब्दमात्रसामर्थ्यप्रविभागोऽयमीदृशः ।
लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः ॥ २३ ॥

न तावदयं शब्दमात्रस्यानपेक्षितपुरुषसं[4]बन्धासंबन्धस्य शक्तिप्रविभागः—यदेकत्र नियोगः शब्दार्थः; अन्यत्र विनियोगः, यथा गोशब्दस्य सास्नादिमान्, अश्वशब्दस्य केसरादिमान्; यतो लोकाधिगतसामर्थ्यो वेदेऽपि प्रतिपादकः; लोके चेद्विनियोगः शब्दार्थः, तत्रैवास्य सामर्थ्यमवगतम्, न नियोगे; तत्र वेदेऽपि विनियोग एव प्रमाणार्थः स्यात् ।

अथ मानान्तराज्ज्ञात्वा प्रयुङ्क्ते पुरुषो वचः ।
अर्थे तत्तेन तन्निष्ठमितरत्त्वन्यथा स्थितम् ॥ २४ ॥

---

[1] A omits वचः.
[2] स च—A.
[3] A adds स्य.
[4] A omits सम्बन्धा.

अथ मतम्—नैष शब्दमात्रस्य सामर्थ्यविभागः; शब्दस्य हि निजं सामर्थ्यं कार्यनिष्ठतैव; तथा हि—कार्यो नियोगार्थः; कार्याय चान्यस्यान्वयः प्रतीयते; न तु कार्यस्यान्यार्थोऽन्वयः। तस्मात्[1] कार्यत्वान्नियोगस्य तत्प्रधानता। पुरुषस्तु प्रमाणान्तरादवगम्यार्थं तत्र प्रयुङ्क्ते वचनम्; न च नियोगः प्रमाणान्तरगोचरः। तस्मान्न[2] तत्र प्रयोक्तुमर्हति। विनियोगस्य तु तथाभावात् तत्र युज्यते प्रयोगः। तस्माद्विनियोगप्रधानं पुरुषवचः; वैदिकं तु [3]सामर्थ्येन कार्यत्वान्नियोगस्य तत्प्रधानमिति।

अत्रोच्यते—

मानान्तरव्यपेक्षत्वात् संभव्यन्यप्रमाणकः।
हन्तास्य गोचरो नास्मादपेक्षास्य प्रमान्तरे॥ २५॥

यदि पुरुषोऽधिगते विषये वचः प्रयुङ्क्त इति विनियोगविषयता तस्य कल्प्यते प्रमाणान्तरापेक्षत्वात्, तर्हि संभवत्प्रमाणान्तरोऽस्य विषयः; न तु संभवत्प्रमाणान्तरविषयत्वात् पुरुषवचोऽपि तापेक्षम्, सापेक्षत्वनिमित्तत्वात् तद्विधस्य विषयस्य।

तस्मान्मानान्तराद्गत्वा परस्य प्रतिपत्तये।
वचः प्रयुङ्क्ते पुरुषो नाकस्मात् तेन तद्गिरि॥ २६॥
प्रमाणान्तरसंभेदो व्यपेक्षातो न संभवात्। २६½।

स्वोपलब्धिख्यापनाय पुरुषस्य गीः, तत[4]स्तस्यां प्रमाणान्तरसंभेदः, 'मयोपलब्धोऽयमर्थः' इत्यर्थः; तेन तत्रोप[5]लब्धे संभवासंभवावेवापेक्ष्येयाताम्। यत्रोपलब्धेर्निश्चयः 'संभवत्यस्योपलब्धिः, न चानुपलभ्यायं ब्रवीति' इति तत्र प्रामाण्यम्, यथाप्तपुरुषवचनस्य प्रमाणविषये। यत्र तूपलब्धेरसंभव एव यथा दृष्टार्थे बुद्धादिवाक्ये, यत्र चानुपलभ्यापि वचनप्रवृत्तिसंभावना, तत्राप्रामाण्यम्; न तु प्रमाणान्तरसंभवात् पुरुषवचनेऽपि तदपेक्षा।

अपौरुषेयता तेन पौरुषेयत्वमेव च॥ २७॥
अनपेक्षव्यपेक्षत्वनिमित्ते वर्णिते बुधैः।
भूतार्थमपि सापेक्षं नातोऽपुरुषबुद्धिजम्॥ २८॥

---

[1] B and C omit कार्यत्वात्.

[2] मात्र—A.

[3] A adds स्व.

[4] तेन तस्यां—A.

[5] लब्धसंभवासंभवावपेक्ष्येते—A.

अत एव च पौरुषेयत्वापौरुषेयत्वे सापेक्षत्वानपेक्षत्वकारणे न्यायविद्भिर्दर्शिते पौरुषेयत्वनिराकरणप्रयत्नेन—"[1]औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः" इति; औत्पत्तिके शब्दार्थसंबन्धेऽस्वातन्त्र्याच्छब्दस्य न पुरुषबुद्धिपूर्वकत्वमिति न प्रमाणान्तरसंभिन्ना शब्दादर्थाव[2]गतिरिति निरपेक्षत्वम् ।

ननु प्रमाणान्तरासंभवेऽपि कृत एव यत्नः—"[3]सत्संप्रयोगे" इति । सत्यम्; चोदनैव प्रमाणम्, नान्यत्—इत्यवधारणसिद्धये, न तु—प्रमाणमेव—इति ।

अथ प्रमाणान्तरसंभवेऽपि यदि चोदनाप्रामाण्यं न व्याहन्यते, कोऽर्थः प्रमाणान्तरनिराकरणेन? धर्मतत्त्वज्ञानम्; प्रमाणान्तरसंभवे हि सर्वज्ञाभिमतबुद्धाद्युपदिष्टोऽपि धर्मः प्रतीयेत; तत्र न धर्मतत्त्वमवधारितं स्यात्; तदवधारणार्थश्चायं यत्नः । चोदनाप्रामाण्यमपि तदर्थं मृग्यते, नादृष्टाय । अथवा तद्विरोधाच्चोदनाया बाधः स्यात्, संशयो वा तुल्यबलत्वे, तेन तस्यासंभवः प्रतिपाद्यते; न तु तत्संभवात् सापेक्षतेति । ननु तदभावोऽपेक्षणीयः स्यात्; कामम्; न तु शब्दः प्रमाणान्तरापेक्षमर्थं प्रतिपादयति; यतः यदर्थस्य प्रतिपादकम्, न तु तदपेक्ष्यते; यदपेक्ष्यते न तदर्थं प्रतिपादयति । न हि विरोधिप्रमाणाभावः प्रतिपत्तिहेतुः । विरोधिसंभवमात्रेण चाप्रामाण्ये प्रत्यक्षादीनामपि तत् स्यात् । अपि च विरोधिसंभवादप्रामाण्यं कार्यनिष्ठत्वेऽप्यपरिहार्यम्, कर्तव्यताद्वारेण भूतार्थप्रतिपत्तेरिष्टत्वात्; तत्र तु प्रमाणान्तरविरोधसंभावनात् । भूतार्थस्य प्रमाणान्तरविषयत्वात् तेन कार्यनिष्ठता वर्ण्यते; प्रमाणान्तरविषयत्वे किलानुवाद[4]त्वात् प्रमाणान्तरापेक्षमर्थं प्रतिपादयति—प्रमाणान्तरेणायमधिगतः—इति, न स्वातन्त्र्येण; कार्यनिष्ठत्वे तु स्वातन्त्र्येण, तस्य प्रमाणान्तरागोचरत्वात् । उक्तेन प्रकारेण न सापेक्ष[5]त्वमिति 'भूतार्थमपि सापेक्षं नातोऽपुरुषबुद्धिजम्' इति सुष्ठूक्तम् ।

अथ संसर्गभाजो नो पदार्थाः क्रियया विना ।
क्रियायातं विधेः सापि स्वस्त्यादिः सुलभा क न[6] ॥ २९ ॥

---

[1] Mim. Sū. 1-1-5.
[2] धि—A.
[3] Mim. Sū. 1-1-4.
[4] A adds क.
[5] A omits त्व.
[6] नः—B.

यदि मतम्—आख्यातपदार्थमन्तरेण न नामपदा[1]र्थानां संसर्गः; क्रिया हि पदार्थसंश्लेषहेतुः, तदभावे साकाङ्क्षत्वात्; अतः सिद्धोऽर्थो ब्रह्मादिर्न शब्दगोचरः, पदस्याविदितसंगतित्वेनानवबोधकत्वात्; न वाक्यार्थः, तस्य संसर्गात्मकत्वात्; क्रियारहितानां च पदार्थानामसंसर्गात् । एवमपि क्रियाभ्युपेयताम्; तद्द्वारेण [3]च पदार्थसंसर्गसिद्धिराशास्यताम्; न विधेः कश्चिदर्थः । सापि च क्रिया सर्वत्र सुलभैवाश्रूयमाणाप्यस्त्यादिः "[4]अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽ[5]पि गम्यते" इति । तत्र ब्रह्मस्वरूपप्रतिपत्तिपरं वाक्यमस्त्यर्थनिष्ठम्; तन्निबन्धनस्तत्र पदार्थसंश्लेषः; सत्तायाश्च प्रकृत्यैव सत्प्रधानत्वात् तद्द्वारेण विशिष्टवस्तुसिद्धिरिति ।

अत्राहुः—न प्रमाणावगम्यताया अन्या काचन सत्ता; तथा हि—यत् प्रमाणेनावगम्यते तत्र 'अस्ति' इति व्यवहारो लौकिकानाम्, विपर्यये 'नास्ति' इति; न खल्वन्यः सदसद्विभागहेतुर्लक्ष्यते । अर्थक्रियाभावाभावौ [6]चेत्; न, तयोरपि प्रमाणभावाभावाधीनत्वात्; तथा हि—कार्येऽपि सद्व्यवहारो यदि कार्यान्तरनिबन्धनः, अनवस्था; तस्मादन्तेऽपि प्रमाणादेव सद्व्यवहारः, तद्विपर्ययाच्चासद्व्यवहारः; एवं चेदादावेव प्रमाणभावाभावनिबन्धनौ सदसद्व्यवहारौ स्ताम् । तथा चास्त्यर्थनिष्ठं वाक्यं प्रमाणान्तरापेक्षमेवार्थं बोधयति, प्रमाणविषयताया अस्त्यर्थत्वात् ।

अत्रोच्यते—

न च मानावगम्यत्वमस्तीतिविषयो मतः ।
मानादेव यतो बुद्धिरभूदस्ति भविष्यति ॥ ३० ॥

धूमादिना मिते हि स्याद्व्यादावियमन्यथा ।
भिद्येतोत्तरकाले वा भवन्ती न खलु त्रिधा ॥ ३१ ॥

न प्रमाणावगम्यत्वमस्त्यर्थः, न 'अस्ति' इति बुद्धेस्तत् विषयः; यतः प्रमाणादेव त्रिधा बुद्धिर्भवति—'धूमादस्त्यत्राग्निः' 'नदीपूरविशेषादभूद्वृष्टिः' 'मेघोदय-

---

[1] पदार्थसंसर्गः—A.
[2] संसर्ग—A.
[3] C omits च.
[4] Mahābhāṣya 2-3-1.
[5] अपि—B.
[6] E reads यत for चेत्; न.

विशेषाद्भविष्यति वृष्टिः' इति । तत्र यदि 'अस्ति' इति बुद्धिः प्रमाणविषयतां गोचरयति, प्रमिते हि स्यात्, न प्रमाणादेव; न हि प्राक् प्रमाणोत्पत्तेः सन्[1] प्रमाणसंबन्धः; प्रमाणसंबन्धनिबन्धना चेयं बुद्धिः । अथ वैयात्यादुत्तरकालतामे-[2]वास्या ब्रूयात्; त्रैविध्यमनुपपन्नम्, प्रमाणसंबन्धस्याभेदाद्भिन्नकालेष्वप्यर्थेषु ।

[3]स्वसंबन्धितया मानमथ वस्त्वधिगच्छति ।
तथापि नैव भिद्येत नेत्थं चान्यव्यपेक्षता ॥ ३२ ॥

अथ मतम्—आत्मसंबन्धितयैव प्रमाणेनार्थोऽ[4]वगम्यते; अतो न 'अस्ति' इति बुद्धेरुत्तरकालता प्रमाणसंबन्धविषयाया [5]अपि, स्वात्मसंबन्धितयैवार्थस्य [6]प्रतीतेः । एवमप्यस्तीत्येव सर्वत्र स्यात्; न त्रैविध्यम्, सर्वस्य[7] प्रमितौ प्रमाणसंबन्धस्य वर्तमानत्वात् । न चेत्थं प्रमाणान्तरव्यपेक्षत्वमस्त्यर्थनिष्ठे वचसि, तत्प्रमाणसंबन्धस्यैवास्त्यर्थत्वात् ।

अन्यमानावगम्यत्वमथ [8]लिङ्गात्त्रिधेक्ष्यते ।
स्याल्लिङ्गमपि सापेक्षं तत्सिद्धेस्तत एव [9]चेत् ॥ ३३
नैरपेक्ष्यं यदि न तद्वेदे दण्डैर्निवार्यते । ३३½ ।

अथ मतम्—प्रमाणान्तरगम्यतैव लिङ्गेनाधिगम्यते; तेन नोत्तरकालता; तच्च प्रमाणं त्रिकालमिति त्रैविध्यम् । किं पुनस्तत्? प्रत्यक्षम्; तथा हि—भूतायां वृष्टौ कस्यचिद्भूतं प्रत्यक्षम्, भविष्यन्त्यां भविष्यत्, वर्तमानेऽग्नौ वर्तमानमिति । एतच्च वार्तम्, नित्यानुमेये तस्याभावात् । अपि च लिङ्गमप्येवं [10]प्रमाणान्तरापेक्षत्वादप्रमाणं स्यात् । अथ लिङ्गादेव प्रमाणान्तरसद्भावस्य सिद्धेर्निरपेक्षत्वम्; तथा हि—[11]प्रमाणान्तरसद्भाव एवेदानीं लिङ्गं प्रमाणम्; न च तत्रान्यदपेक्ष्यते; प्रमाणसद्भावद्वारा[12] प्रमेयसिद्धिरिति;

---

[1] सत्प्रमाण—B.
[2] वास्यां—B.
[3] B omits स्व.
[4] C omits अव.
[5] A omits अपि.
[6] प्रमितेः—B.
[7] तु स्यात्—B.
[8] लिङ्गं त्रिधेष्यते—B.
[9] Cf. Citsukha's commentary—शास्त्राणि चेत्प्रमाणं स्युरित्यादौ चेदिति शब्दस्य निश्चयेऽपि प्रयोगाद्यदिना न पौनरुक्त्यम्; तत एव तु इति पाठे तु न तच्छङ्कापि.
[10] प्रमान्तरसंबन्धा—B & C.
[11] प्रमान्तर—C.
[12] A adds च.

नायं विधिर्वेदे दण्डवारितः; वैदिकमपि वचोऽस्त्यर्थनिष्ठं विशिष्टार्थप्रमाणसद्भाव एव प्रमाणम्; तत्र निरपेक्षम्; तत्प्रमाणद्वारा च विशिष्टार्थसिद्धिरिति समानम्।

तत्संभवो लैङ्गिकेऽर्थे बुद्धवाक्यार्थवन्न तु ॥ ३४ ॥
अत्रेति साक्षात्करणाभ्युपायादसमञ्जसम्। ३४½।

स्यान्मतम्—युक्तं लिङ्गस्य प्रामाण्यमे[1]वम्, अर्थे तस्य प्रमाणान्तरस्य[2] संभवात्; संभवति हि वृष्ट्यादिषु प्रमाणान्तरम्; ततस्तद्द्वारार्थगतिः; न तु सर्वविशेषातीते ब्रह्मण्याम्नायैकनिबन्धनेऽभ्युपगम्यते। तत्र यथैव बुद्धादिवाक्यानाम् 'एवमयं पुरुषो वेद' इति ज्ञाननिष्ठानामतीन्द्रियार्थे[3] ज्ञानस्यासंभवान्नार्थे प्रामाण्यमतीन्द्रियार्थोपदेशिनाम्, तथा[4]त्रापि स्यात्। संभविप्रमाणविषयाप्तवचनवत्तु लिङ्गस्य प्रमाणनिष्ठत्वेऽपि युज्यते प्रामाण्यम्। तदसत्, ब्रह्मण्यपि साक्षात्करणस्याभ्युपगमादविद्यासंहारे; अविद्यावतां तु तदाम्नायैक[5]निबन्धनमुच्यते।

अपि च

मेयत्वमेव सत्ता चेन्माने त्रिविधता कुतः ॥ ३५ ॥
तत्संबन्धादतो नार्थे त्रैविध्यमवकल्पते। ३५½।

यदि च लिङ्गेन प्रमाणमेव मीयते, मीयमानतैव च सत्ता, तत्र [6]प्रमीयमाणत्वात् प्रमाणं सर्वं सदेव; तच्च वर्तमानमित्युच्यते; तत्र वर्तमानत्वात् प्रमाणस्य सर्वत्रार्थे 'अस्ति' इत्येव[7] स्यात्; न प्रमाणत्रैविध्यादर्थे त्रैविध्यम्, मीयमानस्य सत्त्वात् सतश्च वर्तमानत्वादिति।

अपि च इदमयं प्रष्टव्यः—किं वर्तमानप्रमाणयोगः[8] प्रमाणसंबन्धः सत्ता, तद्विपर्ययोऽसत्ता, आहोस्वित् प्रमाणयोगमात्रमनाश्रितकालविशेषम्? तत्र

वर्तमानप्रमायोगः सत्त्वासत्ता विपर्ययः ॥ ३६ ॥
मते यदि ततः प्राप्तमसत्त्वं स्मृतिगोचरे। ३६½।

---

1 ण्यादवम्—A.
2 B omits स्य.
3 येऽर्थे—A, योऽर्थे—B.
4 स्यापि—A and B.
5 निर्बन्धमुच्यते—B.
6 B omits मीय.
7 त्येवान्यत्र—B.
8 A omits ण.

न स्मर्यमाणस्य वर्तमानप्रमाणसंबन्धः । ननु स्मर्यमाणे विनाशसंभवान्नैव 'अस्ति' इति व्यवहारः; सत्यम्; 'नास्ति' इत्यपि नास्ति। यदि वर्तमानप्रमाणयोगः सत्ता तद्विपर्ययोऽसत्ता[1], 'नास्ति' इत्येव स्यात्, न च 'अस्ति' इति। तस्मादन्ये सदसत्त्वे ।

प्रमाणयोगमात्रं चेत् सत्तासत्ता विपर्ययः ॥ ३७ ॥

प्राप्ता प्रमितनष्टेन घटेन मधुधारणा ।
प्रमिते च[2] न जिज्ञासा पुनः स्यात् सदसत्त्वयोः ॥ ३८ ॥

अनाश्रितकालविशेषे प्रमाणयोगमात्रे सत्त्वे प्रमितनष्टमपि वस्तु सदिति तेनार्थक्रियाप्रसङ्गोऽनष्टेनेव, सत्त्वाविशेषात् । नष्टानष्टयोर्विशेषान्नैवमिति चेत्, स एव तर्हि विशेषः सदसद्व्यवहारव्यवस्थाया हेतुः कार्यव्यवस्थाया इव, न प्रमाणयोगः । तदनुसारिण्येवैषा[3] दृश्यते लोके; न खलु प्रमितनष्टं 'सत्' इत्युपचरति लोकः । किं च प्रमितेऽर्थे सदसत्त्वे जिज्ञासेरन्न पुनर्लौकिकाः, सिद्धत्वात् प्रमाणयोगमात्रस्य तल्लक्षणत्वाच्च सत्त्वस्य ।

अथ प्रमाणयोग्यत्वं [4]सत्त्वं नष्टाच्च तच्च्युतम् ।
स्मर्यमाणे प्रचलितं क्वचिदित्यप्यसुन्दरम् ॥ ३९ ॥

अथ मतम्—न वर्तमानप्रमाणयोगः सत्ता, नानाश्रितकालं[5] तद्योगमात्रम्; अपि तु प्रमाणं प्रति योग्यता; सा च न[6]ष्टाच्च्युतेति न तस्य सत्त्वप्रसङ्गः; स्मर्यमाणे[7] तु कुतश्चिच्च्युता कुतश्चिन्नेति न सर्वस्यासत्त्वमिति। एतदपि न सुन्दरम्, अभ्युपगतहानात् । तथा हि—इत्थमर्थ[8]स्वभाव एव सत्ता वर्णिता भवति; प्रमाणयोग्योऽर्थस्वभावः सत्ता । अर्थस्वभावनिबन्धन एव सदसद्व्यवहारविभागः[9], न प्रमाणतदभावोपाधिः; तस्य त्वेष कथनोपायः, न प्रमाणसंस्पर्शः; यथा 'नीलाकारज्ञानयोग्यो[10]ऽर्थो नीलः' इत्याख्यातेऽपि न नीलशब्दो नीलज्ञानोपाधिः । तथा च सोऽस्तिशब्देनाभिधीयत इत्यर्थ-

---

[1] A adds इति.
[2] न च—B.
[3] प—B.
[4] सत्ता—A and B.
[5] कालविशेषं—A.
[6] ष्टे—A.
[7] माणात्तु—A.
[8] B adds स्य.
[9] गे—B.
[10] ग्या—B.

स्वभावनिष्ठमस्त्यर्थप्रधानं वाक्यमिति कुतः सापेक्षत्वम्? प्रमाणस्यासंस्पर्शात् ।

स्यादेतत्—भिन्ना एवार्थस्वभावाः प्रमाणं प्रति योग्याः सच्छब्दवाच्याः सन्तु, नैका सत्ता । मा भूत्; नैतत् साध्यम्; सर्वथार्थस्वभावाभिधाय्यस्तिशब्दो न प्रमाणयोगनिमित्त इति; प्रमाणसंस्पर्शे हि सापेक्षता स्यात्; अनेकता तु न कंचिद्दोषमावहति । अपि च यदि तस्यानेकत्वम्, कथमभिन्नशब्दप्रवृत्तिः? तथा हि—भिन्नेष्वभिन्नं विशेषणमुपलक्षणं वाश्रित्यैकः शब्दो वर्तेत, भिन्ननिमित्तो वा साधारणशब्दः स्यादक्षादिवत् । तत्र न तावदनन्तार्थस्वभावेषु साधारणत्वमुपपद्यते, संबन्धग्रहणसामर्थ्याभावात्; परिमितजातिविषया ह्यक्षादिशब्दाः परिमितोपलक्षणलक्षिता वा स्युः । स्यादेतत्—द्रव्यत्वादिसामन्यत्रयोपल[1]क्षितानामर्थानां सच्छब्दः साधारण इति; तन्न; यो हि सत्तामवजानीते स द्रव्यत्वादीन्यप्यवजानीत एव; न किल तेजो दृष्टवतोऽ[2]प्सु तदवमर्शो भवति । अपि च सामान्यविशेषसमवाया अपि सन्त एव; न तेष्वौपचारिकः सच्छब्दः, प्रत्ययस्यावैलक्षण्यात्; न च सामान्याद्विनोपचारः; सति वा सामान्ये तदेव सच्छब्दार्थः; तदेव च सत्ता, तुल्यत्वात् प्रत्ययस्य । अथ मतम्—सर्वप्रवादेषु सर्वपदार्थाः परिमितैः कैश्चिद्धर्मैरुपसंगृहीताः; तदुपलक्षणानामनन्तानामप्यर्थानां 'सत्' इति साधारणः शब्दः । तदयुक्तम्; संग्रहो हि नैकमन्तरेण । तत्र यदि सच्छब्दतायां संग्रहः 'एतावत्प्रभेदः सच्छब्दार्थः' इति, नार्थान्तरनिवृत्तिः स्यात्; तत्र न सर्वार्थसंग्रहः स्यात्, यथा 'नवविधो गोशब्दार्थः' इति नान्येषामभाव एव । तत्र न प्रवादेभ्यः काचिदर्थतत्त्वावगतिः स्यात् । ननु न प्रवादानामर्थवत्ता साध्या । न ब्रूमः प्रवादानामर्थवत्ता साध्येति; किं तु प्रतिपद्यन्ते प्रवादिनः कंचिदर्थस्वभावमेकम्, यस्यायं 'पञ्च, षट्' इत्यादि प्रभेदसंग्रहः; यतो नैकमन्तरेणोपसंग्राहकमवान्तरसंख्यानां निवेशः । अथ एतावान् प्रमाणयोग्योऽर्थक्रियासामर्थ्यो वेति प्रमाणयोग्यत्वेऽर्थक्रियासामर्थ्ये वा संग्रहः, ताभ्यामेव सच्छब्दार्थ उपलक्ष्यताम्; व्यर्थः परिमितधर्मोपन्यासः; तत्र सामान्यशब्दतैव स्यात्, न साधारणशब्दता । भिन्ननिमित्तत्वे चाक्षादि[3]शब्देभ्य इव

[1] लक्षणानां—A.   [2] अप्परामर्शो—C.   [3] A omits शब्दे.

निमित्तभेदात् संशयः स्यात्, न विशेषप्रतीतिः; न हि 'सन् घटः' इति निमित्तभेदेषु प्रतिपत्तारः संशेरते; यथैव[1] 'शुक्लः पटः' इति निराकाङ्क्षः, तथा 'सन् घटः' इत्यपि। यस्तु द्रव्यं गुणः कर्म रूपं विज्ञानमिति वा संशयः, न स लौकिकानाम्; लौकिकास्त्वभिन्नमेव निमित्तं प्रतिपद्यन्ते। अर्थाच्च संदेहः, न शब्दात्; कुतः? विशेषप्रतीतिमन्तरेणापि प्रतिपत्तुर्नैराकाङ्क्ष्यात्। यत्र हि अर्थसामर्थ्येन संशयः, यथा 'वृक्षश्छिद्यताम्' इति परशुकुठारादिषु, तत्रान्यतरविशेषानवगमेऽपि नैराकाङ्क्ष्यम्, यस्य कस्यचिदुपादानात्, अन्यथानवस्थानात्। यत्र तु शब्दात्, तत्र विशेषाव-[2]गमहेतोर्विना साकाङ्क्षत्वमेव। तदेवं न[3] नानानिमित्तः साधारण[4]शब्दः। विशेषणमप्येकं प्रमाणं स्यात्; तच्च प्रागपि ततः सच्छब्दानुविद्धबुद्ध्युत्पादादनुपपन्नमित्युक्तम्—'मानादेव यतो बुद्धिः' इति प्रपञ्चेन। अपि च कार्यादपि[5] वृत्तमेव प्रमाणमवसीयते; तत्र कुतस्तद्विशिष्टता? न खल्वर्थोऽसन्निहितविशेषणो विशिष्टो भवति। न च निश्चिते विशेषणाभावे विशिष्टाभिधानानुविद्धः संशयो भवति दण्डाभावनिश्चय इव 'दण्डी, न वा' इति; भवति च शून्यनगरादिषु चिरनिखातनिधिषु प्रमाणाभावनिश्चयेऽपि 'सन्ति, न' इति संशयः। तस्मादन्यः प्रमाणयोगात् सदर्थः, यत्रैष संशयः। नाप्युपलक्षणं प्रमाणम्, प्रमित[6]ध्वस्तेषु सच्छब्दाप्रयोगात् स्मर्यमाणे च सच्छब्दानुविद्धात् संदेहात्। वृत्तप्रमाणसंबन्धस्य प्रमाणोपलक्षितत्वात् सत्त्वमेव स्यात्; नासत्त्वम्, न संशयः। योऽप्यर्थक्रियया सच्छब्दार्थं विशिनष्टि उपलक्षयति वा, तस्यापि प्राक् कार्य[7]दर्शनान्न सच्छब्दयोगः स्यात्। अथ प्रमाणजननमेवार्थक्रियां ब्रूयात्, प्रमा[8]णादेवास्तिबुद्धिर्न स्यात्। अथ वैकल्पिकीयं प्रमाणोत्तरकालेति मतम्, लिङ्गान्न स्यात्। अथ निर्ज्ञातकार्यसंबन्धमेव लिङ्गेनानुगम्यते, एवं तर्हि प्रमेयाभावः; तथा हि—कार्यवत्ता ह्यस्त्यर्थः; सा चाधिगतैव; कार्यवत्तयैव[9] कार्यवत्तावगम्यत [10]इत्यचतुरश्रम्। कार्यकारणयोश्च यौगपद्याभावाद्वि[11]शिष्टतानुपपत्तिः। अथोपलक्षणम्; अतीतस्यापि

---

1 A adds खलु.
2 मे—B.
3 B omits न.
4 णः—C.
5 दतिवृत्त—A and C.
6 A adds प्र.
7 दर्शान्न—B.
8 ण एवास्ति—B.
9 A adds च.
10 इत्यतिचतुरश्रम्—C.
11 वि—B.

सत्त्वप्रसङ्गः ; स्मर्यमाणे च संशयो न स्यादित्युक्तम् । तस्माद्यथैव नीलादिशब्दार्थोऽर्थस्वभावः, न कार्यलक्ष्यः, न प्रमाणलक्ष्यः, अनवस्थानात् ; स्वरूपव्यवस्थस्तु यथाप्रमाणमवसीयते ; तथा सदर्थस्वभावोऽपीति युक्तम् । कार्यप्रमाणसदसद्भावनिबन्धने हि सदसद्व्यवहारविभागे तस्याप्रवृत्तिरेव, कार्यप्रमाणसदसद्व्यवहारविभागस्यापि तन्निबन्धनत्वप्रसङ्गात् अनवस्थानात् । तस्मादर्थस्वभाव एकः सच्चेति ब्रह्मविदो मन्यन्ते ।

अथ मतम्—नार्थस्वभावो योग्यता, प्रमाणहे[1]तुसद्भावस्तु ; न चासतां प्रमाणहेतवः सन्तीति ; तदयुक्तम् ;

भूमौ निखातं निर्लिङ्गमवेद्यानुपपन्नकम् ।
नष्टद्रष्टृकमत्येति[2] यत्सर्वमितियोग्यताम् ॥ ४० ॥

भूमौ निखातमविद्यमानेन्द्रियसंबन्धमदृश्यमानाविनाभूतमसंवेद्यमानान्यथानवकल्पमानं[3] वस्तु प्रलीनद्रष्टृकं यत् तस्य न प्रत्यक्षानुमानार्थापत्त्यागमहेतवः सन्ति ; सादृश्यविषयं ह्युपमानम्, तस्य हेतुर्दूरापेत एव ; सर्वप्रमाणयोग्यतामतिक्रामति ; न च तदसत् । ननु सत्त्वमप्यस्य कथम् ? एवमपि संशयः । तत्र प्रमाणहेतुभावलक्षणयोग्यता[4]रूपे सत्त्वे प्रमाणहेत्वभावस्य निश्चयात् संशयो न स्यात् । अथ स्वभावविशेषः कश्चित् प्रमाणं प्रति योग्यः सत्त्वम्, प्रकृतहानादसुन्दरमित्युक्तम् । अथ वा प्रमाणविशिष्टः सच्छब्दार्थ इत्येतदनेन निराक्रियते । न निश्चिते विशेषणाभावे विशिष्टाभिधायिशब्दानुविद्धः संशयो युक्त इति ।

अपि च अभावस्यापि प्रमेयत्वान्न प्रमाणयोग्यता सत्तालक्षणम् ; तथा हि—

असत् प्रमेयं च तथा यथैव स्थापयत्ययम् ।
अमितं हि तथा कस्मात्तथा न पुनरन्यथा ॥ ४१ ॥

अवश्यं खल्वनेन सदसद्व्यवहारविभागमिच्छता असत् कथंचिद्व्यवस्थाप्यम्, अन्यथा व्यवहारसंकरात् । तत्र यदि प्रमाणस्याविषयः, यदि

---

[1] तुः—B. [2] मित्येति—B. [3] A omits मा. [4] त्व—A.

सर्वशक्तिविरहो वासद्बुद्धेर्विषयः ; सर्वथा तथा प्रमेयम् । अपरिच्छिन्नं हि तथा प्रमाणेन किमिति तद्विधम्, न पुनरन्यथा स्यात्? न चेत् तस्य तथाभावेऽतथाभावे वा प्रमाणव्यापारः, किंनिमित्त एकपक्षानुरागः?

अपि च

अमित्वा कण्टकाभावं चरणं न्यस्यते कथम् ।
नान्यग्रहात्तस्य भावे पुरस्ताच्च प्रसङ्गतः ॥ ४२ ॥

जिज्ञासा न प्रवर्तेत यदि संवित्त्यभावतः । ४२½ ।

"[1]दृष्टिपूतं पदं न्यसेत्" इति कीटकण्टकाद्यभावेऽप्रमिते कथं [2]तन्न्यासः? तथा हि—कीटकण्टकाद्यर्थान्तरभूतलादिपरिच्छेदात् स स्यात्, कीटाद्यपरिच्छेदात्, अभावपरिच्छेदाद्वा । तत्र न तावदर्थान्तरपरिच्छेदात्, कण्टकादिभावेऽपि प्र[3]सङ्गात्; तत्रापि वस्त्वन्तरपरिच्छेदस्य सत्त्वात्; प्रागपि च भूभागपरिच्छेदात् प्रसज्येत, यस्य कस्यचिद्वस्त्वन्तरस्य परिच्छित्तेर्विद्यमानत्वात् । अथ कीटकण्टकाद्यपरिच्छेदात्, न तद्भावाभावजिज्ञासा स्यात् । जिज्ञासा[4]पूर्वकादपि प्रयत्नात् तदपरिच्छेदमात्रमेव प्राप्यते यस्याभावो न प्रमेयः; तच्च प्रागपि ततोऽस्ति; अभावे तु प्रमेये अभावनिश्चयाय जिज्ञासा युज्यते । न चापरिच्छेद एव जिज्ञास्यः, [5]स्वतः सिद्धत्वात्; परिच्छेदेन हि स निवर्त्यते; अप्रमेयत्वाच्च सोऽपि खल्वभाव इत्यप्रमेयः ।

अथ मतम्—सत्सूपलम्भहेतुषु प्रमाणविषयस्यापरिच्छेदात् प्रवृत्तिः; तदसत्;

प्रमाणविषयत्वस्य नोपयोगोऽत्र दृश्यते ॥ ४३ ॥
असद्बोधेऽनन्यहेतुभानेन ह्युपयुज्यते । ४३½ ।

अपरिच्छेदाच्चेत् प्रवृत्तिर्न प्रमाणविषयत्वस्योपयोगः, इतरत्राप्यपरिच्छेदस्य तुल्यत्वात् ततश्च प्रवृत्तेः । यस्य त्वभावः प्रमेयः, तत्परिच्छेदात् प्रवृत्तिः;

---

[1] Manu. 6-46.
[2] तस्य न्यासः—A and B.
[3] सक्तः—A.
[4] पूर्वादपि—A.
[5] स्वरसतः—A.

तस्यानन्यनिमित्तत्वेनोपयोगवत् प्रमाणविषयत्वम्; नायमपरिच्छेदः सत्ये-वार्थे हेतुवैकल्यनिमित्तः, समग्रत्वा[1]त्तद्धेतूनाम्; तस्मादर्थाभावादिति।

अथ यत्र प्रवृत्तिः स्यात्तत्र केवलसंविदः ॥ ४४ ॥

जिज्ञासेत न सूक्ष्मार्थं कैवल्यं [2]संविदो यदि।
केवलो विषयो [3]नेष्टो रूपोऽन्मिश्रेऽपि तद्यतः ॥ ४५ ॥

विशिष्टस्य च नास्त्यन्यदन्या[4]भावाद्विशेषणम्। ४५½।

यदि मतम्—यत्र भूभागादौ चरणन्यासादिलक्षणा प्रवृत्तिः[5], तस्य केवलस्य सा ज्ञानादिति। तत्रापि संप्रधार्यम्—किमिदं ज्ञानस्य कैवल्यमभिसंहितमेकविषयप्रतिनियमो विषयान्तरासंसर्गः, आहोस्विद्विषयस्य? यदि विज्ञानस्य, प्रमितेऽपि भूभागादौ स्थूले सूक्ष्मकीटकण्टकादिभावाभावपरीक्षा न स्यात्; प्रवर्तेतैव, केवलभूतलावग्रहज्ञानात्। अथ विषयस्य, तत्रापि सं[6]प्रधार्यम्—स्वरूपेण [7]वा विषयस्य कैवल्यम्, विशेषणयोगेन वा। तत्र न तावत् स्वरूपेण, मिश्रेऽपि तस्य भावात्। विशेषणयोगेन कैवल्ये[8] प्राप्ता कीटकण्टकाद्यभावविशिष्टपरिच्छेदात्[9] पदन्यासादिलक्षणा प्रवृत्तिः; यतो नान्याभावाद्विशेषणमन्यादृशं किंचिद् दृश्यते, यद्विशेषणं वस्तु केवलं स्यादिति।

नास्तीति धीर्व्यवहृती विषयं कमुपाश्रिते ॥ ४६ ॥
मानाभावं यदि क्षुण्णं मेयाभावस्य तत्र किम्। ४६½।

अपि च अनेन 'नास्ति' इति बुद्धिशब्दयोर्विषयो वाच्यः। स न [10]वस्तुस्वरूपेण, मिश्रेऽपि प्रसङ्गात्; न केवलम्, अभावादन्यस्य विशेषणस्याभावादित्युक्तम्। ननु 'नास्ति' इत्ययमर्थः 'नेदं प्रमीयते' इति, न पुनरभावोऽवगम्यते; विरुद्धमिदम्—नास्त्यवगम्यते चेति। यद्येवं प्रमाणाभावो विषय उक्तः स्यात् 'नास्ति' इति धीशब्दयोः, तत्र कोऽपराधः स्यात् प्रमेयाभावस्य, येन

---

[1] A omits त्त
[2] स—B.
[3] न—B.
[4] न्य—B.
[5] A adds तत्र.
[6] मा—A.
[7] B omits वा.
[8] ल्य—B.
[9] B omits त.
[10] B omits स्व.

तमतिलङ्घ्य प्रमाणाभावो विषय [1]उच्यते? न हि तयोर्निरुपाख्यत्वे कश्चिद्विशेषः ।

अथ मतम्—

अग्रहेऽसद्ग्रहभ्रान्तिरभावव्यवहृद्भ्रमः ॥ ४७ ॥
अभावे च व्यवहृतेरदृष्टौ ध्वान्तदृष्टिवत् । ४७½ ।

नैव स्तां 'नास्ति' इति बुद्धिव्यवहारौ । कथमिमौ सर्वजनानां प्रतीताव-पह्नूयेते? उच्यते—भ्रमोऽयं सद्बुद्ध्यभावे तद्विपर्ययपरिच्छेद इति; तथा सद्व्यवहाराभावे तद्विपर्ययव्यवहारभ्रमः, यथालोकदर्शनाभावे 'तमः पश्यामि' इति विभ्रमः; न हि तमो नाम किंचिद् दृश्यमस्ति । नैतत् सारम्;

इत्थं भवेत् सुषुप्तादौ त्रैलोक्याभावदृग्भ्रमः ॥ ४८ ॥

अपरिच्छिन्दतः किंचिद्विभ्रमश्च न युज्यते ।
आरोपविषयारोप्ये नाजानन् रजतभ्रमी ॥ ४९ ॥

नाभावभिन्ना व्यवहृत्तदभावश्च धीपदे ।
तमोदृष्टिस्तु भूच्छायामालोकाभावमेव वा ॥ ५० ॥

आलम्बते न त्वदृष्टाविष्टो दर्शनविभ्रमः । ५०½ ।

यदि खल्वदर्शने विपर्ययदर्शनभ्रमो भवति सुषुप्ताद्यवस्थासु विश्वाभावदर्श-नभ्रमः[2] स्यात् आलोकादर्शनभ्रमवत् । न च किंचिदपरिच्छिन्दतो विभ्रमः; तथा हि—आरोपस्य विषयं पुरोवर्ति वस्तु आरोपणीयं च रजतं ज्ञाने-नानाप्नुवन् न रजतभ्रमवान् भवति; अन्यथा अप्रतिपत्तिः, स्मृतिः, सामान्य-प्रतिपत्तिर्वा । न च बुद्ध्यभावो ज्ञानस्य विषयो न व्यवहाराभावः, ना-भावबुद्धिर्नाभावव्यवहारः; विशेषणतयाभावस्य [3]ज्ञानाविषयत्वात् । तत्रोभयोर्विषयारोपणीययोरग्रहणे न मिथ्याज्ञानमिति ।

अभ्युपगम्य प्रमाणयोग्यतां सत्तां दोषाभाव उच्यते—

---

[1] उच्येत—A.
[2] विभ्रमः—A.
[3] विषयज्ञाना—C.

अस्तु वा मानयोग्यत्वं सत्त्वं तच्च प्रमीयताम् ॥ ९१ ॥

तस्मिन् मिते वस्तुसत्त्वं भवत्यागमगोचरः ।
न च सापेक्षता नास्मिन्नन्तरार्थविभिन्नताम् ॥ ९२ ॥

प्रचक्षते येऽपि सत्तामन्यां न प्रतिजानते । ९२½ ।

भवतु वा प्रमाणयोग्यता सत्ता; सैव च प्रमेयास्तु; तत् प्रमेयं वस्तुसत्त्वमागमार्थः । न च प्रमाणान्तरापेक्षता दोषः, प्रमाणान्तरसंभेदस्याभावात्; 'प्रमाणयोग्यः' इत्येतावन्मात्राधिगतेः । तथा हि—येऽपि प्रमाणयोग्यतां सत्तामाहुः न तद्व्यतिरेकिणीम्, तेऽपि नात्रान्तरार्थसंस्पर्शमिच्छन्ति; तत्संस्पर्शे ह्यन्यत् प्रमाणमन्वेष्यं स्यात् । कथं नान्वेष्यम्? यदा वचः प्रमाणयोग्यतायां पर्यवसितं न विशिष्टार्थसत्त्वं बोधयति, तत्र यस्य प्रमाणस्य योग्यो विशिष्टोऽर्थस्तदवश्यापेक्षणीयम् । किमर्थं तदपेक्ष्यते? विशिष्टवस्तुसत्त्वाधिगमाय । किं पुनर्विशिष्टस्य वस्तुनः सत्त्वम्? प्रमाणयोग्यत्वम् । अधिगतमेव तर्हि तदस्त्यर्थनिष्ठाद्वचनात्, प्रमाणयोग्यताया अस्त्यर्थत्वात् ।

प्रमाणान्तरसंभेदाभ्युपगमेऽपि नाप्रामाण्यप्रसङ्गदोष इति दर्शयति—

प्रमाणान्तरभिन्नार्थमपि मानं न नो वचः ॥ ९३ ॥

निरपेक्षमिहार्थे [1]तु प्रमितं वस्त्विदं मया ।
अर्थमात्रे च सापेक्षमन्यापेक्षार्थबोधनात् ॥ ९४ ॥

अबाधितमपि त्वर्थे प्रमाणांशेऽ[2]पबाधनात् ।
तत्राप्रमाणतामेति बुद्धानाप्तवचो यथा ॥ ९५ ॥

आप्तवाक्यं पुनर्नार्थे न मानांशेऽपबाधितम् ।
निरपेक्षं प्रमाणांशे व्यवहारोऽन्यथा कथम् ॥ ९६ ॥

मयेति वक्तृभावेन संभेदरहितं ततः ।
प्रलीनज्ञानविज्ञेयविभागं स्वात्मवेदनम् ॥ ९७ ॥

---

[1] च—A. [2] पबाधनात्—B.

प्रवेदयन्तु वेदान्ता मानान्तरमलौकिकम् ।
तत्सिद्धिसिद्धतार्थस्य पुंवचोवद्भविष्यति ॥ ९८ ॥

न खलु प्रमाणान्तरसंभिन्नार्थमपि वचो न प्रमाणम्, प्रमाणमेव [1]ह्याप्तवाक्यम् । कथं पुनः प्रमाणं सापेक्षमिति चेत्, उच्यते—निरपेक्षमे[2]व तत् 'प्रमितोऽयं मयार्थः' इत्यस्मिन्नर्थे; [3]केवले ह्यर्थे 'एवमयमर्थः' इत्यप्रतीतेः 'एवमयं पुरुषो वेद' इति च प्रतीतेः पुरुषज्ञानापेक्षम्; तत्रोपलब्धौ तावदनपेक्षत्वात् प्रामाण्यमश्नुते; तत्सिद्धिद्वार[4]श्च पश्चादर्थ इति । कथं तर्हि पुरुषवचः किंचिदबाधितार्थमपि सापेक्षत्वेनाप्रमाणं यते? उच्यते—यद्यप्यर्थे बाधो नास्ति; यदपेक्षं स्वस्यार्थे प्रामाण्यं यत्सिद्धिमुखेन तं साधयति तत्र प्रमाणांशे बाध्यते; तस्यासिद्धे[5]स्तद्द्वारेण नार्थसिद्धिरित्यर्थेऽप्रमाणम्, यथातीन्द्रियार्थे बुद्धवचः पुरुषस्य दर्शनासंभवात्; यथोक्तम्—"[6]पुरुषाशक्तितस्तत्र सापवादत्वसंभवः ।" इति; यथा च विप्रलम्भकवाक्यम्, अयथादृष्टार्थवादित्वस्य प्रमाणावगतत्वात् । आप्तवचः पुनर्नार्थे नापि प्रमाणांशे संभवत्प्रमाणगोचरं बाध्यते । प्रमाणांशे चानपेक्षं तन्मुखेन चार्थसिद्धिं विदधन्नाप्रमाणं भवितुमर्हति; अन्यथा शब्दनिबन्धनो व्यवहारो न स्यात् । एवं च प्रमाणान्तरसंभिन्नार्थत्वेऽपि वेदान्तवचसां न प्रामाण्यव्याहतिः, आप्तवाक्यवत्; तथा हि—तान्यपि ज्ञानज्ञेयविभागविकलं स्वप्रकाशरूपमलौकिकं [7]काममवगमयन्तु [8]प्रमाणान्तरम्, तद्द्वारा चार्थसिद्धिराप्त[9]वचनवत्; इयांस्तु विशेषः स्यात्—वेदे वक्तुरभावात् 'मया' इति संस्पर्शो न स्यात् ।

अभ्युपगमवादं परिसमाप्य प्रकृतमुपसं हरति—

एवं न मेयता सत्ता । ९८$\frac{1}{4}$ ।

परः पुनः प्रत्यवतिष्ठते—

नन्वन्यापि न युज्यते । ९८$\frac{1}{2}$ ।

---

[1] व्याप्त—B; ह्याप्तवाक्यवत्—C.
[2] A and B omit व.
[3] न केवले—C.
[4] द्वारं च—B and C.
[5] तद्द्वारा नास्त्यर्थसिद्धि—A; तद्द्वारेण नास्त्यर्थसिद्धि—B.
[6] Śloka-Vārtika page 74.
[7] A omits कामम्.
[8] प्रमाणं—B and C.
[9] वाक्यवत्—B.

न हि पूर्वावमर्शेन विना सामान्यकल्पना ॥ ५९ ॥
गामेकामीक्षितवतो जायतेऽन्यत्र यादृशः ।
अवमर्शो दृष्टसतस्तथा [1]न हि सदन्तरे ॥ ६० ॥
एकशब्दप्रवृत्तिस्तु दण्ड्यादिवदुपेयताम् ॥ ६०½ ॥

दृष्टरूपावमर्शः सामान्यकल्पनायां प्रमाणम्; यथा—बाहुलेयं दृष्टवतः शावलेये 'स एवायम्' इति । न [2]च किंचित् सत् गृहीतवतोऽन्यत्र स भवति । एकशब्दप्रवृत्तिस्तु विनापि सामान्येनार्थान्तरयोगनिमित्ता, दण्डिपाचकादि[3]शब्दवत् । अत्रोच्यते—

को नु पूर्वावमर्शोऽयं पूर्वरूपान्वयो धियः ॥ ६१ ॥
सदन्तरेऽपि सोऽस्त्येव कयाचित् खलु मात्रया ।
सर्वात्मना त्वनुगमो न दृष्टः खण्डमुण्डयोः ॥ ६२ ॥
[4]न तादृशश्चेन्नो भेदमात्राद्वेद्यःस्वपह्नवः ।
न भेदमात्रान्मृज्जातिहीनं मणिकमल्लकम् ॥ ६३ ॥
रूपान्वयः प्रत्ययस्य मणिकेषु हि यादृशः ।
न दृष्टमल्लकस्यास्ति मणिके खलु तादृशः ॥ ६४ ॥

कः पुनरयं पूर्वावमर्शः – पूर्वरूपावभासो बुद्धेः, अथ 'सोऽयम्' इति पूर्वापरानुसन्धानम्? तत्र यदि पूर्वः कल्पः, सोऽस्त्येव सदन्तरे मात्रया । तथा हि—निरुपाख्यवैलक्षण्येन सतां तुल्य[5]रूपता प्रकाशते; अन्यथा निरुपाख्यवत् सन्तोऽप्यत्यन्तविलक्षणाः प्रकाशेरन् । अथ सर्वरूपानुगमः, सोऽभिप्रेतेऽपि सामान्यगोचरे नास्ति; न हि खण्डमुण्डयोः सर्वात्मना[6]न्वयः, एकत्वप्रसङ्गात् सामान्याभावापत्तेः । अथ [7]न तादृशः, यादृशः खण्डादिषु; तदसत्; न विशेषमात्रेण संवेद्यान्वयिरूपप्रत्याख्यानं युज्यते, गो[8]त्वादेरपि तत्संभवात्; न हि देवदत्तस्य द्वितीयदर्शने यादृशो रूपानु-

---

[1] हि न—C.
[2] A and B omit च.
[3] A omits शब्द.
[4] B omits न.
[5] A and B omit रूप.
[6] त्मतान्वयः—C.
[7] C omits न.
[8] गवादेरपि—A.

गमः, तादृशः खण्डं दृष्टवतो मुण्डदर्शने । सामान्यगोचरेऽपि च न सर्वत्र तुल्यः; नानामणिकविलक्षणो हि मणिकशरावयो रूपान्वयः । न च तावता मृज्जातिहीनता तयोः, किंचित्तुल्यतयाव[1]भासमानत्वात् । अथ द्वितीयः कल्पः, [2]अत्रोच्यते—

पूर्वावमर्शः स इति प्रख्येत्यपि न शोभते ॥
मणिकं वीक्षितवतः सोऽपि नोदेति मल्लके ॥ ६९ ॥

पूर्वापरानुसन्धानात्मिका 'सोऽयम्' इत्यभेदमव[3]गमयन्ती भिन्नेष्वपि सामान्यकल्पनाहेतुर्बुद्धिः पूर्वावमर्श[4] इत्युच्यत इत्येतदपि न शोभते; यतो नानुसन्धानादेवाभेदसिद्धिः; अभिन्नरूपावभासादपि; अन्यथा नाभिन्नदेशकाल एकोऽर्थः स्यात्; न हि तत्र देशकालभेदाभावे 'सः' इत्यनुसन्धानम् । अपि च दृष्टमणिकस्य मल्लके न भवति [5]द्रागिव 'सः' इत्यनुसन्धानं खण्डमुण्डवत्; [6]न चैवं मृज्जातिहीनता । विमृशतस्तु 'तज्जातीयमिदम्' इति बुद्धिः सदन्तरेऽपि समाना ।

तुल्ये तर्हि सामान्ययोगे कस्मात् क्वचित् 'सः' इत्यवमर्शः, नान्यत्र? उच्यते—

सामान्यरूपभूयस्त्वे तस्मा[7]त्तत्त्वं प्रकाशते ।
विलक्षणत्वमल्पत्वे चकास्ति तदनुद्भवात् ॥ ६६ ॥
यस्मात् सत्यपि सामान्ययोगे [8]मणिशरावयोः ॥ ६६½ ॥

न; 'सः' इति प्रख्या मणिकान्तरे च भवति भूयिष्ठसामान्ययुक्ते । तस्मात् सामान्यरूपाणां भूयिष्ठत्वेनोद्भवात् 'सः' इति तत्त्वप्रख्या; अल्पत्वे तु न तथा, तेषामनुद्भवात् ।

न च दण्ड्यादिवदेकशब्दप्रवृत्तिरित्याह—

प्रमाणं कार्यविज्ञेयमसंयोज्यास्ति धीर्यतः ।
प्रथमं जायते तस्मान्न [9]दण्ड्यादिसमानता ॥ ६७½ ॥

---

[1] भासनात्—A; भासात्—B
[2] तत्रोच्यते—A.
[3] गमयति—B.
[4] मर्शः सः—C.
[5] द्रागिति—A and B.
[6] नचैकजाति—B.
[7] त्तत्त्वं—B.
[8] माणक—B and C.
[9] दण्डादि—B.

नागृहीतविशेषणा विशिष्टबुद्धिः ; न च तद्बुद्धेः प्राक् प्रमाणग्रहणं तत्कालं वा ; तथा हि—प्रमाणादेव सा भवति ; प्रमाणं च प्रमितिकार्योन्नेयत्वात् पश्चात् सत्प्रतिपत्तेर्गृह्यते । तस्मादग्रहात् प्रमाणस्य तत्संयोजनविकला सा न प्रमाणयोगनिमित्ता । यदि तर्हि न प्रमाणयोगोऽस्त्यर्थः कथं तत्कालानुविधायिनी कालप्रवृत्तिरस्त्यर्थे—'[1]कूपोऽस्ति' 'कूपोऽभूत्' 'कूपो भविष्यति' इति ? तदुपाधिप्रकल्पितभेदत्वात्, देवदत्तसत्ताया इव पाटलिपुत्रसंयोगोपाधिकल्पितभेदाया इति ।

न च 'क्रियामन्तरेण न संसर्गः पदार्थानाम्' इति शब्दार्थनयविदामविगानमित्याह[2]—

संबन्धमात्रावसितमपि चान्ये विपश्चितः ।
आहुर्वचोऽक्रियमयं राज्ञो ना फलिनो द्रुमाः ॥ ६८½ ॥

'राज्ञोऽयं पुरुषः' 'फलिता एते वनस्पतयः' इति क्रियारहितेष्वपि संसर्गः प्रतीयते । न चेहापि 'अस्तिक्रिया' इति युज्यते ; यतो [3]न निर्ज्ञातराजसंबन्धस्य पुरुषस्य फलवतां च वनस्पतीनां सत्तेह प्रतिपाद्या गम्यते ; न ह्येते वाक्ये सत्तायां पर्यवस्यतः ; किंतु पुरुषस्य राजसंबन्धे, द्रुमाणां च फलसंबन्धे—,'योऽयं पुरुषः, स राज्ञः' 'य एते वनस्पतयः, ते फलिताः[4]' ; न 'यो राजपुरुषः, सोऽस्ति' 'ये च फलिताः, ते सन्ति' इति । यदपि केचित्—'अवधार्यताम्' इति प्रतिपत्तिक्रियाविधिना क्रियावत्तां मन्यन्ते, तदपि शब्दादेव प्रतिपत्तेः सिद्धत्वात् प्राङ् निरस्तमेवेति ।

अथापि न क्रियारहितं वाक्यमस्ति क्रियायां च सापेक्षता, तथापि न दोष इत्याह—

जनिक्रियावसानाच्च विशिष्टं शब्दबोधनम् ।
कारणं जायत इदमीदृक्षात् कारणादिति ॥ ६९½ ॥

---

[1] कूपोऽभूत्, कूपोऽस्ति, कूपो भविष्यति—A and B.

[2] अविगानमित्याहुः—B and C.

[3] B omits न.

[4] फलिनः—A and B.

'ईदृक्षात्[1] कारणाज्जगज्जायते' इति जनिक्रियानिष्ठादपि वाक्यात् तद्विध-कारणसत्ता शक्यते प्रतिपत्तुम्; यथा—'ईदृशात्तरोरिदं फलमजनि' इति तद्विधतरुसद्भावः[2]। तथा च श्रुतयः काश्चिदेवमेव ब्रह्म प्रतिपादयन्ति— "[3]सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" "[4]यथाग्नेः क्षुद्रा विस्फुलिङ्गा [5]व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे देवाः" इत्यादि; तथा

"[6]यथोर्णनाभिः सृजते गृह्णते च
यथा पृथिव्यामोषधयः संभवन्ति।
यथा सतः पुरुषात् केशलोमानि
तथाक्षरात् संभवतीह विश्वम्॥"

"[7]तदेतत् सत्यम्—
[8]यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः
सहस्रशः प्रभवन्ते सरूपाः।
तथाक्षराद्विविधाः सोम्य भावाः
प्रजायन्ते तत्र चैवापियन्ति॥"

तथा

"[9]दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः।
अप्राणो ह्यमनाः शुभ्रोऽक्षरात् परतः परः॥
एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी॥"

इति।

इदानीं पदार्थसंसर्गायैव[10] विधिराश्रयितव्य इति प्रत्यवतिष्ठते—

---

1 शात्.--C.
2 सभावः—B
3 Chānd. 1-9-1.
4 Bṛh. 2-1-20.
5 A and B omit व्युच्चरन्ति.
6 Muṇḍ. 1-1-7.
7 Muṇḍ. 2-1-1; C adds तथा before तदेतत्.
8 A omits यथा.........रूपाः।
9 Muṇḍ. 2-1-2 and 3.
10 A and B omit एव.

ननु प्रमान्तराधीनसंसर्गाः पुरुषोक्तिषु ॥ ७० ॥

पदार्था [1]विध्यधीनात्मसंश्लेषा इतरत्र तु ।
पदानां रचना तत्र विवक्षापरिपूर्तये ॥ ७१ ॥

प्रमाणान्तरगम्येऽर्थे विवक्षा च व्यवस्थिता ।
विध्यर्थसिद्धये वेदे तदभावे त्वसंगतेः ॥ ७२ ॥

विशिष्टार्थ[2]गतिर्भ्रान्तिरग्रहे ग्रहविभ्रमः ॥ ७२½ ॥

विवक्षितार्थनिष्पत्तये हि लोके पदानां समभिव्याहारः । नैकपदसाध्यो विवक्षितार्थः[3] । प्रमाणान्तरोपलब्धश्च विवक्षाविषयः । तेन तत्र प्रमाणान्तरायत्तः[4] संसर्गः । तथा च तद्विरोधेऽसंसर्ग एव पदार्थानाम्—"[5]जरद्गवः पादुककम्बलाभ्याम्" इति । वेदे तु प्रमाणान्तराभावाद्विधिनिबन्धनोऽसौ । तदभावे त्वसंभवाद्येयं विशिष्टार्थगतिरुच्यते सा भ्रान्तिः, समभि[6]व्याहारात् । सोऽयं विवेकाग्रहे संसर्गग्रहविभ्रमः । अत्रेदमेव विचार्यम्—कथं लोके प्रमाणान्तराधीनः संसर्गः? इति । यदि प्रमाणान्तरेण तदवगमात्; तदसत्, अपूर्वस्यापि तस्य प्रतीतेः; अन्यथा वचनवैयर्थ्यात्; अनधिगतं हि श्रोतुरर्थं बोधयितुं वचः प्रयुज्यते । अथ संसर्गयोग्यतामात्रस्य प्रमाणान्तरेणावगमात्, समानमेतद्वेदे; तथा हि—अरुणया क्रीणातीति संसर्गः, नारुणयैकहायन्येति । तथा भावार्थो नियोगविषयः, न द्रव्यगुणशब्दार्थ इति प्रमाणान्तरावसितयोग्यतासामर्थ्येनैव व्यवस्थाप्यते । अथ न विवक्षैक[7]पदावगम्या, तदर्थमात्रविवक्षाया निष्प्रयोजनत्वात्; तस्माद्विवक्षाविशेषसिद्धिर्नासंसृष्टेषु पदार्थेषु [8]भवतीति तया विवक्षया प्रयुक्ताः संसृज्यन्ते; सा च प्रमाणान्तरसिद्ध इति । एवमपि विवक्षानिबन्धनः स्यात्, तत्प्रयुक्तानां संसर्गात्; न प्रमाणान्तरनिबन्धनः; यतो न तत्तस्य प्रतिपादकम्,

---

1 व्यध्य—B.
2 गतिभ्रान्ति—B.
3 क्षितोऽर्थः—A; क्षातोऽर्थः—B.
4 यत्ताः संसर्गाः—B.
5 ..............
6 व्यवहारात्—B.
7 पदगम्या—A and B.
8 संभवतीति—A and B.

न प्रयोजकं [1]वा । यत्तु प्रमाणान्तरसिद्धे विवक्षेति; भवतु; [2]न तस्य संसर्ग[3] उपयोगः; तथा च विप्रलम्भकवाक्येऽपि संसर्गप्रतीतिः । यत्तु— विरोधे न संसर्गः; कामम्; न तु ततः संसर्गः । विरोधेऽपि तु नासंसर्गः, [4]प्रतीतेः; प्रतीतोऽपि तु बाध्यते प्रमाणान्तरेण । एवं चानृतं किंचिद्वचः, किंचिदनर्थकम्—दशदाडिमादि, किंचित् सत्यम्; अन्यथानृतानर्थकविभागो न स्यात् । अथ प्रमाणान्तरेणोपलभ्यार्थं विवक्षित्वा परस्मै प्रतिपादयति पुरुषः; तेन तद्वचसः प्रमाणान्तरोपलब्धिरेवार्थः; सैव प्रयोजिका पदार्थसंसर्गस्य; तस्याः प्रयोजिकाया अभावान्न वेदे पदार्थसंसर्गसिद्धिः । मा भूत् सा; [5]विशिष्टार्थ एव प्रयोजकः । अथ लोकावगम्यत्वाच्छब्दसामर्थ्यस्य लौकिकप्रयोज[6]काभावान्न संसर्गः, विधिपक्षेऽपि न स्यात् । अथ लोके संसर्गमात्रपरत्वेऽर्थापत्तिः; न तद्विशेषे, तन्मात्रेण प्रतीतिप्रयोगयोरुपपत्तेः; विनापि प्रमाणान्तरोपलब्ध्या विशिष्टार्थगतिसिद्धिः । अथ प्रमाणान्तराल्लोके संसर्गसत्यतावगमः; अपूर्वोऽपि हि श्रोतुः संसर्गो वक्तुः प्रमाणानुमानमुखेन सत्यतां लभते, तदसंभवेऽसत्यत्वाद्बुद्धादिवाक्येषु; तेन प्रमाणान्तरनिबन्धनो लोके संसर्ग उच्यते । भवतु; वेदे तु प्रमाणा[7]न्तरसंभेदाभावात् स्वातन्त्र्येणार्थप्रतीतिः शब्दनिबन्धन एव ।

तदास्तामेतत्; भवतु यथा तथा लोके; इदं तु पर्यनुयुज्यते—

कथं नु विध्यधीनत्वं यदि स्यादन्यथा वृथा ॥ ७३ ॥

विधिर्निर्विषयस्तुल्यामिदमन्यपदोदिते ।
विशिष्टार्थावगत्यान्यपदार्थोऽपि प्रयुज्यते ॥ ७४ ॥

अर्थवत्त्वे प्रमाभावादस्त्वसौ चेदनर्थकः ।
विधिर्नैवं कस्य हेतोरथ स्यादपरं पदम् ॥ ७५ ॥

प्रमाणान्तरसिद्धार्थे[8] प्रयोगि न विधायकम् ।

---

1 A and B omit वा.

2 न तु—A and B.

3 संसर्गोपयोगः—A and B.

4 A and B omit प्रतीतेः

5 विशिष्टोऽर्थ—A and B.

6 जकभावात्—B

7 A and B omit अन्तर.

8 द्धेऽर्थे—A and B.

तदर्थोऽनन्यगम्यो हि मीयमानः समाक्षिपेत् ॥ ७६ ॥
विषयं न यथासिद्धपदार्थस्त्वनुवादभाक् ।
अव्युत्पन्नप्रवृत्तिः स्यात् संबन्धज्ञाननिह्नवे ॥ ७७ ॥
पदं स्वधर्मं व्युत्क्रामेदन्यसिद्धार्थतान्यथा ॥ ७७½ ॥

न तावद्विधिः साक्षात् संसर्गसामान्यं तद्विशेषं वा बोधयति । अथाक्षिपति, अन्यथा नियोगमात्रं निर्विषयमनर्थकं स्यात्; पदार्थान्तरेष्वपि तुल्यमेतत्; तेऽपि हि केवलाः पदार्थान्तरसंसर्ग[1]मनाप्नुवन्तोऽपूर्वार्थप्रतिपत्तेरभावादनर्थकाः । न च लोके पदैः [2]स्वार्थाः स्वरूपमात्रनिष्ठतयैव प्रत्याय्यन्ते; किं तु विशिष्टार्थप्रत्ययप्रयुक्ताः, तथा व्यवहारोपपत्तेः । तथा च प्रतिपदार्थं संसर्गाक्षेपः । स्यादेतत्—लोके बुद्धिपूर्वप्रयुक्तानां मा भूदानर्थक्यमिति संसर्गार्थता; वेदे तु नार्थवत्त्वे प्रमाणमस्ति; अतः पदार्थान्तरमनर्थकमेवास्तु । नैतत् सारम्; नान्यथानर्थक्यमित्यप्रमा[3]णोऽर्थः शक्यः प्रतिपत्तुम्, यस्य कस्यचित् प्रतिपत्तिप्रसङ्गात् । तस्माद्व्यवहारात् संसर्गप्रयुक्तस्वार्थविबो[4]धसामर्थ्यमेव पदानां गम्यते; [5]ततो वेदेऽपि संसर्गाक्षेपः । यदि चान्यपदार्थानामानर्थक्यम्, विध्यर्थस्य तत्र कस्मात्? अथ मतम्—पदान्तराणि प्रमाणान्तरासिद्धेऽर्थे[6] प्रयुज्यन्ते; तानि यथावगतार्थानुवादपर्यवसितानि; तथा हि—अनूद्यमानोऽर्थो यथावगममनुवादान्नापूर्वार्थाक्षेपायालम्; विधायकस्तु शब्दोऽनन्यगम्यार्थविषयस्तदर्थः प्रमीयमाणः शक्नोत्यपूर्वमर्थमाक्षेप्तुमन्यथानवक्लृप्तमानः । तस्माद्वेदे विधिनिबन्धनोऽपूर्वसंसर्ग इति । तदयुक्तम्; प्रमाणान्तरा[7]विषयश्चेद्विधायकार्थः, तत्र संबन्धज्ञानमशक्यमिति निह्नूयेत; तथा च संबन्धज्ञानानपेक्षत्वादव्युत्पन्नोऽपि प्रवर्तेत; संबन्ध[8]ज्ञानापेक्षता च पदधर्मो व्युत्क्रम्येत; तन्निरपेक्षता वाक्यधर्म आश्रीयेत । अथ सं[9]बन्धापेक्षता नास्य नि[10]ह्नूयेत, बलात् प्रमाणान्तरसिद्धार्थतापद्येत; तथा च न विशेषः ।

---

1 मवाप्नु—B.
2 पदार्थाः—A and B.
3 णार्थः—A and B.
4 बोधकत्व—A and B.
5 अतो—A and B.
6 A and B omit ऽर्थे.
7 रविषय—B.
8 A and B omit ज्ञान.
9 संबन्धज्ञानापेक्षता—A and B
10 निह्नूयते—A.

शब्दादेव मिते योऽपि मन्यते संगतिग्रहम् ॥ ७८ ॥

नान्योन्यसंश्रयावद्यं न स्वयं प्रमिते हि सः ।

परेण शब्दावगते तत्प्रवृत्त्या च सूचिते ॥ ७९ ॥

पदार्थान्तरवत् तत्र सुकरः संगतिग्रहः ॥ ७९½ ॥

योऽपि मन्यते—न प्रमाणान्तरसिद्धे विध्यर्थे संबन्धज्ञानम्; अपि तु शब्दसिद्ध एव । न चान्योन्यसंश्रयदोषः—शब्दात् सिद्धे संबन्धज्ञानम्, संबन्धज्ञानपूर्विका [1]च शब्दात् सिद्धिरिति; यतो न स्वयं शब्दात् प्रमिते तदुच्यते; किंतु वृद्ध[2]प्रयुक्ताद्वृद्धान्तरेणा[3]वगते; तदवगमाच्च तस्य वृद्धस्य या प्रवृत्तिस्तयानुमिते—'नूनमनेन वृद्धेन प्रतिपन्नः[4] कश्चित् प्रवृत्तिहेतुरर्थोऽस्माच्छब्दात्, येनायमेतच्छ्रवणात् प्रवृत्तः' इति; यथा—'गामानय' इति सास्नादिमदानयनदर्शनात् तत्प्रत्ययमनुमाय तत्र संबन्धग्रहणमिति ।

तस्यैवमनुमेयत्वे कथं शब्दैकगोचरः ॥ ८० ॥

तस्यापि शब्दपूर्वत्वादनुमानैकगोचरः ।

कस्मान्न शब्दबोधोऽपि ह्यनुमानपुरःसरः ॥ ८१ ॥

नेदंप्रथमता लभ्या बीजाङ्कुरवदेतयोः ।

शब्दाद्बोद्धुश्चानुमानं सर्वस्यैव पुरः स्थितम् ॥ ८२ ॥

पदार्थान्तरवत् तेन तस्य शब्दोऽनुवादकः ।

अनुमानाद्बु[5]ध्यमानः शब्दाद्बुद्धं न बुध्यते ॥ ८३ ॥

प्रतिपन्नान्तरे बोधो नान्यबोधानुवादकृत् ।

प्रवृत्तिहेतुमात्रं च शब्दार्थः स्यादलौकिकः ॥ ८४ ॥

न स कल्पयितुं शक्यस्तत्सिद्धेर्लौकिकादपि ॥ ८४½ ॥

---

[1] C omits च.

[2] प्रयोगात्—A and B.

[3] अनवगते—B.

[4] न्नं—B.

[5] ह्यनुमानः—B.

यदि प्रवृत्त्युन्नीयमानप्रत्ययविशेषणत्वेन व्यवस्थितोऽनुमेयो विधायकार्थः संबन्धज्ञानविषयः, न तर्हि शब्दैकप्रमाणकः । अथानुमानं शब्दपूर्वक[1]मिति तथोच्यते, शाब्दोऽपि प्रत्ययो[2]ऽनुमानपूर्वक[3] इत्यनुमानैक[4]गोचरः स्यात् । न खलु बीजाङ्कुरयोरिवानयोरेकस्य प्राथम्यं व्यवस्थापयितुं शक्यम्; शब्दाव[5]गतस्यानुमानात्, अनुमितस्य विदितसंगतेः शब्दा[6]दवगमात् । अपि च सर्वप्रतिपत्तॄणामनुमान[7]पूर्वा शब्दात् प्रतिपत्तिरिति तेषां शब्दोऽनुवादक एव; तथा हि—शब्दाद्बुध्यमानोऽनुमितं विदितसंगतिं बुध्यते सर्वः प्रतिपत्ता, न त्वनुमिमानः शब्दावगतमनुमिमीते । ननु शब्दावगत एवानुमीयते । सत्यमन्येन तु प्रतिपन्ना; न चान्यदीया [8]प्रतिपत्तिरन्यप्रतिपत्तिमनुवादीकरोति । प्रवृत्तिहेतुमात्रे च संबन्धव्युत्पत्तेस्तन्मात्रं शब्दार्थः स्यात् । न [9]चालौकिकः कल्पयितुमपि शक्यः, लौकिकादपि [10]प्रवृत्तिसिद्धेः । स्यादेतत्—वैदि[11]कीषु प्रवृत्तिषु तदसंभवादलौकिककल्पना । नैतत्; लोकावगतसामर्थ्यो हि शब्दो वेदेऽपि प्रतिपादकः । तत्र लौकिकीषु प्रवृत्तिषु लौकिके विदितसंबन्धे वेदेऽपि तत्प्रतिपत्तिरेव स्यात्; असंभवे [12]वा मिथ्यात्वम् ।

अथ बहुविधत्वात् प्रवृत्तिहेतूनां व्यभिचारादशब्दार्थत्वे प्रवृत्तिहेतुसामान्यं शब्दार्थः; तत्र वेदे लौकिकानां विशेषाणामसंभवादलौकिकं विशेषान्तरं प्रतीयते; एवमपि यः शब्दार्थो वेदे सामान्यं स लोकसिद्ध इति नानुवादता व्यावर्तते, पदार्थान्तरवत् । योऽपि विशेषः सोऽन्यासंभवेन परिशेषानुमानगोचर इति न प्रमाणान्तराविषयत्वम् । न च परिशेषानुमानमपि, श्रेयःसाधनतायाः[13] संभवात् । अथ मतम्—लोकव्यवहार इव वेदव्यवहारोऽप्यनादिः; तत्र वैदिकीषु प्रवृत्तिषु लौकिकप्रवृत्तिहेत्वभावात् अलौकिके

---

1 B omits क.

2 यानुमान—B.

3 A and B omit क.

4 गाचरता—A and B.

5 गमस्या—B.

6 A and B omit द्.

7 पूर्वका—A and B.

8 B omits प्रतिपत्तिरन्य.

9 च लौकिकः—C.

10 प्रतिपत्ति—B.

11 केषु—B.

12 C omits वा.

13 साधनत्वस्य—A; साधनमर्थस्य—B.

तु प्रवृत्तिहेतौ वैदिकानां विधायकानां संबन्धज्ञानम् । न चानुमेयत्वम्, तत्प्रत्ययस्य प्रवृत्त्यानुमानात; तत्सिद्धिस्तु तत्प्रत्ययसामर्थ्येनैव; स च प्रत्ययः शब्दोत्थ इत्यनन्यप्रमाणता । न च लौकिकस्यैव श्रेयःसाधनत्वस्य संभव इति युक्तम्; लौकिकी हि प्रमाणान्तरावगम्या श्रेयःसाधनता; तत्र प्रयोगदर्शनाल्लिङ्गादेः तदनुसारेण च शब्दार्थावधारणात् प्रमाणा[1]न्तरगम्यतापि शब्दार्थानुप्रवेशिनी ।

अत्रोच्यते—भवतु नाम [2]वेदव्यवहारादेव शब्दार्थानुगमः, तथापि न प्रमाणान्तरगोचरता व्यावर्तते । तथा हि—अलौकिके प्रवृत्तिहेतौ शब्दस्य[3] सामर्थ्यज्ञानकाले प्रमितो वा स्यात्, न वा? प्रमितश्चेत्, शब्दसंबन्धस्य तदैव ज्ञायमानत्वादवश्यं प्रमाणान्तरेणे[4]ति वाच्यम्; अथ न प्रमितः, कथं तत्र संबन्धज्ञानम्? न ह्यप्रमितयोः संबन्धिनोस्तदाश्रयः संबन्धः [5]प्रमातुं शक्यः ।

योऽपि मन्यते—शक्तिर्हि शब्दस्य संबन्धः; सा च नार्थे, तस्य व्यवस्थितत्वात्; प्रत्ययस्तु [6]तस्य कार्यः; स च प्रवृत्त्यानुमितः; तत्रैव सामर्थ्यलक्षणः[7] संबन्धः प्रमी[8]यत इति । स इदं प्रष्टव्यः—किं प्रत्ययमात्रे सामर्थ्यं गृह्यते, [9]अथ विशिष्टे[10] प्रवृत्तिहेतुप्रत्यये? यदि प्रत्ययमात्रे, यत्किंचित् ततः प्रतीयेत; अथ विशिष्टे लौकिकव्यतिरिक्तप्रवृत्तिहेतुप्रत्यये, प्रवृत्तिपरिशेषाभ्यां तस्यानुमितत्वात् प्राप्तं प्रमाणान्तरगोचरत्वम् । द्वयी हि विशेषणस्य गतिः—[11]स्मार्ताकृष्टं विशिष्टप्रमितावङ्गत्वमेति, यथा अग्निमान् धूमादिति; विशिष्टग्राहिप्रमाणप्रमेयं वा, [12]यथा शुक्लो गौरिति; उभयथा च प्रमाणान्तरविषयः, शब्दस्यानधिगतसंबन्धत्वात्; स्मार्ताकृष्टत्वे प्रमाणान्तरमन्वेष्यम्; द्वितीयेऽ[13]पि कल्पे विशिष्टप्रत्ययानुमानानुमितत्वात् । अथा-

---

1 न्तरावगम्य—A and B.

2 भेद—B.

3 C omits स्य.

4 B omits णे.

5 शक्यः प्रमातुम्—A and B.

6 A omits तस्य.

7 लक्षणसंबन्धः—B.

8 प्रतीयते—A.

9 उत—B.

10 विशिष्टप्रवृत्ति—A and B.

11 स्मार्ताकृष्टं वा विशिष्टप्रतिपत्ताव-ङ्ग—C.

12 A omits यथा.

13 विकल्पे—B and C.

नुमानस्य प्रत्यय एव प्रामाण्यम्; प्रतीतिमात्रं तु तत्र विशेषणस्य; तावता च तद् विशिष्टप्रतीत्यङ्गम्; विशेषणप्रमितिस्त्वनुमितात् प्रत्ययात्, यथा पुरुषवचनाद्विशिष्टार्थप्रमाणेऽ[1]नुमितेऽर्थसिद्धिस्तत एव प्रमाणात्[2]; तत्र ह्यर्थः प्रतीतिमात्रेणैव वक्तृज्ञानस्य विशेषणम्। [3]तदेतदपेशलम्, स्मृतिप्रमाणसंशयविपर्यासविकल्पान्तर्गमात्[4] प्रतीतेः। तत्रालौकिकविशेषणप्रतीतिर्न स्मृतिः, प्रागनधिगतेः। न संशयः, कोटिद्वयसंस्पर्शाभा[5]वात्। न विकल्पः, प्रवृत्तिहेतु[6]प्रत्ययस्यापि तथा प्रसङ्गात्। तथा [7]न विपर्यासः; कथं हि तत्र यथार्थत्वे तथाभूतग्राहिणी तत्प्रतीतिरर्थशून्या स्यात्? परिशेषात् प्रमाणम्। परज्ञानेन च[8] परः प्रतिपद्यत इति सुभाषितम्! अथ मतम्--न परज्ञानेन परः प्रतिपद्यते; किंतु स्वज्ञानेनैव परज्ञानसामर्थ्यात्। अथ तस्य[9] स्वज्ञानं कतमत् प्रमाणमिति वाच्यम्; न तावच्छाब्दम्, शब्दविज्ञानादर्थे [10]विज्ञानमिति लक्षणात्; न च तच्छब्दज्ञानात्; कुतस्तर्हि? [11]शब्दोत्थज्ञानादनुमितात्। अथ तस्य प्रामाण्ये प्रवृत्तिहेतुसद्भावसिद्धिः; प्रामाण्यं च तस्य दोषरहितशब्दोद्भवात्; तेन शब्दस्य तत्र प्रामाण्यमुच्यते; तदधीनस्तत्रार्थनिश्चय[12] इति। तदप्यसांप्रतम्, [13]शब्दादर्थज्ञानं शाब्दमिति लक्षणात्। पुरुषवचनमपि नार्थे न प्रमाणम्; किंतु ज्ञानविशेषणे; द्वयी च विशेषणस्य गतिरुक्ता; तत्र स्मृत्यसंभवात् प्रमीयमाण एव स[14] विशिष्टार्थप्रमित्यङ्गम्; अन्यथार्थे प्रमाणान्तरमन्वेष्यं स्यात्। न च वक्तृज्ञानेनैवार्थसिद्धिः, परज्ञानेन न परः प्रतिपद्यत इत्युक्तम्।

---

1 A omits अनु.

2 प्रमाणा:--B.

3 B omits तदेतदपेशलम्। स्मृतिप्रमाण.

4 न्तमन्तर्गमात्—B.

5 र्शभावात्—B.

6 हेतु:—B.

7 C omits न.

8 C omits च.

9 तदस्य—A and B.

10 B omits वि.

11 शब्दार्थज्ञाना--B.

12 स्तत्रार्निश्चय:—A and B.

13 शब्दार्थे—C.

14 C omits स:.

[1]यत्तूक्तम्—वक्तृज्ञानाधीनार्थसिद्धिरिति, [2]तत् तन्मिथ्यात्वे तदसंभवे वा प्रमाणप्रतीतिबाधनेऽर्थप्रतीतेरपि बाधनात् तदबाधे चाबाधात्[3]; न तु वचसोऽर्थो न विषयः; अन्यथा प्रमाणान्तरपरतन्त्रं पुरुषवचोऽर्थे सापेक्षमित्येतदेव न स्यात्; न हि यो यस्याविषयः स तत्र सापेक्षोऽनपेक्षो वा; तथा च[4] "[5]प्रामाण्यस्थापनं तु स्याद्वक्तृधीहेतुसंभवात्" इत्युक्तम्। स्थापनमबाधः, न तु प्रामाण्यमेव। तच्च वक्तृधीहेतुसंभवाद्वाक्यस्य, न तु वक्तृधिय एव; शब्दस्य चार्थेन संबन्धः, न तु ज्ञानेन; एवं ह्युक्तम्—"[6]औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः" इति। अर्थ[7]ग्रहणमत्र 'अर्थासंस्पर्शी [8]शब्दः, ज्ञानेनैव शब्दस्य संबन्धः'—इति पश्यतां निराकरणाय। तस्मादन्योन्ययोग्यता शब्दार्थयोरेव संबन्धः। न चाप्रमितेऽर्थे स शक्यो ग्रहीतुम्; प्रमिते प्रमाणान्तरविषयत्वमुक्तम्। न च [9]प्रतीतिमात्रे, अर्थवत्याः प्रतीतेः स्मृतिप्रमाणयोरन्य[10]तरत्रान्तर्गमात्; आनर्थक्ये केन संबन्धः? यदि च शाब्दप्रतीतिव्यतिरेकिण्यापि प्रतीत्या स विषयीक्रियतेऽप्रमाणात्मिकयापि, भवत्ययमशाब्दस्यापि ज्ञानस्य गोचर इति प्रमाणान्तराशङ्का केन बाध्यते? न च प्रमाणान्तराव[11]गम्यता शब्दार्थमनुप्रविशति, यतो नान्वयमात्रेण व्यतिरेकमात्रेण वा शब्दार्थः; सति ह्यन्यस्मिन् प्रयोजकेऽर्थे यस्याभावे न प्रयोगः सोऽपि तस्य शब्दस्य प्रयोजक इति गम्यते, [12]यथा सत्सु हेत्वन्तरेषु यस्याभावे न कार्यं सोऽपि [13]हेतुर्गम्यते। इह च श्रेयोहेतुविवक्षायां लिङादेर्दर्शनात्, तदभावे सत्यपि प्रमाणान्तरगम्यत्वेऽदर्शनाच्छ्रेयोहेतुत्वं तावच्छब्दार्थः। प्रमाणान्तर[14]गम्यत्वे यद्यपि दर्शनम्, तदभावे च यद्यप्यदर्शनम्, न तु श्रेयोहेतुत्वेऽसति प्रमाणान्तरगम्यताया अभावात्; तत्र संदिग्धो व्यतिरेकः—उभयाभावेऽप्रयोगात् किंनिबन्धनोऽप्रयोग इति। तत्र श्रेयःसाधनतायाः प्रयोजकत्व-

---

1 यत्तूच्यत—A and B.
2 तत्र—B and C.
3 बाधनात्—A.
4 C omits च.
5 Śloka-Vārtika page 96.
6 Mīmā-Sū. 1-1-5.
7 ग्रहणं हि तत्र—A and B.
8 शब्दे—B.
9 प्रतीतमात्रे—A and C.
10 तरान्तर्गमात्—C.
11 रगम्यता—A and B.
12 तथा—B.
13 B omits हेतुः.
14 रावगम्यत्वे तु—A and B.

स्यावधारितत्वात् तदभावे तन्निबन्धन इति गम्यते । [1]तन्मात्रेणान्वयव्यतिरेकोपपत्तौ नान्यस्य शब्दार्थत्वे प्रमाणम्; अन्यथा शिंशपाशब्दार्थे सत्त्वादयोऽप्यनुप्रविशेयुः, तेषु सत्सु प्रयोगात् तदभावे चाप्रयोगात् । अथ शिंशपात्वस्य शब्दार्थत्वात् तदभावनिबन्धन एव [2]सत्ताद्यभावेऽ[3]प्रयोगः, तत्सद्भावाच्च प्रयोग उपपद्यत इति न ते सामर्थ्यकल्पना, समानमेतदत्रापि । अथ श्रेयोहेतुत्वस्य प्रमाणान्तरविषयत्वात् तस्य च[4] वेदेऽसंभवादप्रामाण्यम्; तदसत्; न हि य एकत्र यस्य प्रमाणस्य गोचरः सोऽन्यत्रापि तस्यैव, तदभावे वा अप्रतीयमानोऽपि मिथ्या; समीपे हि बहिरिन्द्रियविषयः, दूरे त्वागमानुमानगम्यः; तथा यागादिषु विप्रकृष्टकालफलेषु वेदावगम्यं [5]श्रेयःसाधनत्वं भविष्यति । न च प्रामाणान्तरानुपलब्ध्या प्रमाणान्तरगम्यो बाध्यते, विषयव्यवस्थयापि प्रमाणप्रवृत्तेः । अथ प्रमाणान्तरविषयत्वे तद्विरोधादप्रामाण्यम्, अनन्तरफलानुपलब्धेः; तदविषये तु शब्दार्थे न तद्विरोध इति । स्यात्, यदि विरोधः स्यात्; न चासौ; "[6]आनन्तर्यं ह्यचोदितम्" इत्युक्तम् ।

अथ मा भूदानन्तर्यचोदना, मा च भूत् प्रमाणान्तरावगम्यता शब्दार्थः[7]; सर्वथा प्रमाणान्तरसिद्धश्चेत् पदार्थ आश्रीयते, स यथा[8]सिद्ध्याश्रयणीयः; अन्यथा न तत्सिद्धः स्यात्; अनन्तरश्रेयोहेतुता च तत्सिद्धा[9]। [10]तन्न; न तावदनन्तरफलसाधनता[11] नियोगतः कर्मणाम्, [12]कृष्यौषधपानादिष्वन्यथापि दर्शनात्, अवान्तरकार्यस्य यागादावपि प्रमाणसामर्थ्येन सिद्धेः । अपि च विशिष्टसिद्धौ विशेषणमपि श्रेयोहेतुत्वमात्रं सिद्धम्; तावच्च शब्दार्थः; न च तावति प्रमाणविरोधः । तदेवं लौकिकेऽपि प्रवृत्तिहेतौ दोषाभावाद्व्यर्था अलौकिक[13]कल्पना । सुखादिवच्चास्यानुमेयत्वात्;

---

[1] तावन्मात्रेण—A.
[2] सत्त्वाद्य—A and B.
[3] प्रयोगतत्संभवाच्च—B.
[4] C omits च.
[5] श्रेयोहेतुत्वं—A and B.
[6] Ślōka-Vārtika, page 681.
[7] र्थत्वं—B.
[8] प्रसिद्ध आश्रेयः—C.
[9] द्धाः—B.
[10] C omits तन्न.
[11] C omits साधन.
[12] अकृष्यमौषधी—B.
[13] किकी—C.

तथा हि—मुखप्रसादाद्युन्नेय[1]संवेदनाः सुखादयस्तेनैव सहोन्नीयन्ते; नैषां सत्त्वे पृथक् प्रमाणमर्थ्यते । यदापीदं दर्शनम्—वक्तृज्ञानमेव पुरुषवचनार्थः; तत्र ज्ञानं नार्थमन्तरेण संभवतीत्यर्थापत्त्यानुमानेन वार्थसिद्धिः; तदापि प्रवृत्तिप्रमितस्तद्धेतुप्रत्ययो न तमन्तरेणेत्याप्तवचनार्थवदनुमेयता न व्यावर्तते । अथानुमानहेतोः प्रत्ययस्य शब्दसाधनत्वाच्छब्दप्रमाण[2]कत्वम्; तदसत्; नाप्त[3]वचनार्थज्ञानस्याक्षसाधनत्वात् तदर्थ· श्रोतुः प्रत्यक्षप्रमाणको भवति । तस्मात् सुष्ठूच्यते—'तस्यैव[4]मनुमेयत्वे कथं शब्दैकगोचरः ।' तथा—'न स कल्पयितुं शक्यस्तत्सिद्धेर्लौकिकादपि ।' इति ॥

अथ प्रमाणरूपेण स स्वशब्दप्रकाशितः ॥ ८५ ॥
आक्षेप्ता निरपेक्षश्च कथ्यतेऽन्यप्रमां प्रति । ८५½ ।

अथोच्यते—न ब्रूमो विधिरन्यथा वृथा स्यादिति तदधीनः संसर्गः; किंतु प्रमाणात्मनैव स स्वशब्देन प्रति[5]पाद्यते; तथा च प्रमाणत्वात् प्रमेयस्याक्षेप्तापूर्वस्य, प्रमाणान्तरानपेक्षश्च; न ह्यसौ शब्दवत् संबन्धापेक्षत्वात् पूर्वसिद्धिमपेक्षत इति ।

तथाप्यसिद्धे प्रागुक्तौ दोषौ सिद्धेऽनुवादता ॥ ८६ ॥
प्रामाण्यमस्य यत्रास्तु श्रुतेस्तत्र वृथा स्वयम् । ८६½ ।

एवं[6]मप्यव्युत्पन्नप्रवृत्तिपदधर्मव्यतिक्रमी प्रमाणात्मापि स यदि न प्रमाणान्तरसिद्धः[7] । अथ सिद्धो यथावगतानुवादान्नापूर्वार्थाक्षेपः । [8]अपि च यत्रास्य प्रामाण्यमिष्यते, शब्दस्यैव तत्रास्तु; किमनेन? ननूक्तम्—शब्दः संगतिज्ञानापेक्षत्वादनु[9]वादको नापूर्वार्थावगमाय प्रभवति । नैतत् सारम्; शब्दश्चेदनुवादकः[10], तत्प्रकाश्यं प्रमाणमप्यनूद्यमानं यथाधिगमं कथमपूर्वार्थं [11]बोधयेत्? न प्रमेयसंस्पर्शरहिता प्रमाणावगतिः; अतो यथाधिगतप्रमेयमेव तत् प्रतीयते ।

---

[1] नेयः—B.
[2] A and B omit क.
[3] A and B omit वचनार्थं.
[4] व तदनु—B.
[5] पद्यते—B.
[6] मव्युत्पन्न—B.
[7] सिद्धिः—B and C.
[8] B omits अपि च.
[9] वादः—C.
[10] तः—B.
[11] अवगमयेत—C.

क्व च प्रमाणमेषोऽर्थे न यागादौ स्वशब्दके ॥ ८७ ॥

लौकिकेऽपूर्वसंसर्गः श्रोतुरस्त्यविधावपि ।
फलसाधनशक्तौ चेच्छब्दस्तत्र न दुष्यति ॥ ८८ ॥

पदार्थान्तरतुल्यत्वाद्विध्याकाङ्क्षानिबन्धनः ।
न संसर्गः पदार्थानां स्वशब्दैस्तु [1]प्रकाशिताः ॥ ८९ ॥

संबन्धयोग्यरूपेण तस्मात् संसर्गभागिनः ।
विशिष्टार्थप्र[2]युक्ता हि समभि[3]व्याहृतिर्जने ॥ ९० ॥

अतो न विध्यभावेन संसर्गो न प्रकल्पते । ९०½ ।

न च नियोगस्य प्रमेयं निरूप्यते । न तावद्यागादयः प्रमेयाः, तेषां यजत्यादिशब्दविषयत्वात् । नापि तेषां प्रमाणान्तरस्यागोचरः संसर्गः; तथा हि—अविधि[4]ष्वपि लौकिकेषु वाक्येषु श्रोतुरनधिगतोऽपूर्वः[5] संसर्गः प्रतीयते 'ब्राह्मण पुत्रस्ते जातः' इत्यादिषु । अथ फलसाधनसामर्थ्यं प्रमेयमुच्यते; न किल कामिनो नियोगोऽकामोपाये धात्वर्थेऽवकल्पते; अनुपायत्वे हि तस्य न स कामिना कृतः स्यादिति । तदप्यसांप्रतम्; न हि शब्दस्य [6]तत्र कश्चिदपराधः, येन तमतिक्रम्यान्यत् प्रमाणं मृग्यते । प्रमाणान्तरापेक्षता प्रत्युक्ता । अनन्तरफलादर्शनेन तु विरोधो[7] नियोगगम्येऽपि तस्मिन्नविशिष्टः । आनन्तर्यस्याप्रमाणार्थत्वेन तदभावः शब्देऽपि तुल्यः ॥ अथ वा शब्दस्तत्र न दुष्यति फलसाधनसामर्थ्ये, नियोगस्तु दुष्यत्येव; न हि ततः पुरुषार्थ[8]साधनावबोधः संभवति । तच्चेदं विधिविवेकभावनाविवेकाभ्यामवगन्तव्यम् । तस्मात् संबन्धज्ञानापेक्षत्वेन पदार्थान्तरैः समानत्वाद्विधायकार्थस्य न शक्यं विशेषेण वक्तुम्—[9]तन्निबन्धनः पदार्थसंसर्ग इति । सर्व एव तु पदार्थाः[10] संबन्धयोग्यैः कारकादिभावैः स्वपदेभ्यः प्रतीताः संनिकर्षेण संसृज्यन्ते, यतो लोकाच्छब्दव्यापारावगमः । लोके च

---

[1] प्रदाशताः—A and B.
[2] प्रयुक्त्या हि—C.
[3] व्याहृते जने—C; व्यापृतिर्जने—B.
[4] धिकेष्वपि—A and B.
[5] र्वसंसर्गः—A and B.
[6] C omits तत्र.
[7] विरोधो हि—A and B.
[8] र्थः—C.
[9] तदर्थनिबन्धनः—A and B.
[10] पदार्थसंसर्गयोग्यैः—B.

पदैः स्वार्थानां प्रतिपादनं संनिकर्षेण विशिष्टार्थपरतया, न स्वार्थमात्रप्रतिपत्तिपरतया । तथा च सर्वपदार्थाकाङ्क्षानिबन्धन एव संसर्गः; सर्वे हि ते पदैरपर्यवसितरूपाः स्वरूपमात्रे प्रकाश्यन्ते । एवं पदार्थान्त[1]रैस्तुल्यत्वाद्विधेः न विशे[2]षेण तन्निबन्धनः संसर्गः । सर्वपदार्थनिबन्धने च संसर्गे न विध्यभावेन संसर्गो नोपपद्यते । तदेवं न संसर्गार्थमपि[3] विधिरुपासनीयः । कथं नोपासनीयः, यदा नियोगपरतयैव पदानां स्वार्थेषु [4]संसर्गज्ञानम्? प्रवर्तकवचनानन्तरप्रवृत्तिदर्शनेन हि तद्धेतुप्रत्ययमनुमाय तत्र तस्य सामर्थ्यं गम्यते; नैतत्, अप्र[5]वर्तकेऽपि वाक्ये स्वरूपनिष्ठे संबन्धग्रहात् । संनिधापिताग्निव्यतिरिक्त[6]पाक्योपकरणमग्न्यर्थिनं प्रति यदोच्यते—'चैत्रगृहे कृशानुः' इति, [7]तदा ततस्तेनानयनं दृष्ट्वा गम्यते—'इहानेनाग्निसत्ता प्रतीता, सा चास्माद्वाक्यात्' । न च शक्यं वक्तुम्—'तत आनय' 'गच्छ वा तत्र' इति वाक्यात् प्रत्ययः; [8]अग्निसत्तामात्रप्रत्ययेन [9]वाक्यात् प्रवृत्तिसिद्धेर्न वाक्यस्य नियोजनेऽपि सामर्थ्यं शक्यते कल्पयितुम् । अर्थान्तरान्वये च प्रयोगप्रत्ययोपपत्तौ न विशेषान्वये प्रमाणम्; अन्यथा वेदार्थो[10] निष्प्रमाणक [11]एव स्यादित्युक्तम् ।

अथ कर्तव्यताज्ञानाद्भिन्नानर्थक्यमुच्यते ॥ ९१ ॥

न प्रवृत्तिनिवृत्तिभ्यामन्यद्वाक्यप्रयोजनम् ।
प्रतिपत्तिविधौ तुल्यं यदि सैव प्रयोजनम् ॥ ९२ ॥

समानमेतदर्थं च समर्पयति चेदयम् ।
प्रज्ञाक्रियोपासनाधिकारसिद्धिव्यपेक्षितम् ॥ ९३ ॥

हन्त तर्हि स्वरूपे तत्र वचः पर्यवस्यति ।

---

1 रे तुल्यत्वा--B.
2 षण--B.
3 B omits पि.
4 संगतिज्ञानम्—A and B.
5 वृत्तके--B.
6 पाकोपकरण—C.
7 B omits तदा.
8 C omits अग्नि.
9 तत्र वाक्यात्—A and B
10 र्थे--B.
11 A omits एव; एवं—B.

तुल्यमेतत् समाप्तं च वाक्यं वाक्यान्तरानुगम् ॥ ९४ ॥

[1]नियोगानुप्रवेशोऽस्ति तावद्यदि वृथान्यथा ।
तत्त्वावबोधविध्वंशस्तावदेवं समुद्धृतः ॥ ९५ ॥

अथ [2]मन्यते—वस्तुस्वरूपमात्रज्ञानं कर्तव्यताज्ञानरहितं प्रवृत्तिनिवृत्तिशून्यमनर्थकम्; प्रवृत्तिनिवृत्तिप्रयुक्ता हि वाक्यप्रवृत्तिः; अतोऽर्थवत्त्वाय विधिः; अन्यथानर्थक्यम् । तत्रोच्यते—प्रतिपत्तिविधावपि तुल्यमानर्थक्यम्; तथा हि—'एवं[3]विधः प्रतिपत्तव्यः' इत्यपि[4] न [5]तत्स्वरूपज्ञानातिरिक्ता काचन प्रवृत्तिर्निवृत्तिर्वा । अथ स्वरूपज्ञानमेव प्रयोजनम्, तत् स्वरूपमात्रनिष्ठेऽपि तुल्यम् । अथ प्रतिपत्तिविधिः "[6]प्रज्ञां कुर्वीत" "[7]स क्रतुं कुर्वीत" "[8]आत्मेत्येवोपासीत" इत्यधिकारविधिव्यपेक्षितप्रज्ञोपासनाविषयसमर्पणेनार्थवान्, नानवगतविषयस्वरूपा प्रज्ञा शक्येति; स्वरूपनिष्ठमपि वचस्तथार्थवत्; तस्य समर्पणे सुतरां सामर्थ्यम् । नन्वेव[9]मस्य स्वरूपनिष्ठता हीयते[10] नियोगानुप्रवेशिनः । स्वगतनियोगनिष्ठमपि तर्हि तन्न, नियोगान्तरानुप्रवेशात् । अथ मतम्—स्वार्थपर्यवसितमेव वाक्यं वाक्यान्तरैणैकवाक्यतामुपैति; सोऽयं प्राकरणिकः संबन्ध उच्यते; अन्यथा वाक्यलक्षण एव स्यात् । एतदपि समानम्; नियोगानुप्रवेशेऽपि न स्वरूपनिष्ठता हीयते । नन्वस्ति नियोगानुप्रवेशः, अन्यथा आनर्थक्यात्; कामम्; तत्त्वप्रतिपत्तिविधिस्तु तावदानर्थक्यान्निराकृतः, [11]विधेर्विनापि तस्माच्छब्दात्तत्त्वावबोधसिद्धेः ।

ननूत्पत्तिविधिः कर्मरूपबोधे व्यवस्थितः ।
यथा तत्त्वज्ञानविधिस्तथा बोधेऽवतिष्ठताम् ॥ ९६ ॥

अधिकारात् प्रवृत्तिश्च मता कर्माधिकारवत् ।

---

1 नियोगोऽनु—B
2 मन्यसे—A and B.
3 विधे—B.
4 A and B omit अपि.
5 A and B omit तत्.
6 Bṛh 4-4-21.
7 Chānd. 3-14-1.
8 Bṛh. 1-4-7.
9 मध्यस्य—A and B.
10 हीयता—B.
11 A omits विधेः; विधिः—B.

अज्ञातज्ञापनमतोऽथाप्र[1]वृत्तप्रवर्तनम् ॥ ९७ ॥

विधिमाचक्षते धीरा इत्येतदपि तादृशम् ।
कर्मस्वरूपावगमस्तत्र नेष्टं विधेः फलम् ॥ ९८ ॥

किं तु कार्यव्यपेक्षस्य फलवाक्येन संगतिः ।
इहाधिकारसंबन्धो यस्य तन्न विधीयते ॥ ९९ ॥

तत्त्वं तत्त्वावबोधस्य नाधिकारप्रवेशिता ।
न [2]हि व्रीह्यादिविषयं प्रत्यक्षमधिकारभाक् ॥ १०० ॥

यदपि चोद्यते—यथोत्पत्तिविधेः [3]कर्मरूपप्रतिपत्तिमात्रमर्थः—"[4]आग्नेयोऽष्टाकपालः" इति; न ततः प्रवृत्तिः, अधिकारविधिनिबन्धनत्वात्तस्याः; तथा तत्त्वावबोधविधेस्तत्त्वावबोधमात्रमर्थः, प्रवृत्तिरधिकारविधेः—"[5]प्रज्ञां कुर्वीत" इत्यादेः । यतश्च प्रवृत्तिप्रतिपत्तिप्रयोजनभेदो[6] विधेः, अतोऽस्य लक्षणद्वयमाहुः—अज्ञातज्ञापन[7]मप्रवृत्त[8]प्रवर्तनमिति । एतदप्यसारम्; यतो नोत्पत्तिगतस्य विधायकस्य स्वरूपावगममात्रमिष्यते फलम्; अपि त्वधिकारवाक्यसंबन्धः; तथा हि—विधेः पुरुषार्थमात्रसाधनत्वेऽवबुद्धे तद्विशेषा[9]काङ्क्षायामधिकारसंबन्धो लभ्यते । न [10]च तत्त्वप्रतिपत्तिविधेरपि तदेव फलम्; यतो यस्याधिकारसंबन्ध उपासनादिविष[11]यस्यात्मतत्त्वस्य, तदक्रियात्मत्वान्न विधिविषयः । [12]यत्तु तद्विषयस्त[13]त्त्वज्ञानम्, तस्य नाधिकारसंबन्धः, व्रीह्यादिप्रत्यक्षवत्; न हि व्रीह्यादिस्वरूपग्राहि प्रमाणं प्रयोगैकदेशतां [14]भजते; प्रमिता[15]नामधिकारसंबन्धान्निष्पन्नानामिवानोवासःप्रभृतीनाम्; वानतक्षणादिर्हि तत्क्रिया नाधिकारमनुप्रविशतीति ।

---

[1] प्रवर्तप्रवर्तनम्—B.
[2] तु—C.
[3] कर्मस्वरूप.
[4] Tait-Sam. 7-5-21-1.
[5] Bṛh. 4-4-21.
[6] भेदे—B.
[7] मथाप्रवृत्त—C.
[8] प्रवर्तप्रवर्तनम्—B.
[9] काङ्क्षयाधिकार—A.
[10] B omits च.
[11] यात्म—B.
[12] यस्तु—B.
[13] B omits तत्त्वज्ञानं.
[14] भजेत—B.
[15] B omits ना.

इदानीं तृतीयप्रतिपत्तिगोचरो विधिः परास्यते, तत्त्वावबोधविषयत्वेन संबन्धात्; द्वितीयप्रतिपत्तिविषयो हि न तत्त्वावबोधविषयः, किं तु तदभ्यासविषयः ।

सोपायमन्यत् तर्हीदं शाब्दाज्ज्ञानं विधीयते ।
प्रलीनग्रहण[1]ग्राह्यविभागोद्ग्राह्यमद्वयम् ॥ १०१ ॥

न हि भिन्नार्थसंसर्गरूपवाक्यार्थधीपदम् ।
आत्मतत्त्वं निष्प्रपञ्चमित्येतदपि पेलवम् ॥ १०२ ॥

अद्वयात्म[2]प्रकाशोऽसावनवच्छेदविभ्रमः ।
स्वात्मस्थितिः सुप्रशान्ता फलं तन्न विधेः पदम् ॥ १०३ ॥

तत्साधनावबोधे हि विधातृव्याप्तिर्मता ।
अपेक्षितोपायतै[3]व विधिरिष्टो मनीषिभिः ॥ १०४ ॥

ततो ह्यध्यवसायादिर्नाकस्मान्नाभिधानतः ॥ १०४½ ॥

न ब्रूमः—शब्दोत्थस्तत्त्व[4]बोधो विधीयत [5]इति; किं तु प्रत्यस्तमितबुद्धिबोध्यभेदावग्रहः । अतश्चाद्वयो द्वितीय[6]तद्विधबोधाभावाद्वा प्रमातृप्रमेयद्वयविरहाद्वा ततोऽन्यः । तस्य चालौकिकस्य प्रमाणान्तरादुत्पत्त्युपायस्यानवगमात् सहोपायैः शमदममननध्यानब्रह्मचर्यादिभिर्विधानम्; यतो न शाब्दज्ञानविषय आत्मतत्त्वम् । वाक्यलक्षणो हि शब्दः प्रमाणम् । तस्य च विषयो नानापदार्थसंसर्गात्मा, तदनुगमेन प्रतीतेः । तज्ज्ञानस्य [7]च विविधार्थमात्रसंभेदावभासस्यात्मतत्त्वं निष्प्रपञ्चं द्वैतलेशेनाप्यनवमृष्टं कथं गोचरः स्यादिति । एतदप्यसारम्; यतो योऽसावद्वयो द्वैतलेशसंस्पर्शविकल आत्मतत्त्वबोधः [8]सोऽवच्छेदविभ्रान्तिविरहात् तस्य स्वरूपावस्थानम् । अवच्छेदकल्मषतया हि [9]तदनात्मरूपेण प्रकाशते; न तु ततोऽन्यस्तत्त्वबोधः; "[10]सत्य

---

[1] णाग्राह्य —B.
[2] त्मकप्रकाशो —A.
[3] तेव—B.
[4] त्त्वावबोधो—A and B.
[5] B and C omit इति.
[6] तद्विधाभावा—B.
[7] C omits च.
[8] सोऽयमवच्छेद—A and B.
[9] तदानात्म—B.
[10] Tait. 2-1-1.

ज्ञानमनन्तम्" इति श्रुतेः । आत्मतत्त्वं च प्रशान्तशोकादिविश्वाशिवम्, अपहतपाप्मादिश्रुतेः । प्रकाशमानानतिशयानन्दम्, "[1]विज्ञानमानन्दं ब्रह्म" "[2]एषोऽस्य परम[3] आनन्दः, एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतिभ्यः । तथा च तत्स्वरूपस्थितिर्विश्वाशिवोपशमा[4]न्निरतिशयाह्लादावाप्तेश्च सुष्ठु प्रशान्तापरः पुरुषार्थः फलम्; उक्तं च—"[5]आत्मलाभान्न परं विद्यते" इति । न च पुरुषार्थे फले विधायकस्य[6] व्यापारः, स्वयं प्रवृत्तेः । न च पुरुषार्थेऽप्यज्ञातोपाये न प्रवर्तेत इति युक्तम्, यतः प्रवृत्तेः पूर्वरूपमिच्छा । तथा च तद्द्वारेण प्रवृत्त्युपदेशः क्वचित्—"[7]अथातो धर्मजिज्ञासा[8]" । तथा "[9]यो हि यदिच्छति स तत् करोति" इत्युक्तम् । अपि च अज्ञातोपाये चेन्न प्रवर्तते, अवश्यमुपायज्ञापनया तत्र प्रवर्त्यः[10] फलमुद्दिश्य; तावता च तत्रापि प्रवृत्तिसिद्धेर्न विधायकस्य [11]तत्र व्यापार आश्रयितव्यः; तदुक्तम्—"[12]तस्य लिप्सार्थलक्षणा" इति । तस्मात् फलसाधन एव विधिव्यापारः । ननु फलवत्यप्यर्थलक्षणा प्रवृत्तिः । क्व तर्हि विधिव्यापारः? इत्थंभावे । नैतत् सारम्; यतो यथैव साधनसामान्येऽर्थात् प्रवृत्तिः, तथेत्थंभावसामान्येऽपि; यतो नाननु[13]ग्राहकं साधनं समर्थम् । अथ तद्विशेषे प्रवर्त्यः, साधनविशेषेऽपि तथास्तु । अपि च [14]अपेक्षितोपायतैव विधिः, तस्या अप्रवृत्तप्रवर्तनालक्षणत्वात्, प्रवृत्तिहेतोश्च धर्मस्य प्रवर्तनाशब्दाभिधेयत्वात्, इष्टतायास्तत्साधनतायाश्चान्यस्य प्रवृत्तिहेतोरभावात्, इष्टतायाश्च प्रमाणान्तरावसेयत्वात् स्वयं प्रवृत्तेः जानात्येवासौ 'ममैतत् कर्तव्यम्' इति नेष्टतायामप्रवृत्तप्रवर्त[15]नात्वम्; इष्टसाधनतायां तु प्रमाणान्तरावगमाभावाच्छब्दैकगम्यायां न शब्दमन्तरेणाप्रवृत्तपुरुषप्रवृत्तिहेतुत्वम् । अतः सा शब्द[16]प्रमाणिका सती विधिरिति गीयते । अनुतिष्ठ-

---

1 Bṛh. 3-9-28-7.

2 Bṛh. 4 3-32.

3 मानन्दः—B.

4 मानिर—C.

5 Āpa-adhyātma 2.

6 C omits स्य.

7 Mīm-Sū. I-1-1.

8 A adds इति.

9 Vidh-Vi p. 460.

10 र्त्या—A.

11 A omits तत्र.

12 Mīm-Sū. 4-1-2.

13 ग्रहं—C.

14 आकाङ्क्षितो—A and B.

15 तैनत्व—A and B.

16 प्रामा—B.

तश्च साधनमनुष्ठेयं प्रवृत्तिहेतुः ; न स्वभावसिद्धम् । तेनानुतिष्ठतः साधनताविधिः । अतोऽनुष्ठानं साधनविषयमेव विधायकाच्छब्दाद्गम्यते ।

ननु अध्यवसायः, आकूतम्, आद्या प्रवृत्तिः, कालत्रय[1]वियुक्तं प्रवृत्तिमात्रम्, अज्ञातक्रियाकर्तृसंबन्धः इति विधिविदो विधिं व्याचक्षते । नैतत् सारम् ; यतोऽध्यवसायादीनामेव हेतुरत्र मृग्यते ; स च नान्योऽपेक्षितोपायतायाः ; न च ते निरस्तहेतवः । स्यादेतत्—अभिधानमेषां हेतुः । तच्च वार्तम् ; अभिधानाद्धि प्रतीतिरेषां स्यात्, नोत्पत्तिः ; न हि प्रतीतिमात्रेण घटादयः प्रवृत्तिहेतव इत्यादि वर्णितं विधिविवेके । अथवा—नाभिधानतः ; न [2]च शब्दादध्यवसायादिः, [3]ज्ञापकत्वात् अव्युत्पन्नप्रवृत्तिप्रसङ्गादित्यादि तत्रैवोक्तम् । अथवा [4]यो मन्यते—'[5]मयेदं कर्तव्यम्' इति यतोऽध्यवसायः 'नियुक्तोऽस्मि' इति यतो बुद्धिः [6]स नियोगो विधिशब्दपर्याय इति, तं प्रत्युच्यते ; [7]तत एवापेक्षितोपायत्वात् 'कर्तव्यम्' इत्यध्यवसायः ; तथा हि—कर्तुरिष्टा[8]भ्युपाये[9] 'कर्तव्यम्' इति लोके बुद्धिः ; तदभावे तु 'अकर्तव्यम्' इत्यन्वयव्यतिरेकाभ्याम् । ते च तद्विषये [10]गम्येते । [11]तथा 'नियुक्तोऽस्मि' इति[12] 'प्रवर्तितोऽस्मि' इति स्वात्मप्रवृत्तिहेतुप्रतीतिः ; न च सोऽन्य इ[13]ष्टाभ्युपायतायाः ; न खलु दृष्टसामर्थ्ये[14]ऽकस्माद्विना हेतुनाहेतुरिति युक्तिमत् ; न हि तं परित्यज्य लौकिकमलौकिककल्पने प्रमाणमस्ति । कुतश्च ? नाभिधानतः ; न खल्वलौकिकस्याभिधानं संभवति, संबन्धाग्रहादित्युक्तम् । अथ वा ततो ह्यध्यवसायप्रारम्भानुष्ठानपरिसमापनाः, अपेक्षितोपायत्वात् ; तत्सद्भाव एव नियुक्त[15]प्रवृत्तेः यस्य कस्यचिन्नियोगादप्रवृत्तेः ।

---

[1] नियुक्तं—B.
[2] C omits च.
[3] द्विज्ञापक—A and B.
[4] योऽपि—A and B.
[5] ममेदं—A and B.
[6] संनियोगविधि—B.
[7] अत—B.
[8] ष्टस्याभ्यु—A and B.
[9] C adds हि.
[10] गम्यते—B.
[11] तथाहि—A.
[12] A and B omit इति.
[13] ष्टोपाय—A and B.
[14] र्थ्योऽकस्मा—A ; र्थ्योतस्मा—C.
[15] त्तस्य—B.

स्यादेतत्—'कर्तव्यम्' इति प्रत्ययात् प्रवर्तते; अन्यथा कर्तव्यं न कृतं स्यात्। तच्च न, नाकस्मात् कर्तव्यप्रत्ययोत्पादः; स हि स्वार्थावाप्तिनिमित्तः। स्यादेतत्—शब्दादेव कर्तव्यताबुद्धिः। तत्रोच्यते—नाभिधानतः; न शब्दात् कर्तव्यताबुद्धिः; नियोगो हि शब्दार्थः; स हि नियोक्तृधर्मः स्वतन्त्रो वा स्यात्; कर्तव्यता तु विषयधर्मः। अथ विषयधर्मं नियोगं ब्रूयात्, प्राप्तमपेक्षितोपायत्वम्[1]। अथ नियोगात् [2]कर्तव्यता स्यात्; एवमपि न तस्यां शब्दः प्रमाणम्, साक्षात् तस्य नियोगाभिधायित्वात्। नाप्यर्थात्, अकर्तव्येऽप्यनाप्तनियोगदर्शनात्। अथ नियोगस्य कार्यता गम्यते; तन्निष्पत्तिश्च विषयनिष्पत्त्यधीनेति विषये कर्तव्यताव[3]गमः। तदसत्, विषये कार्यता[4]प्रतीतेर्लोके; तथा हि—'गौर्दुह्यतां त्वया' इति नियोगे अन्येन दुग्धायां न पुनर्दोहमारभते, विषयस्य कार्यताप्रतीतेः [5]तस्य निष्पादितत्वात्। न चान्येनैव नियोगो निष्पादितः, तस्यानियुक्तत्वात्; तत्र नियोगसिद्धये पुनर्दोहारम्भः स्यात्। विस्तरेण चायमर्थो विधिविवेके विचारित [6]इत्यलमतिप्रसङ्गेन।

स्यादेतत्—अस्य ज्ञानस्य मोक्षसाधनत्वाद्विधानम्; विद्यासाध्यो हि मोक्षः श्रूयते—"[7]विद्यया तदारोहन्ति[8]" "[9]विद्ययामृतमश्नुते" "[10]यस्तमात्मानमनुविद्य विजानाति [11]स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्" तथा "[12]स यदि पितृलोककामो [13]भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति" इत्यादि। न च साध्यत्वेऽप्यन्तवत्त्वम्, शब्दगम्यत्वादनावृत्तेः—"[14]न च पुनरावर्तते" इति। न ह्येष [15]तर्कगम्यः, येन तर्केणास्य तत्त्वं व्यवस्थाप्येत; शब्दगम्यस्य तु शब्दादेव तत्त्वव्यवस्था।

---

1 त्वात्--B.
2 A and B omit कर्तव्यता.
3 ताधिगमः—B.
4 C omits ता.
5 तस्याः—C.
6 इत्यलं प्रसङ्गेन—A and B.
7 . . . . . . .
8 ती--B.
9 Īśa 11.
10 Cf. Chānd. 8-7-1.
11 A omits स; B omits स सर्वांश्च लोकानाप्नोति.
12 Chānd. 8-2-1.
13 A and B omit भवति.
14 Chānd. 8-15-1.
15 कर्मगम्यः—B.

अनन्तविद्यासाध्यत्वाद्वानन्तत्वम्; क्षणिकत्वेऽपि च[1] विज्ञानस्य संततिरूपेणानन्तत्वम्। तत्राहुः—

न च मोक्षः फलं तस्य साध्यो मोक्षो न चापरः ॥ १०५ ॥

अविद्यास्तमयो मोक्षः सा संसार उदाहृता ।

विद्यैव चाद्वया शान्ता तदस्तमय उच्यते ॥ १०६ ॥

कः पुनरेष मोक्षः? यद्यनागतदेहेन्द्रियबुद्ध्यनुत्पादः "[2]अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः"—इति दर्शनात्, स प्रागभावो न साध्यः। अथ ब्रह्मप्राप्तिः, सा चैत्रग्रामयोरिव [3]वा स्याज्जीवब्रह्मणोर्मार्गश्रुतिभ्यः—

"[4]शतं चैका च हृदयस्य नाड्य-
स्तासां मूर्धानमभि निस्सृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति—"

"[5]स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारम्" तथा "[6]तेऽर्चिषमभिसंभवन्ति अर्चिषोऽ[7]ह्नः" इत्यादि; यथा वा मधुनि नानाकुसुमरसानां समुद्रे च नदीनां प्राप्तिरविभागलक्षणा तथा स्यात्, "[8]यथा लोके मधुकृतो मधु कुर्वन्ति" [9]इति, "[10]यथा सोम्येमा नद्यः" इति दर्शनात्; कार्यस्य वा कारणभावापत्तिः, "[11]तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इति श्रुतेः; तद्रूपपरिणामलक्षणा वा योगव्याघ्रवत्, "[12]स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति" इति दर्शनात् "[13]ब्रह्म संपद्यत" इति च; स्फटिकस्येव[14] रागापकर्षणेन

---

[1] C omits अपि च.

[2] Chānd. 8-12-1.

[3] A and B omit वा.

[4] Katha. 2-3-16.

[5] Chānd. 8-6-5.

[6] Bṛh. 6-2-15.

[7] षोऽह्नं—B.

[8] Cf. Chānd. 6-9-1.

[9] A and B omit इति

[10] Chānd. 6-10-1.

[11] Muṇḍ. 3-1-3.

[12] Muṇḍ. 3-2-9.

[13] Bra-Bi. 6.

[14] स्यंदोपरागा—A and B.

स्वरूपप्राप्तिलक्षणा, "[1]परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति श्रवणात् ।

तत्र न तावत् प्रथमः कल्पः; सर्वगतत्वात्—"[2]तदन्तरस्य सर्वस्य" "[3]नित्यं विभुं सर्वगतम्[4]" इति; अनन्यत्वाच्च, तद्विज्ञानेन सर्वविज्ञानोपदेशात्, "[5]तत्त्वमसि" इति साक्षात् प्रतिपादनात्, प्रत्यगात्मवृत्तिना च सर्वत्रात्मशब्देन निर्देशात्, "[6]अथ योऽन्याम्" इति भेददर्शना[7]पवादात् । अत एव [8]च न द्वितीयः, निरवयवत्वाच्च, "[9]निष्कलं निष्क्रियम्" इति परस्परावयवसंभेदलक्षणस्याविभागस्यानुपपत्तेः । नापि तृतीयः, कार्यस्य सर्वदा कारण[10]त्वात् । अथ कार्यरूपनाशः, उच्छेदात्म[11]ताप्रसङ्गो मोक्षस्य । तत्र "[12]विद्ययामृतमश्नुते" इति विरोधः, विद्ययैवोच्छेदप्रसङ्गात्; आत्मोच्छेदस्य चानिष्टत्वादफलत्वम् । प्रतिषिद्धश्च 'अक्षरम्' इत्यत्र मुख्यः कार्यकारणभावः "[13]वाचारम्भणं विकारो नामधेयम्" इति विकारा[14]नृतत्वप्रतिपादनाच्छ्रुत्या । न चतुर्थः, अनन्यत्वादेव, चैतन्यस्य च ब्रह्मरूप[15]स्याविशेषात् । अथ विज्ञानात्मनां शोकमोहाद्यभावो विशिष्यत इति चेत् तत्रापि शोकादयश्चेदा[16]त्मानो विज्ञानात्मनाम्, अनुच्छेद्याः; अथ गुणा अर्थान्तरमागमापायिनः क्षणिकाः, क्षणिकत्वादेव[17] चोच्छिद्यन्त इति न तत्साधनमपेक्ष्यम् । न चागामिनामनुत्पत्तयेऽपे[18]क्ष्यत इत्यु[19]क्तम् । अथ ऐश्व[20]र्यविशेषो ब्रह्मणि; तत्प्राप्तिस्तद्रूपपरिणामो मोक्षः, "[21]स स्वराड् भवति" इति श्रुतेः । तदसत्, अनेकेश्वरानुपपत्तेः । ब्रह्मणो न्यूनं समं वा विज्ञा-

---

1 Chānd. 8-3-4.
2 Īśa. 5.
3 Muṇḍ. 1-1-6.
4 A and B add सुसूक्ष्मं.
5 Chānd. 6-8-7.
6 Bṛh 1-4-10.
7 नादपवादात्—C.
8 A and B omit च.
9 Śvēta. 6-19.
10 णात्मत्वात्—A and B
11 त्मकता—A and B
12 Īśa. 11.
13 Chānd. 6-1-4.
14 नृतत्व—B.
15 स्य चात्र—A and B.
16 त्मनो—B.
17 चोच्छिद्यन्त A and B.
18 क्षत—B and C.
19 त्यप्यु—A; त्यप्ययु—B.
20 र्य—A.
21 Chānd. 7-25-2.

नात्मनामैश्वर्यं स्यात्? न्यूनत्वेन ब्रह्मरूपापत्तिर्न स्वाराज्यम्; तथा हि—ब्रह्मशब्दवाच्यः परमेश्वरस्तेषामधिपतिः स्यात्; तथा चान्यराजता; तत्र [1]चान्तवत्त्वं श्रूयते—"[2]अथ येऽन्यथातो विदुः, अन्यराजानस्ते क्षय्यलोका भवन्ति" [3]इति; उपपद्यते च, परमेश्वरेच्छया न्यूनैश्वर्याणामैश्वर्यप्रच्युतिदर्शनाल्लोके। [4]समत्वस्य त्वनपपत्तिरेव युगपत्; एकश्चेत् सर्वाधिपतिः सर्वस्य प्रशासिता, परः किं कुर्वन्नी[5]शः स्यात्? विरोधाच्च; न खल्वेषामेकमतित्वे हेतुरस्ति; तत्रैकस्मिन् वस्तुनि विरुद्धाभिप्राययोरेकाभिप्रायानुविधायित्वे तस्येतरस्यानीश्वरत्वम्; उभयाभिप्रायानुविधानं न, विरोधात्; उभयो[6]रननुविधानेऽनीश्वरत्वमुभयोः। कार्यासिद्धिश्चेदैकमत्ये[7] हेतुः परिषद्वत्, अन्यथा तस्यासिद्धे[8]रिति चेत्, प्रत्येकमनीश्वरत्वम्। अथ पर्यायेणैश्वर्यमविरोधायाच्यते, अन्तवत्ता; जगत्सर्गस्य चासंभवान्न ब्रह्मतुल्यमैश्वर्यम्; यतः पर एव जगत्सर्गे श्रूयते; तदुपासनेन सर्गोत्तरकालेऽपवर्ग इति। तस्मात् स्फटिकस्येव रागाद्यपकर्षणेन स्वरूपाविर्भावो ब्रह्मप्राप्तिः, ब्रह्मरूपत्वाद्विज्ञानात्मनः; तथा च "[9]परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इत्युक्तम्, [10]अन्यरूपनिष्पत्तौ स्वशब्दानुपपत्तेः। निष्पद्यमानस्याभेदात् संबन्धाद्वोपपत्तिरिति चेत्; न, विशेषणानर्थक्यात् सर्वस्य तस्य निष्पद्यमानस्य स्वत्वात्; तत्र यथा मलापगमे शुक्लमेव सद्वस्त्रं 'शुक्लं जातम्' इत्युच्यते तथा मोहावरणविगमे स्वरूपाविर्भावे "[9]स्वेन रूपेणाभिनिष्पद्यते" इत्युच्यते; तथा "[11]ब्रह्मैव सन् ब्रह्माप्येति" [3]इति। तदेवं स्वरूपस्थितिलक्षणत्वान्मोक्षस्य न कार्यता, प्रागपि स्वरूपस्य भावात्; आगन्तुकस्यास्वरूपत्वात्। न चान्यत्वम्, यतोऽविद्या[12]पगम एवोक्तेन प्रकारेण मुक्तिः। अविद्या संसारः; विद्यै[13]व चाविद्यानिवृत्तिः यद्ग्रहणमविद्या, यतो भाव

---

[1] मान्त—B.
[2] Chānd. 7-25-2.
[3] A and B omit इति.
[4] सर्वस्य—B; समस्य—A.
[5] श्वर:—A and B.
[6] रनुविधाने—A and B.
[7] मत्ये हेतुः—A and B.
[8] सिद्धारि—A and B.
[9] Chānd. 8-3-4.
[10] अन्या रूप—B.
[11] Bṛh. 4-4-6.
[12] विगम—A and B.
[13] विद्यैव चा—B.

[1]एवाभावव्यावृत्तिः; अथ विपर्यासः, तथापि विरोधितत्त्वज्ञानोदय एव तन्निवृत्तिः; न हि शुक्तिकाज्ञानोत्पादादन्या रजतज्ञाननिवृत्तिस्तत्साध्या प्रयत्नान्तरसाध्या वा, तयोर्यौगपद्यात् प्रयत्नान्तरानपेक्षणाच्च । तथा [2]च विद्याब्रह्मप्राप्त्योस्तुल्य[3]कालता श्रूयते—"[4]ब्रह्म वेद ब्रह्मैव भवति" [5]इति, तथा "[6]आनन्दं ब्रह्मणो विद्वान्, न बिभेति" "[7]तदात्मानमेवावेदहं ब्रह्मास्मीति ; तस्मात्तत्[8] सर्वमभवत्," "[9]तत्र को मोहः कः शोक एकत्वमनुपश्यतः"; वेद-भवति, विद्वान्-न बिभेति, को मोहः-पश्यतः-इति पार्वापर्याश्रवणात् । यत्तु क्वचित् पौर्वापर्यं तत् 'व्यादाय स्वपिति' इति यथा । नन्वेकत्वे तुल्यकालताप्यनुपपन्ना; न, एकस्यापि वस्तुनो भावाभावरूपेण व्यपदेशात्, [10]यथा—'यदा घटो नश्यति तदा कपालानि[11] जायन्ते' इति । कथं तर्हि मार्गविभाग[12]सर्गाप्ययैश्वर्यश्रुतयः? तत्राहुः—न मार्गश्रुतयो निरुपाधि[13]विशुद्धब्रह्मविद्याविषयाः; यत्र हि सर्वोपाधिविशुद्धमस्थूलादिकं ब्रह्मोपास्यम्, तत्र "[14]ब्रह्मैव सन् ब्रह्माप्येति" "[15]न तस्मात् प्राणा उत्क्रामन्ति, अत्रैव समवनीयन्ते" इति प्राणानुत्क्रमणेन[16] विज्ञानात्मन एवा[17]गतिरुच्यते; न हि [18]तदगमने तदुपाधेस्तस्य ब्रह्मणो भेदेन विज्ञानात्मत्वम् । यत्र [19]तु "[20]मनोमयः प्राणशरीरो भारूपः" इति सोपाध्युपास्यम्,[21] तद्विषयास्ताः । तत्र च न परं ब्रह्म गन्तव्यम्; किं तर्हि? कार्यब्रह्मलोकः; यत्रैतच्छ्रूयते—"[22]अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीय

---

1 एवाविद्यानिवृत्तिः—B.
2 A and B omit च.
3 कार्यता—B.
4 Mund. 3-2-9.
5 A and B omit इति.
6 Tait. 2-4-1.
7 Bṛh. 1-4-10.
8 तस्मात्सर्वं—B.
9 Īśa. 7.
10 A and B omit यथा.
11 लादि—B.
12 विभागः—B.
13 A and B omit वि.
14 Bṛh. 4-4-6.
15 Cf. Nṛs.-Utta. 5.
16 C adds हि.
17 एव गति—B.
18 तदवगमे—B.
19 C omits तु.
20 Chānd. 3-14-2.
21 स्यः—B.
22 Chānd. 8-5-3.

स्या[1]मितां दिवि तदैरंमदीयं सरस्तदश्वत्थः सोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मयं वेश्म" इति[2]। तथा चाब्रह्मविदामपि तद्गति-श्रवणम्—"[3]ये चामी अरण्ये श्रद्धां सत्यं तप इत्युपासते" इति। पर-ब्रह्मप्राप्तिस्तु नाब्रह्मविदां युज्यते,

"[4]विद्यया तदारोहन्ति यत्र कामाः परागताः।
न तत्र दक्षिणा यान्ति नाविद्वांसस्तपस्विनः"॥

इति, तथा "[5]तमेव विदित्वाति मृत्युमेति" इति वचनात्। अपुनरावृत्ति श्रुतिस्तर्हि कथम्? अत्र केचिन्मन्यन्ते—क्रममुक्त्याश्रवणात् तत्प्राप्य तत्रो-त्पन्ननिरुपाधितत्त्वज्ञानाः परं पदमश्नुवते; यथोक्तम्—

"[6]वेदान्तविज्ञानसुनिश्चितार्थाः
संन्यासयोगाद्यतयः शुद्धसत्त्वाः।
ते ब्रह्मलोकेषु परान्तकाले
परामृताः परिमुच्यन्ति सर्वे॥"

ब्रह्मलोकेष्विति कार्यब्रह्मलोकनिर्देशः, बहुवचनात् तत्रावयवद्वारेण बहु-त्वोपपत्तेः। परान्तकालो महाप्रलयो ब्रह्मणः स्वाधिकारपर्यवसानम्, तस्मिन् परामृताः परब्रह्मस्वरूपेणामृताः सन्तः संन्यासयोगात् भेदेन परमेश्वरे स्वकृतानां कर्मणां फलानां च [7]संन्यासात् योगाच्च सर्वमिदं कर्त्रादि ब्रह्म इत्युपासनात्। तथा च स्मृतिः—

"[8]ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥"

अन्ये तु मन्यन्ते—यथा चन्द्रलोके यावत्संपातमुषित्वा स्थित एव तस्मिन् भुक्तभोगा आवर्तन्ते नैवं स्थित एव ब्रह्मलोके तत आवृत्तिः; किं तु तत्प्रलय-

---

1 सूतो—B.
2 A and B omit इति.
3 Bṛh. 6-2-15.
4 . . . . . . . .
5 Śvetā. 3-8.
6 Muṇḍ. 3-2-6.
7 A and B omit सं.
8 Kūrma. I Khaṇḍa 12-269.

पर्यवसाना तत्र स्थितिः; तत्प्रलये हि न तत आवृत्तो भवति; ततश्चानावृत्तिः श्रूयते। तथा च "[1]इमं मानवमावर्तं नावर्तन्ते" [2]इति 'इम्, इह' इति विशेषणम्[3] "[4]अमृतत्वमेति" इत्यमृतत्वमापेक्षिकम्, यथा—'अमृता देवाः' इति। [5]तथा च पौराणिक[6]स्मरणम्—"[7]आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते[8]" इति। [9]यत्तु मन्यते—सर्वगतत्वेऽपि ब्रह्मणो विकृताविकृतत्वभेदः; [10]ततश्च देशभेदः; तथा चाविकृतस्य ब्रह्मणो देशभेदः श्रूयते—"[11]अथ यदतः परो दिवो ज्योतिर्दीप्यते" इति। अतोऽविकृतस्य नियतदेशस्य ब्रह्मणः प्राप्तये युज्यते मार्गविशेषः। तत् संप्रधार्यम्। न तावदनुत्पन्नाद्वयविशुद्ध[12]विद्यस्यार्थं [13]मार्गः, ब्रह्मविदः श्रवणात्; नापि विद्यावतः, विद्योदये निखिलभेदोच्छेदादिति। मधुनदीनिदर्शनाविभागश्रुति[14]रपि विवेकज्ञानाभावपरा, न तु तद्विध एवाविभागः।

सर्गश्रुतयोऽपि न सर्गपराः; किं तर्हि? एकात्मतत्त्वप्रतिपत्तिप्रधानाः। [15]ततस्तदनुगुणतयैव तासामर्थव्यवस्थानम्, न तु[16] तद्विरोधेन; तथा हि—"[17]कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति?" "[18]सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्येकत्वेनोपक्रमात् "[19]ऐतदात्म्यमिदं सर्वम्; तत् सत्यम्, स आत्मा, तत्त्वमसि" इत्युपसंहारादेकत्वेनैवैकात्म्यतत्त्वप्रतिपत्तिपरमेकमिदं वाक्यं गम्यते। तत्र यद्यपरस्तेजःप्रभृतितत्त्व[20]सर्गः सत्यतया विधीयेत, वाक्यभेदः स्यात्। अतो यथोपांशुयाजवाक्येऽजामित्वोपक्रमोपसंहारे "[21]विष्णुरुपांशु यष्टव्यः" इत्यादीनि वचांसि

---

1 Chānd. 4-15-5.
2 A and B omit इति.
3 णात्—C.
4 Chānd. 8-6-6.
5 यथा च—B.
6 कं—A and B.
7 Viṣṇu. 2-8-96.
8 व्यते—C.
9 ये तु मन्यन्ते—A and C;
10 B omits ततश्च देशभेदः.
11 Chānd. 3-13-7.
12 C omits विद्य.
13 मार्गे—C.
14 निदर्शाविभागदर्शनश्रुति—B.
15 अतस्त—C.
16 A and B omit तु.
17 Muṇḍ. 1-1-3.
18 Chānd. 6-2-1.
19 Chānd. 6-8-7.
20 सत्त्व—C.
21 Tait. Saṁ. 2-6-6.

वाक्यभेददोषात् पृथग्विधित्वमलभमानानि तादर्थ्यात्तदानुकूल्येन स्तुत्यर्थतया व्यवतिष्ठन्ते, तथा सर्गश्रुतयोऽप्येकत्वोपायतया । न च विपरीतं शक्यं वक्तुम्—एकत्वश्रुतिरेव भेदप्रतिपत्त्यर्थेति, सर्वत्रैकत्वेनोपक्रमात् उपसंहाराच्च; येनोपक्रम्यते येन चोपसंह्रियते स [1]वाक्यार्थः; भेदप्रतिपत्तेश्चाफलत्वात्; एकत्वप्रतिपत्तेस्तु दृष्टं श्रुतं च फलं शोकादिनिवृत्तिः, विशुद्धे[2]कात्म्यदर्शनेन[3] तदवगमात् "[4]तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति श्रवणात्; फलवदङ्गता चाफलस्य । उपायत्वं च; न[5] चेदं जगदसन्मूलम्; [6]किं तर्हि? अद्वितीयैकसन्मूलम् । कारणा[7]व्यतिरेकाच्च कार्यस्य सदेकमेवेदम्, घटादिवत्; मृद्रूपेण हि घटादयो नैकत्वमतिक्रामन्ति । नन्वेवं मुख्य एव कार्यकारणभाव उक्तः स्यात् । नैतत्, एकत्वावतारोपायमात्रत्वात्; न खल्वत्र कार्यकारणभाव एव प्रतिपाद्यः, येनासौ यथाशब्दं मुख्य एव गृह्येत; एकत्वोपायत्वादित्युक्तम् । एकत्वं चानेनोपायेनावतार्यते पुरुषः[8] । स च मुख्यः प्रधानविरोधी । "[9]एकमेवाद्वितीयम्" इति पुनः पुनः श्रुतेः सर्वभेदनिरासपरत्वान्न[10] शक्यं वक्तुम्—कारणात्मनैकत्वम्, कार्यात्मना नानात्वम्; "[11]तत् सत्यम्, स आत्मा" इति च कारणस्यैव सत्यत्वावधारणात्; अन्यत्र च "[12]इन्द्रो मायाभिः" इति भेदस्य मायागम्यत्व[13]श्रुतेः; साक्षाच्च भेदाभावस्य श्रवणात्—"[14]नेह नानास्ति किंचन" इति; भेदाभेदयोश्च विरोधात् प्रागनुपपत्तेर्वर्णितत्वात् । तदविरोधेन वर्ण्यते तदुपादानमात्रतया भेदविकल्पस्य, बिम्बप्रतिबिम्बवत् वर्णपदवाक्यादिवच्च[15] । यथा हि न बिम्बात् प्रतिबिम्बानामुत्पत्तिर्नानारूपाणाम्, बिम्बोपादानमात्रतया प्रतिबिम्बभेदविकल्पस्य; न हि बिम्बात्

---

[1] वाक्यार्थतद्भेद—B.

[2] द्धै—B.

[3] A and B omit न.

[4] Īśa. 7.

[5] नेदं—A and B.

[6] B omits किं तर्हि? अद्वितीयैकसन्मूलम्.

[7] णव्यति—B.

[8] पस्य च—B.

[9] Chānd. 6-2-1, 2.

[10] A and B add च.

[11] Chānd. 6-8-7.

[12] Bṛh. 2-5-19.

[13] वगम्यत्व—B.

[14] Bṛh. 4-4-19.

[15] B omits च.

परस्परतो वा[1] व्यावृत्तानि कानिचिद्वस्तूनि[2] प्रतिबिम्बानि; बिम्बोपादानं तु तन्नाना निर्भासमात्रम्; तथा[3] न वर्णेभ्यः पदवाक्यप्रकरणादीनि कानिचिद्वस्तूनि सन्ति, तदुपादानमात्रत्वात्त[4]त्कल्पनायाः 'वर्णेभ्यः [5]पदानि निष्पद्यन्ते[6], पदेभ्यो वाक्यम्' इत्युच्यते। अपि[7] च स्वप्नेऽपि सृष्टिः श्रूयते— "[8]न तत्र रथा न रथयोगा न पन्थानो भवन्ति, अथ रथान् रथयोगान् पथः सृजते" इति; तद्व[9]देषा स्यात्, अन्यपरत्वात्; स्वयमेव "[10]वाचारम्भणं विकारो नामधेयम्" इति विकारासत्यत[11]या न पारमार्थिकीत्युक्तम्।

ऐश्वर्यश्रुतिष्वपि सगुणविद्याविपाकोऽयं श्रूयते—"[12]स एकधा भवति त्रिधा भवति[13]" "[14]सर्वांश्च कामानाप्नोति" "[15]स स्वराड् भवति" इति, न तु मोक्षः; स हि निरुपाधिब्रह्मविद्यानिमित्त एव। यदपि क्वचिदपुनरावृत्तिश्रवणम्, तस्यापि द्वयी गतिर्व्याख्यातेत्येकं दर्शनम्

अन्ये तु मन्यन्ते—आविर्भूतब्रह्मरूपो ब्रह्मणः सर्वात्मत्वात् सर्वेशितृ[16]त्वाच्च सर्वोपभोगानां च भोक्तृत्वात् तदानन्दमात्रा[17]रूपत्वाद्वेवाद्यानन्दानां "[18]स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्" "[15]स स्वराड् भवति" इति तस्य तत्संकीर्तनं ब्रह्मरूपाविर्भावलक्षणमोक्षप्रशंसार्थम्। ननु[19] सर्वात्मत्वेन सर्वकाभावाप्तौ सर्वशोकमोहाद्याप्तिरपि स्यात्; न, [20]तेषामब्रह्मरूपत्वात् अविद्याध्यस्तत्वात्; ज्ञानैश्वर्यानन्दभोगास्तु ब्रह्मणो रूपम्, "[21]विज्ञानमानन्दं ब्रह्म" "[22]नान्योऽतोऽस्ति द्रष्टा" "[23]एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजी-

---

1 B omits वा.
2 C omits वस्तूनि.
3 C adds च.
4 त्तु त—A.
5 पदं—A and B.
6 त—A and B.
7 A and B omit अपि.
8 Bṛh. 4-3-10.
9 च—B.
10 Chānd. 6-1-4.
11 सत्यता—C.
12 Chānd. 7-26-2.
13 C adds इति.
14 Chānd. 8-7-1.
15 Chānd. 7-25-2.
16 A and B omit तृ.
17 मात्र—B and C.
18 Chānd. 8-7-1; सर्वान् लोकान् —A and B.
19 A and B add च.
20 एतेषां—A and B.
21 Bṛh. 3-9-28-7.
22 Bṛh. 3-7-23.
23 Bṛh. 4-3-32.

वन्ति" "[1]सर्वस्येशानः" "[2]एतस्य वा अक्षरस्य प्रशासने गार्गि" इत्यादिश्रुतिभ्यः। तथा च यत्किंचिदीश्वरत्वं यच्च विज्ञानं यश्चानन्दो ब्रह्मादिषु स्थावरान्तेषु भूतेषु ब्रह्माणि तानि; तान्याविर्भूतब्रह्मस्व[3]रूपः समश्नुत इति युक्तम्। शोकादयस्त्वविद्याध्यस्ता[4] न ब्रह्मरूपम्; ते कथमाविर्भूत[5]ब्रह्मस्व[3]रूपमास्कन्देयुः? ननु प्रपञ्चशून्यस्याद्वैतस्य [6]ब्रह्मरूपस्य ज्ञेयाभावादीशितव्याभावाच्च वि[7]ज्ञानमैश्वर्यं चानुपपन्नम्; तत्र "[8]सर्वज्ञः" "[9]सर्वेश्वरः" इत्यपि श्रुती समाधेये एव। नैतत् सारम्; यतो नेशितव्यकृतमीश्वरत्वम्, ज्ञेयकृतं वा ज्ञातृत्वम्; किं तु सिद्धेन ज्ञानरूपेण सिद्धया [10]चेशनशक्त्या ज्ञेयमवा[11]प्नोति, ईशितव्यं च विनियुङ्क्ते प्रशास्ति च, प्रकाश[12]दाहवत्; सिद्धेन हि प्रकाशरूपेण प्रकाश्यं प्रकाशयति विवस्वान्; न तु [13]प्रकाश्याधीनं तस्य प्रकाशरूपम्, दाह्याधीना वा अग्नेर्दाहशक्तिः। तथा च तच्चैतन्येनैव[14] कृत्स्नस्य प्रपञ्चस्यावभासनात् "[15]तस्य भासा सर्वमिदं विभाति" "[16]नान्योऽतोऽस्ति द्रष्टा" इत्यादिश्रुतेः सर्वज्ञत्वम्; सर्वेश्वरत्वमपि तदैश्वर्येणैव यथायथमीश्वरैरीशितव्यानामीशनात्; एवं च "[17]एष भूताधिपतिः" "[18]एष लोकपालः" इति ब्रह्मेन्द्रयमादीनां [10]चैश्वर्यमुक्तम्। सर्वकामावाप्तिश्च तदीयत्वाद्देवाद्यानन्दस्य[19]; कामेष्वानन्द[20]प्राप्त्या कामा [21]आप्ता भवन्ति, न स्वरूपेण। एवं "[22]स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा" इति वर्णनीयम्,

---

[1] Bṛh. 5-6-1.
[2] Bṛh. 3-8-9.
[3] A and B omit स्व
[4] स्तं—B.
[5] A and B add शुद्ध.
[6] B omits ब्रह्मरूपस्य.
[7] A and B omit वि.
[8] A and B add यः; Muṇḍ. 1-1-9.
[9] Māṇḍ. 6.
[10] C omits च.
[11] C omits अव.
[12] शदाहकवत्—A; शददाहकवत्—B.
[13] प्रा—B.
[14] A adds तु.
[15] Kaṭha 5-15.
[16] Bṛh. 3-7 23.
[17] Bṛh. 4 4-22.
[18] Kauṣ. 3-8.
[19] स्व—B.
[20] B adds स्य.
[21] अवाप्ता—C.
[22] Chānd. 8-12-3.

तद्विषयानन्दभोगात्, न तु स्त्र्यादियोगः; यथा "[1]आत्मरतिरात्मक्रीड आत्ममिथुनः" इति; न हि मुख्यमात्मक्रीडत्वमात्ममिथुनत्वं वा संभवति। यतश्चानवच्छिन्नानि तदीयान्येव सर्वभूतेषु ज्ञानादीनि कल्पितावच्छेदानि, अतो यत्र यत्र नात्यन्तमवच्छेदः समुत्कर्षात्तेषां तानि तानि प्रत्यासत्तेर्भूतान्यात्मत्वेन भगवानुक्त्वा—"[2]मुनीनामप्यहं व्यासः" [3]इत्यादि, उपसंजहार—"[4]यद्यद्विभूतिमत्सत्त्वम्" इति। तथा "[5]अदृष्टं द्रष्टृ, अश्रुतं श्रोतृ" इत्यादि, सर्वभूतदर्शनादीनां तच्चैतन्यनिबन्धनत्वात्।

अन्ये त्वाहुः—यावान् कश्चित् परस्मिन्नामरूपाश्रयो व्यपदेशः सर्वोऽसावाध्यानाय; यथा "[6]योऽसावादित्ये पुरुषः" "[7]हिरण्यश्मश्रुः" इत्यादि; न हि स्वमहिमप्रतिष्ठस्य परस्य देशविशेषावरोधः, सर्वविशेषातिगस्य च रूपविशेषयोगः; परश्चैषः, सर्वपाप्मोदयश्रुतेः—"[8]उदितः सर्वेभ्यः पाप्मभ्यः" इति; आध्यानं तु तथा विधीयते; तथा सर्वज्ञत्वाद्यपि द्रष्टव्यमिति। तदेवं ब्रह्मात्मनस्तद्रूपावि[9]र्भावस्तत्प्राप्तिः, स मोक्षः; सा च विद्यैव; तस्मान्न साध्यो मोक्षः, न च विद्याया अन्य इति पुष्कलम्।

अथ मतम्—मा भून्मोक्षः साध्यः; बन्धहेतुक्षयस्तु साध्यते; तत्साधनमात्मदर्शनं स्यात्। श्रूयते च तस्य फलं बन्धहेतूनां कर्मणां क्षयः—"[10]क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"; तथा "[11]तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" पाप्मशब्देन पुण्यमपि संगृहीतम्, सावद्यफलत्वात्। अन्यत्र च "[12]नैतं सेतुमहोरात्रे तरतो [13]न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम्" [14]इत्युपक्रम्य

---

[1] Chānd. 7-25-2.
[2] Gītā. 10-37.
[3] इत्युप—A and B
[4] Gītā 10-41.
[5] Bṛh. 3-8-11.
[6] Bṛh. 3-9-12.
[7] Chānd. 1-6-6.
[8] Cf. Chānd. 1-6-7.
[9] र्भावप्राप्तिर्मोक्षः—A and B.
[10] Muṇḍ. 2-2-8.
[11] Chānd. 5-24-3.
[12] Chānd. 8-4-1.
[13] A and B omit न जरा न मृत्युर्न शोकः.
[14] इत्यनुक्रम्य—A and B.

"[1]सर्वे पाप्मानोऽतो निवर्तन्ते" इत्युपसंहारात् । न च तत्क्षयमन्तरेण क्षेमप्राप्तिः । अतोऽवश्यकर्तव्यः । न चादत्तफलस्य कर्मणो न क्षयः, प्रायश्चित्तानां दोषसंयोगेन चोद्यमानानां तत्क्षय[2]फलत्वात् । तस्मात् प्रायश्चि[3]त्तैरिव विद्यया बन्धहेतुक्षयः साध्यते; [4]सैव [5]च मुक्तिः, बन्धन[6]विश्लेषार्थत्वान्मुचेः । एवं च नान्तवत्त्वदोषः, प्रध्वंसस्य[7] कार्यस्याप्यविनाशात् । [8]तत्रोच्यते—

प्रायश्चित्तदिशा बन्धहेतू[9]च्छेदोऽपि नो ततः ।
सर्वाविद्याप्रविलये न च्छेद्यमवशिष्यते ॥ १०७ ॥
बन्धहेतुरविद्यात्मा विद्यायां सात्तमागता । १०७½ ।

बन्धहेतुध्वंसोऽपि नात्मदर्शनसाध्यः; तद्धि[10]विदधदेव निखिलाविद्याव्यवहार-[11]प्रविलयम् उदीयते । कर्मफलभोगविभागश्चाविद्योपादानः; तत्रानवयवेनोन्मूलितायामविद्यायां[12] न च्छेत्तव्यमस्ति; अविद्याध्यस्तानि हि कर्माणि तत्समुच्छेदे विद्यया समुच्छिन्नान्येव भवन्ति । तद्विपाकस्यावकाश एव नास्त्यद्वैतमात्मतत्त्वं पश्यतः, भेददर्शनाश्रयत्वात्तस्य । यतश्चाविद्योच्छेदेनैव कर्मो[13]च्छेदः, अतस्तुल्यवत् संशयविपर्यासाभ्यां प्रसंख्यातानि कर्माणि—

"[14]भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥"

नन्वेवं कर्मक्षयाभ्युपगमे तत्त्वदर्शनसमनन्तर[15]मेव मुक्तिः स्यात्, न देहपातप्रतीक्षा; "[16]तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये[17]" इति देहपातप्रतीक्षाश्रुतिर्बाध्येत; यस्य तु विद्या तत्क्षयसाधनं शास्त्राद्गम्यते तस्य

---

[1] Chānd. 8-4-1.
[2] यः—B.
[3] ते—B.
[4] नैव च—B.
[5] C omits च.
[6] नं—B.
[7] स्या—B.
[8] अ—A and B.
[9] तु—A and B.
[10] तद्विदध—C.
[11] व्यवहारः प्रवि—B.
[12] यां—B.
[13] मेच्छेदः—B.
[14] Muṇḍ. 2-2-8.
[15] रेव—A and B.
[16] तत्र तावत्—A and B.
[17] Chānd. 6-14-2.

तदनुसारेण केषांचित् क्षयो विद्यया, केषांचिदुपभोगेन ; तत्र "[1]क्षीयन्ते चास्य कर्माणि" इत्यविशेषात् सर्वक्षयप्रसङ्गे "[2]तस्य तावदेव चिरम्" इति देहपातावधिश्रवणान्मुक्तेरारब्धकार्याणां प्रवृत्त[3]भोगानां न ततः क्षयः, भोगेनैव क्षय इति गम्यते ; न हि सर्वक्षये देहपातप्रतीक्षोपपद्यते ; तदुक्तम्—"[4]अनारब्धकार्ये एव तु पूर्वे तदवधेः" "[5]भोगेन त्वितरे क्षपयित्वा संपद्यते" इति ; विद्यया त्वविद्योच्छेदे[6] कर्मविपाकव्यवहारोच्छित्तावविशेषात् सर्वोच्छेद इति [7]सपद्येव मुच्येत । नैष दोषः ; न हीयं श्रुतिश्चिरकालताविशिष्टं देहपातावधिं[8] मुक्तेराह, किंतु क्षिप्रताम् ; यथा कश्चित् क्षेपीयस्तां प्रतिपादयन् ब्रवीति क्वचित् कार्ये—'एतावन्मे चिरं यत् स्नातो भुञ्जानस्य च' एवमियमपि ; अन्यथा "[2]तावदेव" इति न वाच्यं स्यात्, "[2]चिरम्" इत्येव ब्रूयात् ; "[2]तावदेव" इति तु वचनात् क्षैप्रयपरता गम्यते ; अतः क्षिप्रैव मुक्तिः, न प्रतीक्षणीयमस्ति ; देहपात[9]-प्रतीक्षा तु तत्र नान्तरीयकत्वाद्भवत्येव ।

अथ वा चिरत्वमनूद्य[10] देहपातावधित्वमत्रोच्यते ; अन्यथा चिरत्वेऽवधिविशेषे चोच्य[11]माने वाक्यं भिद्येत । तत्रायमर्थः—यदि कस्यचिच्चिरम्[12], तावदेव यावन्न विमोक्ष्ये इति ।

ननु पूर्वस्मिन् पक्षे तत्त्वज्ञानानन्तरत्वाद्देहपातस्य स्थितप्रज्ञलक्षणाभिधानं न युज्यते—"[13]स्थितप्रज्ञस्य का भाषा" इत्यादि ; द्वितीयोऽपि सर्वक्षये चिरत्वानुपपत्तेस्तत्रावधिविशेषविधानायोगादनुपपन्नः । उच्यते—स्थितप्रज्ञस्तावन्न विगलितनिखिलाविद्यः सिद्धः, किं तु साधक एवावस्थाविशेषं[14] प्राप्तः स्यात् । न च ब्रूमः—ब्रह्मवेदनानन्तर एव देहवियोगः ; किं तु आरब्ध-

---

[1] Muṇḍ. 2-2-8.
[2] Chānd. 6-14-2.
[3] त्ते—B.
[4] Brahm. Sū. 4-1-15.
[5] Brahm. Sū. 4-1-19.
[6] च्छेदेन—A and B.
[7] संपद्येव—B.
[8] धिं—B and C.
[9] पातस्तु तत्र—A and C.
[10] B adds ते.
[11] द्य—B.
[12] A and B add तत्.
[13] Gītā. 2-54.
[14] षमासः—B.

कार्यकर्म[1]क्षयं भोगेन प्रतीक्षत इति । तत्र कस्यचित् तत्कालोऽपवर्गः, कस्यचित् कियांश्चित् क्षेपः; यथा रज्ज्वां सर्पसमारोपसमुत्थभयजन्मानो वेपथुप्रभृतयस्तत्त्वदर्शनादपा[2]वृत्ते भये कस्यचित्तदैव निवर्तन्ते, कस्यचित् [3]कियन्तंचित् कालमनुवर्तन्ते, तत्संस्कारात्; तथा सर्वकर्मक्षयेऽपि भुज्यमानविपाकसंस्कारानुवृत्तिनिबन्धना शरीरस्थितिः, कुलालव्यापारविगम इव चक्रभ्रान्तिः ।

नन्वेवं ब्रह्मविदोऽपि चेद्भोक्त्रादिविभागदर्शनमनुवर्तते, देहपातादुत्तरकाल[4]मप्यनुवर्तेत; तत्र विदुषोऽपि नावश्यंभावि कैवल्यं स्यात् । तथा च[5] "[6]तावदेव चिरम्" इति श्रुत्या विरोधः । अथोच्छेदादविद्याया नानुवृत्तिः, क्षणमपि न स्यादिति स एव विरोधः; सर्पोभयतःस्पाशा रज्जुः । उच्यते; यथा भयविगमे लब्धाश्वासस्यापि संस्कारमात्रात् कम्पाद्यनुवृत्तिः, न च भयविगमेऽप्यनुवृत्तिरित्येतावता चिरकाला भवति; न च मूलकारणतुल्यफलः संस्कारः; न च स्थायी; अन्यथा कम्पादीनां निवृत्तिरेव न स्यात्; न च भयविगमहेतोस्तत्त्वदर्शनात्तन्निवृत्तये हेत्वन्तरमपेक्ष्यते; [7]तत एव हि[8] स क्रमेण निवर्तते, स्वयमेव वा कुलालचक्रभ्रान्तिसंस्कारवत्—तथा निवृत्तायामविद्यायां कर्मसु चाविशेषेणारब्धकार्येष्व[9]नारब्धकार्येषु च निवृत्तेष्वारब्धविपाकसंस्काराच्छरीरिणं[10] भोक्तारमिव [6]चायमात्मानं प्रत्येत्याभासमात्रेण विद्वानपि, न त्वविद्वानिवारूढाभिनिवेशः; स चायमीदृशः स्थितप्रज्ञो वर्णितः वीतकाम आत्मरूपतंतुष्टो दुःखेषु च्छायामात्ररूपेषु तत्त्वदर्शनादभिनिवेशाभावात् कृत्रिमेभ्य इव व्याघ्रादिभ्योऽनुद्विग्नमनाः सुखेषु च कृत्रिमरमणीयेष्विव[11] [12]विगतस्पृहः । यथा खल्वविदुषो मृद्दारुरचिते स्त्र्यादौ विषये छायामात्रदर्शनमभिनिवेशविकलम्, तथा विदुषः क्षीणकर्मा-

---

[1] B omits कर्म.

[2] प—A and B.

[3] कंचित्—A and B.

[4] कालेऽप्य—A.

[5] C omits च.

[6] Chānd. 6-14-2.

[7] अत एव हि—B.

[8] C omits हि.

[9] B omits अनारब्धकार्येषु च निवृत्तेषु

[10] णां—B.

[11] भ्य इव—C.

[12] A and B omit वि.

विद्यस्य तत्संस्कारमात्राद्दर्शनं छायामात्रेणैव विषयेषु । तथा च "[1]तद्यथाहिनिर्ल्वयनी वल्मीके मृता[2] प्रत्यस्ता शयीत एवमेवेदं शरीरम्" इति विदुषः शरीरेऽनास्थां दर्शयति ; यतो न मूलकारणतुल्यफलः[3] संस्कारः कम्पादिवदेव ; न च[4] चिरकालानुवृत्तिः, अल्पकालस्थायित्वात्[5] संस्कारस्य ; तद्वदेव च न तन्निवृत्तये हेत्वन्तरमपेक्ष्यते, तत्त्वदर्शनादेव क्रमेण तस्यापि निवृत्तेः, स्वयमेव वा । सा चेयमवस्था जीवन्मुक्तिरिति गीयते । आरब्धकार्यकर्मसंस्कारक्षयश्च देहपातादेव गम्यते ; तदनुवृत्तौ[6] देहपात एव न स्यादिति न देहपातोत्तरकाले तद्विपाकस्य च्छायामात्रेणापि दर्शनं [7]शक्यते । येन हि कर्मणा यच्छरीरमारब्धं तत्रैव तद्विपाकशेषा[8]भासः । अनारब्धकार्याणां त्वलब्धवृत्तीनामेव निवृत्तत्वान्नास्ति तत्संस्कारः ; लब्धवृत्तिकारणसंस्काराद्धि कार्यलेशानुवृत्तिः । न खलु भयेऽप्रतिलब्धवृत्तावनुपजनितकम्पादौ तत्संस्कारात् कम्पाद्यनुवृत्तिः । तस्मादनारब्धकार्याणामलब्धवृत्तित्वादारब्धकार्यसंस्कारक्षयस्य च देहपातादवगमाद्विदुषः पतितेऽस्मिन् शरीरे कैवल्यमवश्यंभावि । अत्र च[9] लब्धवृत्तिकारणसंस्काराद्वा कार्यशेषः, कार्यसंस्कारादेव वा, [10]तथोभयसंस्कारादेव[11] वा कम्पाद्यनुवृत्तिः ; भयसंस्काराद्वा भयम्, ततः कम्पादयः ; कम्पादिसंस्काराद्वा कम्पाद्यनुवृत्तिः । सर्वथा भवति कारणविगमेऽपि कार्यशेषानुवृत्तिः[12], संस्कारात् । अतो लब्धवृत्तिकर्मसंस्कारात्तद्विपाकसंस्काराद्वा विदुषोऽपि शरीरस्थितिः । तदुक्तं तन्त्रान्तरेऽपि—" [13]तिष्ठति संस्कारवशाच्चक्रभ्रमवद्धृतशरीरः " इति ।

ये तु मन्यन्ते—प्रवृत्तभोगानां [14]कर्मणां प्रवृत्तवेगस्येषोरिव चक्रस्येव वा [15]न शक्यः प्रतिबन्धः, अतो भोगेन क्षयप्रतीक्षेति । तदसत् ;

---

[1] Bṛh 4-4-7.

[2] त—B.

[3] फलसंस्कार—B.

[4] A and B omit च.

[5] च—A and B.

[6] त्तौ—B.

[7] गम्यते—B.

[8] B adds च.

[9] C omits च.

[10] तथाभय—B and C.

[11] A and B omit एव.

[12] वृत्तिसंस्कारात्—B.

[13] Sāṅ.-Kār. 67.

[14] C omits कर्मणां.

[15] अ—A.

शक्यो दीपुः प्रतिबन्धुं कुड्यादिभिः, नाशयितुं च च्छेदादिभिः । स्वप्नादिसूचितोपस्थितविपाकवर्तमानदेहभोग्यकर्मक्षयार्थानि च शान्तिकानि[1] कर्माणि । तस्मात् संस्कारादेव स्थितिः ।

ननु संस्कारकार्यशेषावप्यविद्यैव ; तत्र कथं सर्वाविद्याप्रविलयः, कथं वा न च्छेद्यमवशिष्यते ? उच्यते— विशुद्धैकात्म्य[2]दर्शनप्रतिपक्षग्रस्तौ[3] विलीनावेव[4] तावदुदितौ, अकिंचित्करत्वात् अबन्धत्वात् ; तन्निवृत्तये[5] हेत्वन्तरस्यानपेक्षणात् । विशुद्धं खल्वात्मानं साक्षादनुभवतो विपाकाभासस्तमस्पृशन्न किंचित्करः बन्धात्मा प्रलीन एव ; यथा चित्रादौ चित्रादि[6]तत्त्वमनुभवतः[7] रुयाद्याभासो रागादीनामनिमित्तत्वात्, तथावदातमात्मानं जानतो विपरीतं वा खड्गादिषु श्यामाद्याभास उत्पन्नोऽपि तत्त्वदर्शनादवकाशमलभमानः प्र[8]विलीन एव । तथा च न तन्निबन्धनेन मलिनत्वेन शोचत्यात्मानम्, न तेजस्वितयाभिनन्दति ; अवभासमानयोरपि तयोरात्मनि तत्त्वदर्शनप्रतिहतावभासत्वात् । एवं च य[9]दुच्यते —कर्मणो वा शरीरस्थितिः स्यात् संस्काराद्वा, को विशेषः ? कश्च कर्मणः क्षयः कार्यानुवृत्तौ ? तन्निवृत्त्या हि तत्क्षयो गम्यते ; तस्मात् " [10]भोगेन त्वितरे क्षपयित्वा संपद्यते " इत्येव युक्तम् । तदप्यपास्तम् ; कर्मविपाको ह्यात्मसंस्पर्शी शोकाभिनन्द[11]नवानाविदुषः, विदुषस्तु तदसंस्पर्शीदा[12]भासमात्रं मणिकृपाणदर्पणादिनिबन्धनविशेषवत् ; न विपाकः, अनभिनन्द्यमानत्वात् अद्विष्यमाणत्वाच्च ; तथा च " [13]तत्तत् प्राप्य शुभाशुभम् । नाभिनन्दति न द्वेष्टि " इति दर्शितम् । [14]तथा— " [15]यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः " ; पश्यत एव शरीरादिप्रपञ्चो निशा, तदसंस्पर्शाददृश्यमानसमत्वात् ।

---

[1] A and B omit कानि.
[2] त्म—A and B.
[3] स्तो—B.
[4] A and B omit वे.
[5] C adds च.
[6] दित्वमनु—C.
[7] A and B add एव.
[8] A and B omit वि.
[9] यु—B.
[10] Brahm.-Sū. 4-1-19.
[11] नन्दवान्—A.
[12] A and B omit दा.
[13] Gītā 2-57.
[14] B omits तथा ; तथा च—A.
[15] Gītā 2-69.

ननु तत्त्वज्ञानप्रतिहतश्चेदुत्पन्नोऽपि प्रपञ्चाव[1]भासो नात्मसंस्पर्शी; [2]न किंचित्करः, न बन्धः, शब्दादेव तस्योत्पत्तेः किमर्थमुपासनादि[3]? उच्यते — परोक्षरूपं[4] [5]शाब्दज्ञानम्, प्रत्यक्षरूपः प्रपञ्चावभासः; तेन तयोरविरोधेन प्रपञ्चावभासो[6] नात्मा[7]संस्पर्शी, [8]नाकिंचित्करः, [9]न न बन्धः; यथा प्रमाणान्तरादवसीयमानमाधुर्येऽपि द्रव्ये प्रत्यक्षस्वरूप इन्द्रियद्वारस्तिक्ताव-भासः अद्रव्यसंस्पर्शी नाभासमात्रश्चावतिष्ठते, तथा च तद्द्रव्यं परमार्थतिक्त-मिवानवसितमाधुर्यमिव दुःखाय भवति । उपासनादिना[10] साक्षात्कृतात्म-तत्त्वस्य तु विरोधात् सन्नपि प्रपञ्चावभासो नात्मसंस्पर्शी, देवदत्त इव सिंहावभासः; 'सिंहो देवदत्तः' इति समारोपेऽ[11]वभासमानोऽपि तदसंस्पर्शी, अकिंचित्करः, न भयहेतुः । नित्यश्चात्मतत्त्वप्रकाशः, तत्र न पुनर्विपर्ययाव-काशोऽस्ति; शाब्दं तु प्रमाणाधीनं क्षणिकं ज्ञानम्, तत्र पुनरपि विपर्य-यावकाशः; दृष्टं हि प्रमाणाननुसन्धाने पुनः सर्पभ्रान्त्या रज्जोर्भयम् । अथात्रापि [12]संततं शाब्दं ज्ञानमनुसंदधीत, किमन्यदुपासनमस्मात्? [13]तस्मा-द्बन्धहेतुच्छेदोऽपि विद्यैव, न तया साध्यः । एवमुत्तराघाश्लेषेऽपि वाच्यम्, [14]"यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते" इति कर्तृकर्तव्यविभागस्य [15]विद्यया प्रविलयात् । एवं न विद्याया अनेकफलकल्पना भविष्यति, वर्तमाना[16]पदेशानां च फलविधित्वेन न विपरि-णतिरिति ।

यदुक्तं न शाब्दज्ञानविषयो ब्रह्मेति, तत्रोच्यते—

न ब्रह्म शब्दधीगम्यं यद्यशक्यो धियो विधिः ॥ १०८ ॥
धीविशेषप्ररूपाय नासिद्धो विषयः क्षमः ।

---

[1] C omits व.
[2] A and B omit न किंचित्करः.
[3] दिति—B.
[4] A and B add त.
[5] शब्दात् ज्ञानम् —C.
[6] C adds न.
[7] त्म—B.
[8] नकिं—C.
[9] B omits न.
[10] A and B omit ना.
[11] A and B omit अवभासमानोऽपि.
[12] सतत—B and C.
[13] B omits तस्मात्.
[14] तद्यथा—C; Chānd. 4-14-3.
[15] विद्यायां—A and B.
[16] नो—B.

विधिर्नाख्यापितपदो धीमात्रं न विधीयते ॥ १०९ ॥

न खलु ज्ञानमात्रं[1] विधीयते; ज्ञानविशेषस्तु । न चाप्रसिद्धेऽनिरूपिते तत्र नियोगः; न ह्यप्रसिद्धे विषये नियोक्तुं शक्यते । ज्ञानस्य च विशेषोऽर्थद्वारः; न चाप्रसिद्धोऽर्थस्तद्विशेषनिरूपणाय प्रभुः । न चात्मरूपस्य शब्दादन्यतः सिद्धिः । शब्दादपि चेन्न सिद्धिः, तद्द्वारज्ञानविशेषासिद्धौ विषयानुपपत्तेर्नियोगानुपपत्तिः ।

अपि च ज्ञानविशेषविधिवादिन आत्मतत्त्वे प्रामाण्यमेव हीयत इति दर्शयति—

विधिः स्वसिद्धिनिष्ठो वा क्रियासिद्धिपरोऽथवा ।
अद्वैतब्रह्मतत्त्वस्य प्रतिपत्तिरहेतुका ॥ ११० ॥

विनियोगादधिगतिर्यस्या[2]ज्ञानक्रियार्थता ।
अतत्परा न प्रमाणं सार्थवादोत्थबुद्धिवत् ॥ १११ ॥

विधिः क्रियागोचरत्वान्न द्रव्ये व्यापृतिक्षमः ।
सत्तान्वयात्तु तत्सिद्धिः प्रत्युतेति स दुष्यति ॥ ११२ ॥

विशिष्टा[3]न्यक्रियाबोधः प्रमाणं च विशेषणे ।
प्रतिपत्तिर्विशिष्टापि विषयस्य नियोगतः ॥ ११३ ॥

सत्तां न साधयत्येव समारोपेण संभवात् ॥ ११३½ ॥

यदि तावन्नियोगस्यैव कार्यता प्रतीये[4]त, तदा स स्वनिष्पत्तौ पर्यवसितः सह शब्देन; अथ विनियोगाद्विषये कर्तव्यतावगमः, तथापि विषयसिद्धौ; उभयथा न वस्तुतत्त्वं [5]संस्पृशति; तत्राद्वैतात्मतत्त्वप्रतिपत्तिर[6]प्रमाणिका [7]स्यात् ।

स्यादेतत्—"[8]य आत्मापहतपाप्मा विजरः" इति पदानां सामानाधिकरण्येन संबन्धादन्यथा वा वस्तुतत्त्वप्रतिपत्तिरिति । तच्च न, अन्यपर-

[1] त्वमवधीयते—B.
[2] ज्ञा—C.
[3] म—C.
[4] यते—A and B.
[5] B omits सं.
[6] प्रामा—B.
[7] A and B omit स्यात्.
[8] C omits य; Chând. 8-7-1

त्वात्; सा हि न 'एवमिदम्' इति पर्यवसिता, किं तु 'एवमिदं प्रतिपत्तव्यम्' इति कर्तव्यतानिष्ठा न[1] वस्तुतत्त्वे प्रमाणं वृत्तान्तेष्विवार्थवादोत्थज्ञानम्, अन्यपरत्वात्। न चात्मतत्त्वमेव विधेर्विषयः, तस्यानुष्ठेयविषयत्वात्, क्रियायाश्च तथाभावात्, सिद्धवत् स्वशब्दोपादानेऽनु[2]ष्ठेये द्रव्ये व्यापारायोगात्; प्रत्युताविधेयकालत्रयान्यतमसंस्पृष्टसत्तानुगमेन द्रव्यस्वरूपसिद्धिः—'ईदृशं वस्त्वभूत्, अस्ति, भविष्यति वा' इति। तस्मात् स्वरूपसिद्धौ दुष्यति। न हि विधेयस्य कालत्रयेऽपि सत्तावगमः; न हि 'यजेत' इत्युक्ते यागस्य भूतकाला वर्तमानकाला भविष्यत्काला वा सत्ता प्रतीयते। ननु भविष्यत्काला[3]वगम्यते, भविष्यत्कालविषयत्वाद्विधेः; नैतत्; न हि [4]विहितं नियोगतोऽनुष्ठास्यते, विहिताकरणदोषाभावप्रसङ्गात्। ननु विशिष्टक्रियाभिधानं विशेषणेऽपि प्रमाणमिष्यते—यथा 'सोमेन यजेत'; तथा 'अङ्गदी कुण्डली व्यूढोरस्को देवदत्तस्य पुत्रोऽधीते' इत्यध्ययनक्रियावत् सर्वो विशेषणकलापः प्रतीयते। सत्यम्; विशिष्टक्रियाप्रमाणं विशेषणे[5]ऽपि प्रमाणमन्यत्र प्रतिपत्तेः; प्रतिपत्तिर्हि विषयविशेषविशिष्टा[6] [7]प्रमीयमाणा न विषयविशेषस्य सद्भावं गमयति, अन्यथाभूते तथाभावसमारोपेणापि संभवात् "[8]असौ वाव लोको गौतमाग्निः" इति यथा द्युप्रभृतिष्वनग्निदृष्टेः।

अत्राह—

ननु नो विपरीतार्था धीः[9] प्रतीतिविरोधतः ॥ ११४ ॥
अनाश्वासाच्च रजतप्रत्ययो रजते स्मृतिः ॥ ११४½ ॥

न खल्वन्यदन्यथा प्रतीयत इति युक्तम्, प्रतीतिविरोधात्; कथमन्यस्मिन् प्रतिभासमानेऽन्यो विषयः? अनाश्वासाच्च; विषयरूपव्यभिचारिणि ज्ञाने न ततो विषयनिश्चयः स्यात्। अपि च विषयरूपमननुकुर्वदविषयमना[10]लम्बनं ज्ञानमग्राह्यमेव स्यात्; [11]ज्ञानहेतुमात्रस्यानालम्बनत्वाच्चक्षुरादिवत्; तथा

---

1 A and B add च.
2 ष्ठेयद्रव्यव्यापारा—B; ष्ठेयद्रव्ये व्यापारा—A.
3 A and B omit व.
4 वि.हितनियोग—B.
5 B omits अपि.
6 A and B add पि.
7 प्रतीयमाना—C.
8 Chānd. 5-4-1.
9 धीप्रतीति—B.
10 लम्बनमग्राह्य—B and C.
11 ज्ञानं—A and C; Śaṅkhapāṇi omits ज्ञान in his commentary.

चावेदकत्वान्नान्यापेक्षादपि ततोऽर्थसिद्धिः । किं तर्हीदं शुक्तिसंनिकृष्टे चक्षुषि 'रजतम्' इति? स्मृतिः, सामान्यग्रहणात् । भ्रान्तिस्तर्हि कथम्? प्रत्यक्षस्मर्यमाणयोर्विवेकाग्रहणात्; सोऽयं भेदाग्रहणेऽभेदग्रहणाभिमानो विवेकरहितानाम्, यथा दूरादन्तरालाग्रहणे वृक्षादिषु[1] संश्लेषग्रहणाभिमानः । तस्मात् 'स्मरामि' इति विवेकशून्या रजतस्मृतिरेषा । अत्रोच्यते—

नैतन्न हि प्रवर्तेत शुक्तिकाशकले तदा ॥ ११५ ॥

रजते सा प्रवृत्तिश्चेन्न तस्यासंनिधानतः ।
असंनिधानाबोधाच्चेत् प्रवृत्तिनियमः कुतः ॥ ११६ ॥

प्रवर्तते यत्तत्रैव तत्तत्संनिधिकारितम् ।
अन्यत्र भेदग्रहणाद्विवेकाग्रहणात्तथा ॥ ११७ ॥

प्रवृत्तिभेदः सादृश्याद्विवेकाग्रहणं यदि ।
अदृष्टेषु प्रवर्तेत लोष्टादिष्वविवेकतः ॥ ११८ ॥

न तत्र यदि तद्बुद्धिः शुक्तिकाशकलेऽपि न ।
अथास्ति विपरीतार्था ख्यातिर्निह्नूयते कथम् ॥ ११९ ॥

अदृष्टत्वादप्रवृत्तिः शुक्तिकाशकले समा ।
दृष्टं तथैव रूपेण तत् प्रवृत्तेरकारणम् ॥ १२० ॥

दृष्टस्मृताविवेकाच्चेदिदमत्र परीक्ष्यताम् ।
तत्त्वबोधादथातत्त्वाबोधाद्रजतवेदनात् ॥ १२१ ॥

दृष्टे प्रवृत्तिः पूर्वस्मिन्विपरीतार्थता मतेः ।
न दृष्टादृष्टयोर्भेदः परस्मिन्नोपयोगिनी ॥ १२२ ॥

स्वयोगदर्शने ते [2]हि समारोपोपयोगिनी[3] ।
नादृष्टेऽसंप्रयुक्ते वा चाक्षुषः स्याद्विपर्ययः ॥ १२३ ॥

यदि च[4]क्षुषा संप्रयुक्तं शुक्तिशकलं न 'रजतम्' इति प्रतीयात्, रजतं वा तथा, न शुक्तिका[5]शकल आदित्सया प्रवर्तेत रजतार्थी, तस्य 'रजतम्'

---

[1] B adds तत्.

[2] तु—A.

[3] नि—A.

[4] क्षुस्संयुक्त—B.

[5] A and B omit का.

इत्यनवगतलोष्टादिवत् । न च स्मर्यमाणे रजते सा प्रवृत्तिः, तद्देशासंनिधेः; न हि प्रतीतिमुपगतेऽपि वस्तुनि यत्र तस्यासंनिधिस्तत्र तेनार्थी प्रवर्तते । स्यादेतत्—रजतस्य प्रतीतेरसंनिधेश्चाप्रतीतेस्तत्र प्रवृत्तिः । तन्न; शुक्तिकाशकल एव प्रवृत्तेः । तत्रैव तु प्रवृत्तिस्तत्संनिधिनिबन्धना; रजतमात्रप्रतीतेः स्मृतिविवेकशून्यत्वाच्च प्रवृत्तिरन्यत्रापि स्यात्, असंनिधानाग्रहणस्य तत्राप्यविशेषात् ।

अथ मतम्—अन्यदेशेषु वस्तुषु सविशेषेषु प्रत्यक्षावगतेषु रजताद्विवेकग्रहणादप्रवृत्तिः, शुक्तिकाशकले तु रजतसाधारणशुक्लभास्वररूपमात्रप्रतीतेर्विशेषाप्रत्ययाच्च स्मृतिविपरिवर्तिनो[1] रजताद्विवेका[2]ग्रहणात् प्रवृत्तिः; एवमप्यदृष्टेषु [3]लोष्टादिषु ततोऽ[4]न्यतानवधारणात् प्रवृत्तिः स्यात् । अथ न तेषु रजतावगमः, इतरत्रापि न; भावे वा विपरीता ख्याति[5]रभ्युपगता स्यात् । अथादृष्टत्वादेवादृष्टेषु न प्रवर्तते, शुक्तावपि न [6]प्रवर्तेत । ननु दृष्टा शुक्तिः सामान्यरूपेण; सत्यम्; न तु तद्रजतार्थिनः प्रवृत्तिहेतुः । यत्तु तथा रजतरूपम्, [7]न तेनावगमः; [8]स यथा चक्षुषा असंप्रयुक्तस्य नास्ति, तथा संप्रयुक्ताया अपि शुक्तेः । यदि मन्येत—दृश्यमानस्मर्यमाणयोरविवेकाच्चक्षुःसंप्रयुक्त एव प्रवर्तते, नेतरस्मिन्; तत्रापीदं विचार्यम्—विवेकग्रह[9]स्य विवेककृतोऽभावात् संनिधिप्रतीतेरभेदबोधस्ततो वा प्रवृत्तिः, भेदावबोधाभावमात्राद्वा? पूर्वस्मिन्विपर्ययः, उत्तरस्मिन् दृश्यमानादृश्यमानयोः सं[10]प्रयुक्तासं[10]प्रयुक्तयोर्वा न विशेषः, भेदाग्रहणस्य तुल्यत्वात्; न हीन्द्रियसंयो[11]गस्य दर्शनस्य वा कश्चिदग्रह उपयोगः, अभूतसमारोपे त्वस्ति; न कथंचिदगृहीतेऽसंप्रयुक्ते चैन्द्रियकः समारोप उपपद्यते ।

स्मृतं प्रत्यक्षतो भिन्नं स्वज्ञानादेव चेत् कुतः ।

---

[1] ना—B.
[2] क ग्रह—B and C.
[3] B omits लोष्टादिषु.
[4] अन्यतान्यतानवधारणात्—B
[5] अभ्युपेता—A and B.
[6] प्रवर्तते—B.
[7] तेन नावगमः—B.
[8] B omits स.
[9] C adds ण.
[10] A omits प्र.
[11] भोगस्य—B.

अविवेकोऽन्यथा तु स्यात् सदा सामान्यदर्शने ॥ १२४ ॥

विपर्ययोऽन्यं स्मरतो न च संशयदर्शनात् ।
स्मृतद्वयाविवेकोत्थं संशयं यदि मन्यते ॥ १२५ ॥

तन्नोभयोरपि यतः स्मृतौ दृष्टो विपर्ययः ।
विशेषज्ञानतोऽध्यक्षे स्मृतं यदि विविच्यते ॥ १२६ ॥

न स्वज्ञानादसत्यस्मिन्द्वि[1]स्मृतौ कथमेकधीः ।
एकत्वमेव स्मरतः प्राग्रूपं शशिनि स्फुटम् ॥ १२७ ॥

तिमिरादिप्रदोषेण कथं ते द्वित्वविभ्रमः ।
पिपासतश्च सलिलं शुक्तिकाहितचेतसः ॥ १२८ ॥

विपर्ययो न हि भवेद्भवन्वा सलिले भवेत् । $128\frac{1}{2}$ ।

अपि चेदं तत्रभवान् व्याचष्टाम्—स्मर्यमाणं दृश्यमानात् स्वज्ञानादेव विविच्यते, न वा—स्मृतिज्ञानस्य स्वरूपमेव तादृशं[2] यत् प्रमातव्याद्भेदे-नावभासयति, स्वरूपमात्रनिष्ठं वा। तत्र पूर्वस्मिन् स्मरणगोचरयोरविवेकः कुतः, स्वज्ञानादेव विविक्तत्वात्? इतरस्मिन्नपि [3]सदा स्मृतौ विपर्ययः स्यात्, सामान्यदर्शने चान्यस्मृतावविवेकात् । न च तत् तथा, संशयस्यापि दर्शनात् । अथ मतम्—एकस्मृतौ विपर्ययः, ततोऽविवेकात्; अनेकस्मृतौ तु संशयः, नैकस्मादविवेकात् । तदसत्; अनेकस्मरणेऽपि हि दृश्यते विपर्ययः । यदि च प्रत्यक्षेऽर्थे विशेषज्ञानात् स्मर्यमाणं विविच्यते, न स्वज्ञानात्; असति तत्र विशेषज्ञाने च द्वयोः स्मृतौ संशय एव स्यात्, नैकावभासो विपर्ययः । अथ तु स्वज्ञानात् स्मृतं विविच्यते, स्मृतिविपर्ययभेदश्चाभ्युप-गम्यते; तदानेकस्मरणेऽपीन्द्रियदोषविशेषाद्युक्तो विपर्ययः । दर्शितं चेदम्—सामान्यदर्शनेऽपि कदाचिदेकां कोटिं स्मरतो न संशयो न विपर्ययः, दोषाणामपुष्टेः । अतः स्वज्ञानादेव तदा स्मृतं विविच्यते, न दृश्यविशेष[4]-परिच्छेदात् । एवं चेत् कुतो दृश्यमानस्मर्यमाणाविवेकः ?

---

[1] न्विस्मृतौ—B.
[2] शः—B.
[3] तदा—B.
[4] पे—B.

अपि च अन्यदेव स्मरतः पूर्वरूढमेकत्वं शशिनि द्वित्वविभ्रमः, न स्मर्यमाणाविवेकजः । न च ज्ञानेन्द्रियवृत्तिभेदाविवेकात्, तयोरप्रत्यक्षत्वादस्मर्यमाणत्वाच्च । शुक्तिकाहितचेतसश्च सलिलं पिपासतो न स्याद्विपर्ययः; सलिलाभासो वा, स्मर्यमाणस्य स्वज्ञानादविवेकात् ।

न च सर्वा नियोगेन भ्रान्तिः सादृश्यबन्धना ॥ १२९ ॥
श्वेते पीतभ्रमो दृष्टो मधुरे तिक्तविभ्रमः ।
किंचित्सादृश्यतो हि स्यान्न कश्चित्तत्र न भ्रमः ॥ १३० ॥
तस्मादिन्द्रियदोषाणां सामर्थ्यस्य विभागतः ।
भ्रमेषु नियमो दोषादग्रहे न भ्रमे यमः । १३१ ।

यदि च सदृशदर्शनात् सदृशस्मृतेर्भ्रमः, कथं श्वेते पीतभ्रमः मधुरे वा तिक्तभ्रान्तिः ? आन्तरपित्तसंवेदने, अव्यापारयतोऽपि बहिरिन्द्रियं स्यात्; अञ्जनवच्चाक्षिगतस्य तद्गतकृष्णिमादिवच्चादृश्यत्वात् । किंचित्सादृश्ये सर्वप्रकारभ्रमप्रसङ्गः । तस्मादिन्द्रियदोषसामर्थ्यभेदान्नियता विपर्ययोत्पत्तिः । अग्रहमात्रे तु दोषव्यापारे कामिलादिदोषाद्भ्रान्तिनियमो न स्यात् । न हि सादृश्यनिमित्तः. असदृशेऽपि भ्रान्तिदर्शनात् ।

विशेषस्मरणा[1]च्चापि स्मृतावपि तदग्रहः ।
देशकालविशेषाच्च न स्मृतं प्रविविच्यते ॥ १३२ ॥
अनेकदेशाधिगतं विविक्तं न पुनस्ततः ।
स्मृतिरित्यपि विज्ञानं स्मृतेरन्यदुदाहृतम् ॥ १३३ ॥
न च मानफलाद्भिन्नात्तत् सिध्यति फलादृते ।
सति स्मृतिविवेके च प्रत्यभिज्ञानविभ्रमः ॥ १३४ ॥
अथासंनिहितो व्यर्थो वेद्यः संनिधिमत्तया ।
अविविक्तस्मृतेरेवं विपरीतार्थता भवेत् ॥ १३५ ॥
मनसोऽनुपघाताच्च नासंनिध्यपरिग्रहः ।
दोषो ह्यग्रहणे हेतुरिन्द्रियाणामुदाहृतः ॥ १३६ ॥

[1] श्चो च—A.

प्रवृत्तिनियमो न स्यादिति चात्र निवेदितम् ।
सर्वज्ञानानि मिथ्या च प्रसज्यन्तेऽत्र कल्पने ॥ १३७ ॥

सर्वात्मनार्थो ज्ञानेन केनचिन्न हि गृह्यते ।
तथाज्ञातविवेकस्य द्विचन्द्रादिविपर्ययात् ॥ १३८ ॥

अनुवृत्तिमतः पश्यन् कस्य स्वात्मापनिह्नुते[1] ॥ १३८½ ॥

अथ मतम्—स्वज्ञानादेव स्मृतं विविच्यते; कदाचित्तु तत्र प्रत्यक्ष इव विशेषाग्रहस्ततोऽविवेकः; सति तु विशेषग्रहण इन्द्रियसंयुक्ते सामान्यदर्शनेऽपि नाविवेकः; तत उभयकोटिस्मरणे न संशयः; एकस्मृतौ न संशयो न विपर्ययः । एवमपि द्वयोः स्मरणे न विपर्ययः स्यात् । न च स्मृतौ विशेषाग्रहणम्, विशेषस्मरणात् । अथ देशकालविशेषात् स्मर्यमाणं विविच्यते, तत्र देशकालभेदाग्रह इति; तन्न; अनन्तदेशकालभेदावगतं तद्देशावगतं च दृश्यात् स्मर्यमाणं विविक्तं गम्यते । न च देशकालभेदग्रहणात्, अनन्तस्मरणानुपपत्तेः; तद्देशावगते च देशभेदाभावात् । अथ स्मर्यमाणताया अग्रहणादविवेकः, स्मर्यमाणताज्ञानाच्च विवेकः; तस्मात् 'स्मरामि' इति ज्ञानशून्यानि रजतादिज्ञानानि भ्रान्तिहेतवः । परिपूर्णैव तर्हि स्मृतिः, न तया स्वविषयस्य किंचिन्न गृहीतम्; स्वयमेव सा स्वविषयं दृश्याद्विविनक्तीति नास्ति दृश्यमानस्मर्यमाणयोरविवेकः। यतः 'स्मरामि' इति ज्ञानमन्यदेव दर्शनस्मरणविवेककारि स्मृतेः । तत्रेदं विचार्यम्—स्मृतिः स्वविषयं विविनक्ति वा न वा? यदि विविनक्ति, तदा विपर्ययाभावः; अथ न स्मृतिः स्वविषयं विविनक्ति, तदा सामान्यदर्शने चान्यस्मृतौ विपर्ययः स्यादित्युक्तम्। न 'स्मरामि' इति विवेकाच्चेन्, स एव स्मृतेः स्वयमविवेचकत्वेन स्यात्; कार्यगम्यस्य हि ज्ञानस्य भेदः कार्यविशेषोन्नेयः । न चेत् स्मृतेः प्रमाणकार्यात् कार्यं विविक्तं स्यात्, केन सा विविक्ता गम्येत? सत्यपि स्मृतिविवे[2]के दृष्टः प्रत्यभिज्ञाभ्रमः 'स एव' इति । न च प्रत्यक्षस्याविवेकः, एकविवेकेनोभयोर्विवेकात् स्मृतादविवेकाच्च स्मृतिविभ्रमः स्यात्, न प्रत्यक्षभ्रमः । तस्मान्न 'स्मरामि' इति प्रमोषादविवेकः । अथासंनिहितस्य

---

[1] तेः—A. [2] वेकद—B.

संनिहितात्मना प्रतीतिरविवेकः, स्मृतेर्विपरीतार्थत्वप्रसङ्गः । अथासंनिध्य-ग्रहणात्, भवतु [1]स स्वप्नज्ञाने, न त्विन्द्रियजायां भ्रान्तौ; मनसोऽनुप-घातादुपघातहेतुत्वाच्चाग्रहणस्य । न चेत्थं प्रवृत्तिनियमः स्यादित्युक्तम् । सति च वस्तुग्रहे कस्यचिदंशस्याग्रहाद्भ्रान्तौ सर्वज्ञानभ्रमत्वम्; न हि कस्य-चिज्ज्ञानस्य सर्वात्मना वस्तु विषय इति । सत्यपि च विवेकज्ञाने प्रमाणा-न्तरात् द्विचन्द्रदिङ्मोहाद्यनुगतिर्दृष्टेति नाग्रहणमात्रं विपर्ययः ।

प्रसक्तप्रतिषेधात्मा ख्यातिः प्राप्तौ प्रकल्पते ॥ १३९ ॥

नाग्रहः प्रापकोऽभावः प्रापिका विपरीतधीः ।
द्वे च ख्याती तु रजतचक्षुःसंयुक्तवस्तुनोः ॥ १४० ॥

नायं तदुपनीतार्थप्रतिषेधोऽवगम्यते ।
न चाग्रहणमेवैषा प्रतीतिरपबाधते ॥ १४१ ॥

सर्वा ह्यग्रहबाधेन जन्म न स्यात्तथेदृशी ।
विवेकविज्ञानमिदं न प्रसक्तनिषेधधीः ॥ १४२ ॥

इति ब्रुवाणो वैयात्यात् स्वां प्रतीतिमपह्नुते ।
न क्रमे यौगपद्ये वा विवेकमतिरीदृशी ॥ १४३ ॥

प्राप्ते स्यादैक्यसंवित्तौ न भेदस्यानिरूपणे ।
रजतस्य स्मरंश्चक्षुःसंयुक्तस्य च वस्तुनः ॥ १४४ ॥

सामान्यदृष्ट्या रजतादबुद्ध्वा च विविक्तताम् ।
पश्चाद्विविञ्चन् प्रत्येति नैवं सामान्यदर्शने ॥ १४५ ॥

कोटिद्वयस्मृत्यभावे संशयो न नियोगतः ।
विवेकग्रहणाभावात् कालसंनिधिसंविदः ॥ १४६ ॥

तद्वदाभासनात् प्राप्ताविष्टः स्यादन्यथाग्रहः ।
तत्राग्रहो निमित्तं स्यादथवा संनिधिग्रह ॥ १४७ ॥

भेदग्रहापवादेन रहितो भावरूपतः ।
विपर्ययानभ्युपाये भ्रमोऽग्रहनिबन्धनः ॥ १४८ ॥

[1] B omits स.

शब्दैकगम्य उक्तः स्यादग्रहोऽग्रहबन्धनः । १४८½ ।

'नेदं रजतम्' इति प्रसक्तप्रतिषेधरूपा प्रतीतिर्नाग्रहणेऽवकल्पते, प्रसङ्गाभावात् । न खल्वग्रहणं कस्याचित् प्रसञ्जकम्; अभावो हि सः । विपरीता तु ख्यातिः संनिहितस्य रजततामभूतां रजतस्य वा संनिहित[1]तामादर्शयन्ती प्रसञ्जयति । ननु च रजतनयनघटितवस्तुनोः ख्याती स्तः; ते एव प्रसाञ्जिके । सत्यम्; न तु तदुपनीतयोरियं निषेधावगतिः । न हि 'नेदं रजतम्' इति रजतमात्रं चक्षुःसंयुक्तवस्तुमात्रं वा निरस्यमानमवस्यामः; किं तु चक्षुःसंयुक्तस्य तु रजततां रजतस्य वा चक्षुःसंयुक्तताम् । न चैतयोरग्रहणं प्रापकम्, अग्रहणत्वादेव । तस्मादवश्यं प्रतिषेध्यप्राप्तये विपरीतख्यातिरुपासनीया । न च 'नेदम्' इत्यग्रहणमेव वार्यते, सर्वज्ञानेषु ता[2]द्रूप्यप्रसङ्गात् । सर्वज्ञानानामग्रहबाधेनोत्पत्तौ[3] च विवेक[4]ज्ञानमात्रमिदं न प्रसक्तप्रतिषेधरूपमिति प्रतीत्यनुसारिणोऽनुरूपम् । न हि रजतशुक्तिकाशकलयोर्युगपद्विविक्तयोर्ग्रहण ईदृशी प्रतीतिर्न क्रमेण । अविविक्तयोर्ग्रहण ईदृशी स्यादिति चेत् युक्ता, विविक्तयोर्ग्रहणेऽविवेकप्रतिषेधरूपत्वात्; विविक्तयोरग्रहणे प्राप्त्यभावादयुक्ता । अपि च भवति कदाचित्— यः स्मरति च रजतस्य, चक्षुःसंयुक्तस्य[5] वस्तुनः सामान्यमात्रदर्शी, न रजताद्विवेकं गृह्णाति, पुनश्चक्षुःप्रसादात् प्रत्येति; न च तदा तथा प्रतीतिरविवेकग्रहणाभावात् । ननु सामान्यदर्शने न चेद्विपर्ययः, संशयः स्यात्; तदपनोदि च निर्णयज्ञानमीदृशमेव । नैतत् सारम्; न ह्यसति कोटिद्वयस्मरणे सामान्यदर्शनेऽपि संशयः, न च विपर्ययः; भवति हि पुरोऽवस्थिते भास्वररूप[6]मात्रप्रतीतिः, रजते च स्मृतिः । न च तयोरन्यत्वं प्रतिपद्यते, नैकत्वं च; तत्र न विवेकज्ञानमेवंरूपम्, एकत्वाप्रतिपत्तेः । अथ मतम् —विवेकाग्रहणात् कालसंनिधिप्रतीतेश्च रजतं वा चक्षुःसंप्रयुक्तवदवभासते; चक्षुःसंयुक्तं वा रजतवत्; अतः प्राप्तिरिति प्रतिषेधोपपत्तिः । अभ्युपेता तर्हि विपरीतख्यातिः; न ह्यन्या सा अतदात्मनस्तथावभासनात् । कामं

---

[1] B adds त्व.
[2] B adds द.
[3] त्तेः । न—A.
[4] क्त—B.
[5] A adds च.
[6] A omits रूप.

तत्त्वाज्ञान[1]निमित्ता स्यात्; न हि सा तत्त्वज्ञा[2]ने सत्युदेति, विरोधादिति। तत्रापि संनिधिख्यातिरेव निबन्धनम्; तस्यास्तु विवेकग्रहोऽपवादः; अग्रहणे निरपवादा सैव कारण[3]म्, नाभावः। विपरीतख्यात्यनभ्युगमे चाग्रहणनिबन्धनो भ्रम इत्यग्रहणमग्रहणनिबन्धनमिति सुव्याहृतम्! स्वप्ने च द्वितीयाभावात् कुतोऽविवेकः, स्मृतत्वेनाविविक्तस्य तथा विवेके[4] धर्मिणि प्रतिपन्ने धर्मान्तरप्रतिपत्तेर्बाधकत्वं पूर्वस्याश्च भ्रान्तित्वं स्यातामिति।

यः प्रतीतिविरोधस्तु स स्वदोष उदाहृतः ॥ १४९ ॥

सामानाधिकरण्येन बोधाद्रूप्यमिदं मितम् ॥ १४९½ ॥

'इदं शुक्ति[5] रजतम्' इति सामानाधिकरण्येन प्रतीतेरात्मोपा[6]लम्भः परस्मिन्नासज्यते प्रतीतिविरोधः, ज्ञानभेदकल्पनायाः प्रमाणाभावात्।

अनाश्वासो ज्ञायमाने ज्ञानेनैवापबाध्यते ॥ १५० ॥

व्यभिचारादसामर्थ्यं न तत्कार्यस्य लाभतः।

व्यभिचारात्प्रमेयत्व कार्यमेव न लभ्यते ॥ १५१ ॥

यो हि ज्ञायमानेऽर्थेऽन्यथापि स्यादित्यनाश्वासस्तस्य तेनैव ज्ञानेन तथात्वपरिच्छेदिनोत्पत्तिर्निरुध्यते; तथा हि—अनाश्वासनिवृत्तये तद्विधं ज्ञानमेवापेक्ष्यते; तच्चास्त्येव। न च व्यभिचारदोषादसमर्थप्रमाणं ज्ञानमिति युज्यते, प्रमाणकार्यस्य परिच्छेदस्य ज्ञानरूपादेव सिद्धत्वात्; परिच्छेदतो हि प्रामाण्यम्; अतन्त्रता तु व्यभिचाराव्यभिचारयोः, असति तस्मिन् धूमादेरव्यभिचारस्याप्यप्रमाणत्वात्, व्यभिचारवतोऽपि च सितासितादिषु चक्षुषः सति तस्मिन् प्रामाण्यात्। न च व्यभिचारो बाधहेतुर्दो[7]षवत् प्रामाण्योपघाती क्वचिद् दृष्टः, चक्षुरादौ व्यभिचारवति प्रमाणत्वात्। ननु दृष्टो व्यभिचारः प्रामाण्योपघाती प्रमेयत्वोर्ध्वत्वादौ; नैतत् सारम्; न

[1] निमित्तं—B.

[2] ज्ञानेन—B.

[3] णात्राभावः—B.

[4] क—B.

[5] क्ति—B.

[6] पलम्भः—B.

[7] दो—A.

तत्र व्यभिचारादप्रामाण्यम्, अपि तु परिच्छेदकार्याभावात्; तदभाव[1]श्च हेत्वभावात्। अव्यभिचाराद्धि लिङ्गाल्लिङ्गिपरिच्छेदः। यत्र त्वव्यभिचारो न कारणं तत्र व्यभिचारेऽपि सति परिच्छेदे प्रामाण्यमविवादम्; अक्षेषु तद्वदेव [2]च ज्ञानं परिच्छेदनिमित्तम्, न लिङ्गवत्। न च संशयोत्पत्त्या व्यभिचारः प्रामाण्यमुपहन्ति, सम्यक्परिच्छिन्ने[3] द्वैविध्यस्यासंशयहेतुत्वात्; न निश्चिते स्थाणावूर्ध्वत्वेन संशेरते; उत्पत्त्यैव ज्ञानमर्थमवधारयति; अनवधारकं तु नैवेहाधिकृतम्। एवं चावधारणादेवानवधारणमिति विप्रतिषिद्धम्। य एव त्वव्यभिचारमर्थयते ज्ञानस्याश्वासार्थं तस्यैवानाश्वासः, अव्यभिचार[4]ज्ञानेऽप्यनाश्वासात्; न हि तदसिद्ध[5]व्यभिचारमात्मनि ज्ञानान्तरेषु चाश्वासकारणम्। ज्ञानान्तरात् सिद्धावनवस्था। अपि च ज्ञानरूपाच्चेन्नार्थाश्वासः, तस्यासिद्धौ केन सहाव्यभिचारो ज्ञानस्य गृह्येत? किं च ज्ञानरूपादेवाव्यभिचारोऽपि कथ्यते, विपरीतख्यातौ तद्विरोधात्; तथा सति तदेव विषयस्य साधकम्; व्यर्थोऽव्यभिचारः। [6]न च व्यभिचारः प्रामाण्यमुपहन्तीत्युक्तम्।

अपि चाग्रहणेऽभीष्टं यद्विवेकनिबन्धनम्।
न पराणु[7]द्यते दण्डैस्तद्विपर्ययदर्शने ॥ १९२ ॥

नोद्रेकहेतवो दोषाः कार्यसामर्थ्यघातिनः।
ग्रहाग्रहविभागः स्यादतस्तत्सदसत्त्वतः ॥ १९३ ॥

विपर्यये हि नितरामुपघातः प्रकल्पते।
[8]इष्टकार्योपरोधेन विपरीतोदयेन च ॥ १९४ ॥

तस्मात्तत्सदसत्त्वाभ्यां विवेकोऽन्या[9]पि कल्पते।
दोषेऽसत्यग्रहाशङ्का कथं च विनिवर्तते ॥ १९५ ॥

---

[1] वा—B.
[2] न—B.
[3] न्न—B.
[4] री—B.
[5] द्धा—B.
[6] B omits न च व्यभिचारः.
[7] न्नु—B.
[8] इष्टं कार्योपघातेन—B.
[9] धि—B.

न हि कारणसद्भावे कार्यसत्ता नियोगतः ।
प्रत्यक्षं कार्यमेवं च हेतुनानुमितं भवेत् ॥ १९६ ॥

विपर्यये फलाभावो हेत्वभावात्तु युज्यते ॥ १५६½ ॥

विवेकोपायश्च दोषाभावभावौ ग्रहणाग्रहणयोर्न दण्डवारितौ । विपर्यये विपर्ययहेतवोऽभ्युपघातकाः सुतरामिष्टकार्योपरोधाद्विपरीनोदयाच्च । न चादु[1]ष्टेष्व[2]पीन्द्रियादिषु अ[3]ग्रहाशङ्कानिवृत्तिः, यतो हेतुभावेऽपि न नियोगतः कार्यम् ; विपर्ययश्च स्यात्; प्रत्यक्षासंवित्तिर्हेतुनानु[4]मीयेत । फलात्तु हेतो र्हेतुमात्रानुमानम्; दोषाभावात्तु विपर्ययकार्यो[5]सत्त्वं युक्तानुमानम्, हेत्वभावे कार्यानुत्पादात् ।

अनालम्बनतापत्तिर्यथाकारान्तरार्पण[6]म् ॥ १९७ ॥

स्वरूपानर्पणादेवं भवेदग्रहणेऽपि ते ।
कस्यचिच्चेदर्पणं तुल्यमथ तत्र न तत्तथा ॥ १९८ ॥

परस्यापि हि तत्रैवमथ तत्र तथा स्थितेः[7] ।
सर्वत्र स्यात्तथाभावः स्यादेवं ग्रहणेऽपि ते ॥ १९९ ॥

यथा तत्रानिमित्तत्वात् सम्यग्ज्ञानेऽनिमित्तता ।
शङ्क्यते ग्रहणेऽप्येवमग्रहे सा निरूपिता ॥ १६० ॥

ज्ञानादेव निमित्तत्वमन्येषां न विशिष्यते ॥ १६०½ ॥

आलम्बनत्वहानं च यथाकारान्तरावभासे चक्षुःसंयुक्तस्य तथाग्रहणेऽपि, स्वरूपानर्पणस्य तुल्यत्वात् । अथ कस्यचित् सामान्यरूपस्य स्वा[8]कारत्वात्— [9]अथ कानिचिच्चक्षुःसं[10]युक्तानि वस्तूनि स्वेन रूपेण गृह्यन्त इति कस्यचिदग्रहणेऽपि नानालम्बनत्वम्—तुल्यम्; आकारान्तरावभासेऽपि केषांचित्

---

1 द—B.
2 A omits अपि.
3 B omits अ.
4 मीयते—B.
5 र्थे—B.
6 णात्—A.
7 स्थिते—B.
8 स्वकार—B.
9 A omits अथ.
10 A adds प्र.

[1]स्वाकाराणामवभासनात् । अथाग्रहणे नैव चक्षुःसंयुक्तस्यालम्बनत्वमिष्यते, परोऽपि नैव विपर्यय इच्छति[2]; एवं ह्युक्तम्—

[3]"तस्माद्यदन्यथा सन्तमन्यथा प्रतिपद्यते ।
तन्निरालम्बनं ज्ञानमभावालम्बनं च तत् ॥"

अथ विपर्यये चक्षुःसंयुक्तस्यानालम्बनत्वादन्यत्राप्यनालम्बनताशङ्का, अग्रहणेऽपि तुल्या । यथा खलु विपर्ययज्ञाने चक्षुःसंप्रयुक्तवस्तुस्वभावनिरपेक्षता दृष्टा सम्यग्ज्ञानेऽपि [4]शङ्कयते ज्ञानत्वसामान्यात् तथा चक्षुःसं[5]प्रयुक्तमपि वस्तु नाविकलरूपं गृह्यते, तेना[6]नालम्बनं भवति, सदृशस्मृतिहेतुतां च प्रतिपद्यते—इत्यग्रहणे दृष्टानालम्बनता ग्रहणेष्वपि कस्मान्न [4]शङ्कयते? दोषाभावादिति चेत्, विपर्ययेऽपि तुल्यम् : न चान्यथालम्बने निरालम्बनत्वम् । चक्षुस्त्वन्यथापि नालम्ब्यते । आलम्बनार्थश्च रजतव्यवहारयोग्यता शुक्तेः ; तथा हि—रजतार्थी तामादत्ते ; घटस्यापि हि नैवान्यत् स्वज्ञानालम्बनत्वमन्यत्र व्यवहारयोग्यतायाः, यतो न विषयाकारं ज्ञानम् ; तत्र शुक्तिः स्वरूपेण नालम्बिता रजतज्ञानेन, तन्निबन्धनव्यवहाराभावात्; रजतरूपेण तु तन्निबन्धनस्योपादानव्यवहारस्य तत्र भावादिति ।

क्रियानिष्ठेऽपि विधौ वस्तुस्वरूपसिद्धये कश्चिदाह—

अवघातप्रोक्षणादेर्यथा द्रव्यार्थता स्थिता ॥ १६१ ॥

ज्ञानं स्वभावाद्द्रव्यार्थं कर्मत्वाच्चात्मनस्तथा ।
भवत्वेवं तथापीष्टरूपसिद्धिः कुतो मता ॥ १६२ ॥

शब्दस्तदर्थकार्यत्वे तावज्ज्ञानस्य निष्ठितः ।
ज्ञानाज्ज्ञेयस्य कोऽन्योऽर्थः स्वरूपप्रतिभासनात् ॥ १६३ ॥

अदृष्टकल्पना युक्ता न च दृष्टस्य संभवे ।

---

[1] स्वकाराणा—B.
[2] B adds इति.
[3] Ślōka-Vārtika, page 245.
[4] शक्यते—B.
[5] A omits प्र.
[6] B omits तेना.

तस्माद्यथा प्रोक्षणादिविधेर्व्रीहिषु गम्यते ॥ १६४ ॥

अदृष्टा संस्कृतिर्ज्ञानविधे रूपं तथात्मनः ॥ १६४½ ॥

यथा अवघातप्रोक्षणादयः स्वरूपेणैव द्रव्यार्थाः, द्वितीयया च द्रव्यस्य कर्मत्वेन निर्देशात, तथा ज्ञानमपि स्वरूपेण परार्थम्; कर्मत्वेन चात्मनो निर्देशात्तदर्थम्। अतो ज्ञानविषयोऽपि विधिरात्मरूपं संस्पृशति, न ज्ञानमात्रे पर्यवस्यति, ज्ञानस्यात्मरूपार्थत्वेन कर्तव्यतावगमात् ज्ञाननियोगेनैवात्मरूपस्याक्षेपात्। स्यादेतत्—भवतु ज्ञानस्यात्मार्थताभिप्रेता; अपहतपाप्मादिरूपात्मप्रतीतौ तु प्रमाणं वाच्यम; शब्दस्तावदेवंविधात्मज्ञानकर्तव्यतायां पर्यवसितः—'एवं विधात्मोद्देशेन ज्ञानं कुर्यात्' न तु 'एवं विध आत्मा' इति। तत्रोच्यते—न हि तत्राकिंचित्करस्य तादर्थ्येन कर्तव्यता युज्यते; ज्ञानस्य च कर्मणि नान्यत् फलं तद्रूपसंवित्तेः; न हि तस्यां दृष्टायामन्यस्यादृष्टस्य कल्पना। तत्र यथा "[1]व्रीहीन् प्रोक्षति" इति प्रोक्षणविधेरेव व्रीहिष्वदृष्टसंस्कारावगमः प्रोक्षणविषयादपि; नान्यथा व्रीह्यर्थे प्रोक्षणे कर्तव्यता युज्यते; न हि तत्र किंचिदकुर्वत् प्रोक्षणं तदर्थं[2] कृतं स्यादित्येवं विधेरेवादृष्टसंस्कारसद्भावसिद्धिः; यथा "[3]स्वर्गकामो यजेत" इति; नान्यथा स्वर्गकामस्य यागकर्तव्यताप्रतीतिर्युज्यते यदि न स्वर्गोपायो यागः; अनुपाये चेन्नियुज्यते, न स्वर्गकामो नियुक्तो भवति; अनुष्ठितोऽपि न स्वर्गकामेनानुष्ठितो भवतीति क्रियाविषयादपि विधेः साध्यसाधनभावावगमः शाब्दः—तथा ज्ञानविषयादपि विधेरात्मरूपबोधः; न हि तद्विधमात्मानमुद्दिश्य ज्ञाननियोगो युज्यते अतद्विधश्चेदात्मा तेन ज्ञानेन प्रतीयत इति।

उक्तोत्तरमिदं यस्मादरूपेणापि भासकम् ॥ १६५ ॥

ज्ञानं प्रदर्शितं न स्यादन्यथा तद्विधेः फलम्।
लयो निवर्त्यो न तथा विक्षेपो हि यथासुखः[4] ॥ १६६ ॥

---

[1] Ap. Śr. Sū. 1-9-1.
[2] र्थेकृ—B.
[3] Tait. Saṁ. 2-5-5.
[4] सं—B.

लयविक्षेपभेदश्च न स्यादग्रहमात्रके ।
नन्वरूपावभासे स्याददृष्ट[1]फलकल्पना ॥ १६७ ॥

रूपावभासे दृष्टं तु फलं तत्सिद्धिलक्षणम् ।
न दृष्टमात्राद् दृष्टार्थं पुरुषार्थानुगं तु तत् ॥ १६८ ॥

न भिद्यते च तद्भावो रूपारूपावभासयोः ।
यथा प्रपञ्चशून्यत्वे तत्त्वे ज्ञानावभासिते ॥ १६९ ॥

दुःखकर्मक्लेशहानमतत्त्वेऽपि तथा भवेत् ।
एतच्चात्र भवेद्युक्तं प्रत्यक्षाद्यविरोधतः ॥ १७० ॥

अनौप[2]चारिकार्थाश्च स्युः कर्मविषयो यतः ॥ १७०½ ॥

आत्मार्थज्ञानविधेरेतावद्गम्यते—ज्ञानेन सोऽवभास्यते, आलम्ब्यते, व्यवहारयोग्यतामापाद्यते । तच्चावभासनं स्वरूपेण च दृष्टम्, पररूपेण च; रजतात्मना शुक्तिकायाः । प्रतिपादितमेतत्—नाग्रहमात्रमेतत्, अन्यथाख्यातिस्तु । तत्रोभयथा[3] संभवे कुत एतत्—तत्त्वप्रतिपत्तिरवश्याभ्युपेया, नातस्मिंस्तत्ख्यातिः? अन्यथा नात्मज्ञानविधिः फलवान् स्यात्; स खल्व नात्मरूपप्रविलयार्थः; अनात्मरूप[4]विलयेन हि वस्तुनोऽवगतिर्दृष्टेति । यदि च नात्मनो नामरूपप्रपञ्चरूपेण प्रकाशनम्, किं प्रविलाप्येत? अथ मतम्—द्विप्रकारेयमविद्या, प्रकाशस्याच्छादिका विक्षेपिका च; स्वप्नजागरितयोर्विक्षेपिका, सुषुप्त आच्छादिका लयलक्षणा । तत्राच्छादकाविद्यानिवृत्तिर्ज्ञानविधेः फलम् । तच्चासत्; यतो नाच्छादिकाया अविद्याया निवृत्तिः पुरुषेणार्थ्यते तथा यथा विक्षेपस्य; स हि विविधदुःखात्मकः; लयस्तु विविधदुःखनिवृत्तेरसकृदानन्दत्वेन श्रुतौ गीतः प्रत्युतार्थनीयः स्यात् । अपि च विपर्यासमनिच्छतोऽविद्याभेद एव न स्यात्, अवस्थात्रयेऽप्यग्रहणमात्रत्वात् । तस्मादग्रहणविपर्ययग्रहणे द्वे अविद्ये कार्यकारणभावेनाव-

---

1 दृं—B.

2 चरितार्थो—B.

3 स्या—B.

4 B adds प्र.

स्थिते; स्वप्नजागरितयोरुभे; कारणभूताग्रहणलक्षणा सुषुप्त इत्यविद्याप्रविभाग उपपद्यते । तदुक्तम्—

'[1]कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।
प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिध्यतः ॥"

नन्वन्यथायं भेदः—अग्रहणासम्यग्ग्रहणाभ्याम्; अग्रहणलक्षणाच्छादिका सुषुप्ते, असम्यग्ग्रहणमितरयोः; तथा हि—अभिन्नस्य वस्तुनोऽप्रदेशस्य ग्रहणे तथाभावस्य चाग्रहणात् पृथक्त्वेन प्रत्यवभासः । नैतत् सारम्; यदि ताव-दसम्यग्ग्रहणमात्रं तदपटुत्वं वा ज्ञानस्य केन[2]चिद्रूपेण वा ग्रहणम्, न सर्वात्मना; तत्र दूरस्थे सूक्ष्मे च भवत्यपटु ज्ञानं [3]सामान्यज्ञानम्; न च तदविद्या । न च किंचिज्ज्ञानं सर्वात्मनार्थस्य ग्राहकमिति सर्वज्ञानमिथ्या-त्वापातः । अभेदस्याग्रहणेऽपि भेदस्यासंवित्तेर्न निवर्तनीयमस्ति विद्यया । न खल्वभेदाग्रहणं[4] निवर्तनीयम्; न हि तत् किंचिदपराध्यति । भेदस्तु विविधदुःखायतनम् । अथासम्यग्ग्रहणं पृथक्प्रत्यवभासोऽपृथगात्मनः, अभ्यु-पेता तर्हि विपर्ययख्यातिः—अपृथक् पृथक् प्रकाशत इति । अथो-[5]च्येत—न ब्रूमः [6]पृथक् प्रकाशते, किं तु पृथगिव प्रकाशत इति; क इवार्थः? यदि यथा [7]पृथग्भूतमप्रकाशमानैकत्वं प्रकाशते तथैकमप्यात्म-तत्त्वमगृह्यमाणैकत्वं प्रकाशत इति; केनचिदंशेन ग्रहणं सर्वात्मना चाग्रहण-मुक्तं भवति, तत्र चोक्तम् । अथ प्रकाशत इव, न तु प्रकाशते; [8]प्रका-शने क उपमार्थः? तन्निबन्धनव्यवहारप्रवृत्तिः । तन्निबन्धनश्चेद्व्यवहारः, प्राप्तं प्रकाशनम्—नासति कारणे कार्यं भवतीति । अथाभेदाग्रह एव पृथक्त्व-ग्रहाभिमानः; तदसत्, अग्रहणस्याभावस्य स्वरूपेण पररूपेण वा ग्रहणान-भ्युपगमात् । अप्रकाशमाने च पृथक्त्वे कुतस्तद[9]वग्रहः? अभिन्ने च भेदा-भिमानं परित्यज्याभेदाग्रहणे भेदग्रहाभिमानमूरीकुर्वता किं परिहृतं स्यात्? तस्मात् सुष्ठूच्यते—'लयविक्षेपभेदश्च न स्यादग्रहमात्रके' इति ।

---

[1] Māṇḍ-kār. 1-11.
[2] B adds वा.
[3] B omits सामान्यज्ञानं.
[4] णा—B.
[5] च्यते—B.
[6] B omits पृथक्.
[7] पृथग्भूमेः प्र—B.
[8] B omits प्रकाशने.
[9] B omits व.

नन्वनात्मरूपेण प्रतिपत्तेर्न दृश्यते किंचित् फलम्; तत्रादृष्टकल्पना स्यात्; आत्मरूपप्रतिपत्तेस्तु दृष्टं फलं तत्स्वरूपसिद्धिः। उच्यते—न यस्य कस्यचिद्दर्शनाद् दृष्टार्थता, किं तु पुरुषार्थसंस्पर्शिनः; [1]तेन हि तद्विधिर्निराकाङ्क्षा भवति। न च पुरुषार्थभेदस्तत्त्वातत्त्वप्रतिपत्त्योः; यथा हि विशुद्धमद्वैतमात्मानं प्रतिपद्यमानस्तथाभूतो न शोकेन संस्पृश्यते, शोचनीयाभावात्; न कर्माशयमुपचिनोति, कर्त[3]व्याभावात्; न क्वचिद्रज्यति किंचिद् द्वेष्टि वा, विषयाभावात्; [2]एवं जीवन्नेव विद्वान्विमुक्तो भवति; तथा अतथाभूतमपि तथाभावनापुरःसरं साक्षादिव प्रतिपद्यमानः; अभूतोऽप्यर्थः परिभावनातिशयाद्भूतव्यवहारहेतुर्भवति। इदमेव चात्र युज्यते, प्रत्यक्षादीनामविरोधात्, कर्मविधीनां च भूतार्थत्वात्। परमार्थे हि प्रपञ्चशून्यत्वे प्रत्यक्षादीनि प्रमाणानि बाध्येरन्; कर्मविधयश्चाभूतकल्पनोपादानव्यवहारसिद्धार्थगोचराः स्युः। तस्मादपरमार्थेनैवाद्वैतात्मज्ञानविधिर्युज्यते।

जानातिस्तत्त्वबोधे चेन्न मिथ्यादिविशेषणात् ॥ १७१ ॥

नात्मा ज्ञातस्तथा स्याच्चेन्न तद्रूपाविधानतः।
प्रमाणान्तरसिद्धत्वे नतरामन्यथा यदि ॥ १७२ ॥

शब्दार्पितेन रूपेण तस्य ज्ञानं विधीयते।
अतत्त्वेनापि तेनास्य विज्ञानमवकल्पते ॥ १७३ ॥

यदि मतम्—"[5]स विजिज्ञासितव्यः" इति जानातिस्तत्त्वपरिच्छेद एव वर्तते; तेन नाभूतसमारोपेण ज्ञानविधिः स्यादिति; तन्न; मिथ्यात्वादिभिर्ज्ञानं विशेष्यते—मिथ्याज्ञानं सम्यग्ज्ञानं संशयज्ञानमिति; तदेकनियमे नोपपद्येत, पौनरुक्त्याद्विरोधाच्च। स्यादेतत्—अस्वरूपेण प्रतिपत्तौ न तदात्मज्ञानम्, अन्यज्ञानमेव भवति; [6]तत्त्वज्ञानं च विधीयते; तस्मात् तत्त्वसिद्धिरिति। तच्च न; न खल्वेतावदेव तत्—'आत्मा ज्ञातव्यः' इति;

---

[1] केन—B.
[2] तं न—B.
[3] व्यता—B.
[4] एव—B.
[5] Chānd. 8-7-1.
[6] तज्ज्ञानं—B.

यदि स्यात् तद्रूपज्ञानविधिः; तच्च न, उभयथानुपपत्तेः; प्रमाणान्तरसिद्धं चेदात्मरूपं न तज्ज्ञानं[1] विधेयम्; अथासिद्धम्, अशक्यमेव तत्। स्यादे[2]तत्—"[3]अपहतपाप्मा विजरो विमृत्युः" "[4]इदं सर्वं यदयमात्मा" इति शब्दसमर्पितरूपस्य तस्य ज्ञानं विधीयते; तेन च तत्त्वेनापि तत् संभवति समारोपितेनापि; तेन न नियोगतस्तथाभूतज्ञानविधेस्तथा[5]भावोऽस्य प्रतीयते।

ज्ञानं यदि च दृष्टार्थं प्राप्तं दृष्टत एव तत्।
आत्मरूपविजिज्ञासोरजिज्ञासोर्वृथैव तत्॥ १७४॥

तदुपायो न चेज्ज्ञातस्तस्यैवास्तु विधिस्ततः।
अवघातादिविधयो नादृष्टस्पर्शवर्जिताः॥ १७५॥

अलौकिकमिदं ज्ञानमतो यदि विधीयते।
न रूपसिद्धये तावद्यतः कर्तव्यता विधेः॥ १७६॥

कर्तव्यता च दृष्टार्थे दृष्टादेव प्रसिध्यति।
अलौकिकेऽर्थरूपेऽतः शब्देन प्रतिपादिते॥ १७७॥

ज्ञाने ज्ञेयाभ्युपायत्वात् स्वयमेवोन्मुखः पुमान्।
तदुपाये त्वविज्ञाते विधिना स प्रवर्त्यताम्॥ १७८॥

नियोगानुप्रवेशोऽस्मो विहन्त्येव प्रमाणताम्।
भूतार्थ इति नोपास्यो भूतार्थगतिमिच्छता॥ १७९॥

यदि च ज्ञानस्य दृष्टं फलम्, तत एव प्रवृत्तिसिद्धेर्व्यर्थो विधिः। यो ह्यात्मरूपमनुभवितुकामः, स तस्य ज्ञाने स्वयमेव यतते; यस्तु न तथा, तस्य तद्व्यर्थमिति विधिशतेनापि स न प्रवर्त्यते। अथोपायाज्ञानाद् दृष्टफलेऽपि न प्रवर्तते स्वयम्, अतो विधीयत इति; तच्च वार्तम्; यतः स एवोपायो विधीयताम्, यत्रायमज्ञानान्न प्रवृत्तः; ज्ञाने तु दृष्टफलत्वात् प्रवर्तत

[1] ज्ञान—B.
[2] स्यादेव तत्—B.
[3] Chānd. 8-7-1.
[4] Bṛh. 2-4-6.
[5] भावस्य—B.

एव । स्यादेतत्—अवघातादिषु दृष्टफलेष्वपि दृष्टो[1] विधिः । सत्यम्; न त्वदृष्टसंस्पर्शरहितः; तत्रापि हि नियमादृष्टं फलं तण्डुलेषु तत्प्रणाड्या वा प्रधानापूर्वसिद्धिरदृष्टैव । अथ मतम्—अद्वैतात्मज्ञानमदृष्टपूर्वमलौकिकम्; अतोऽनन्तरफलमपि विधीयत इति । तत्रोच्यते—किमर्थं विधीयते; प्रमाणान्तरागोचरस्य स्वरूपप्रतिपत्त्यर्थम्, आहोस्विदनुष्ठानार्थम्? तत्र न स्वरूपसिद्ध्यर्थम्; अनुष्ठानफलो हि विधिर्नानुष्ठानाय, दृष्टार्थत्वादेव तत्सिद्धेः । तस्मादलौकिकेऽपहतपाप्मादिरूप आत्मतत्त्वे शब्दात् प्रतिपन्ने तस्य साक्षाज्ज्ञानं प्रति तदनुभवोपायत्वात् स्वयमेव पुरुषस्याभिमुख्यं भवतीति व्यर्थं तद्विधानम्, यथाश्चर्यभूते कस्मिंश्चिदर्थे आगमात् प्रतिपन्ने तस्य साक्षात्करणे स्वयमेवोन्मुखत्वं भवति; तदुपायेषु त्वज्ञातेषूपायत्वज्ञापनाय विधानं युज्यते । तदेवं ज्ञाने नियोगानुपपत्तेर्नियोगे च वस्तुरूपावगमे प्रामाण्यायोगाद्व्यवस्थितात्मतत्त्वप्रतिपत्तिमिच्छता शब्दान्न तस्य नियोगानुप्रवेशोऽभ्युपगन्तव्य इति ।

इदानीं द्वितीयप्रतिपत्तिविधिनिरासायाह —

अत एव न विज्ञानसंतानविधिनिष्ठता ।
तत्रापि पूर्ववन्न स्यात् स्वरूपावगतिप्रमा ॥ १८० ॥

स्वरूपनिष्ठाच्छब्दात्तु प्रमितस्य वचोऽन्तरात् ।
उपासनविधानं स्यात् प्राप्तेस्तदपि वा वृथा ॥ १८१ ॥

अभ्यासेन प्रत्ययस्य प्रकर्षस्याभिवीक्षणात् ।
तस्माद्भवत्यकार्येऽर्थे वेदान्तानां प्रमाणता ॥ १८२ ॥

यदपि मतम्—"[2]स क्रतुं कुर्वीत" "[3]प्रज्ञां कुर्वीत" "[4]निदिध्यासितव्यः" इति, यत्रापि स्वरूपनिष्ठतैव लक्ष्यते "[5]तत् त्वमसि" इति, तत्रापि 'सदस्मि—इति चेतो धारयेत्' इति विवक्षितत्वाच्छ्रवणादन्यदनुचिन्तनं ध्यानं प्रत्ययप्रवाहो विधीयते कर्मवदेवामृतत्वफलम् ।

---

[1] दृ- B.
[2] Chānd. 3-14-1.
[3] Bṛh. 4-4-21.
[4] Bṛh. 2-4-5.
[5] Chānd. 6-8-7.

तदप्यत एव न युज्यते, पूर्वोक्तात् तत्त्वावगतिप्रमाणाभावप्रसङ्गादन्यनिष्ठत्वाद्वाक्यस्य। अथ तु वाक्यान्तरात्तत्त्वनिष्ठादधिगते तद्विषयप्रत्ययप्रवाहविधानमिष्यते; भवतु; न कश्चिद्दोषः; तथा च "[1]विज्ञाय प्रज्ञां कुर्वीत" इत्यात्मतत्त्वविज्ञानस्य सिद्धतां दर्शयति। तदपि वा व्यर्थमेव, प्राप्तार्थत्वात्; साक्षात्करणफलं[2] हि तत्त[3]दनुचिन्तनं दृष्टार्थम्, न ततोऽन्यत् फलमाकाङ्क्षते[4]। अमृतत्वं हि न स्वरूपाविर्भावादन्यदिति प्राग्वर्णितम्। दृष्टा च ज्ञानाभ्यासस्य सम्यग्ज्ञानप्रसादहेतुता लोके। भावनाविशेषाद्धि अभूतमप्यनुभवमापद्यते, किं पुनर्भूतम्। "[5]स क्रतुं कुर्वीत" इति तु [6]न सकलविशेषातिगात्मतत्त्वानुचिन्तनं विधीयते तद्भाव[7]फलम्; अपि तु नामरूपोपाधिमनोमयप्राणशरीरादिरूपानुध्यानमैश्वर्यफलम्, क्रमेण वा साक्षात्करणफलम्। "[1]तमेव धीरो विज्ञाय" इति न प्रज्ञाकरणविधिः; 'तमेव' इत्यन्यनिवृत्तेः श्रुतत्वान्निवृत्तौ तात्पर्यं गम्यते, 'रक्तः पटो भवति' इति यथा रक्तपरत्वं वाक्यस्य; अत्र ह्याकाशादितत्त्वभेदपूर्वमविभागः प्रतिपादितः, तत्र तथैव प्रज्ञाकरणप्रसङ्गे 'तमेव' इति विधीयते; तथा च पूर्वार्धे—"[8]विरजः पर आकाशादज आत्मा महान् ध्रुवः।" इत्याकाशादिभ्यः परत्वेनात्मतत्त्वं दर्शितम्; तस्य तथैव प्रज्ञाकरणप्रसङ्गे तन्निवृत्तये 'तमेव' इत्युच्यते; अन्यथा न एवशब्दस्य फलम्, न च निवर्त्यं विज्ञायेत; तथा च तदेवोत्तरेण प्रपञ्चयते "[1]नानुध्यायाद्बहूञ्छब्दान्" इत्येकवाक्यता; अन्यथा वाक्यं भिद्येत; शब्दमात्रे चानुध्यानाप्रसङ्गात् शब्दपूर्वत्वात्तस्य शब्दार्थविषयमेवदेमिति। एवम् "[9]आत्मेत्येवोपासीत" इत्येवकारश्रुतेस्तदर्थविधिः। "[10]निदिध्यासितव्यः" इत्यपि "[10]आत्मनस्तु कामाय" इत्युपक्रमात् "[11]इदं सर्वं

---

[1] Bṛh. 4-4-21.
[2] B omits फलं.
[3] तदनु—A.
[4] दृक्षयते—B.
[5] Chānd. 3-14-1.
[6] B omits न.
[7] भावे—B.
[8] Bṛh. 4-4-20.
[9] Bṛh. 1-4-7.
[10] Bṛh. 2-4-5.
[11] Bṛh. 2-4-6.

यदयमात्मा" इत्युपसंहारादात्मस्वरूपपरमेकं वाक्यम्; तदन्तर्गताः "[1]द्रष्टव्यः श्रोतव्यो निदिध्यासितव्यः" इति न पृथग्विधयः कृत्यप्रत्यययोगेऽपि; कृत्यप्रत्ययस्यार्थान्तरेऽपि स्मरणादर्हादौ स्तुत्यर्थाः यथोपांशुयाजवाक्यान्तर्गताः "[2]विष्णुरुपांशु यष्टव्यः" इत्येवमादयः। "[3]ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत्त्वमसि" इति भूत एव पर्यवसितं वाक्यम्। तत्र 'सदस्मि—इति धारयेत्' इति कल्पनेयम्। तस्मात् त्रिविधस्यापि ज्ञानस्य विधेयत्वायोगात्, विना च विधेर्वाक्यार्थप्रतिपत्तेः, अपौरुषेयत्वेन निरपेक्षत्वाद्भूतेऽप्यर्थे वेदान्तानां प्रामाण्यसिद्धिः। तथा च "[4]तत्तु समन्वयात्" इति चोदनालक्षणाद्धर्मात् तुशब्देन विशेष्य ब्रह्म समन्वयगम्यमुक्तम्। समन्वयो हि पदार्थानां संसर्गो विनियोगस्ततो ब्रह्म गम्यते, न चोदनात इत्यर्थः।

नन्व[5]विशेषेण कार्येऽर्थे वेदस्य प्रामाण्यं वर्णितम्—"[6]चोदनालक्षणोऽर्थो धर्मः" इति; चोदनालक्षणो वेदार्थ इत्यर्थः। नैतत् सारम्; एवं हि सिद्धप्रामाण्यवेदार्थविचारोऽयं स्यात् तदुत्तरलक्षणवत्; तत्रानन्तरं प्रामाण्यप्रतिपादनं न युज्येत, "[7]वृत्तं प्रमाणलक्षणम्" इति च; मन्त्रार्थवादेषु च कार्यार्थत्वेन विप्रतिपत्तिर्न स्यात्; सा चोपरिष्टादेव निरासिष्यते बहु चात्र वक्तव्यमित्यलं प्रसङ्गेन।

यथान्यमानव्यतिभेदमुक्ता मतिः प्रमाणत्वमुपैति कार्ये।
अपौरुषेयागमलब्धजन्मा तथैव सिद्धे निरपेक्षभावात्॥ १८३॥

॥ इति नियोगकाण्डस्तृतीयः॥

---

[1] Bṛh. 2-4-5.
[2] Tait. Saṁ. 2-6-6.
[3] Chānd. 6-8-7.
[4] Brahm.-Sū. 1-1-4.
[5] B omits न्व.
[6] Mīm.-Sū. 1-1-2.
[7] Śābarabhāṣya. 2-1-1.

ओम्

## ॥ चतुर्थः (सिद्धि)काण्डः ॥

एवं तावत् प्रतिपत्तिकर्तव्यताप्रामाण्यव्याजेन यैरप्रामाण्यमुक्तं तत्प्रतिबोधनाय कृतः प्रयत्नः; इदानीं त्वप्रामाण्यमेवाहुर्ये तद्बोधनाय प्रयत्यते। तत्र पूर्वः पक्षः—

नन्वन्वितपदार्थत्वाद्वाक्यार्थस्य पदार्थताम्।
अप्राप्य न स्याद्वाक्यार्थः पदार्थत्वेऽन्यमानकः ॥ १ ॥

न तावद्ब्रह्मान्तर्याम्यादिपदं प्रमाणम्, संवन्धज्ञानापेक्षया पूर्वसिद्धे प्रत्ययहेतुत्वेन। नापि वाक्यम्; न हि तत् साक्षाद्वाचकम्; पदार्थद्वारा तु तत प्रतिपत्तिः, अपदार्थे ज्ञानस्याभावात्। ते हि संसर्गाद्गुणप्रधानभावेनेतरपदार्थविशिष्टमेकं[1] पदार्थं गमयन्ति। तत्र पदार्थ एव विशिष्टो वाक्यार्थो भवति। न चानधिगतेषु प्रमाणान्तरेण पदार्थत्वम्; संबन्धज्ञानापेक्षणात् इत्युक्तम्। तत्रापदार्थत्वे न वाक्यविषयत्वम्; अनवबोधकं तेषां वाक्यम्। पदार्थत्वे प्रमाणान्तराधिगतेरनुवादकम्। तत्रात्यन्तापरिदृष्टब्रह्माद्यर्थप्रमाणाभिमतेषु वाक्येषु तद्वाचीनि पदानि स्युः, न वा। यदि न सन्ति, न त इतरैः संसृज्येरन् न भिद्येरन्निति न तेषां प्रमेयाः[2], लोष्टादिवत्। अथ तु सन्ति, तथापि तैरधिगतसंबन्धैर्न प्रतिपाद्येरन्। अप्रतिपन्नाश्च न विशिष्टवाक्यार्थप्रतिपत्तिहेतवः; तत्र यथा 'वनात् पिक आनीयताम्' इति पिकपदार्थाज्ञानेऽनवबोधकत्वं तथा तेषामपि। तस्मान्न चोदनातोऽपूर्वपदार्थावगमः; सा हि विधिप्रतिषेधाभ्यां क्रियासु पुरुषमधिकरोति; त्रैविद्यवृद्धपरिग्रहस्तु जपोपयोगात्, उपनिषदो वेदान्ताः —इति तत्र विनियोगात्।
[3]तत्रोच्यते—

सामान्येन पदार्थत्वे सिद्धेऽसाधारणैर्[4]गुणैः।
शक्यापूर्वविशेषस्य लोकवत् प्रतिपादना ॥ २ ॥

---

[1] मेकपदार्थं—B.
[2] मायाः—B.
[3] अत्रोच्यते—B.
[4] गुणे—B.

यथा लोके 'द्वीपविशेषे एवंनामानो मरतकमयपादाः पद्मरागमय चञ्चवः सौवर्णराजतपक्षाः पक्षिणः' इति पक्षिसामान्यं प्रमाणान्तराधिगतमनन्यसाधारणेन धर्मकलापेन संसृज्यमानं प्रमाणान्तरानधिगतं विशेष[1]रूपमासादयति, वाक्येन च प्रमीयते प्रमाणान्तरानधिगतेन विशेषरूपेण—सर्वस्यैव हि वाक्यस्यानधिगतो विशेष एव प्रमेयः—तथा कारणसामान्यं वा सत्सामान्यं वा "[2]यतो वा इमानि भूतानि जायन्ते" इति "[3]अस्थूलमनण्वह्रस्वम्" इत्यादिपदार्थैः संसर्गाद्भेदाच्च प्रमाणान्तरानधिगतं विशेषरूपमासादयति, वाक्यस्य च प्रमेयं भवति । तदेवं लोकसिद्धपदार्थान्वयेनैवापूर्वार्थप्रतिपत्तेर्नानवबोधकत्वमनुवादकत्वं वा ।

सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते ।
प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते ॥ ३ ॥
प्रविलीनप्रपञ्चेन तद्रूपेण न गोचरः ।
मानान्तरस्येति मतमाम्नायैकनिबन्धनम् ॥ ४ ॥

अथवा न लोकेऽत्यन्तमप्रसिद्धं ब्रह्म, सर्वप्रत्ययवेद्यत्वात्, ब्रह्मणो व्यतिरेकेण प्रत्येतव्यस्याभावात्, विशेषप्रत्ययानां च सामान्यरूपानुगमात्, भेदोपसंहारावशिष्टं च सत्यं ब्रह्म—इति प्रतिपादनात्, "[4]वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति दृष्टान्तात् । किं तर्हि शब्देन प्रतिपाद्यते ? प्रपञ्चाभावः । तत्र प्रपञ्चपदार्थोऽपि सिद्धः, निषेधोऽपि सिद्धः, तयोः संसर्गात्तदभावप्रतिपत्तिः । आम्नायैकनिबन्धनत्वं तु तस्योच्यते, प्रत्यक्षादीनामविद्यासंभिन्नत्वात्; प्रत्यस्तमित[5]निखिलभेदेन रूपेणाविषयीकरणाद्भेदप्रत्यस्तमयस्याम्नायावगम्यत्वादिति ।

परः पुनः प्रत्यवतिष्ठते—

ननु चापुरुषार्थत्वं भूतनिष्ठे प्रसज्यते । ४½ ।

यत् खलु वाक्यं न पुरुषं क्वचिद्धितसाधने प्रवर्तयति अहितसाधना[6]च्च

---

[1] पं—B.
[2] Tait. 3-1.
[3] Bṛh. 3-8-8.
[4] Chānd. 6-1-4.
[5] सकल—B.
[6] नाद्वा—B.

निवर्तयति, केवलं सिद्धमर्थमन्वाचष्टे, तदपुरुषार्थम्; अपुरुषार्थत्वाच्चोन्मत्त-प्रलापवदप्रमाणम्; तथा च प्रायेण वेदान्ताः ।

उच्यते—

प्रमाणस्य न चैतावत्पुरुषार्थैकनिष्ठता । ५ ॥
[1](उपेक्षामपि हि फलं प्रमाणस्य प्रचक्षते) ।
अपि चाज्ञानतः शोकी दुःखी जीवः प्रकाशते ॥ ६ ॥
तन्निवृत्तिश्च विज्ञानं पुरुषार्थः स्वयं मतम् ।
कस्मिंश्चिदर्थे त्वज्ञाते कुतूहलवतां नृणाम् ॥ ७ ॥
आकुलानां ज्ञानजन्म पुरुषार्थत्वसंमतम् ।
अक्षादौ च यथारूपनिष्ठे नापुरुषार्थता ॥ ८ ॥
न च प्रवृत्तिनिष्ठत्वं तथास्मिन् केन वार्यते ।
ज्ञेयस्य पुरुषार्थत्वं तत्र चेदत्र तत्समम् ॥ ९ ॥
पुरुषार्थः स्वयं ब्रह्म प्रशान्तं विजरादिकम् ।
अतस्तत्त्वमसीत्येवमनुशिष्याय शिष्यते ॥ १० ॥
परप्रवृत्तेरङ्गत्वं प्रत्यक्षादेर्मतं यदि ।
अत्रापि साक्षात्करणप्रवृत्तावङ्गतेष्यताम् ॥ ११ ॥

न तावन्नियोगतः प्रमाणस्य पुरुषार्थफलता । न खलु हितोपादानाहितहाने एव प्रमाणफले । उपेक्षामपि हि प्रमाणफलं प्रमाणविद आचक्षते । न च पुरुषार्थता प्रमाणलक्षणम्, प्रमा[2]हेतुत्वं तु । तस्मान्न पुरुषार्थाभावेनाप्रामाण्यम् । अपि च 'शोक्यहम्' 'दुःख्यहम्' 'धनादीनि मम नष्टानि' इति विशुद्धब्रह्मात्मनो जीवस्य मिथ्याज्ञानम्; एतन्निवृत्तिरूपं च विशुद्धानन्दप्रकाशब्रह्मात्मतत्त्वज्ञानम् । तत् स्वरूपेणैव पुरुषार्थः; अनिष्टनिवृत्तिरूपत्वादिष्टाविर्भावाच्च । यद्यपि च संस्कारात्तस्या[3]नुवृत्तिस्तथापि शाब्दज्ञानमनुसंतन्वतो विदुषो न पूर्ववद्भवति निवर्तते चात्यन्ताय । [4]दृष्टा च ज्ञानोत्पत्तेरेव पुरुषार्थता क्वचित् कुतूहलाकुलितानामज्ञातेऽर्थे । न हि

---

[1] अनेन श्लोकार्धेनात्रभाव्यमित्यभ्यूह्यः; परं तु मातृकासु नदृश्यते।

[2] प्राणहेतुत्वं—B.

[3] स्या अन—B.

[4] दृष्ट दृष्टां—B.

तज्ज्ञानात् परमन्यदर्थ्यते । न च प्रवृत्तिनिवृत्तिविषयस्यैव पुरुषार्थतेति नियमः; प्रत्यक्षादीनि हि प्रमाणानि; न च तावत्प्रवृत्तिनिवृत्तिपराणि सिद्धवस्तुविषयाणि; न च पुरुषार्थतां जहति । यदि मतम् प्रत्यक्षादिज्ञेयं हि सिद्धं वस्तु पुरुषार्थः सलिलादिः, तदुपकारात्; ततः प्रत्यक्षादीनां पुरुषार्थता भूतनिष्ठानामपि । [1]अत्रापि च शब्दप्रमेयं स्वयमेव ब्रह्म पुरुषार्थो जरादिविविधाशिवोपशमात् परमानन्दप्रकाशत्वाच्च सुप्रसन्नम् । अत एव "[2]तत् त्वमसि" इति श्वेतकेतुमुखेनानुशासनीयाय पुरुषाय श्रुत्याभिन्नमुपदिश्यते; अभिन्नं हि तदनुशासनीयात् । भेदेन च प्रतीयमानं न पुरुषार्थः । तत्त्वे तादात्म्यज्ञाने च तथाभावात् विश्वाशिवोपशमात् परमशिवभावाच्च परिपूर्णः पुरुषार्थ आप्तो भवति । यदि मतम्—प्रत्यक्षादीन्यपि प्रवृत्त्यङ्गान्येव, प्रमितेऽर्थे हानोपादानादिलक्षणायाः प्रवृत्ते[3]स्तन्मूलत्वात्; ईदृशं प्रवृत्त्यङ्गत्वमत्राप्यस्त्येव, शब्दात् प्रमिते ब्रह्मणि साक्षात्करणाय प्रवृत्तेरिष्टत्वादिति ॥

एषा वेदान्ततत्त्वप्रविचयचतुरप्रस्फुरन्न्यायतेजा
मार्गं मुक्ते[4]र्निरुन्धन्निबिडमपि तमोऽनादि निर्दारयन्ती ।
सद्यः प्रक्षालयन्ती घनमपि जगतां तीर्थदुस्तर्कपङ्कं
व्याख्यातोत्खातविश्वा शिवनिरतिशयश्रेयसे ब्रह्मसिद्धिः ॥ ११ ॥

॥ इति मण्डनमिश्राणां कृतिर्ब्रह्मसिद्धिः समाप्ता ॥

---

तत्त्वस्पृशः खण्डितभेदवादिनो
विनिःसृताः पण्डितपण्डमण्डनात्[5] ।
ध्वान्तच्छिदो मण्डनवक्त्रपङ्कजा-
ज्जयन्ति वाचः श्रुतिनीतिमण्डनाः ॥

---

[1] तत्रापि—B.
[2] Chānd. 6-8-7.
[3] B omits तत.
[4] सं—B.
[5] मण्डना:—A.

## APPENDIX I.

॥ ओम् ॥

॥ ब्रह्मसिद्धिकारिकाः ॥

---

### ब्रह्मकाण्डः १.

आनन्दमेकममृतमजं विज्ञानमक्षरम् ।
असर्वं सर्वमभयं नमस्यामः प्रजापतिम् ॥ १ ॥

आम्नायतः प्रसिद्धिं च कवयोऽस्य प्रचक्षते ।
भेदप्रपञ्चविलयद्वारेण च निरूपणम् ॥ २ ॥

संहृताखिलभेदोऽतः सामान्यात्मा स वर्णितः ।
हेमेव पारिहार्यादिभेदसंहारसूचितम् ॥ ३ ॥

इति ब्रह्मकाण्डः ।

---

### अथ तर्ककाण्डः २.

आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः ।
नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यते ॥ १ ॥

लब्धरूपे क्वचित् किंचित् तादृगेव निषिध्यते ।
विधानमन्तरेणातो न निषेधस्य संभवः ॥ २ ॥

क्रमः संगच्छते युक्त्या नैकविज्ञानकर्मणोः ।
न संनिहितजं तच्च तदन्यामर्शि जायते ॥ ३ ॥

विधानमेव नैकस्य व्यवच्छेदोऽन्यगोचरः ।
मा स्म भूदविशेषेण मा न भूदेकधीजुषाम् ॥ ४ ॥

न भेदो वस्तुनो रूपं तदभावप्रसङ्गतः ।
अरूपेण च भिन्नत्वं वस्तुनो नावकल्पते ॥ ५ ॥

गौरुपेयीमपेक्षां च न हि वस्त्वनुवर्तते ।
पित्रादिविषयेऽपेक्षा जननादिप्रभाविता ॥ ६ ॥

एकक्रियाविशेषेण व्यपेक्षा ह्रस्वदीर्घयोः ।
अर्थक्रियाकृते भेदे रूपभेदो न लभ्यते ॥ ७ ॥

दाहपाकविभागेन कृशानुर्न हि भेदवान् ।
एकस्यैवैष महिमा भेदसंपादनासहः ॥ ८ ॥

वह्नेरिव यदा भावभेदकल्पस्तदा मुधा ।
यथैव भिन्नशक्तीनामभिन्नं रूपमाश्रयः ॥ ९ ॥

तथा नानाक्रियाहेतुरूपं किं नाभ्युपेयते ।
अन्योन्यसंश्रयाद्भेदो न प्रमान्तरसाधनः ॥ १० ॥

नास्मिन्नयं नायमयमिति भेदाद्विना न धीः ।
मीयमानैकरूपेषु न निषेधोऽवकाशवान् ॥ ११ ॥

भेदाभेदावभासे द्वे विज्ञाने चेत् परीक्ष्यताम् ।
न तावद् द्वयमैकात्म्यप्रख्यानानवकल्पनात् ॥ १२ ॥

समवायकृतं तच्चेन्न भेदस्यापरिच्युतेः ।
भेदान्तर्धानसामर्थ्यं तस्य भेदेऽपि चेन्मतम् ॥ १३ ॥

हन्तैकस्यैव तत्किं न यदेवमवभासते ।
दृष्टः संसर्गधर्मोऽयं यद्येकमपि वै तथा ॥ १४ ॥

नानावभासते चित्रं रूपमेकं तथा मतिः ।
न च संबन्धिसंबन्धः संसर्गो व्यवधानतः ॥ १५ ॥

व्यवहारे परोपाधौ सर्वा धीर्व्यावहारिकी ।
अयथार्था यदा भावभेदकल्पस्तदा मुधा ॥ १६ ॥

अयथार्थधियो बीजमवश्यं बाह्यमेव न ।
दृष्टस्तिमिरकामादिरान्तरोऽपि ह्युपप्लवः ॥ १७ ॥

एकत्वमविरोधेन भेदसामान्ययोर्यदि ।
न द्व्यात्मता भवेदेकतरनिर्मुक्तभागवत् ॥ १८ ॥

ऐकात्म्यबुद्धेर्भागे चेदेवं वस्तुनि तद्ध्यसौ ।
न चेत् कुतस्त्यमेकत्वमस्ति चेद् द्व्यात्मता कथम् ॥ १९ ॥

बुद्ध्यन्तरस्य वैयर्थ्यमेकांश इव चापनेत् ।
नानात्वादर्थवत्ता चेदेकत्वाद् व्यर्थता न किम् ॥ २० ॥

सामान्यं न हि वस्त्वात्मा न भेदश्चित्र एव सः ।
तस्यानन्वयतो भेदवादः शब्दान्तरादयम् ॥ २१ ॥

यदि वाखिलभावानामभेदात् तदतत्त्वतः ।
अभेदवादाश्रयणं स्यादन्यविधया गिरा ॥ २२ ॥

द्रव्यपर्यायार्थकानां नय एतेन वारितः ।
तेषामपि द्रव्यनयः पर्यायनय एव वा ॥ २३ ॥

उत्पादस्थितिभङ्गानामेकत्र समवायतः ।
प्रीतिमध्यस्थताशोकाः स्युर्न स्युरिति दुर्घटम् ॥ २४ ॥

नैकान्तः सर्वभावानां यदि सर्वविधानतः ।
अप्रवृत्तिनिवृत्तीदं प्राप्तं सर्वत्र ही जगत् ॥ २५ ॥

आपेक्षिकत्वाद्भेदो हि भेदग्रहपुरःसरः ।
नैकज्ञानं समीक्ष्यैकं न भेदं तत्त्वहानतः ॥ २६ ॥

आलोच्यते वस्तुमात्रं ज्ञानेनापातजन्मना ।
अचेत्यमानो भेदोऽपि चकास्तीत्यतिसाहसम् ॥ २७ ॥

प्रतिष्ठितं च विज्ञानमर्थमात्रावलम्बनम् ।
भेदेषु त्वप्रतिष्ठत्वमस्तीन्द्रियधियामपि ॥ २८ ॥

अन्योन्याभावरूपत्वं सर्वेषां न प्रकल्पते ।
तत्रोपाधौ प्रतीयन्तां तथा भिन्ना न रूपतः ॥ २९ ॥

दर्पणादौ मुखस्येव भेदोऽभेदावलम्बनः ।
भेदावलम्बनोऽभेदो न तथा तदभावतः ॥ ३० ॥

प्रत्येकमनुविद्धत्वादभेदेन मृषा ततः ।
भेदो यथा तरङ्गाणां भेदाद्भेदः कलावतः ॥ ३१ ॥

एकस्यैवास्तु महिमा यन्नानेव प्रकाशते ।
लाघवान्न तु भिन्नानां यच्चकास्त्यभिन्नवत् ॥ ३२ ॥

यथानुवृत्तव्यवहारसिद्धिं यथावभासं कथयन्ति बाह्याः ।
तथैव भेदव्यवहारयोगं वदन्ति वेदान्तविवेकभाजः ॥ ३३ ॥

इति तर्ककाण्डः ।

## अथ नियोगकाण्डः ३

शब्दाद्यदात्मविज्ञानं तन्न तावद्विधीयते ।
भवत्यधीतवेदस्य तद्धि कर्मावबोधवत् ॥ १ ॥

स्वर्गकामो यजेतेति बोधेऽस्मिन्न व्यपेक्ष्यते ।
विधिरन्योऽनवस्थानान्नायं कर्मव्यवस्थितेः ॥ २ ॥

फलं विधेयावगमात् प्रवृत्तिश्चोत्तरा विधेः ।
अन्योन्यसंश्रयान्नैष शाब्दो बोधः स नो परः ॥ ३ ॥

जाते बोधे न प्रवर्त्यो नतरां खल्वबोधके ।
शब्देन निश्चये तस्मादन्यस्मादन्यवाञ्छनम् ॥ ४ ॥

अथाविवक्षितार्थत्वनिवृत्त्यै प्रार्थ्यते विधिः ।
अर्थो ज्ञातव्य इत्युक्ते ज्ञेयः स्यान्नाविवक्षितः ॥ ५ ॥

तद्वार्तमर्थपरता शब्दानां लोकवेदयोः ।
अविशिष्टस्तु वाक्यार्थ इत्युत्सर्गवती यतः ॥ ६ ॥

दृष्टार्थता च स्वाध्यायविधेरत्र न भिद्यते ।
भवेदितरथा कृत्स्नः सविध्यर्थोऽविवक्षितः ॥ ७ ॥

ज्ञानस्य पुरुषार्थत्वसिद्धये विधिरिष्यते ।
सर्वत्र पुरुषार्थत्वं विधेरित्यप्यपेशलम् ॥ ८ ॥

ज्ञेयाभिव्याप्तितो यस्मान्न विज्ञानात् फलान्तरम् ।
इष्यते मोक्ष इति चेत् साध्यस्तत्त्वच्युतेर्न सः ॥ ९ ॥

विधेर्विना कार्यशून्यं भूतार्थमनुवादकम् ।
वचः स्यादनुवादश्च प्रमाणान्तरगोचरे ॥ १० ॥

तत् प्रमाणान्तरापेक्षं प्रामाण्यमतिवर्तते ।
मानान्तरस्याविषये विध्यर्थे तु प्रतिष्ठितम् ॥ ११ ॥

अनपेक्षं प्रमाणत्वमश्नुते कर्मवाक्यवत् ।
परप्रवृत्त्यभावेऽपि प्रामाण्यायैव तद्विधिः ॥ १२ ॥

प्रमाणान्तरयातार्थभावः किमनुवादता ।
उत भूतार्थता तत्र सिद्धार्थमपि यद्वचः ॥ १३ ॥

न मानान्तरलब्धार्थतया तस्यावबोधकम् ।
न तत् सापेक्षमेषा चेदभिप्रेतानुवादता ॥ १४ ॥

सापेक्षतायाः को हेतुः शुद्धा सिद्धार्थता यदि ।
प्रमाणान्तरसंभेदस्तद्व्यपेक्षणकारणम् ॥ १५ ॥

अनृधीप्रभवे नास्ति भूतार्थेऽपि स वैदिके ।
न च संभवमात्रेण तदपेक्षावकल्पते ॥ १६ ॥

विशेषो न हि गम्येत सापेक्षत्वे तदा तयोः ।
प्रत्यक्षानुमयोरेवं वृत्तेरन्योन्यगोचरे ॥ १७ ॥

परस्परव्यपेक्षत्वमविशेषं प्रसज्यते ।
स्यादक्षमपि सापेक्षं यदक्षान्तरगोचरे ॥ १८ ॥

असंभवादौषधादिनियोगस्यानपेक्षता ।
लौकिकस्य प्रसज्येत नरप्रत्ययपूर्वकः ॥ १९ ॥

विनियोगस्तत्र तेन व्यपेक्षा वैदिके पुनः ।
अबुद्धिपूर्वकः सोऽपीत्यनपेक्षत्वमुच्यते ॥ २० ॥

नृबुद्धिपूर्वतैवेत्थं हन्तापेक्षानिबन्धनम् ।
मानान्तरासंभवेऽपि ततः सापेक्षता यतः ॥ २१ ॥

वेदे नियोगनिष्ठत्वं विनियोगप्रधानता ।
लोके वेदे न व्यपेक्षा तल्लोके च व्यपेक्षणम् ॥ २२ ॥

न शब्दमात्रसामर्थ्यप्रविभागोऽयमीदृशः ।
लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः ॥ २३ ॥

अथ मानान्तराज्ज्ञात्वा प्रयुङ्क्ते पुरुषो वचः ।
अर्थे तत्तेन तन्निष्ठमितरत्त्वन्यथा स्थितम् ॥ २४ ॥

मानान्तरव्यपेक्षत्वान् संभव्यन्यप्रमाणकः ।
हन्तास्य गोचरो नास्मादपेक्षास्य प्रमान्तरे ॥ २५ ॥

तस्मान्मानान्तराद्गत्वा परस्य प्रतिपत्तये ।
वचः प्रयुङ्क्ते पुरुषो नाकस्मात् तेन तद्गिरि ॥ २६ ॥

प्रमाणान्तरसंभेदो व्यपेक्षातो न संभवात् ।
अपौरुषेयता तेन पौरुषेयत्वमेव च ॥ २७ ॥

अनपेक्षव्यपेक्षत्वनिमित्ते वर्णिते बुधैः ।
भूतार्थमपि सापेक्षं नातोऽपुरुषबुद्धिजम् ॥ २८ ॥

अथ संसर्गभाजो नो पदार्थाः क्रियया विना ।
क्रियायातं विधेः सापि त्वस्त्यादिः सुलभा क्व न ॥ २९ ॥

न च मानावगम्यत्वमस्तीतिविषयो मतः ।
मानादेव यतो बुद्धिरभूदस्ति भविष्यति ॥ ३० ॥

धूमादिना मिते हि स्याद्ब्रह्मचादावियमन्यथा ।
भिद्येतोत्तरकाले वा भवन्ती न खलु त्रिधा ॥ ३१ ॥

स्वसंबन्धितया मानमथ वस्त्वधिगच्छति ।
तथापि नैव भिद्येत नेत्थं चान्यव्यपेक्षता ॥ ३२ ॥

अन्यमानावगम्यत्वमथ लिङ्गात् त्रिधेक्ष्यते ।
स्याल्लिङ्गमपि सापेक्षं तत्सिद्धेस्तत एव चेत् ॥ ३३ ॥

नैरपेक्ष्यं यदि न तद्भेदे दण्डैर्निवार्यते ।
तत्संभवो लैङ्गिकेऽर्थे बुद्धवाक्यार्थवन्न तु ॥ ३४ ॥

अत्रेति साक्षात्करणाभ्युपायादसमञ्जसम् ।
मेयत्वमेव सत्ता चेन्माने त्रिविधता कुतः ॥ ३५ ॥

तत्संबन्धादतो नार्थे त्रैविध्यमवकल्पते ।
वर्तमानप्रमायोगः सत्तासत्ता विपर्ययः ॥ ३६ ॥

मते यदि ततः प्राप्तमसत्त्वं स्मृतिगोचरे ।
प्रमाणयोगमात्रं चेत् सत्तासत्ता विपर्ययः ॥ ३७ ॥

प्राप्ता प्रमितनष्टेन घटेन मधुधारणा ।
प्रमिते च न जिज्ञासा पुनः स्याद् सदसत्त्वयोः ॥ ३८ ॥

अथ प्रमाणयोग्यत्वं सत्त्वं नष्टाच्च तच्च्युतम् ।
स्मर्यमाणे प्रचलितं क्वचिदित्यप्यसुन्दरम् ॥ ३९ ॥

भूमौ निखातं निर्लिङ्गमवेद्यानुपपन्नकम् ।
नष्टद्रष्टृकमस्त्येति यत्सर्वमितियोग्यताम् ॥ ४० ॥

असत् प्रमेयं च तथा यथैव स्थापयत्ययम् ।
अमितं हि तथा कस्मात्तथा न पुनरन्यथा ॥ ४१ ॥

अमित्वा कण्टकाभावं चरणं न्यस्यते कथम् ।
नान्यग्रहात्तस्य भावे पुरस्ताच्च प्रसङ्गतः ॥ ४२ ॥

जिज्ञासा न प्रवर्तेत यदि संवित्स्यभावतः ।
प्रमाणविषयत्वस्य नोपयोगोऽत्र दृश्यते ॥ ४३ ॥

असद्बोधेऽनन्यहेतुभानेन ह्युपयुज्यते ।
अथ यत्र प्रवृत्तिः स्यात्तत्र केवलसंविदः ॥ ४४ ॥

जिज्ञासेत न सूक्ष्मार्थं कैवल्यं संविदो यदि ।
केवलो विषयो नेष्टो रूपेऽन्मिश्रेऽपि तद्यतः ॥ ४५ ॥

विशिष्टस्य च नास्त्यन्यदन्याभावाद्विशेषणम् ।
नास्तीति धीर्व्यवहृती विषयं कमुपाश्रिते ॥ ४६ ॥

मानाभावं यदि क्षुण्णं मेयाभावस्य तत्र किम् ।
अग्रहेऽसद्ग्रहभ्रान्तिरभावव्यवहृद्भ्रमः ॥ ४७ ॥

अभावे च व्यवहृतेरदृष्टौ ध्वान्तदृष्टिवत् ।
इत्थं भवेत् सुषुप्तादौ त्रैलोक्याभावदृग्भ्रमः ॥ ४८ ॥

अपरिच्छिन्दतः किंचिद्विभ्रमश्च न युज्यते ।
आरोपविषयारोप्ये नाजानन् रजतभ्रमी ॥ ४९ ॥

नाभावभिन्ना व्यवहृत्तदभावश्च धीपदे ।
तमोदृष्टिस्तु भूच्छायामालोकाभावमेव वा ॥ ५० ॥

आलम्बते न त्वदृष्टाविष्टो दर्शनविभ्रमः ।
अस्तु वा मानयोग्यत्वं सत्त्वं तच्च प्रमीयताम् ॥ ५१ ॥

तस्मिन् मिते वस्तुसत्त्वं भवत्यागमगोचरः ।
न च सापेक्षता नास्मिन्नन्तरार्थविभिन्नताम् ॥ ५२ ॥

प्रचक्षते येऽपि सत्तामन्यां न प्रतिजानते ।
प्रमाणान्तरभिन्नार्थमपि मानं न नो वचः ॥ ९३ ॥

निरपेक्षमिहार्थे तु प्रमितं वस्त्विदं मया ।
अर्थमात्रे च सापेक्षमन्यापेक्षार्थबोधनात् ॥ ९४ ॥

अबाधितमपि स्वर्थे प्रमाणांशेऽपबाधनात् ।
तत्राप्रमाणतामेति बुद्धानाप्तवचो यथा ॥ ५९ ॥

आप्तवाक्यं पुनर्नार्थे न मानांशेऽपबाधितम् ।
निरपेक्षं प्रमाणांशे व्यवहारोऽन्यथा कथम् ॥ ९६ ॥

मयेति वक्रभावेन संभेदरहितं ततः ।
प्रलीनज्ञानविज्ञेयविभागं स्वात्मवेदनम् ॥ ९७ ॥

प्रवेदयन्तु वेदान्ता मानान्तरमलौकिकम् ।
तत्सिद्धिसिद्धतार्थस्य पुंवचोवद्भविष्यति ॥ ९८ ॥

एवं न मेयता सत्ता नन्वन्यापि न युज्यते ।
न हि पूर्वावमर्शेन विना सामान्यकल्पना ॥ ९९ ॥

गामेकामीक्षितवतो जायतेऽन्यत्र यादृशः ।
अवमर्शो दृष्टसतस्तथा न हि सदन्तरे ॥ ६० ॥

एकशब्दप्रवृत्तिस्तु दण्ड्यादिवदुपेयताम् ।
क्वो नु पूर्वावमर्शोऽयं पूर्वरूपान्वयो धियः ॥ ६१ ॥

सदन्तरेऽपि सोऽस्त्येव कयाचित् खलु मात्रया ।
सर्वात्मना त्वनुगमो न दृष्टः खण्डमुण्डयोः ॥ ६२ ॥

न तादृशश्चेन्नो भेदमात्राद्वेद्यः स्वपह्नवः ।
न भेदमात्रान्मृज्जातिहीनं मणिकमल्लकम् ॥ ६३ ॥

रूपान्वयः प्रत्ययस्य मणिकेषु हि यादृशः ।
न दृष्टमल्लकस्यास्ति मणिके खलु तादृशः ॥ ६४ ॥

पूर्वावमर्शः स इति प्रस्येत्यपि न शोभने ।
मणिकं वीक्षितवतः सोऽपि नोदेति मल्लके ॥ ६५ ॥

सामान्यरूपभूयस्त्वे तस्मात्तत्त्वं प्रकाशते ।
विलक्षणत्वमल्पत्वे चकास्ति तदनुद्भवात् ॥ ६६ ॥

यस्मात् सत्यपि सामान्ययोगे मणिशरावयोः ।
प्रमाणं कार्यविज्ञेयमसंयोज्यास्ति धीर्यतः ॥ ६७ ॥

प्रथमं जायते तस्मान्न दण्ड्यादिसमानता ।
सम्बन्धमात्रावसितमपि चान्ये विपश्चितः ॥ ६८ ॥

आहुर्वचोऽक्रियमयं राज्ञो ना फलिनो द्रुमाः ।
जनिक्रियावसानाच्च विशिष्टं शक्यबोधनम् ॥ ६९ ॥

कारणं जायत इदमीदृक्षात् कारणादिति ।
ननु प्रमान्तराधीनसंसर्गः पुरुषोक्तिषु ॥ ७० ॥

पदार्था विध्यधीनात्मसंश्लेषा इतरत्र तु ।
पदानां रचना तत्र विवक्षापरिपूर्तये ॥ ७१ ॥

प्रमाणान्तरगम्येऽर्थे विवक्षा च व्यवस्थिता ।
विध्यर्थसिद्ध्ये वेदे तदभावे त्वसंगतेः ॥ ७२ ॥

विशिष्टार्थगतिर्भ्रान्तिरग्रहे ग्रहविभ्रमः ।
कथं नु विध्यधीनत्वं यदि स्यादन्यथा वृथा ॥ ७३ ॥

विधिर्निर्विषयस्तुल्यमिदमन्यपदोदिते ।
विशिष्टार्थावगत्यान्यपदार्थोऽपि प्रयुज्यते ॥ ७४ ॥

अर्थवत्त्वे प्रमाभावादसत्त्वसौ चेदनर्थकः ।
विधिर्नैवं कस्य हेतोरथ स्यादपरं पदम् ॥ ७५ ॥

प्रमाणान्तरसिद्धार्थे प्रयोगि न विधायकम् ।
तदर्थोऽनन्यगम्यो हि मीयमानः समाक्षिपेत् ॥ ७६ ॥

विषयं न यथासिद्धपदार्थस्त्वनुवादभाक् ।
अव्युत्पन्नप्रवृत्तिः स्यात् संबन्धज्ञाननिह्नवे ॥ ७७ ॥

पदं स्वधर्मं व्युत्क्रामेदन्यसिद्धार्थतान्यथा ।
शब्दादेव मिते योऽपि मन्यते संगतिक्रमम् ॥ ७८ ॥

नान्योन्यसंश्रयावद्यं न स्वयं प्रमिते हि सः ।
परेण शब्दावगते तत्प्रवृत्त्या च सूचिते ॥ ७९ ॥

पदार्थान्तरवत् तत्र सुकरः संगतिग्रहः ।
तस्यैवमनुमेयत्वे कथं शब्दैकगोचरः ॥ ८० ॥

तस्यापि शब्दपूर्वत्वादनुमानैकगोचरः ।
कस्मान्न शब्दबोधोऽपि ह्यनुमानपुरःसरः ॥ ८१ ॥

नेदंप्रथमता लभ्या बीजाङ्कुरवदेतयोः ।
शब्दाद्बोद्धुश्चानुमानं सर्वस्यैव पुरः स्थितम् ॥ ८२ ॥

पदार्थान्तरवत् तेन तस्य शब्दोऽनुवादकः ।
अनुमानाद्बुध्यमानः शब्दाद्बुद्धं न बुध्यते ॥ ८३ ॥

प्रतिपत्त्यन्तरे बोधो नान्यबोधानुवादकृत् ।
प्रवृत्तिहेतुमात्रं च शब्दार्थः स्यादलौकिकः ॥ ८४ ॥

न स कल्पयितुं शक्यस्तत्सिद्धेर्लौकिकादपि ।
अथ प्रमाणरूपेण स स्वशब्दप्रकाशितः ॥ ८५ ॥

आक्षेप्ता निरपेक्षश्च कथ्यतेऽन्यप्रमां प्रति ।
तथाप्यसिद्धे प्रागुक्तौ दोषौ सिद्धेऽनुवादता ॥ ८६ ॥

प्रामाण्यमस्य यत्रास्तु श्रुतेस्तत्र वृथा त्वयम् ।
क्व च प्रमाणमेषोऽर्थे न यागादौ स्वशब्दके ॥ ८७ ॥

लौकिकेऽपूर्वसंसर्गः श्रोतुरस्त्यविधावपि ।
फलसाधनशक्तौ चेच्छब्दस्तत्र न दुष्यति ॥ ८८ ॥

पदार्थान्तरतुल्यत्वाद्विध्याकाङ्क्षानिबन्धनः ।
न संसर्गः पदार्थानां स्वशब्दैस्तु प्रकाशिताः ॥ ८९ ॥

संबन्धयोग्यरूपेण तस्मात् संसर्गभागिनः ।
विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्जने ॥ ९० ॥

अतो न विध्यभावेन संसर्गो न प्रकल्पते ।
अथ कर्तव्यताज्ञानादिनानर्थक्यमुच्यते ॥ ९१ ॥

न प्रवृत्तिनिवृत्तिभ्यामन्यद्वाक्यप्रयोजनम् ।
प्रतिपत्तिविधौ तुल्यं यदि सैव प्रयोजनम् ॥ ९२ ॥

समानमेतदर्थं च समर्पयति चेदयम् ।
प्रज्ञाक्रियोपासनाधिकारसिद्धिव्यपेक्षितम् ॥ ९३ ॥

हन्त तर्हि स्वरूपे तन्न वचः पर्यवस्यति ।
तुल्यमेतत् समाप्तं च वाक्यं वाक्यान्तरानुगम् ॥ ९४ ॥

नियोगानुप्रवेशोऽस्ति तावद्यदि वृथान्यथा ।
तत्त्वावबोधविध्यंशस्तावदेवं समुद्धृतः ॥ ९५ ॥

ननूत्पत्तिविधिः कर्मरूपबोधे व्यवस्थितः ।
यथा तत्त्वज्ञानविधिस्तथा बोधेऽवतिष्ठताम् ॥ ९६ ॥

अधिकारात् प्रवृत्तिश्च मता कर्माधिकारवत् ।
अज्ञातज्ञापनमतोऽथाप्रवृत्तप्रवर्तनम् ॥ ९७ ॥

विधिमाचक्षते धीरा इत्येतदपि तादृशम् ।
कर्मस्वरूपावगमस्तत्र नेष्टं विधेः फलम् ॥ ९८ ॥

किं तु कार्यव्यपेक्षस्य फलवाक्येन संगतिः ।
इहाधिकारसंबन्धो यस्य तन्न विधीयते ॥ ९९ ॥

तत्त्वं तत्त्वावबोधस्य नाधिकारप्रवेशिता ।
न हि व्रीह्यादिविषयं प्रत्यक्षमधिकारभाक् ॥ १०० ॥

सोपायमन्यत् तर्हीदं शब्दाज्ज्ञानं विधीयते ।
प्रलीनग्रहणग्राह्यविभागोद्ग्राहमद्वयम् ॥ १०१ ॥

न हि भिन्नार्थसंसर्गरूपवाक्यार्थधीपदम् ।
आत्मतत्त्वं निष्प्रपञ्चमित्येतदपि पेलवम् ॥ १०२ ॥

अद्वयात्मप्रकाशोऽसावनवच्छेदविभ्रमः ।
स्वात्मस्थितिः सुप्रशान्ता फलं तन्न विधेः पदम् ॥ १०३ ॥

तत्साधनावबोधे हि विधातृव्यापृतिर्मता ।
अपेक्षितोपायतैव विधिरिष्टो मनीषिभिः ॥ १०४ ॥

ततो ह्यध्यवसायादिर्नाकस्मान्नाभिधानतः ।
न च मोक्षः फलं तस्य साध्यो मोक्षो न चापरः ॥ १०५ ॥

अविद्यास्तमयो मोक्षः सा संसार उदाहृता ।
विद्यैव चाद्वया शान्ता तदस्तमय उच्यते ॥ १०६ ॥

प्रायश्चित्तदिशा बन्धहेतूच्छेदोऽपि नो ततः ।
सर्वाविद्याप्रविलये न च्छेद्यमवशिष्यते ॥ १०७ ॥

बन्धहेतुरविद्यात्मा विद्यायां सास्तमागता ।
न ब्रह्म शब्दधीगम्यं यद्यशक्यो धियो विधिः ॥ १०८ ॥

धीविशेषप्ररूपाय नासिद्धो विषयः क्षमः ।
विधिर्नारूपितपदो धीमात्र न विधीयते ॥ १०९ ॥

विधिः स्वसिद्धिनिष्ठो वा क्रियासिद्धिपरोऽथवा ।
अद्वैतब्रह्मतत्त्वस्य प्रतिपत्तिरहेतुका ॥ ११० ॥

विनियोगादधिगतिर्यास्या ज्ञानक्रियार्थता ।
अतत्परा न प्रमाणं सार्थवादोत्थबुद्धिवत् ॥ १११ ॥

विधिः क्रियागोचरत्वान्न द्रव्ये व्याप्रतिक्षमः ।
सचान्वयात्तु तत्सिद्धिः प्रत्युतेति स दुष्यति ॥ ११२ ॥

विशिष्टान्यक्रियाबोधः प्रमाणं च विशेषणे ।
प्रतिपत्तिर्विशिष्टापि विषयस्य नियोगतः ॥ ११३ ॥

सत्तां न साधयत्येव समारोपेण संभवात् ।
ननु नो विपरीतार्था धीः प्रतीतिविरोधतः ॥ ११४ ॥

अनाश्वासाच्च रजतप्रत्ययो रजते स्मृतिः ।
नैतच्च हि प्रवर्तेत शुक्तिकाशकले तदा ॥ ११५ ॥

रजते सा प्रवृत्तिश्चेन्न तस्यासंनिधानतः ।
असंनिधानाबोधाच्चेत् प्रवृत्तिनियमः कुतः ॥ ११६ ॥

प्रवर्तते यत् तत्रैव तत्तत्संनिधिकारितम् ।
अन्यत्र भेदग्रहणाद्विवेकाग्रहणात्तथा ॥ ११७ ॥

प्रवृत्तिभेदः सादृश्याद्विवेकाग्रहणं यदि ।
अदृष्टेषु प्रवर्तेत लोष्टादिष्वविवेकतः ॥ ११८ ॥

न तत्र यदि तद्बुद्धिः शुक्तिकाशकलेऽपि न ।
अथास्ति विपरीतार्था ख्यातिर्निह्नूयते कथम् ॥ ११९ ॥

अदृष्टत्वादप्रवृत्तिः शुक्तिकाशकले समा ।
दृष्टं तद्येन रूपेण तत् प्रवृत्तेरकारणम् ॥ १२० ॥

दृष्टस्मृताविवेकाच्चेदिदमत्र परीक्ष्यताम् ।
तत्त्वबोधादथातत्त्वावोधादज्ञातवेदनात् ॥ १२१ ॥

दृष्टे प्रवृत्तिः पूर्वस्मिन् विपरीतार्थता मतेः ।
न दृष्टादृष्टयोर्भेदः परस्मिन्नोपयोगिनी ॥ १२२ ॥

स्वयोगदर्शने ते हि समारोपोपयोगिनी ।
नादृष्टेऽसंप्रयुक्ते वा चाक्षुषः स्याद्विपर्ययः ॥ १२३ ॥

स्मृतं प्रत्यक्षतो भिन्नं स्वज्ञानादेव चेत् कुतः ।
अविवेकोऽन्यथा तु स्यात् सदा सामान्यदर्शने ॥ १२४ ॥

विपर्ययोऽन्यं स्मरतो न च संशयदर्शनात् ।
स्मृतदृष्टाविवेकोत्थं संशयं यदि मन्यते ॥ १२५ ॥

तन्नोभयोरपि यतः स्मृतौ दृष्टो विपर्ययः ।
विशेषज्ञानतोऽध्यक्षे स्मृतं यदि विविच्यते ॥ १२६ ॥

न स्वज्ञानादसत्यस्मिन् द्विस्मृतौ कथमेकधीः ।
एकत्वमेव स्मरतः प्राग्रूपं शशिनि स्फुटम् ॥ १२७ ॥

तिमिरादिप्रदोषेण कथं ते द्वित्वविभ्रमः ।
पिपासतश्च सलिलं शुक्तिकाहितचेतसः ॥ १२८ ॥

विपर्ययो न हि भवेद्भवन्वा सलिले भवेत् ।
न च सर्वा नियोगेन भ्रान्तिः सादृश्यबन्धना ॥ १२९ ॥

श्वेते पीतभ्रमो दृष्टो मधुरे तिक्तविभ्रमः ।
किंचित्सादृश्यतो हि स्यान्न कश्चित्तत्र न भ्रमः ॥ १३० ॥

तस्मादिन्द्रियदोषाणां सामर्थ्यस्य विभागतः ।
भ्रमेषु नियमो दोषादग्रहे न भ्रमे यमः ॥ १३१ ॥

विशेषस्मरणान्नापि स्मृतावपि तदग्रहः ।
देशकालविशेषाच्च न स्मृतं प्रविविच्यते ॥ १३२ ॥

अनेकदेशाधिगतं विविक्तं न पुनस्ततः ।
स्मृतिरित्यपि विज्ञानं स्मृतेरन्यदुदाहृतम् ॥ १३३ ॥

न च मानफलाद्भिन्नात्तत् सिध्यति फलादृते ।
सति स्मृतिविवेके च प्रत्यभिज्ञानविभ्रमः ॥ १३४ ॥

अथासंनिहितो व्यर्थो वेद्यः संनिधिमत्तया ।
अविविक्तस्मृतेरेवं विपरीतार्थता भवेत् ॥ १३५ ॥

मनसोऽनुपघाताच्च नासंनिध्यपरिग्रहः ।
दोषो ह्यग्रहणे हेतुरिन्द्रियाणामुदाहृतः ॥ १३६ ॥

प्रवृत्तिनियमो न स्यादिति चात्र निवेदितम् ।
सर्वज्ञानानि मिथ्या च प्रसज्यन्तेऽत्र कल्पने ॥ १३७ ॥

सर्वात्मनार्थो ज्ञानेन केनचिन्न हि गृह्यते ।
तथाज्ञातविवेकस्य द्विचन्द्रादिविपर्ययात् ॥ १३८ ॥

अनुवृत्तिमतः पश्यन् कस्य स्वात्मापनिह्नुते ।
प्रसक्तप्रतिषेधात्मा ख्यातिः प्राप्तौ प्रकल्पते ॥ १३९ ॥

नाग्रहः प्रापकोऽभावः प्रापिका विपरीतधीः ।
ये च ख्याती तु रजतचक्षुःसंयुक्तवस्तुनोः ॥ १४० ॥

नायं तदुपनीतार्थप्रतिषेधोऽवगम्यते ।
न चाग्रहणमेवैषा प्रतीतिरपबाधते ॥ १४१ ॥

सर्वा ह्यग्रहबाधेन जन्म न स्यात्तथेदृशी ।
विवेकविज्ञानमिदं न प्रसक्तनिषेधधीः ॥ १४२ ॥

इति ब्रुवाणो वैयात्यात् स्वां प्रतीतिमपह्नुते ।
न क्रमे यौगपद्ये वा विवेकमतिरीदृशी ॥ १४३ ॥

प्राप्ते स्यादैक्यसंवित्तौ न भेदस्यानिरूपणे ।
रजतस्य स्मरंश्चक्षुःसंयुक्तस्य च वस्तुनः ॥ १४४ ॥

सामान्यदृष्ट्या रजताद्बुद्ध्या च विविक्तताम् ।
पश्चाद्विविञ्चन् प्रत्येति नैवं सामान्यदर्शने ॥ १४५ ॥

कोटिद्वयस्मृत्यभावे संशयो न नियोगतः ।
विवेकग्रहणाभावात् कालसंनिधिसंविदः ॥ १४६ ॥

तद्वदाभासनात् प्राप्ताविष्टः स्यादन्यथाग्रहः ।
तत्राग्रहो निमित्तं स्यादथवा संनिधिग्रहः ॥ १४७ ॥

भेदग्रहापवादेन रहितो भावरूपतः ।
विपर्ययानभ्युपाये भ्रमोऽग्रहनिबन्धनः ॥ १४८ ॥

शब्दैकगम्य उक्तः स्यादग्रहोऽग्रहबन्धनः ।
यः प्रतीतिविरोधस्तु स स्वदोष उदाहृतः ॥ १४९ ॥

सामानाधिकरण्येन बोधाद्रूप्यमिदं सितम् ।
अनाश्वासो ज्ञायमाने ज्ञानेनैवापबाध्यते ॥ १५० ॥

व्यभिचारादसामर्थ्यं न तत्कार्यस्य लाभतः ।
व्यभिचारात्प्रमेयत्वे कार्यमेव न लभ्यते ॥ १५१ ॥

अपि चाग्रहणेऽभीष्टं यद्विवेकनिबन्धनम् ।
न पराणुद्यते दण्डैस्तद्विपर्ययदर्शने ॥ १५२ ॥

नोद्रेकहेतवो दोषाः कार्यसामर्थ्यघातिनः ।
ग्रहाग्रहविभागः स्यादतस्तत्सदसत्त्वतः ॥ १५३ ॥

विपर्यये हि नितरामुपघातः प्रकल्पते ।
इष्टकार्योपरोधेन विपरीतोद्गमेन च ॥ १५४ ॥

तस्मात्तत्सदसत्त्वाभ्यां विवेकोऽत्रापि कल्पते ।
दोषेऽसत्यग्रहाशङ्का कथं च विनिवर्तते ॥ १५५ ॥

न हि कारणसद्भावे कार्यसत्ता नियोगतः ।
प्रत्यक्षं कार्यमेवं च हेतुनानुमितं भवेत् ॥ १५६ ॥

विपर्यये फलाभावो हेत्वभावात्तु युज्यते ।
अनालम्बनतापत्तिर्यथाकारान्तरार्पणम् ॥ १५७ ॥

स्वरूपानर्पणादेवं भवेदग्रहणेऽपि ते ।
कस्यचित्स्वर्पणं तुल्यमथ तत्र न तत्तथा ॥ १५८ ॥

परस्यापि हि तत्रैवमथ तत्र तथा स्थितेः ।
सर्वत्र स्यात्तथाभावः स्यादेवं ग्रहणेऽपि ते ॥ १५९ ॥
यथा तत्रानिमित्तत्वात् सम्यग्ज्ञानेऽनिमित्तता ।
शङ्क्यते ग्रहणेऽप्येवमग्रहे सा निरूपिता ॥ १६० ॥
ज्ञानादेव निमित्तत्वमन्येषां न विशिष्यते ।
अवघातप्रोक्षणादेर्यथा द्रव्यार्थता स्थिता ॥ १६१ ॥
ज्ञानं स्वभावाद्द्रव्यार्थं कर्मत्वाच्चात्मनस्तथा ।
भवत्वेवं तथापीष्टरूपसिद्धिः कुतो मता ॥ १६२ ॥
शब्दस्तदर्थकार्यत्वे तावज्ज्ञानस्य निष्ठितः ।
ज्ञानाज्ज्ञेयस्य कोऽन्योऽर्थः स्वरूपप्रतिभासनात् ॥ १६३ ॥

अदृष्टकल्पना युक्ता न च दृष्टस्य संभवे ।
तस्माद्यथा प्रोक्षणादिविधेर्व्रीहिषु गम्यते ॥ १६४ ॥
अदृष्टा संस्कृतिर्ज्ञानविधे रूपं तथात्मनः ।
उक्तोत्तरमिदं यस्मादरूपेणापि भासकम् ॥ १६५ ॥
ज्ञानं प्रदर्शितं न स्यादन्यथा तद्विधेः फलम् ।
लयो निवर्त्यो न तथा विक्षेपो हि यथासुखः ॥ १६६ ॥
लयविक्षेपभेदश्च न स्यादग्रहमात्रके ।
नन्वरूपावभासे स्यात्दृष्टफलकल्पना ॥ १६७ ॥
रूपावभासे दृष्टं तु फलं तत्सिद्धिलक्षणम् ।
न दृष्टमात्राद् दृष्टार्थं पुरुषार्थानुगं तु तत् ॥ १६८ ॥
न भिद्यते च तद्भावो रूपारूपावभासयोः ।
यथा प्रपञ्चशून्यत्वे तत्त्वे ज्ञानावभासिते ॥ १६९ ॥

दुःखकर्मक्लेशहानमतत्त्वेऽपि तथा भवेत् ।
एतच्चात्र भवेद्युक्तं प्रत्यक्षाद्यविरोधतः ॥ १७० ॥

अनौपचरितार्थाश्च स्युः कर्मविषयो यतः ।
जानातिस्तत्त्वबोधे चेन्न मिथ्यादिविशेषणात् ॥ १७१ ॥

नात्मा ज्ञातस्तथा स्याच्चेन्न तद्रूपाविधानतः ।
प्रमाणान्तरसिद्धत्वे नतरामन्यथा यदि ॥ १७२ ॥

शब्दार्पितेन रूपेण तस्य ज्ञानं विधीयते ।
असत्त्वेनापि तेनास्य विज्ञानमवकल्पते ॥ १७३ ॥

ज्ञानं यदि च दृष्टार्थं प्राप्तं दृष्टत एव तत् ।
आत्मरूपविजिज्ञासोरजिज्ञासोर्वृथैव तत् ॥ १७४ ॥

तदुपायो न चेज्ज्ञातस्तस्यैवास्तु विधिस्ततः ।
अवघातादिविधयो नादृष्टस्पर्शवर्जिताः ॥ १७५ ॥

अलौकिकमिदं ज्ञानमतो यदि विधीयते ।
न रूपसिद्धये तावद्यतः कर्तव्यता विधेः ॥ १७६ ॥

कर्तव्यता च दृष्टार्थे दृष्टादेव प्रसिध्यति ।
अलौकिकेऽर्थरूपेऽतः शब्देन प्रतिपादितं ॥ १७७ ॥

ज्ञाने ज्ञेयाभ्युपायत्वात् स्वयमेवोन्मुखः पुमान् ।
तदुपाये त्वविज्ञाते विधिना स प्रवर्त्यताम् ॥ १७८ ॥

नियोगानुप्रवेशोऽतो विहन्त्येव प्रमाणताम् ।
भूतार्थ इति नोपास्यो भूतार्थगतिमिच्छता ॥ १७९ ॥

अत एव न विज्ञानसंतानविधिनिष्ठता ।
तत्रापि पूर्ववन्न स्यात् स्वरूपावगतिप्रमा ॥ १८० ॥

स्वरूपनिष्ठाच्छब्दात्तु प्रमितस्य वचोऽन्तरात् ।
उपासनविधानं स्यात् प्राप्तेस्तदपि वा वृथा ॥ १८१ ॥

अभ्यासेन प्रत्ययस्य प्रकर्षस्याभिवीक्षणात् ।
तस्माद्भवत्यकार्येऽर्थे वेदान्तानां प्रमाणता ॥ १८२ ॥

यथान्यमानव्यतिभेदमुक्ता
मतिः प्रमाणत्वमुपैति कार्ये ।
अपौरुषेयागमलब्धजन्मा
तथैव सिद्धे निरपेक्षभावात् ॥ १८३ ॥

॥ इति नियोगकाण्डः ॥

## अथ चतुर्थकाण्डः ४.

नन्वन्वितपदार्थत्वाद्वाक्यार्थस्य पदार्थताम् ।
अप्राप्य न स्याद्वाक्यार्थः पदार्थत्वेऽन्यमानकः ॥ १ ॥
सामान्येन पदार्थत्वे सिद्धेऽसाधारणैर्गुणैः ।
शक्यापूर्वविशेषस्य लोकवत् प्रतिपादना ॥ २ ॥
सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते ।
प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते ॥ ३ ॥
प्रविलीनप्रपञ्चेन तद्रूपेण न गोचरः ।
मानान्तरस्येति मतमाम्नायैकनिबन्धनम् ॥ ४ ॥
ननु चापुरुषार्थत्वं भूतनिष्ठे प्रसज्यते ।
प्रमाणस्य न चैतावत्पुरुषार्थैकनिष्ठता ॥ ५ ॥
(उपेक्षामपि हि फलं प्रमाणस्य च तद्विदः ।)
अपि चाज्ञानतः शोकी दुःखी जीवः प्रकाश्यते ॥ ६ ॥
तन्निवृत्तिश्च विज्ञानं पुरुषार्थः स्वयं मतम् ।
कस्मिंश्चिदर्थे विज्ञाते कुतूहलवतां नृणाम् ॥ ७ ॥
आकुलानां ज्ञानजन्म पुरुषार्थत्वसंमतम् ।
अक्षादौ च यथा रूपनिष्ठे नापुरुषार्थता ॥ ८ ॥
न च प्रवृत्तिनिष्ठत्वं तथास्मिन् केन वार्यते ।
ज्ञेयस्य पुरुषार्थत्वं तत्र चेदत्र तद् समम् ॥ ९ ॥
पुरुषार्थः स्वयं ब्रह्म प्रशान्तं विजरादिकम् ।
अतस्तत्त्वमसीत्येवमनुशिष्याय शिष्यते ॥ १० ॥
परप्रवृत्तेरङ्गत्वं प्रत्यक्षादेर्मतं यदि ।
अत्रापि साक्षात्करणप्रवृत्तावङ्गतेष्यताम् ॥ ११ ॥

एषा वेदान्ततत्त्वप्रविचयचतुरप्रस्फुरन्न्यायतेजा
मार्गं मुक्तेर्निरुन्धन्निबिडमपि तमोऽनादि निर्दारयन्ती ।
सद्यः प्रक्षालयन्ती घनमपि जगतां तीर्थदुस्तर्कपङ्कं
व्याख्यातोत्खातविश्वा शिवनिरतिशयश्रेयसे ब्रह्मसिद्धिः ॥ १२ ॥

॥ इति चतुर्थकाण्डः ॥

॥ इति मण्डनमिश्राणां कृतिर्ब्रह्मसिद्धिः समाप्ता ॥

## APPENDIX II.

॥ ओम् ॥

### ॥ ब्रह्मसिद्धिकारिकाणां प्रत्यर्धमकारादिक्रमेणानुक्रमणिका ॥

पू = पूर्वार्धम्.

उ = उत्तरार्धम्.

3A

## APPENDIX III.

ब्रह्मसिद्धावुदाहृतानां ग्रन्थान्तरस्थवाक्यानामकारादिक्रमेणानुक्रमणिका, आकरश्च ।

| वाक्यानि. | | पृष्ठम्. | पङ्क्तिः. | आकरः. |
|---|---|---|---|---|
| अथ यदतः परो दिवः | ... | 124 | 6 | Chānd. 3-13-7. |
| अथ योऽन्यथातः .. | ... | 121 | 3 | do. 7-25-2. |
| अथ योऽन्याम् ... | ... | 120 | 6 | Bṛh. 1-4-10. |
| अथातो धर्मजिज्ञासा | ... | 116 | 9 | Mīm. Sū. 1-1-1. |
| अदृष्टं द्रष्टृ ... | ... | 128 | 6 | Bṛh. 3-8-11. |
| अध्यारोपापवादाभ्याम् | ... | 26 | 22 | Cf. Sarva. V. S. S. S. 295—vide Śāṅkara-bhāṣya on Gītā 13-13. |
| अनश्नन्नन्योऽभिचाकशीति | ... | 31 | 16 | Muṇḍ. 3-1-1. |
| अनादिरप्रयोजना च .. | ... | 10<br>33 | 14<br>1 | ...... |
| अनारब्धकार्ये एव तु | ... | 130 | 5 | Brahm. Sū. 4-1-15. |
| अनेन जीवेनात्मना ... | ... | 10<br>31 | 4<br>19 | Chānd. 6-3-2. |
| अपहतपाप्मा विजरः | ... | 152 | 3 | do. 8-7-1. |
| अपि च पौरुषेयाद्वचनात् | ... | 80 | 3 | Śab. Bhāṣ. 1-1-2. |
| अभयं वै ब्रह्म ... | ... | 21 | 3 | Bṛh. 4-4-25. |
| अमृतत्वमेति ... | ... | 124 | 3 | Chānd. 8-6-6. |
| अरश्च ह वै ण्यश्चार्णवौ | ... | 122 | 18 | do. 8-5-3. |
| अविशिष्टस्तु वाक्यार्थः | ... | 41<br>77<br>77 | 22<br>6<br>9 | Mīm. Sū. 1-2-40. |
| अशरीरं वाव सन्तम् | ... | 34<br>119 | 20<br>6 | Chānd. 8-12-1 |
| असौ वाव लोकः ... | ... | 136 | 16 | do. 5-4-1. |
| अस्तिर्भवन्तीपरः ... | ... | 85 | 6 | Mahā-Bhāṣ. 2-3-1. |

4

## APPENDIX IV.

---

**ब्रह्मसिद्धावुदाहृतानां वाक्यानां यान्याकरभूतानि ग्रन्थान्तराणि तेषामनुक्रमणिका.**

Vide Br. Siddhi.

## APPENDIX V.

---

## NOTEWORTHY REFERENCES TO THE BRAHMASIDDHI IN OTHER WORKS.

### प्रकरणपञ्चिका by Śālikanātha.

"तत्रान्यः पण्डितंमन्यो मन्यते—नन्विदमसमञ्जसमुच्यते । सर्वत्र ह्युपाधिभेदमवगम्यौपाधिकशब्दानुविद्धः प्रत्ययो भवति, न पुनः प्रागेव सह वा । इह च प्रमाणमेव जायमानमस्तीत्येवमेव जायते । प्रमाणोदयोत्तरकालं ह्यनया भवितव्यम् । किं च सत्यपि प्रमाणयोगे किंचिदस्तीति गम्यते, किंचिच्चासीदिति, तथान्यद्भविष्यतीति । तत्र प्रमणसंबन्धस्य वर्तमानत्वात् सर्वत्र वर्तमानसत्ताप्रत्ययेन भवितव्यम् । तदतिरेकिणि तु सत्त्व तस्य त्रेधा व्यवस्थानाद्युक्तस्त्रिधावभासः । अपिच भूमितलनिखातेषु चिरतरकालवर्तिषु प्रलीनज्ञातृपुरुषेषु लिङ्गादिरहितेषु सकलप्रमाणप्रत्यस्तमयेऽपि वर्तमानसत्तासंदेहः । स च प्रमाणसंबन्धातिरेकिणीं सत्तामन्तरेणानुपपन्न इति । तदिदमनाकलितपरवचनस्य केवलं गलगर्जितम् ।"

Vide page 28, line 21 of the Prakaraṇapañcikā, Chowkhamba Sanskrit Series No. 17 and c.f. the Brahmasiddhi III–39 and 40.

"कः पुनरेष मोक्षः ? अविद्यास्तमय इति कश्चित् । एवमेवाद्वितीयमसंसृष्टं सकलोपाधिपरिशुद्धं ब्रह्म तदनाद्यविद्यावशेन शरीरादिसद्वितीयमिवोपाधिकलुषितावभासमानं लब्धजीवव्यपदेशं सत् बद्धमिव कल्प्यते । अतोऽनाद्यविद्यैव संसारः, निखिलविकल्पातीतपरिशुद्धविद्योदयात् तदस्तमय एव मोक्षः । तदिदं श्रद्धाविजृम्भितमिति प्रमाणपरतन्त्राः ।"

Vide page 154, line 1 of the book referred to above and the Brahmasiddhi III–106.

"सोऽयमात्मीय एव बाणो भवन्तं प्रहरति—
लब्धरूपे क्वचित् किंचित्तादृगेव निषिध्यते ।
विधानमन्तरेणातो न निषेधस्य संभवः ॥ इति ।"

Vide page 155, line 6 of the book referred to above and the Brahmasiddhi II–2.

"तत्र केचित् पण्डितमानिन आहुः—काल्पनिकी सुखादिव्यवस्था भविष्यति । यथैकस्मिन्नेव शरीरे पादादिवेदनाव्यवस्था न व्यतिकीर्यते, तथा नानाशरीरेषु न व्यतिकरिष्यत इति । न हि पादगता वेदना शिरसि, शिरोगता वा पादे । न च वेदना पादादिष्वेव समवेतेति शक्यते वक्तुम्, तेषामज्ञत्वात् । ज्ञाता हि वेदनाभिः सह संबध्यते, दुःखविशेषरूपत्वात् तासामिति । तदिदं मन्दबालजनमोहनमिति वृद्धाः ।"

Vide page 159, line 11 of the book referred to above and c.f. the Brahmasiddhi page 7, line 1.

"अत्रापर आह—सत्यं कार्यावगमादेव प्रवृत्तिः । इष्टसाधनतैव तु कार्यता, न परा काचित् । सैव प्रवृत्तिहेतुर्विधिरित्युच्यते । तदाह—

अपेक्षितोपायतैव विधिरिष्टो मनीषिभिः ।
ततो ह्यध्यवसायादिर्वा कस्मान्नाभिधानतः ॥"

Vide page 178, line 2 of the book referred to above and the Brahmasiddhi III–104.

---

प्रकरणपञ्चिकाव्याख्या—न्यायसिद्धिः.

"उक्तमेवार्थं कृत्स्नमनुद्य मण्डनाचार्येणात्र किंचिद्दूषणमुक्तम् । तन्निराकर्तुं सोपालम्भमाह—तत्रान्य इति ।"

Vide page 80, line 5 of the MS. described under R. No. 3647 of the Triennial Catalogue of Sanskrit MSS., in the Govt. Oriential MSS., Library, Madras, Vol. IV–C; and c.f. the Brahmasiddhi III–39 and 40.

"तदेवमनुवृत्ताकारप्रत्ययविरहादेव निराकृते पदार्थस्वरूपातिरेकिणि महासामान्ये सत्ताख्ये द्वैतप्रतिपादनपरतया चोदनायां प्रत्यक्षविरोधं दर्शयितुं मण्डनाचार्येण सन्मात्रविषयं प्रत्यक्षमिति साधितम्—

'आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः ।
नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यते ॥' इति । तदपि निराकृतमित्याह ।"

Vide page 82, line 4 of the MS. referred to above and the Brahmasiddhi II–1.

"यदुक्तं ब्रह्मसिद्धिकारेण—इतरेतराश्रयप्रसङ्गादेव सर्वत्र भेदो ग्रहीतुं न शक्यते । तथाहि घटपटयोरिह भेदो गृह्यते । तत्र घटात् पटस्य भेदो ग्रहीतुमिष्टश्चेत् पूर्वमेव घटस्यापि भेदो ग्रहीतव्यः । इतरथा कस्मात् पटस्य भेदो गृह्यत इति ज्ञायेत? तेन पूर्वमेव घटस्य भेदं गृहीत्वा घटात्पटस्य भेदं ग्रहीतव्यं स्पष्टमितरेतराश्रयं भवति । तन्न ।"

Vide page 135, line 10 of the MS. referred to above and c.f. the Brahmasiddhi II–10.

"नन्वेवमपि भेदेतरेतराभावयोर्भेदादभावस्य चान्यापेक्षत्वात् पुनरपि भेदग्रहणेऽन्योन्याश्रयणमापद्यत इत्यत्राह —लब्धरूपे क्वचित्किंचिदिति ॥"

Vide page 135, line 18 of the MS. referred to above and the Brahmasiddhi II-3.

---

नैष्कर्म्यसिद्धिः by Surēśvara.

"एवमुपसंहृते केचित् स्वसंप्रदायबलावष्टम्भादाहुः—यदेतत् वेदान्तवाक्यादहं ब्रह्मेति विज्ञानं समुत्पद्यते तन्नैव स्वोत्पत्तिमात्रेणाज्ञानं निरस्यति । किं तर्हि? अहन्यहनि द्राघीयसा कालेनोपासीनस्य सतो भावनोपचयान्निःशेषमज्ञानमपगच्छति etc."

Vide page 58, line 3 of the Naiṣkarmyasiddhi, Bombay Sanskrit Series No. 38 and c.f. the Brahmasiddhi page 35, line 15 and page 154, line 2.

---

बृहदारण्यकभाष्यवार्तिकम् by Surēśvara.

"अन्ये तु पण्डितंमन्याः संप्रदायानुसारतः ।
विज्ञायेति वचः श्रौतमिदं व्याचक्षतेऽन्यथा ॥
तत्त्वमस्यादिवाक्योत्थविज्ञानेन यथोदितम् ।
विज्ञाय वस्त्वसंसर्गि प्रज्ञां कुर्वीत यत्नतः ॥"

Vide page 1852, stanzas 796 and 797 of the Bṛhadāraṇyakabhāṣyavārtika, Ānandāśrama Sanskrit Series No. 16 and c.f. the Brahma siddhi page 154, line 2.

ब्रह्मसूत्रभाष्यव्याख्या—भामती by Vācaspatimiśra.

"अभ्यासे हि भूयस्त्वमथस्य भवति, यथाहो दर्शनीयाहो दर्शनीयेति, न न्यूनत्वं, प्रागेवोपचरितत्वम् ।"

Vide page 8, line 9 of the Bhāmati (Catussūtri), Nirnayasagar Press, Bombay, 1915 and the Brahmasiddhi page 6, lines 24 and 25.

"यथा पयः पयोऽन्तरं जरयति, स्वयं च जीर्यति; यथा विषं विषान्तरं शमयति, स्वयं च शाम्यति; यथा वा कतकरजो रजोऽन्तराविले पयसि प्रक्षिप्तं रजोऽन्तराणि भिन्दत् स्वयमपि भिद्यमानमनाविलं पाथः करोति, एवं कर्म अविद्यात्मकमपि अविद्यान्तराण्यपगमयत् स्वयमप्यपगच्छति ।"

Vide page 58, line 11 of the book referred to above and c.f. the Brahmasiddhi page 12, lines 17 and 25.

---

भामतीव्याख्या—कल्पतरुः by Amalānanda.

"स्थितप्रज्ञः साधको न साक्षात्कारवानिति मण्डनमिश्रैरुक्तं दूषणमुद्धरति—स्थितप्रज्ञश्चेति ।"

Vide page 959, line 22 of the Kalpataru, Nirnayasagar Press, Bombay, 1917 and c.f. the Brahmasiddhi page 130, line 19.

---

विधिविवेकव्याख्या—न्यायकणिका by Vācaspatimiśra.

"यथाहाचार्यः—

सामान्यरूपभूयस्त्वे तस्मात्तत्त्वं प्रकाशते ।
विलक्षणत्वमल्पत्वे चकास्ति तदनुद्भवात् ॥

इति, तदेतत् ब्रह्मसिद्धौ कृतश्रमाणां सुगममिति नेह प्रपञ्चितम् ।"

Vide page 80, line 15 of the Vidhiviveka with commentary. Pandit Series No. XXV and the Brahmasiddhi III–66.

न्यायमञ्जरी by Jayantabhaṭṭa.

" तदुक्तम्—

आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः ।

नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यते ॥ "

Vide page 526, line 17 of the Nyāyamañjarī, Vizianagaram Sanskrit Series No. 10 and the Brahmasiddhi II–1.

---

पञ्चपादिकाविवरणम् by Prakāśātman.

" ब्रह्मसिद्धिकारेण च एवमेवेयमविद्या माया मिथ्याप्रत्यय इत्युक्तत्वात् । "

Vide page 32, line 17 of the Pañcapādikāvivaraṇa, Vizianagaram Sanskrit Series No. 5 and the Brahmasiddhi page 9, line 12.

---

प्रशस्तपादभाष्यव्याख्या—न्यायकन्दली Śrīdharācārya.

" एतेन तत्प्रत्युक्तं यदुक्तं मण्डनेन विशेषगुणनिवृत्तिलक्षणा मुक्तिरुच्छेदपक्षान्न भिद्यत इति । "

Vide page 6, line 23 of the Nyāyakandalī, Vizianagaram Sanskrit Series No. 6 and the Brahmasiddhi page 16, lines 14 and 15.

---

श्रीभाष्यम् by Rāmānuja.

" अत्र केचिदद्वितीयत्वं ब्रह्मणोऽभ्युपयन्त एवैवं समादधते—एकस्यैव ब्रह्मणः प्रतिबिम्बभूतानां जीवानां सुखित्वदुःखित्वादय एकस्यैव मुखस्य प्रतिबिम्बानां मणिकृपाणदर्पणादिषूपलभ्यमानानामल्पत्वमहत्त्वमलिनत्वविमलत्वादिवत् तत्तदुपाधिवशात् व्यवस्थाप्यन्ते । "

Vide the Śrībhāṣya II–1–15 and c.f. the Brahmasiddhi page 7, line 9

8

न्यायमकरन्दः by Ānandabōdha.

" एतदेवाभिप्रेत्याभिहितम्—अपि च जन्मैव बुद्धेर्व्यापारोऽर्थावग्रहरूपाया इति ।"

Vide page 35, line 6 of the Nyāyamakaranda, Chowkhamba Sanskrit Series No. 38 and the Brahmasiddhi page 45, line 13.

" यथोक्तम्—

'सर्वात्मनार्थो ज्ञानेन केनचिन्न हि गृह्यते'। इति ।"

Vide page 127, line 4 of the book referred to above and the Brahmasiddhi III-138.

" तदुक्तम्—

'न स कल्पयितुं शक्यस्तत्सिद्धेर्लौकिकादपि ।' इति ।"

Vide page 231, line 9 of the book referred to above and the Brahmasiddhi III-85.

" तदाहुरत्रभवन्तो मण्डनमिश्राः—

'पदं स्वधर्मं व्युत्क्रामेदन्यसिद्धार्थतान्यथा ।' इति ।"

Vide page 234, line 8 of the book referred to above and the Brahmasiddhi III-78.

" तदभिहितमाचार्यवर्यैः—

'अपेक्षितोपायतैव विधिरिष्टो मनीषिभिः ।' इति ।"

Vide page 256, line 4 of the book referred to above and the Brahmasiddhi III-104.

" तदाह स्म—

'अविद्यास्तमयो मोक्षः सा संसार उदाहृतः ।' इति ।"

Vide page 271, line 5 of the book referred to above and the Brahmasiddhi III-106.

" यदपि कैश्चित् प्रमेयविकल्पेन सामान्यमेव वस्त्विति स्थापयित्वा सत्ताया महासामान्यरूपत्वात् सन्मात्रमेव सत्त्वमिति साधितं, तदपि न सत्कल्पम् ।"

Vide page 290, line 9 of the book referred to above and c.f. the Brahmasiddhi II-32.

"न हि निषेधवाक्येषु कस्यचिदात्यन्तिको निषेधः । किंतु किंचित् क्वचिन्निषिध्यते । ब्रह्माद्वैताभिमानी तु भवानात्यन्तिकमेव निषेधमभिलषति । तथा च सोऽयमात्मीय एव बाणो भवन्तं प्रहरति—

'लब्धरूपे क्वचित् किंचित् तादृगेवं निषिध्यते ।
विधानमन्तरेणातो न निषेधस्य संभवः ।' इति ।"

Vide page 292, line 7 of the book referred to above and the Brahmasiddhi II–2.

"यथोक्तम्—

'सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते ।
प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते ॥
प्रविलीनप्रपञ्चेन तद्रूपेण न गोचरः ।
मानान्तरस्येति मतमाम्नायैकनिबन्धनम् ॥' इति ।"

Vide page 298, line 8 of the book referred to above and the Brahmasiddhi IV–3 and 4.

"यदपि मतम्—बीजाङ्कुरवदनादिरविद्याजीवविभागः, ततो नान्योन्याश्रयत्वमिति, तदप्यसांप्रतम् ।"

Vide page 312, line 3 of the book referred to above and c.f. the Brahmasiddhi page 10, line 12.

---

न्यायदीपावलिः by Ānandabōdha·

"तदुक्तम्—

'यः प्रतीतिविरोधस्तु स स्वदोष उदाहृतः ।
सामानाधिकरण्येन बोधाद्रूप्यमिदं सितम् ॥' इति ।"

Vide page, line 9 of the Nyāyadīpāvali, Chowkhamba Sanskrit Series No. 117 and the Brahmasiddhi III–149.

न्यायमकरन्दव्याख्या by Citsukha.

"तदुक्तं ब्रह्मसिद्धिकारैः—

'यः प्रतीतिविरोधस्तु स स्वदोष उदाहृतः ।
सामानाधिकरण्येन बोधाद्रूप्यमिदं सितम् ॥'

इति तवात्मीय एव बाणो भवन्तं प्रहरति ।"

Vide page 74, line 22 of the Nyāyamakaranda with commentary, Chowkhamba Sanskrit Series No. 38 and the Brahmasiddhi III–149.

---

तत्त्वप्रदीपिका by Citsukha.

"तथाच ब्रह्मसिद्धौ मण्डनमिश्रैः—विपर्ययाभावस्तु युक्तोऽनुमातुं हेत्वभावे फलाभाव इति ।"

Vide page 140, line 2 of the Tattvapradīpikā, Nirnayasāgar Press, Bombay and c.f. the Brahmasiddhi page 146, lines 8 and 9.

"अज्ञाननिवृत्तेर्ब्रह्मज्ञानरूपतया तज्जन्यत्वाभावात् ज्ञातोऽर्थस्तज्ज्ञप्तिर्वाज्ञानहानिरिति इष्टसिद्धिकारैरभिधानात् ।

'विद्यैव वाद्यया शान्ता तदस्तमय उच्यते ।'

इति ब्रह्मसिद्धिकारैरप्युक्तत्वात् ।"

Vide page 381, line 9 of the book referred to above and the Brahmasiddhi III–106.

---

शतदूषणी by Vēdāntadēsika.

"एवमाश्रयज्ञानेनापि विरोधः । न हि यत्किंचिदाश्रयप्रतीतिमन्तरेणाभावप्रतिपत्तिमनुमन्यामहे ।

उक्तं चाभियुक्तैः—

'लब्धरूपे क्वचित् किंचित्तादृगेव निषिध्यते ।' इति ।"

Vide page 251, line 5 of the Satadūṣaṇī, Śāstramuktāvali Series No. 36, Vol. III and the Brahmasiddhi II–2.

अधिकरणसारावलिव्याख्या—अधिकरणचिन्तामणिः by Varadanātha.

"अत्र विधिः कार्यमेकेषाम्, शब्दभावना पुनरन्येषाम्, इष्टसाधनत्वं मण्डनस्य, इष्टस्य कृत्यधीनत्वलक्षणमाचार्यैकदेशीयानाम्, धात्वर्थभावनेति केचिदूचुः। आप्तस्य हितकामस्य नियोग इति न्यायवादिनः।"

Vide stanza 20 in Śāstrāvatāra of the Adhikaraṇasārāvali with Adhikaraṇacintāmaṇi. Telugu edition, Madras and c.f. the Brahmasiddhi III–104.

---

न्यायसारव्याख्या—न्यायमुक्तावलिः by Mahārājābhirāja Aparādityadēva.

"स्यादेतदेवं यदि प्रत्यक्षेण भेदः प्रमीयेत। तदेव तु दुःसंवादमिति त्र्यन्तदन्तिनः, तस्य विधिमात्रव्यापारत्वात्। तदुक्तम्—

'आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः।
नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यते।'

* * * *

'लब्धरूपे क्वचित् किंचित्तादृगेव निषिध्यते।
विधानमन्तरेणातो न निषेधस्य संभवः॥'

* * * *

'क्रमः संगच्छते युक्त्या नैकविज्ञानकर्मणोः।
न संनिहितं तच्च तदन्यामर्शि जायते॥' इति।"

Vide page 488, line 1 of the MS. described under R. No. 3262 of the Triennial Catalogue of Sanskrit MSS., in the Govt. Oriental MSS., Library, Madras, Vol. IV–B; and the Brahmasiddhi II–1, 2 and 3.

"यदप्यभिहितम्—

'अन्योन्यसंश्रयाद्भेदो न प्रमान्तरसाधनम्।
नास्मिन्नयं नायमयमिति भेदाद्विना न धीः॥' इति।"

Vide page 490, line 8 of the MS. referred to above and the Brahmasiddhi II–10.

"यदप्यभिहितम्—

'मीयमानैकरूपेषु न निषेधोऽवकाशवान्।' इति।"

Vide page 491, line 17 of the MS. referred to above and the Brahmasiddhi II–11.

"यत्तूक्तम्---

'आलोच्यते वस्तुमात्रं ज्ञानेनापातजन्मना ।
अचेत्यमानो भेदोऽपि चकास्तीत्यतिसाहसम् ॥' इति ।"

Vide page 492, line 14 of the MS. referred to above and the Brahmasiddhi II-27.

---

न्यायचन्द्रिका by Vidyāsāgara.

"न च प्रत्यक्षं बाधकम् । तद्धि बाधकं भवत् भेदाभावमभेदं वा गृह्णीयात् । न तावत् भेदाभावं गृह्णाति, प्रत्यक्षस्य विधिमात्रनिष्ठत्वेन भेदनिषेधकत्वानुपपत्तेः । यथाहुः—

'आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः ।' इति ।"

Vide page 246, line 14 of the Nyāyacandrikā MS. described under R. No. 2931 of the Triennial Catalogue of Sanskrit MSS., in the Govt. Oriental MSS., Library, Madras, Vol. IV-A and the Brahmasiddhi II-1.

---

अद्वैतसिद्धिः by Madhusūdanasarasvatī.

"अत एव—'घटादिकं सद्रूपे कल्पितम, प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वात्, प्रत्येकं चन्द्रानुविद्धजलतरङ्गचन्द्रवत् ।' इति ब्रह्मसिद्धिकारोक्तमपि साधु ।"

Vide page 316, line 11 of the Advaitasiddhi, Nirnayasagar Press, Bombay, 1917 and the Brahmasiddhi II-31.

---

## APPENDIX VI.

---

### ALPHABETICAL INDEX OF IMPORTANT WORDS USED IN THE BRAHMASIDDHI.

Page and Line.

9A

Page and Line.

Page and Line.

भ.



म.

Page and Line.

Page and Line.

## CORRECTIONS AND ADDITIONS.

| Page | Line | *For* | *Read* |
|---|---|---|---|
| 4 | last | Bṛh. 45–15 | Bṛh. 4–5–15. |
| 18 | 24 | निषेध | र्निषेध |
| 32 | 4 | साहत्यं | साहित्यं |
| 35 | 1 | तत्त्वे सर्वत्र | तत्त्वे (न) सर्वत्र |
| 37 | 24 | तत् सामान्यम | तत्सामान्यम् |
| 41 | 13 | प्रतायत इति | प्रतीयत इति |
| 45 | 24 | पूव | पूर्व |
| 52 | 9 | Foot-note —*Add* भेदवादी after अयं as a reading found in Trivandrum MS. | |
| 56 | 4 | हेतुरूपं | हेतु रूपं |
| 61 | 7 | उपपत्तेः | उत्पत्तेः |
| 64 | 11 | त्पत्ते | त्पत्तेर्न |
| 65 | Foot-note 3. | ता. | त |
| 73 | 4 | कारि; | कारि- |
| 74 | 16 | गमनयि | गमनीय |
| 75 | 6 | विधेयं | विधेये |
| 81 | 10 | अत्र— | अत्र । |
| 96 | 8 | यते ? | कथ्यते ? |
| 96 | 21 | उपसं हरति | उपसंहरति |
| 98 | 23 | अस्ति धी | अस्तिधी |
| 99 | 20 | अस्ति क्रियायां | अस्तिक्रियायां |
| 104 | 20 | शब्द-र्थः | शब्दार्थः |
| 108 | 5 | वक्तु | वक्तृ |
| 109 | 5 | ते, | तेषु |

| Page | Line | *For* | *Read* |
|---|---|---|---|
| 109 | 8 | अप्रतीयमानोऽपि | प्रतीयमानोऽपि |
| 117 | 4 | ' प्रवर्तितोऽस्मि ' | (न ?) ' प्रवर्तितोऽस्मि ' |
| 121 | 5 | अनपपत्ति | अनुपपत्ति |
| " | 11 | अविरोधायाच्यते | अविरोधायोच्यते |
| 122 | " | श्रतयः | श्रुतयः |
| 124 | 2 | ' इम् ' | ' इमम् ' |
| 130 | 12, 13 | देहपातप्रतीक्षातु तत्र | देहपातस्तु तत्र |
| " | Foot-note No. 9. | पातस्तु तत्र A and C | पातप्रतीक्षा तु तत्र B. |
| " | *Add* the following in the foot-note as the last item :—In line 20 ' विगलितनिखिलाविद्यः सिद्धः '—is adopted since it is found in all MSS. A. B and C. Śaṅkhapāṇi, however, adopts the reading ' विगलितनिखिलाविद्यासिद्धः ' and makes the best of it by giving a somewhat laboured interpretation. | | |
| 144 | 14 | प्रमेयत्व | प्रमेयत्वं |
| 145 | 3, 4 | अविवादम् ; अक्षेपु | अविवादमक्षेपु; |
| " | 9 | असिद्धव्यभिचारम् | असिद्धाव्यभिचारम् |
| " | Foot-note No. 5. | द्धा B. | द्ध. A |
| 146 | 3 | विपर्यये फलापावो | विपर्ययफलाभावो |
| " | 6 | पान्द्रिया | पीन्द्रिया |
| 154 | 20 | वदेमिति | वेदमिति |
| 156 | 8 | तत | ततः |
| 158 | 5 | प्रचतक्षे | प्रचक्षते |
| " | 8 | विज्ञाते | विज्ञाते |

PART II.—(COMMENTARY.)

| | | | |
|---|---|---|---|
| 16 | 26 | दूपयात | दूषयति |
| 49 | 14 | सेरछ, सेर्लो | शेरछ, शेर्लो |

| Page | Line | *For* | *Read* |
|---|---|---|---|
| 96 | 8 | इतिः पूर्वपक्षसमाप्तौ । | इतिः पूर्वपक्षसमाप्तौ—(Note that the para does not end here.) |
| " | 9 to 12 | [ Note.—The matter up to 'कर्मोपासनापेक्षा' इति । should be placed at the end of the previous para, just after इतिः पूर्वपक्षसमाप्तौ.] | |
| " | 12 | इति सिद्धान्तमाह— अत्रोच्यत इति। | इति । सिद्धान्तमाह—अत्रोच्यत इति । |
| | | [ Note.—'सिद्धान्तमाह— अत्रोच्यत इति' This should be at the beginning of a separate para.] | |
| 135 | 7 | साऽत | सोत |
| " | 8 | कितु | किंतु |
| 160 | 25 | प्रमिणोति | प्रमिनोति |
| 178 | last | इतुरति | हेतुरिति |
| 198 | 18 | यजातस्तु | यजतिस्तु |
| 212 | 7 | कण्ठक | कण्टक |
| 252 | 28 | "अमृतत्वयेति" | "अमृतत्वमेति" |
| 260 | 22 | श्रुर्त्यथ | श्रुत्यर्थे |
| 266 | 14 | आत्मतत्त्वापरोक्षाय | आत्मतत्त्वापरोक्ष्याय |
| 289 | 12 | द्विविध | विविध |
| " | 20 | अतोऽन्यथा | अतो नान्यथा. |

## APPENDIX V.

*Add* the following in the page 60 :—

तत्त्वशुद्धिः by Jñānaghana.

"नापि द्वितीयः कल्पः; विधिमन्तरेण व्यवच्छेदानुपपत्तेः, विधिपूर्वकत्वात् व्यवच्छेदस्य । तदुक्तम्—

'लब्धरूपे क्वचित् किंचित्तादृगेव निषिध्यते ।
विधानमन्तरेणातो न निषेधस्य संभवः ॥' इति ।"

Vide page 3, line 3 of the MS. described under R. No. 2897 of the Triennial Catalogue of Sanskrit MSS. in the G.O. MSS. Library, Madras.

ओम्

# ब्रह्मसिद्धिव्याख्या

## शङ्खपाणिकृता ।

---

### ब्रह्मकाण्डः

यदधीनं सुरेन्द्राणामप्यारम्भसमापनम् ।
गणाधिपतिसंज्ञं तद्वस्तु मेऽस्त्विष्टकृत् सदा ॥

प्रकरणारम्भे विघ्ननिवृत्तये परामत्र च प्रतिपाद्यतयाभिमतां देवतां स्तुतिपुरःसरं नमस्यति—आनन्दमिति । कार्यारम्भे नमस्कारक्रियायामवि- P. 1-1. गीतसदाचारः प्रमाणम् । न च जैमिनिना नमस्कारो न कृत इति विगानमाशङ्क्यम्; न ह्यकरणं विगानम्, अपि तु निन्दावादः । तथा होलाकादीनां नियतप्राच्यादिकर्तृकाणामपि प्रामाण्यमिति स्थितम् । स चात्र नोपलभ्यते । कृत एव वा जैमिनिनाप्यनिबद्धया वाचा मनसा च नमस्कार इति विशिष्टत्वादनुमिमीमहे । स च कार्यारम्भे तत्समाप्तिफलाभिसंधानेनैव शिष्टैराचर्यते; तेन विशिष्टफलाया एव स्मृतेस्तत्फलैव श्रुतिस्ततः कल्प्या; अतो न विश्वजिन्न्यायेन स्वर्गफलप्रसङ्गः । नमस्काराच्च धर्मविशेषः, ततो विघ्नहेतोरधर्मस्य क्षयः, ततो हेत्वभावाद्विघ्नानुत्पत्तौ प्रारिप्सितकार्यसमाप्तिरित्येवं कार्यसमाप्त्यर्थता नमस्कारस्य । स्तुतिपूर्वकश्च नमस्कारो वीर्यवत्तरः; अतस्तथैव कृत इति ।

तत्र ब्रह्मज्ञानाय प्रकरणमिदमारम्भणीयम्; तच्च वेदान्तेभ्य एव सिध्यति; अतः किमनेनेत्याशङ्क्य 'वेदान्तेषु' इत्यादिना 'आरभ्यते' इत्यन्तेन श्रोतृजनप्रवृत्त्यर्थं प्रयोजनमाह । वादिविप्रतिपत्तिसमुत्थाप्रामाण्यादिसंशयतिरोहितशक्तयो वेदान्ता न ब्रह्मज्ञानं कर्तुमीशते; अनेन तु प्रकरणेन समस्तसंशयनिरासे कृते सत्याविर्भूतशक्तयस्त एव ब्रह्म ज्ञापयन्ति; ततश्च कर्मविधीनामिव धर्ममीमांसा वेदान्तानामपि ब्रह्मज्ञानं कुर्वतां विप्रतिपत्तिनिराकरणद्वारेणेदं प्रकरणमङ्गम्; यच्च प्रधानस्य फलं तदेवाङ्गस्य, दर्शपूर्णमास-

फलमिव प्रयाजादेः; अतो ब्रह्मज्ञानमस्य प्रयोजनम् । तथा सति ब्रह्म विषयः, तेन चोपायोपेयलक्षणः संबन्ध इत्यप्यर्थात् सिद्धम्; ततश्च विषय-प्रयोजनसंबन्धैः संपन्नमिदं प्रकरणमारब्धव्यमित्यभिप्रायः । नन्वत्रापि ब्रह्म-मीमांसाशास्त्रमङ्गमस्त्येव; अतः किमनेन पुनरुक्तप्रायेण प्रकरणेन? सत्य मस्ति; किंतु तत्र नानाप्रदेशे संक्षेपतश्चार्थसिद्धं च सिद्धवच्च यदुक्तं तदत्रैकत्र प्रदेशे विस्तरेण साक्षात् सोपपत्तिकं कथ्यत इति पुनरारम्भः ।

P. 1–3. तत्राद्यां विप्रतिपत्तिं तावदाह—केचिदिति । कुत इत्याह—आत्मन इति । विज्ञानात्मा वा वेदान्तैः प्रतिपाद्यः, परमात्मा वा; तत्र विज्ञानात्मन-स्तावदहंप्रत्ययसिद्धत्वे सति तेषां वेदान्तानामनुवादकत्वादप्रामाण्यम्; स्वप्रकाशत्वेऽप्यात्मनः स्वतः सिद्धत्वादनुवादकत्वं वेदान्तानामविशिष्टम्; प्रमाणान्तरसिद्धत्वं तु परमतोपन्यासप्रक्रमादुक्तम् । परमात्मनस्तु प्रमाणा-न्तरेणासिद्धत्वे संबन्धिन्यगृहीते संबन्धग्रहणानुपपत्तेस्तेन सह तच्छब्दस्य वाच्यवाचकलक्षणसंबन्धाग्रहादपदार्थत्वे सत्यवाक्यविषयत्वम्; यतः पदार्थो एव वाक्यार्थ इति मतम् । ततश्च वेदान्तानामनवबोधकत्वादेवाप्रामाण्य-मित्यर्थः । अथाहंप्रत्ययसिद्धमप्यात्मानं निरस्तसमस्तविशेषमवगमयताम "अस्थूलमनण्वह्रस्वम्" इत्यादिवाक्यानामननुवादकत्वात् स्थूलादिपदानां नञश्च ब्रह्मादिपदानां च बृहत्त्वाद्यर्थान्वयेन यथायथं स्वार्थे संबन्धग्रहण-संभवात् पदार्थत्वे सति वाक्यविषयत्वं चेदुच्यते, तथापि तेषां प्रवृत्ति-निवृत्त्युपदेशेऽसत्यपुरुषार्थत्वादप्रामाण्यम् । ननु परिच्छेदलक्षणं प्रामाण्यम्, न तु पुरुषार्थोपयोगित्वलक्षणम्; पुरुषार्थोपयोगिनामपि घटादीनामप्रामाण्याद पुरुषार्थानामप्यनपेक्षितवस्तुज्ञानानां प्रामाण्याच्च; अस्ति परिच्छेदकत्वं वेदान्तानामिति कथमप्रामाण्यम्? उच्यते—नानपेक्षितवस्तुज्ञानतुल्यमुप-निषदां परिच्छेदमात्रेण प्रामाण्यम्, किं तु पुरुषार्थोपयोगित्वेन । न च तुल्यम्, सांप्रदायिकत्वादध्ययनविधिविषयत्वाच्च; न हि विधिः पुरुषार्था-नुपयोगिनि पुरुषं प्रेरयति; पुरुषार्थोपायं च बोधयतः प्रमाणस्य पुरुषार्थोप-योगिता; व्यवहारश्च पुरुषार्थोपायः; स च प्रवृत्तिनिवृत्त्यात्मा; ते चेन्नोप-दिशन्ति वेदान्ताः, नैषां यथाप्राप्तं प्रामाण्यमस्तीत्यप्रामाण्याभिधानम् । किमर्थं तर्हि तानध्ययनविधिरध्यापयति? जपार्थमिति ब्रूमः । नन्वापन्नं तर्हि

तेषां पुरुषार्थोपयोगित्वम्; बाढं प्रमेयतया, न तु प्रमाणतया; प्रमाणतया च पुरुषार्थोपयोगित्वाभावोऽप्रामाण्योपयोगादिह प्रतिपाद्यः, न सर्वथा। नन्वध्ययनविधिरर्थावबोधार्थः, न जपार्थः; सत्यम्; पूर्वोक्तयुक्त्या तु तदसंभवान् वेदान्तेषु जपार्थो भविष्यति। नन्वेकस्य विधेः द्व्यर्थत्वमयुक्तम्; अयुक्तमपि विकल्पवद्गत्याश्रयिष्यते। तस्माद्यथा विध्यर्थवादमन्त्राणामध्ययनविधिविषयत्वाविशेषेऽपि 'यच्छक्नुयान्' इत्युपबन्धाद्विधिस्तुतिस्मृतयो यथासंभवमुपयोगविशेषास्तथा वेदान्तानां जप इत्यदोषः॥

अन्ये तु कार्येऽर्थे वेदस्य प्रामाण्यं मन्यमानाः 'आत्मा प्रतिपत्तव्यः' इत्युक्ते 'कथंभूतः' इत्यपेक्षायाम् 'इत्थंभूतः' इत्यपेक्षितप्रतिपत्तव्यात्मस्वरूपसमर्पणादुपनिषदां कार्यानुप्रवेशात् प्रामाण्यं मन्यन्ते; तथा सति च विशिष्टविध्यनुपपत्त्या विशेषणभूतमात्मस्वरूपमप्यौपनिषदं सेत्स्यति द्रव्यदेवताविशिष्टयागविधाविव द्रव्यदेवतम्, अपुरुषार्थत्वमध्ययनविधिव्यर्थत्वं च न भविष्यति—इति वदन्तः। तेषां तु व्याजमात्रमिदम्; परमार्थतस्तु नोपनिषदामात्मस्वरूपे प्रामाण्यं तदा सिध्यति, अतत्परत्वादुपनिषदाम्; 'एवंभूत आत्मा प्रतिपत्तव्यः' इति तदा वचनं व्यज्यते, न 'एवंभूत आत्मा' इति। ननु कथमनेवंभूत एवंभूतः प्रत्येतुं शक्यते? न, अध्यारोपेणापि "वाचं धेनुमुपासीत" इतिवदुपपत्तेः। अत एव विशिष्टविधेरपि नात्मस्वरूपसिद्धिः; द्रव्यदेवतमन्तरेण तु यागो न सिध्यतीति युक्तं तदाक्षेप इति वैषम्यम्। प्रतिपत्तिविध्यसंभवाच्चाप्रामाण्यम्। एतच्च वक्ष्यते। तदाह—अन्ये त्विति। विप्रतिपत्त्यन्तरं चाह। अन्ये त्विति। "एक P. 1-6.
एवायम्" "अद्वितीयः" इत्यादिवचसां मुख्यार्थपरिग्रहे साध्यसाधनेतिकर्तव्यतादिभेदविषयत्वेन कर्मविधिविरोधात् नीलादिभेदविषयत्वेन प्रत्यक्षादिविरोधाच्च देशकालजात्याद्यभेदेन 'एकोऽद्वितीयः' इत्युपचारेणोच्यत इत्यन्ये मन्यन्त इत्यर्थः। उपलक्षणार्थाश्चैता विप्रतिपत्तय उक्ताः; इतरा अपि वक्ष्यमाणनिराकरणान् द्रष्टव्याः। तदेवं विप्रतिपत्तिषु तासां निरासायेदमारब्धमित्याह—तन्निरासायेति किं तदित्याह—आनन्दमितीति। आनन्दमिति प्रतीकेन प्रकरणमिदं निर्दिशति; प्रकरणमित्यर्थः। तत्राद्यश्लोकस्य तात्पर्यमाह—परामिति। यद्यप्यद्वैतिनां निर्गुणं ब्रह्म; आनन्दा-

दयश्च तस्य स्वरूपमेव, न गुणाः; तथापि स्तुत्यस्तोतृभेदवदविद्यासिद्धगुण-गुणिभेदमाश्रित्य गुणसंकीर्तनात्मिका स्तुतिः कृता । अतस्तया स्तुत्या, कायवाङ्मनसां नम्रतास्वरूपया च प्रणत्या, देहेन्द्रियमनोबुद्धिभ्यः परां तैरसंस्पृष्टस्वरूपां देवतां द्योतमानां स्वतः स्फुरन्तीं पूजयति; "नमसः पूजायाम्" इति क्यचः स्मरणात् स्तुतिपूर्वया प्रणत्येत्युक्तं भवति । काय-वाङ्मनःप्रह्वतालक्षणयेति च प्रणतिमात्रस्येदं लक्षणम् । इह तु प्रणतिविशेष एव वाचिकोऽभिप्रेत इति द्रष्टव्यम् । कायमनःपूर्वक एव वायं वाचिको नमस्कार इति ग्रन्थकृद्वचनादेवावस्यामः । तत्रानन्दमित्यादिना स्तुतिर्नम स्याम इति प्रणतिः कृतेति । नमस्कारार्थश्चेदाद्यश्लोकः ततो नमस्कारपूर्वत्वा-त्प्रकरणारम्भस्य ततो वहिरिति कथं प्रकरणप्रतीकत्वेनानन्दमित्युच्यत

P. 1-9. इत्याशङ्क्याह—प्रकरणार्थमिति । य एवार्थस्तुत्यर्थ उक्ता गुणास्त एव प्रकरणेन प्रतिपाद्या इत्यर्थात् प्रकरणार्थमपि संक्षेपतः सूचयति; अतः प्रकरणान्तर्गतत्वाद्युक्तमस्य प्रकरणप्रतीकत्वमिति भावः । ननु 'विप्रतिपत्ति-निरासायेदं प्रकरणम्' इत्युक्तम्; अतस्तन्निरासोपपत्तिरेवास्य प्रतिपाद्यत्वा-द्विषयः, नानन्दादिरित्याशङ्क्याह—विप्रतिपत्तीति । विप्रतिपत्तिनिरासोप-पत्त्यभिधानं नादृष्टार्थम्, किं त्वानन्दादिरूपे ब्रह्मणि वेदान्तानां प्रामाण्य-प्रतिपादनार्थम्; तदप्यानन्दादिरूपं ब्रह्मतत्त्वमिति प्रतिपादयितुम्; अतो भवत्यानन्दादिरूपं ब्रह्मापि प्रतिपाद्यत्वाद्विषय इत्यर्थः । न केवलं विप्रति-पत्तिनिरासोपपत्तिर्विषयः, किं त्वानन्दादिरपीत्यपिशब्दस्यार्थः ।

इदानीं प्राथम्यादानन्दादिरूपं व्याख्यातुकामस्तत्पूर्वपक्षं तावत् करोति—अत्रेति । आहुरित्यध्याहार्यम्; मन्यन्त इति वा व्यवहितमप्यपेक्षयाऽनुषञ्ज-नीयम् । ततः किमित्याह—रागेति । इतिशब्दो हेत्वर्थः । रागनिबन्धना-याश्च प्रवृत्तेः संसारहेतुत्व "कामात्मता न प्रशस्ता" "विद्ध्येनमिह वैरिणम्" "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवति" इत्यादिश्रुतिस्मृतिभ्योऽवगतम्; अनुमानाच्च; तथाहि—मुमुक्षो रागनिबन्धना प्रवृत्तिर्धर्मिणी, संसारबीजमिति साध्यो धर्मः, राग-निबन्धनप्रवृत्तित्वात् स्त्रीभोगादिप्रवृत्तिवदिति । किं च रागतो मुमुक्षुप्रवृत्तौ यथाचोदितोऽपिकार्यपि न लभ्यत इत्याह—शान्तस्य निगृहीतान्तःकरणस्य, दान्तस्य निगृहीतबहिष्करणस्य, आत्मनि विषये दर्शनम् "तस्मादेवं-

विच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्येत्" इति श्रुत्योच्यते । न चानन्दरागात् प्रवर्तमानः शान्तो भवतीत्यर्थः । ननु शान्तत्वं चेदनुपपन्नं पूर्वं दान्तोपन्यासोऽपि व्यर्थः । न व्यर्थः; स हि शान्तत्वस्य श्रौतत्वज्ञापनार्थः; अनेकपदोपादाने हि श्रुतिर्बुद्धौ संनिधीयते; अतः शान्तत्वस्य श्रौतत्वज्ञानं भवति । यद्वा निगृहीतान्तःकरणश्चेन्न भवति, ततस्तन्मूलत्वात् बहिष्करणप्रवृत्तेर्दान्तोऽपि न स्यादेव; शान्तग्रहणं तूपलक्षणार्थं मन्तव्यम् । ननु "विज्ञानमानन्दं ब्रह्म" इति श्रुतस्यानन्दस्य प्रयोजनवशादुत्सर्गो न युक्तः; न हि प्रयोजनवशात्प्रमाणव्यवस्थोचिता । बाढम्; न प्रयोजनवशादानन्दश्रुतिमुत्सृजामः; किं तु मुक्तिश्रुत्यन्तरबलादेव तामन्यथा नयामः; नचात्यन्तमुत्सृजाम इत्यदोषः। नन्वनानन्दात्मके ब्रह्मण्यपुरुषार्थत्वात् प्रवृत्तिर्न स्यात्; प्रवृत्तौ चास्य न नेच्छास्ति, अनिच्छोः प्रवृत्त्यनुपपत्तेः; सैव च रागः; अतः कथं शान्तता तवापीत्याशङ्क्य परः स्वपक्षे प्रवृत्तिमधिकारिणं च शान्तं दर्शयति—तस्मादिति; यस्मादानन्दरागात्प्रवृत्तावेवं दोषस्तस्मादित्यर्थः । सकलाध्यात्मिकादिभेदभिन्नं दुःखजातमतिक्रान्ते ब्रह्मतत्त्वे तेभ्य एव दुःखेभ्यः उद्विग्नः सुखेभ्यश्च हैरण्यगर्भेभ्यः क्षयादिदोषपरिभावनया विगतस्पृहः प्रवर्तमानो मुच्यत इत्यर्थः । न हि दुःखनिवृत्तीच्छा रागः, किं तु सुखेच्छा; दुःखनिवृत्त्यर्थमपि लोके प्रवृत्तिर्दृष्टा; अतः प्रवृत्तिरधिकारी चास्मत्पक्षे घटत इति भावः । ननु यदि नानन्दात्मकं ब्रह्म का तर्हि "विज्ञानमानन्दम्" इत्यादिश्रुतीनां गतिरित्याशङ्क्याह—आनन्देति । सकलस्याध्यात्मिकादिभेदभिन्नस्य त्रिविधस्यातिक्रममभावमाहुः गमयन्ति; लक्षणयेत्यर्थः । सुखं हि दुःखाभावाविनाभूतम्; यत्रापि युगपत् सुखदुःखे तत्रापि सुखद्वारजदुःखाभावेनाविनाभूतम् । अनुपपन्नं च ब्रह्मणि पूर्वोक्तयुक्त्या । तस्मादानन्दश्रुतिषु लक्षणैव न्याय्या । केचित्तु सुखे दुःखाभावे च सुखशब्दस्य प्रयोगादक्षादिशब्दवदनेकार्थत्वमिच्छन्ति; तदयुक्तम्, एकार्थत्वेनैवेतरत्र लक्षणया प्रयोगोपपत्तेरभिधानशक्तिकल्पनानुपपत्तेः । निरूढा चैषा लक्षणा, नास्मत्कल्पितेत्यभिप्रायेणाह—दृष्टो हीति । सुखशब्दस्य दुःखनिवृत्तौ प्रयोगे सिद्धे तत्पर्यायस्यानन्दस्यापि तत्र प्रयोगः सिद्धो भवतीत्यभिप्रायेण

P. 1–15.

सुखशब्दप्रयोगो दर्शितः । सुखस्य वा वाचकः शब्दः सुखशब्दः,
P. 1-17. आनन्दशब्द एव द्रष्टव्यः । मतान्तरमाह—सैवेति ; दुःखनिवृत्ति-
रित्यर्थः ; मन्यन्त इत्यध्याहार्यम् । दृष्टो हि क्षुद्दुःखादिनिवृत्तौ 'सुखयहम्'
इति सुखशब्दः ; न च तस्य मुख्यार्थत्वसंभवे गौणत्वमुचितम् ; उभय-
सिद्धा च दुःखनिवृत्तिः, भावात्मकसुखवादिनापि तत्र तन्निवृत्तेरिष्टत्वात् ;
अतः सैव सुखमस्तु, किं धर्मान्तरकल्पया ? इति भावः । नन्वेवमुपलादा-
वपि दुःखनिवृत्तेरविशेषात् सुखित्वप्रसङ्ग इत्याशङ्क्याह—न चेति ; सुखि-
त्वस्येत्यध्याहार्यम् । कुत इत्याह—प्रत्यगिति । प्रतिगतो व्यावृत्त इद-
मंशेभ्योऽर्थात चेति प्रत्यक् अनिदं चिदात्मा, तत्र वृत्तिः यस्या दुःख-
निवृत्तेः सा प्रत्यग्वृत्तिरिति वैयधिकरण्येऽपि गमकत्वात्समासः । अश्मादौ
च जीवात्मा नास्तीति भावः । मूर्च्छितादौ प्रत्यग्वृत्तिरपि दुःखनिवृत्ति-
रनुपलभ्यमाना सुखं मा प्रसाङ्क्षीदित्युपलभ्यमानग्रहणम् । 'इदम्' इति
बुद्धिवृत्तेः प्रतिगता 'अहम्' इति बुद्धिवृत्तिः प्रत्यग्वृत्तिः, तत उपलभ्य-
मानाया दुःखनिवृत्तेः सुखत्वम् ; न चाश्मादेः 'अहम्' इति बुद्धिरस्तीति
वार्थः । ननु भावरूपं सुखं प्रसिद्धम् ; कथं निवृत्तिः सुखमित्याशङ्क्य
पक्षान्तरमाह—तदिति । दुःखनिवृत्तिविशिष्टस्यात्मन उपलब्धेर्भावरूपाया
एव वा सुखत्वान्नाश्मादौ प्रसङ्गः ; तेन दुःखनिवृत्तिर्वा तद्विशिष्टात्मोप-
लब्धिर्वा सुखमस्तु ; सर्वथा सुखं नाम न धर्मान्तरमस्तीति भावः । एव-
मानन्दात्मकत्वं ब्रह्मण आक्षिप्य समाधत्ते—तानिति । तत्र दुःखाभावसुख-
पक्षे पूर्वमुक्ते ब्रह्मण्यानन्दशब्दो मुख्य एव स्यात् ; ततश्च गौणतापक्षो
नावतरेदिति । यद्यपि पूर्वपक्षे गौणपक्षमुपन्यस्य दुःखाभावसुखपक्ष उक्तः,
तथापि बहुवक्तव्यत्वान्मुख्यसिद्धौ च गौणतायाः सुनिराकार्यत्वान्मुख्यपूर्व-
कत्वाच्च गौणचिन्ताया दुःखनिवृत्तिसुखपक्षमेव तावन्निरस्यति—न तावदिति ।
दुःखाभावे हि सुखे नैकस्य भावाभावावेकत्र युगपत् स्याताम् ; भावरूपे तु
तस्मिन् धर्माधर्मयोरिव विरुद्धयोरप्येकत्र यौगपद्यमुपपद्यते । धर्माधर्मयो-
श्चैकत्रात्मनि स्थिताविव जन्मन्यपि यौगपद्यमस्त्येव ; यत्रैकस्मात् व्यापारा-
देकस्य निग्रहोऽन्यस्य चानुग्रहः । संतापवतश्च शीतह्रदे निमग्नानिमग्नार्ध-
कायद्वयद्वारे सुखदुःखे युगपद्दृश्येते । अतो न दुःखाभावः सुखमित्यर्थः ।

न च शष्कुलीभक्षणे गन्धरसादिज्ञानवदयौगपद्येऽपि नैरन्तर्याद्यौगपद्यभ्रम इति वाच्यम्; तत्र रसादिग्राहिणामिन्द्रियाणां भिन्नत्वादणुतरेण मनसा युगपदधिष्ठानाशक्तेर्युक्तमयौगपद्यम्; इह तु कृत्स्नदेहमभिव्याप्यावस्थितेन त्वगिन्द्रियावयविनैकेन तोयेनार्धसंयोगिना सकृन्मनःसंयोगाधिष्ठितेन चित्तेन सितासितज्ञानवदेकं शीतोष्णग्राहि ज्ञानमुपजन्यते; तेन च सुखदुःखे युगपज्जन्येते; ते च मनःसंयोगाविशेषाद्युगपदेकत्र ज्ञाने प्रतिभातः। तस्मात् सूक्तम्—युगपत् सुखदुःखयोर्दर्शनादिति। अत्राशङ्कयति—अथेति। अथ सत्यपि शीतह्रदेऽनिमग्नार्धकायद्वारे दुःखम्, इतरस्य निम- P. 1-20. ग्नार्धकायद्वारस्य दुःखस्याभावात् सुखित्वमित्युच्यत इत्यर्थः। एवमाशङ्क्य दूषयति—कुम्भीति। कुम्भीपाके नरके पच्यमानस्य पुंसो रौरवादिनरकान्तरदुःखस्य भुक्तस्य प्रध्वंसाभावादभुक्तस्य च प्रागभावात् सुखित्वप्रसङ्गः स्यात्। न च तदिष्टम्; नरके हि सुखासंभिन्नमैकान्तिकदुःखम्। तदिदमलोकमागममात्रसुज्ञेयमिति लौकिके विषयेऽतिप्रसङ्गदोषमाह—एकेति। एकेन्द्रियद्वारं दुःखं यस्य पुंसः स तथोक्तः। तस्येन्द्रियान्तरद्वारदुःखाभावात्; सुखित्वप्रसङ्ग इत्यनुपपद्यते। हेत्वन्तरमाह—इतश्चेति। इतश्च न दुःखाभावः सुखमित्यर्थः। कुत इत्याह—अदुःखस्येति। नास्ति दुःखं यस्य पुंसः सोऽदुःखः, तस्य कर्पूरादिविषयविशेषेण संयोगात् संवेद्यस्य ह्लादस्य सुखस्योत्पत्तेरित्यर्थः। संवेद्यग्रहणमनुभवसिद्धत्वान्नासौ 'नास्ति' इति वक्तुं शक्यत इति दर्शयितुम्। नादुःखस्य दुःखप्रध्वंसः सुखम्, असतो ध्वंसायोगात्; न च दुःखप्रागभावः, तस्य विषयैरजन्यत्वात्; अस्य च विषयजन्यत्वात्; ताभ्यां सुखमन्यदेव तत्र संवेद्यत इति भावः। यत्र तर्हि क्षुदादिदुःखमस्ति तत्रान्नपानादिभिस्तत्प्रध्वंसः सुखं किं न स्यादित्याशङ्क्याह—यत्रापीति। कुत इत्यत आह—अन्नेति। सुरसाम्भःसुशीतलान्नपानोपादानादित्यर्थः। नन्वन्नपानविशेषोपादानात् तद्दुःखविगम एव भविष्यतीत्याशङ्क्याह—यैस्तैरिति। यादृशैस्तादृशैरस्वादुभिरपीत्यर्थः। ननु दुःखविगमविशेषार्थमेवान्नपानविशेषोपादानं भविष्यति; दृष्टो हि कारणविशेषात् कार्यविशेष इत्याशङ्क्याह—न चेति। दुःखाभावस्यातिशयाभावादिति भावः। भावरूपे तु सुखे तस्यातिशयवत्त्वात् तदर्थं सुखसाधनविशेषापेक्षा युक्ता। तदुक्तम्—सुखे त्विति।

P. 2-8. अदुःखस्येति यदुक्तं तत्राशङ्कयति—यदपीति । विषयप्राप्तिं विना काम एव दुःखम्, अतस्तन्निवृत्तिरेव सुखं भविष्यतीत्यर्थः । तद्दूषयति—तत्रेति; तस्मिन्नपि पक्षे । अकामस्य अविद्यमानकामस्य पुंसः पवनोपनीताचिन्तितचम्पकगन्धादिविषयविशेषोपभोगे सति सुखिता न स्यादित्यर्थः । मा भवत्विति चेत् तत्राह—भवति चेति । मध्यस्थो रागवैराग्ययोर्मध्ये वर्तमान इत्यर्थः । कामनिवृत्तेः सुखत्वव्यभिचारार्थमकामस्यापीत्युक्तम्, तत्र चोदयति—स्यादेतदिति । सुखयतीति सुखो विषयः, ण्यन्ताद्धातोः पचाद्यच् । स्वपक्षे साधुत्वमाह—कामनिवृत्त्या त्विति । अभिरुचिरिति कामस्य विवरणम् । यत्राकामस्य विषयविशेषयोगात् सुखं भवति तत्र तर्हि का गतिरित्याशङ्क्याह—तत्रेति । सहजो हि रागः सर्वपुंसामस्ति, स तु विषयविशेषेणाविर्भवतीति धियोक्तम्—कामाभिव्यक्ताविति । सिद्धान्ती प्रत्याह—तदपीति । निवर्हणा हन्तारः । भवन्तीत्यध्याहार्यम् । इममेवार्थमभियुक्तोक्त्या द्रढयति—उक्तं हीति । तथा पातञ्जलेनापि वचसा द्रढयति—भोगेति । यथा भोगाभ्यासो विवर्धते विशेषेण वर्धते तथा रागोऽपीत्यर्थः । दोषान्तरमाह—विषयदोषेति । कामनिवृत्तेरवस्तुत्वेनाविशेषादिति भावः । दोषान्तरमाह—समाने चेति । एकस्य प्रार्थितार्थलाभे प्रमोदो महान् भवति, अन्यस्य चाल्प इति प्रमोदभेदो न स्यादित्यर्थः । कुत इत्याह—कामनिवृत्तेरिति । पर इदानीं विशेषमाह—स्यादिति । यस्य कामोऽतिरिक्तो महान् स तन्निवृत्तौ सुखमनतिरिक्तमप्यतिरिक्तमभिमन्यते, न तत्त्वतोऽतिरिक्तम्, कामनिवृत्तेरविशेषात्; इतरत्र त्वनतिरिक्ते कामे अन्यथा अनतिशयितमित्यर्थः । तत्र दोषमाह—तच्चेति । सत्यपि कामातिरेके क्लेशावाप्तेऽर्थे सुखातिरेकाभावात्, असत्यपि कामातिरेकेऽक्लेशादुपगते सुखातिशयदर्शनाच्च कामातिरेकनिबन्धनः सुखातिरेकाभिमान इत्यर्थः । कामातिरेकाद्धेतोः प्रयासं क्लेशं कुर्वाणं नरं न तथा लब्धोऽर्थः प्रीणयति, यथा विना प्रयासादुपनतोऽप्रार्थितः प्रीणयतीत्यन्वयः । इममर्थं लोकसिद्धेनानुभवेन द्रढयति—तथा हीति । अनाशंसितमप्रार्थितमित्यर्थः । किं च किं कामाभावमात्रं सुखम्, अथ प्रध्वंसः ? तत्राद्ये पक्षे दोषमाह—

कामाभावमात्रे चेति । अकामितविषयोपभोगे भोगात् प्राक् कामस्य प्राग- P. 2-23.
भावः; भोगावस्थायां परत्र च विषयप्राप्त्युद्बुद्धस्य कामस्य प्रध्वंसाभावः; अतः कामाभावस्याविशेषात् भोगावस्थातः सकाशात् पूर्वापरे अवस्थे न भिद्येयाताम्; तस्यामिव तयोरपि सुखी स्यात्; न चैवमस्तीति भावः । द्वितीये पक्षे दोषमाह—कामध्वंस इति । कामध्वंसे च सुखे भोगावस्थातः सकाशात् परावस्था न भिद्येत; उभयत्रापि कामध्वंसाविशेषात् भोगावस्थायामिव तदुत्तरकालमपि सुखी स्यादित्यर्थः । अथ भोगावस्थायां सकामः पुमान्; पूर्वापरयोरवस्थयोस्त्वकामः; तेन कामाभावमात्रे सुखे भोगावस्थातः पूर्वापरे अवस्थे भिद्येते; कामप्रध्वंसे च सुखे परावस्था भिद्यते; अतः पक्षद्वयोक्तदोषाप्रसङ्ग इत्युच्यते । तदयुक्तम्; एवं ह्याद्ये पक्षे भोगावस्थातः पूर्वापरयोरवस्थयोः कामाभावमात्रात्मकसुखसद्भावात् सुखी स्यात्; द्वितीये च पक्षे कामध्वंसात्मकसुखसद्भावात् परत्र सुखी स्यात्; भोगावस्थायां तु कामात्मकदुःखसद्भावात् दुःखी स्यात्; एतच्चानुभवविरुद्धम् । तदेतत्सर्वं साशङ्कमाह—भोगावस्थायामिति । प्रबुद्धः अध्वस्तः कामो यस्य स तथा इति विग्रहः । पूर्वापरयोरित्युपलक्षणम्, परत्रेति च द्रष्टव्यम् । अकामस्यापि विषयोपभोगात् कामाभिव्यक्तौ तन्निवृत्तिः सुखमित्युक्तम्, तदयुक्तम्; यतोऽप्राप्तः सुखहेतुत्वेन स्मर्यमाणो विषयः काममुद्बोधयति, प्राप्तश्च तं निवर्तयति; प्राप्तस्यापि विषयस्य कामोद्बोधकत्वे तस्यानिवर्तकत्वात् ततो विषयात् कामस्य निवृत्तिर्न स्यात् । अतः सैव नास्ति; का सुखं भविष्यतीत्याह—अप्राप्तश्चेति । अप्राप्तोऽभुज्यमानः, प्राप्तो भुज्यमान इत्यर्थः । किं च यदि कामनिवृत्तिः सुखं तदा यत्र कामस्तत्रावश्यं सुखेन भाव्यम्, उत्पत्तिमत्त्वेन कामनिवृत्तेरवश्यंभावित्वात्; न चैतदस्तीत्याह—न चेति । कुत इत्याह—मनोरथेति । मनोरथशतप्रार्थितस्यापि कस्यचिद्विषयस्य कुकलत्रादेरुपभोगदशायां दुःखदर्शनादित्यर्थः । किं च यत्र विषये सुखमनुभूयते तत्र कामस्य दर्शनात् सुखपूर्वक एव काम इति निश्चीयते; अतः कामनिवृत्तेरन्यत् प्राग्भावि सुखं वस्तुभूतमेष्टव्यमित्याह—सुखपूर्वकस्त्विति । अनुभूतः सुखसद्भावो यस्मिन्निति विग्रहः । ननु यदि सुखानुभवपूर्वक एव कामः, ततोऽननुभूते स्तनपानादौ कामासंभवात्

गवादिजातिविशेषभाजां वत्सादीनां कामः कामाद्वा स्तनपानादौ प्रवृत्तिर्न
P. 3-5. स्यादित्याशङ्क्याह—या पीति । प्राग्भवः पूर्वजन्म, तत्र भवोऽनुभवः प्राग्भवीयः, तन्निबन्धनेत्यर्थः । इदमुक्तं भवति—अनादौ संसारे शतशो गवादिदेहानुगृहीतात्मनां स्तनपानादिसुखानुभवोद्भूतस्ततः संस्कारः, संस्काराच्च गवादिदेहहेत्वदृष्टोद्बोधिता सुखस्मृतिः, ततः कामप्रवृत्तिः; अतस्तत्रापि सुखानुभवपूर्वक एव कामः, कामाच्च प्रवृत्तिरिति । तदुक्तम्—"तं विद्याकर्मणी" इति । यत्र कामस्तत्र सुखम्, अन्यथा य एकस्य सुखः स सर्वस्य स्यादिति अव्यवस्थोक्ता; तत्राह—यथा चेति । कामोऽपि न सर्वस्य सर्वत्र भवति; किं तर्हि? किंचिज्जातीयस्य किंचिद्वयसः किंचिदवस्थस्य क्वचिद्भवति; यथा—गोर्घासग्रासे, यूनस्स्त्रैणे, रोगिणोऽपथ्ये; सुखमपि तथैव जात्यादिभेदात् व्यवस्थाप्यत इति नाव्यवस्थेति भावः । इतश्च न कामनिवृत्तिः सुखम् । अपि तु दुःखं यावदित्याह—अपि च केचित् पित्ताद्युपहतेन्द्रिया दूयन्ते दुःखेन तप्यन्ते; कामनिवृत्तौ सुखे तेऽपि सुखिनः स्युः; न चैवमस्ति; अतो न सा सुखमिति भावः । किमिति दूयन्त इत्याह—तदभाव इति; तदभावे कामाभाव इत्यर्थः । अपर आह—न तर्हीति । यदि दूयन्ते न तर्हि निवृत्तकामाः; न ह्यनिष्टे कामनिवृत्त्या केचित् दूयन्त इति भावः । सिद्धान्तवाद्याह—निवृत्तेति । पित्तदोषात् तिक्ततयावभासमानं खण्डादिविषयं प्रति निवृत्तकामा निवृत्तरुचयः; रुचिं कामयन्त एव 'कथमत्र नो रुचिः स्यात्' इति विषयग्रहणम् । हेतुमाह—तस्येति । तस्य विषयस्य, कुतश्चित् पित्तादिदोषात् अनुपभोग्यत्वात् सुखहेतुत्वादित्यर्थः । विषयं प्रति चेन्निष्कामाः कुतस्तर्हि हेतोस्तदभोग्यत्वेन दूयन्ते? न ह्यनिष्टविषयानुपभोगे दुःखं दृष्टमित्यभिप्रायेण हेतुं परः पृच्छति—किमिति । सिद्धान्ती हेतुमाह—अनुभूतेति । पित्तादिदोषात्पूर्वमनुभूतस्य खण्डादिविषयाज्जातस्य सुखस्य पित्तादिदुष्टेन्द्रियैरिदानीमप्राप्तेस्तदनुस्मृत्या ते दूयन्त इत्यर्थः । अत्रोदाहरणमाह—यथेति । उपसंहरति—तस्मादिति । प्रतिपुरुषवेद्यत्वेनानुभवसिद्धत्वादप्रत्याख्येयत्वमेव द्रढयति । यदि सुखं वस्तुभूतमस्ति किमर्थं तर्हि "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या"

"दुःखं जन्म तमःश्वभ्रं वर्षबुद्बुदसंन्निभम् ।
नाशप्रायं सुखाधीनं नाशोत्तरमभावगम् ।"

इत्यादिवचोभिः व्यासपतञ्जलिप्रभृतिभिराचार्यैः संसारे सुखाभाव उक्तः? किमिति वा कैश्चित्पण्डितैर्दुःखनिवृत्तिः सुखमुक्तम्? इत्याशङ्क्याह—सुखसंगीति । विषयसुखेऽत्यन्तमासक्तं परमश्रेयोविमुखं जनमनुकूलयितुं तत्रभवद्भिः पूज्यैराचार्यैः सुखं नाम वस्तु नास्तीति वर्णितमिति कल्पयाम इत्यर्थः । प्रकृतविचारफलं संकलय्य कथयति—तदेवमिति । सिद्धमित्यध्याहार्यम् । इदानीं यदुक्तमानन्दश्रुतयो दुखाभावं लक्षणयाहुरिति, तद्दूषयति—स चेति । P. 3-14.
अतः स एव ग्राह्य इति वाक्यशेषः । ननु गङ्गाघोषादिवाक्यवदमुख्योऽर्थः किं न गृह्यत इत्याशङ्क्य विशेषमाह—शब्देति । तत्र प्रमाणान्तरगोचरत्वात् तथापि स्यात्; इह तु तन्नास्ति, शब्दैकगोचरत्वादात्मस्वरूपस्य; अतोऽत्र शब्दशक्त्यनुसारेणैवार्थे प्रतीतिर्युक्ता, न मानान्तरानुसारेण यथा गङ्गाशब्दात् तीर इत्यर्थः ।

नन्वनुपपत्त्या लक्षणा भवति ; सा चात्राप्यस्तीत्युक्तम् 'आनन्दरागात्' इत्यादिनेत्याशङ्क्याह—न चेति । कुत इत्यत आह—न हीति । न हि तपस्वी तपांसीच्छन् रागीत्युच्यते लोक इति भावः । को नाम स इत्याह—अविद्येति । असत्ये सत्यमित्यनात्मन्यात्मेति ज्ञानमविद्या, तयाक्षिप्तं कृतकशान्तेषु रूपरसादिगुणेष्वभिनिवेशं रागमाचक्षते धीरा इत्यर्थः । अविद्यया क्षेत्रधर्मादिसुखादीनात्मनि मन्यमानस्य तद्धेतुषु रूपरसादिष्वसत्येष्वविद्यया सत्यतयाभिमतेषु योऽभिनिवेशः सोऽविद्याक्षिप्तः । व्यतिरेकमाह—तत्त्वेति । तत्त्वे तु सत्त्वे त्वानन्दात्मकब्रह्मणि तद्दर्शनस्य वैमल्यात् संशयविपर्ययमलविरहात् या चित्तस्य प्रशान्तिरभीच्छा सा न रागपक्षे व्यवस्थाप्यते धीरैः । इदमुक्तं भवति—न सर्वेच्छा रागः, किं त्वभूतविषयेति । प्रसादोऽभिरुचिरभीच्छेति पर्यायनिर्देशः, एवंविधैः शब्दैर्लोके सा प्रसिद्धा न रागशब्देनेति द्योतनार्थः । यथा तव नोद्वेगमात्रं द्वेष इत्याह—यथेति । तत इति, संसारादित्यर्थः । यदि पुनरुद्वेगमात्रं द्वेषः स्यात् ततस्तवापि मुक्तिर्न स्यादित्याह—अन्यथेति । ततो दुःखाद्द्वेषः, तन्निबन्धनेत्यर्थः । एवं तात्र-

तत्त्वभूतनित्यनिरतिशयानन्देच्छा न रागो भवतीत्युक्तम् । अधुना भवतु सा रागः, तथापि न सा शान्ततादिश्रुत्या निषिध्यते; किं तु तत्परिपन्थितदल्पक्षयिविषयसुखेच्छा; यथा प्रमाणान्तरदृष्टे परमे सार्वभौमे राज्याद्युत्कर्षे ये रागिणः; दृष्टः परम उत्कर्षः प्रकर्षो रागित्वेन वा येषां रागिणाम्; यद्वा परेभ्य उत्कर्षः परोत्कर्षः, दृष्टश्चासौ परोत्कर्षश्च, तत्र ये रागिणः; तेषामर्थे कामलोभादित्यागात्मक इन्द्रियजयस्तत्प्राप्त्युपायत्वेनोपदिश्यते तथेहापि
P. 3-21. भविष्यतीत्याह--अपि चेति । सर्वरागादिनिषेधे सार्वभौमराज्यरागस्यापि निषेधात् तत्राप्यप्रवृत्तेरुपदेशवैयर्थ्यं स्यादिति दोषात् यथा तत्र समीहितात् सार्वभौमराज्यादितरस्मिन् तत्परिपन्थिनि विषये अभिषङ्ग आसक्ती रागातिशयो निषिध्यते, तथेहाप्युत्तमब्रह्मानन्दरागादितरस्मादनुत्तमविषयसुखासङ्गादुपनतादुपस्थितादपि शमविधिना मुमुक्षोर्निवृत्तिरुपादिश्यत इत्याह—तथेति । एतदुक्तं भवति—ब्रह्मानन्दवर्जमितरत्र रागः शमविधिना निषिध्यते; तेन ब्रह्मानन्दरागादपि मुमुक्षुप्रवृत्तौ न शमविधिविरोध इति । तथा चान्यैरपि सूरिभिरिदमुक्तमित्याह—तथा चोक्तमिति । अत्यन्तकामात्मता न प्रशस्ता; न च मुमुक्षोरप्यत्यन्तमकामितास्ति; तस्यापि हि मुक्तौ कामोऽस्तीत्यर्थः ।

एवं शमविधेर्विरोधे परिहृते परः पुनरपि ब्रह्मण्यानन्दमाक्षिपति—स्यादेतदिति । यद्यानन्दः संवेद्यः ततः कर्तुः संवेदितुरन्यत् कर्म संवेद्यमिति हेतोः द्वैतप्रसङ्गः; आत्मनि क्रियाविरोधादिति भावः । इतश्च द्वैतप्रसङ्ग इत्याह—कर्त्रिति । क्रियागर्भत्वात् कर्मकर्तृसंबन्धस्य क्रियायाश्च करणमन्तरेणाभावादिति भावः । कर्तृकर्मभावेन चानन्दब्रह्मणोर्भेदे घटपटयोरिव सामानाधिकरण्यमपि न स्यादित्याह—आनन्दमिति । अथ 'शुक्लः पटः' इतिवदानन्दवद्ब्रह्मानन्दमित्युच्यते, ततो द्वितीयेन तद्वद्भावादद्वितीयं ब्रह्मेति न युज्यते; ततश्चाद्वैतश्रुतिविरोध इत्यभिप्रायेणाह—तद्वत्तयेति । अथानन्दोऽसंवेद्य इत्युच्यते तत्राह—असंवेदन इति। "विज्ञानमानन्दम्" इति श्रुतावित्यर्थः। कथं व्यर्थमित्याशङ्क्याह—पुरुषार्थेति । अत्र समाधानमाह—उच्यत इति । फलं प्रमाणफलमनुभवः, कर्ता च सन्निधेस्तस्यैवानुभविता आत्मा, तद्वदित्यर्थः ।

इममेवार्थं फलसद्भावप्रदर्शनपुरःसरं प्रपञ्चयति—तथा हीति । परशोऽच्छिदिवत् P. 1-3.
प्रमाणादर्थान्तरं वा फलमस्तु ।

"यदाभासं प्रमेयं तत् प्रमाणं फलते पुनः ।
ग्राहकाकारसंविच्योस्त्रयं नातः पृथक् कृतम् ।"

इति बौद्धमतेनानर्थान्तरं वास्तु, सर्वथा सर्वपरीक्षकैरभ्युपगम्यते; न तु तद्विशेषचिन्तोपयुज्यते; अतो न दृष्टान्तासिद्धिरिति भावः । प्रमाण शब्दस्य भावकरणव्युत्पत्तिभेदाभिप्रायेणानर्थान्तरमित्युक्तमित्यन्ये । तस्यानवभासं तावन्निषेधति—न चेति । कुत इत्याह—तदिति । तच्चेन्नावभाति, ततः शशशृङ्गवन्नास्त्येव; अतो न तत्कृतं संवेद्यत्वं भावानां स्यादिति भावः; यदा प्रदीपकल्पं नेन्द्रियकल्पम् । अतः सत्यपि तस्मिन्ननवभासमाने तत्कृतं संवेद्यत्वं भावानां न स्यादिति भावः । कस्मात् पुनरज्ञातमेव फलमिन्द्रियवदर्थं न संवेदयति? वैषम्यात्; इन्द्रियं हि फलं जनयति; जनकं चाज्ञातमपि भवति यथा बीजमङ्कुरस्य; फलं तु फलान्तरं न जनयति, अनवस्थानात्; अतस्तदेव घटस्यानुभवः । स चेत् तदनुविद्धघटप्रतिभासे भात्येव। अन्यदेव 'घटोऽयम्' इति ज्ञानम्, अन्यच्च 'घटोऽनुभूयते' इति; अतो 'घटोऽयम्' इति घट एवावभाति, न घटानुभव इति चेत्; नैवम्; एवं हि घटे भाति 'घटानुभवो ममास्ति, न वा' इति पृथक् जिज्ञासा स्यात्; न च तथास्ति; तस्मादनुभवो घट एवावभातीति । किं चैवं सत्यनुभवोऽनुभवान्तरेण भायात्; तथा सति चानवस्था स्यात् । किं च तदनुभवान्तरम्, यतोऽनुभवो भाति? आत्ममनःसंयोगजं प्रत्यक्षमिति चेत्; न तावद्युगपत्कालम्, ज्ञानानामयौगपद्येष्टेः; नाप्यनुभवात् पूर्वोत्तरकालम्, प्रत्यक्षस्यातीतानागतानुभवविषयत्वायोगात्; अनुमेयत्वमपि लिङ्गाभावात् प्रत्याख्येयम्; न तावदर्थः सत्तामात्रेण लिङ्गम्, अज्ञातस्यालिङ्गत्वात्; ज्ञातश्चेत्, न; संबन्धानवसायात्; न ह्यज्ञातेऽनुभवे सम्बन्धिनि तस्य लिङ्गेन सह संबन्धो ज्ञातुं शक्यः । ज्ञातं चेत् ज्ञायते, केन ज्ञातं? न तावदनेनैव लिङ्गेन, इतरेतराश्रयात्; न लिङ्गान्तरेण, तुल्यदोषत्वात् लिङ्गान्तरवैयर्थ्याच्च । तस्मात् ज्ञातेन चेदनुभवेन सह लिङ्गस्य संबन्धज्ञानमिष्यते,

ततः स्वतः संवेदितेनेति बलादापतितम्; अतः सिद्धो नः पक्षः; तद्वा चानुमानमप्यफलम्। यदप्युक्तं—"ज्ञातं तज्ज्ञाततावशात्" इति, तदप्ययुक्तम्; ज्ञातता हि ज्ञानस्य ज्ञेयेन संबन्धः; तदुक्तम्—"कृत्तद्धितसमासेभ्यः संबन्धाभिधानं त्वतल्भ्याम्" इति। न च ज्ञाने संबन्धिन्यज्ञाते ज्ञातता ज्ञातुं शक्यत इत्यलिङ्गम्। अथार्थस्थं प्राकट्यं ज्ञातता, तदप्यज्ञातमलिङ्गम्; ज्ञातं चेत्, तत्राप्यर्थवत् प्राकट्यान्तरापत्तावनवस्था। स्वतः सिद्धं चेत्, अनुभव एव तथास्तु, किं तेन? अर्थस्थं च प्राकट्यं ज्ञानेऽतीतेऽप्यनुवर्तेत पाकेऽतीत इव पाकजरूपादि; तद्वदेव च सर्वपुरुषान् प्रत्यविशिष्टं च स्यात्, अर्थस्थत्वात् तस्य। एतेन ज्ञाततान्यथानुपपत्त्यापि नानुभवोऽनुमूयत इति सिद्धम्। किं च ज्ञान एवार्थानुबद्धे प्रकाशमानेऽर्थः प्रकाशत इत्युच्यते; न त्वर्थस्य पृथक् प्रकाशोऽस्ति, जडप्रकाशायोगादिति वक्ष्यामः। किं च ज्ञानं ज्ञानान्तराप्रकाश्यम्, तत्सजातित्वात्; यत् यत्सजाति तत् तस्याप्रकाश्यम्। तस्मादनुभवः स्वतो भासमान एवार्थं भासयति, नेन्द्रियवदभासमानोऽपि; दीपवत् ज्ञातः स्वतश्च। तदभानेऽर्थस्याभानमिति
P. 4–5. सूक्तम्—तदसंवेद्यत्व इति। अथ संवेद्यं फलमिष्यते तत्राह—न चेति। न च फलं संवेद्यं संवित्तिकर्म; तदा हि तत्र संवित्त्यन्तरोपलब्धिः स्यात्, न च सास्तीत्युक्तम्। तथा फले फलान्तरे तत्राप्येवमित्यनवस्था च स्यादित्यर्थः। उपसंहरति—तस्मादिति। एवं फलवदिति यदुक्तं तत् प्रपञ्च्य इदानीं कर्तृवदिति यदुक्तं तत् प्रपञ्चयति—यथा चेति। कुतो न स्यादित्याह—न हीति। न तदात्मसंबन्धित्वेनार्थो भायादित्यर्थः। कुत इत्याह—न हीति। 'इदम्' इति विषये 'विदितम्' इति फले च नात्मानवभासमानो 'मया' इति वेदितृत्वेनानुसंधातुं शक्यत इत्यर्थः। तत्र च को दोषः स्यादित्याह—अननुसंधान इति। स्वपरवेद्ययोः कोऽतिशयः? न कोऽपीत्यर्थः। अस्तु तर्हि संवेद्यः; तदपि नेत्याह—न चेति। कुत इत्याह—कर्मत्व इति। आत्मनः संवित्तिकर्मत्वे स्वात्मनि क्रियाविरोधात् संवेत्ता ततो व्यतिरिक्तः स्यात्; अत आत्मा त्वनात्मा स्यात्, संवेद्यत्वात्, घटवत्; अनवस्था च स्यादिति भावः। नन्वात्मा नेदंतयार्थवदवभाति, किं तु 'अहम्' इत्यात्मानमेव वेदितृतया वेत्ति; अतः कुतो वेदितृवेद्ययोर्व्यतिरेक-

प्रसङ्गः? प्रतीतिसिद्धत्वाच्चैकस्य विरुद्धोऽपि कर्मकर्तृभावो भविष्यति। स्यादेवं यद्यहंप्रत्यय एवं तदा स्यात्; स एव त्वात्मनि संवेद्ये दुर्लभः; तथा हि—घटादिवत् 'अयम्' इति प्रत्ययः स्यात्, न 'अहम्' इति; अतोऽहंप्रत्ययपर्यन्त एवायमाक्षेपः; ततश्च न तद्बलात् वेत्तवेद्ययोरव्यतिरेकः, नाप्यविरोधः। नन्वस्ति तावत् 'अहम्' इत्युल्लेखः; नासावन्यथा कर्तुं शक्यः। यदि न शक्यः, शृणु तर्हि तस्य गतिम्—न खलु 'अहम्' इति प्रत्ययः, किं तु अहंकार एव स्वतःसिद्धनित्यचैतन्येनावद्योतितस्तदुपहिते चात्मनि स्वतोऽवभात्यपि; तेनैव 'आत्मा प्रतीयते' इति बालानां तत्र प्रत्ययभ्रमः। ततश्च न स्वात्मनि क्रियाविरोधः; न चाविरोधेनोपपत्तौ विरोधकल्पनोचिता। अहंकारश्च केवलकर्तृशक्तिः, न कर्ममात्रयापि स्फुरति। अतः कुतस्तदवच्छिन्नस्य स्वसंवेद्यता? अतः स्वसंवेद्यत्वं घटवदात्मनो न स्यात्, अपि तु ततोऽन्यस्य तत्संवेत्तुर्घटेत। एवमात्मनः संवेद्यत्वेऽहंप्रत्ययवेद्यत्वं बलादापतितम्; तत्र च वेत्तृवेद्ययोर्व्यतिरेक इति सूक्तम्—व्यतिरेकप्रसङ्गादिति। एवं संवित्तिकर्मत्वासंभवमुपजीव्यात्मनः स्वाभिमतं स्वप्रकाशत्वमाह—तस्मादिति। स्वप्रकाशतैव P. 4-11. तस्यात्मनः संवेद्यता, न संवित्तिकर्मतेत्येवकारार्थः। संवेद्यतेत्यविवक्षितकर्मत्वनिर्देशः। न चार्थसंवित्तावात्मा भासते, अतत्कर्मत्वात्। यत् यत्र संवित्तावकर्म, तत् तत्र न भासते नीलमिव पीतसंविदि। एवं फलवत् कर्तृवच्चेति दृष्टान्तद्वये स्वप्रकाशत्वमुपपाद्य दार्ष्टान्तिके योजयति—तथेति। न तावदानन्दो न प्रतिभाति; प्रतिभानेऽपि न संवित्तिकर्मतया प्रतिभाति, फलवत् कर्तृवत् स्वप्रकाशत्वेनोपपत्तेः। अतो नापुरुषार्थत्वम्; नापि कर्तुरन्यत् कर्मेति द्वैतप्रसङ्गः; न च क्रियाकरणाद्यपेक्षेतिभावः; ब्रह्मणश्च स्वप्रकाशत्वम् "आत्मज्योतिः सम्राट्" "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इत्यादिश्रुतिसिद्धम्। 'स्वभावः' इत्यानन्दस्य स्वप्रकाशत्वे हेतुः; स्वप्रकाशब्रह्मस्वभावत्वे तदव्यतिरेकादानन्दोऽपि स्वप्रकाश एव युक्त इति भावः। नन्वानन्दो ब्रह्मणो गुणः, न स्वभावः। नैतत्, "आनन्दं ब्रह्म" इति सामानाधिकरण्यात्। ननु गुणगुणिनोरपि शुक्लपटादिषु तद्दृष्टम्; न, वैषम्यात्; शुक्लादयो हि गुणवचनाः; ते गुणमुक्त्वा

गुणिनि वर्तन्ताम्; आनन्दादयस्तु निष्कृष्टगुणस्थाः, ते न गुणिनि वृत्तिमर्हन्ति; न हि भवति 'चन्दनं गन्धः' इति; तदुक्तम्—"न कदाचित्प्रयोगोऽस्ति चन्दनं गन्ध इत्ययम्" इति । न च गुणिन्यवृत्तस्य गुणशब्दस्य गुणिसामानाधिकरण्यमवकल्पते । यथा चास्मत्पक्षे तद्भवति तथा वक्ष्याम इत्युपरम्यते । ननु स्वप्रकाशश्चेदात्मा, सुषुप्तः किं न प्रकाशते? कस्य प्रकाशताम्? यदि स्वस्य, तदिष्टमेव नः; स्वस्य स्वयमात्मा नित्यं प्रकाशत एव; "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इति श्रुतिः । अथ जीवानाम्, न; ते ह्यविद्याकार्यबुद्ध्याद्युपाधिकल्पितभेदाः स्वापे संहृताखिलकार्यायां तत्त्वमाच्छाद्य बीजमात्रतया स्थितायामविद्यायां संस्कारमात्रशेषाः कथमुपलभन्ताम्? अतोऽयमदोषः । ननु स्वप्रकाशत्वे नित्य-
P. 4–13. दृष्टेर्ब्रह्मणो दर्शनप्रतिषेधो नावकल्प इत्याशङ्क्याह—केनेति । 'कम्' इति दृशिकर्मणो दृश्यजातस्यायमाक्षेपः, न दृशेरेवेत्यर्थः । एतदेव श्रुतिपौर्वापर्येण द्रढयति—तथा हीति । दृशिकर्मणो दृश्यजातस्य विलयनिमित्तक एव प्रतिषेध उच्यत इत्यर्थः । यदा अस्य विदुषः सर्वं दृश्यजातमात्मैवाभूत् नात्मव्यतिरिक्तमस्ति तदा कं पश्येत्? न कमपीति वाक्यार्थः; 'ननु पश्येत्' इति तेन दृश्यदृष्टिरत्र निषिध्यते, नात्मदृष्टिरित्यर्थः ।

तत्र केचित् आनन्दशब्दस्य ब्रह्मणि दुःखाभावपरत्वप्रतिपादनाय सुखवाचित्वं निषिद्धं पुनः प्रत्यवतिष्ठन्ते—अन्य इति । धर्मान् विभजति—भावेति । तत्राभावरूपाणामदुष्टत्वमाह—तत्रेति । तानुदाहरति—यथेति । हेतुमाह—न हीति । निवृत्तिरवस्तुत्वान् न द्वैतमापादयति, अतो नाद्वैतं हन्तीत्यर्थः । 'एकम्' इत्यात्मनामनात्मनां चार्थानां भेदस्य नानात्वस्य निवृत्तिः, 'अजम्' इत्युदयस्य जन्मनः, 'अमृतम्' इति व्ययस्य विनाशस्येति विवेक्तव्यम् । आनन्दस्तु यदि भावरूपोऽभ्युपगम्यते, ततोऽद्वैतविघातः स्यादित्याह—आनन्दश्चेति । ननु धर्मधर्मिणोर्भेदादद्वैतविघातः स्यात्; स एव तत्र नास्ति, तयोर्भेदे गवाश्ववत् धर्मधर्मित्वायोगात्; अतो नाद्वैतविघातः स्यादिति चोदयति—स्यादेतदिति । तद् दूषयति—तदिति । धर्मधर्मिणोरत्यन्ताभेदेऽपि धर्मिण इव स्वापेक्षया धर्मधर्मित्वानुपपत्तेरित्यर्थः । यस्मादात्यन्तिकभेदाभेदाभ्यां व्यावृत्तो धर्मधर्मिभावः, तस्मात् कथंचिद्भिन्नो

धर्मोऽभ्युपगन्तव्य इत्याह—तस्मादिति । ततः किमित्याह--तथा चेति । P. 1-23
आत्यन्तिकभेदाभावपरत्वं च श्रुतेरेकाद्वितीयैवशब्दैः पुनः पुनरभिधानात् द्रष्टव्यम् । ननु चानन्दविज्ञानयोर्न धर्मधर्मिभावः, किं त्वेकमेव ब्रह्म विज्ञानानन्दरूपद्वयात्मकम्; अतो नाद्वैतश्रुतिबाध इत्याशङ्क्याह—एवमिति। योऽप्येकस्य ब्रह्मणो विज्ञानानन्दरूपद्वयं प्रतिजानीते, तस्यापि रूपद्वयस्य मिथो रूपिणश्च सकाशाद्भेदाभेदाभ्युपगमादात्यन्तिकभेदाभावश्रुतिर्न युज्यत इति पूर्वेण संबन्धः । एवं सुखवाचिन्यानन्दशब्दे दोषमुक्तमुपजीव्य परः स्वपक्षं प्रतिष्ठापयति—तस्मादिति । विज्ञानात्मनइति । विज्ञानैकरूपत्वान्न विज्ञानानन्दाख्यरूपद्वयभेदकृतो द्वैतप्रसङ्गो दोषोऽस्तीत्युक्तम् । दुःखाभावोपाधिरिति चाभावस्यावस्तुत्वात् भावरूपानन्दपक्ष इव न धर्मधर्मिभेदकृतोऽपि स दोषोऽस्तीत्युक्तमिति मन्तव्यम् । ननु न विज्ञानानन्दयोर्धर्मधर्मित्वम्, नाप्येकमनेकात्मकं वस्तु, किं त्वेकमेवेदं तत्त्वं विज्ञानानन्दशब्दद्वयेनोच्यते; अतो न द्वैतप्रसङ्ग इति सिद्धान्तिमतमाशङ्क्याह—न चेति । कुत इत्याह—शब्देति । एकार्थत्वे हि पर्यायत्वं स्यात्; न च पर्यायाणां सह प्रयोगो दृष्टो युक्तश्चेति भावः । किं च लोके विज्ञानानन्दशब्दयोरपर्यायत्वं प्रसिद्धम्; न च तद्वाच्ययोरेकत्वं घटपटयोरिव युक्तमित्याह—कथं चेति । तदेवं विज्ञानानन्दयोरभेदो न घटते; भेदे च तयोरद्वैतबाधेति स्थिते परः स्वपक्षमुपसंहरति—तस्मादिति । अन्यत्रास्तु नामानन्दशब्दस्य सुखवाचित्वम्, ब्रह्मणि तूक्तयानुपपत्त्या दुःखाभाव एव लक्ष्यः; अत एव 'ब्रह्मणि' इत्युक्तम् ।

अत्र सिद्धान्तमाह—अत्रेति । विशिष्टस्य त्रैलोक्यविलक्षणस्य ह्लादात्मकस्य सुखस्वरूपस्य, न तु तद्धर्मिणः, चन्द्रप्रकाशोपमस्य प्रकाशविशेषस्य विज्ञानानन्दशब्दद्वयेन प्रतिपादनान्नाद्वैतश्रुतिबाधदोष इत्यर्थः । एतदुक्तं भवति—विज्ञानमेवानन्दम्, न तद्धर्मः; नाप्येकं द्विरूपम्; अतो नाद्वैतबाधेति । यत्तूक्तमपर्यायशब्दानामेकार्थत्वं न दृष्टमिति तद्व्यभिचारयितुं दृष्टान्तमाह—यथेति । अपर्यायत्वमभिधेयभेदात्, अभेदार्थत्वं च लक्ष्यमाणस्यैकत्वादित्यविरोधः । कोऽसावित्याह—प्रकाश इति । ननु यदीमावपर्यायौ, ततो भिन्नार्थौ; अतो नीलोत्पलादिवद्विशेषणविशेष्यत्वं

स्यात्; अतः प्रकर्षविशिष्टः प्रकाशः प्रतिपाद्यः स्यात्; ततश्च विज्ञा-
P. 5-8. नानन्दयोस्तत्तुल्यत्वे विशेषणविशेष्यभेदात् द्वैतापत्तिरित्याशङ्क्याह—न हीति। 'शब्दद्वयोपायः प्रतीयते' इत्यन्तगतेन सह संबन्धः। ततश्चायमर्थो भवति—न प्रकाशरूपाद्विशेष्यात् विशेषणरूपतयान्यो भिन्नः सवितरि प्रकर्षोऽस्माच्छब्दद्वयात् प्रतीयते, नापि विपर्यय इति। किं नाम प्रतीयत इत्यत आह—अपि त्विति। अयमाशयः—यदा कश्चित् पृच्छति 'कः सविता?' इति, तदा प्रश्नानुरूपत्वादुत्तरस्य प्रकाशविशेष एव सवितृस्वलक्षणः प्रतिपाद्यः; न प्रकाशः प्रकर्षविशिष्टो विपर्ययो वा, प्रश्नाननुरूपत्वात्; अतः सवितृस्वलक्षण एव तदा तात्पर्यम्; यत्परश्च शब्दः स शब्दार्थः। ततश्च शब्दद्वयेनाविवक्षितस्वार्थेन स्वार्थद्वारेण तदेवैकं लक्ष्यत इति सिद्धमपर्यायत्वमेकार्थत्वं चेति। इममर्थं दार्ष्टान्तिकेऽपि योजयति—तथेति। आनन्दभेदः आनन्दविशेषः सुखम्, स्वप्रकाशं विज्ञानमेव वा सुखरूपं ब्रह्मेति शब्दद्वयेन गम्यते; न पुनर्विज्ञानानन्दयोर्गुणगुणिभाव इति भावः। ननु विज्ञानानन्दयोरभेदे तच्छब्दयोः पर्यायत्वात् सह प्रयोगो न स्यात्; प्रकृष्टप्रकाशादौ पुनरभिधेयभेदादुपपद्यते सह प्रयोगः; स्वार्थद्वयद्वारेण च लक्षणा; न चेह स्वार्थद्वयान्वयोऽस्ति; न चासति स्वार्थान्वये लक्षणा भवति। न च लक्ष्यमेव लक्षणम्; तत्र चापर्याययोर्लक्षणयैकार्थत्वमुक्तम्; न च विज्ञानानन्दयोरभेदे सत्यपर्यायता; ततः सर्वथा दृष्टान्तवैषम्यम्। अथैतत्सर्वदोषजिहासया विज्ञानानन्दशब्दयोरभिधेयभेद इष्यते ततो "विज्ञानमानन्दं ब्रह्म" इति गुणगुणित्वं बलादापन्नम्, द्वैतप्रसक्तिश्च स्यात्। अत्रोच्यते—अत्राप्यविद्याकल्पितोऽभिधेयभेदोऽस्ति। अविद्याभूमावेव हि लोकस्याविद्यावतः शब्दार्थभेदव्युत्पत्तिरिष्यते, न तत्त्वभूमावद्वितीयायाम्; तत्र विज्ञानानन्दौ पृथक् प्रसिद्धौ। सा चानयोरविद्यात्मिका भेदप्रसिद्धिः "एकमेवाद्वितीयम्" इत्यनया श्रुत्या बाध्यते। अनयैव च तत्त्वमुपदिशन्त्या श्रुत्या सामानाधिकरण्यं प्रयोगद्वारेण बोध्यते; यथा "तत्त्वमसि" इति जीवपरमात्मनोः; न हि तत्र तदर्थविशिष्टस्त्वमर्थः, त्वमर्थविशिष्टो वा तदर्थः प्रतिपाद्यः। किं त्वविद्यासिद्धार्थभेदाभ्यामेव तत्त्वंपदाभ्यां सामानाधिकरण्यबलाद्भेदबाधेनाभिन्नं तत्त्वम्। अतश्च यथा तत्राविद्यासिद्धा-

र्थभेदात् तत्त्वमोरपर्यायत्वम्, अथ च ताभ्यामविद्यासिद्धार्थभेदाभ्यामेकमलौकिकं तत्त्वं गम्यते—न त्वभिधीयते, अलौकिकत्वादेवात्मनः शब्दप्रवृत्तिनिमित्तजात्यादिचतुष्टयविरहाच्च—एवमत्रापि; ततश्च न दृष्टान्तवैषम्यम्, न च सहप्रयोगदोषः, न च द्वैतप्रसक्तिः, अविद्यात्मकत्वादभिधेयभेदस्य; न ह्यविद्यात्मको भेदो द्विचन्द्रादौ द्वैतमासञ्जयति। कल्पितस्य कथमुपायत्वमिति चेत्, अत्रोत्तरं वक्ष्यामः। नन्वेवं सति प्रसिद्धस्यार्थस्य बाधे कथमसति स्वार्थान्वये लक्षणा भवति? भवतीति ब्रूमः, यथा "गावो वा एतत्सत्रमासत" इत्यसति गवासने स्तुतिर्लक्ष्यते; तथा चोक्तम्—

"गवां सत्रासनं यद्वदसत् स्तुत्यङ्गतां गतम्।
ज्ञानानन्दौ तथैवाङ्गं स्वख्यातसुखसंविदः॥"

इति। ननु युक्तं तत्र, तत्त्वमर्थयोरभेदपरत्वाद्वाक्यस्य; इदं तु ब्रह्मस्वरूपपरं वाक्यम्, नानन्दविज्ञानयोरभेदपरमपि, उभयपरत्वे वाक्यभेदप्रसङ्गात्; अतः कथमत्र तयोरभेदप्रतीतिः? न, अर्थसिद्धत्वात्; यथा खलु क्रियाविधिपरेऽपि वाक्ये द्रव्यगुणयोरेककार्यनियमः, स्यादेवमत्राप्येकप्रतिबद्धत्वादुभयोरन्योन्यनियमः। स चानन्दशब्दस्य निष्कृष्टगुणवाचिनः सामानाधिकरण्यानुपपत्तेरुक्तत्वान्न गुणिस्थारुणादिशब्दवद्गुणगुणिभावेनावकल्पत इत्यर्थात् तादात्म्येन व्यवतिष्ठते—विज्ञानमेवानन्दः, आनन्द एव विज्ञानमित्यनयोरभेदसिद्धिरिति सर्वमदुष्टम्।

यद्वा न प्रकर्षो नाम गुणः, गुणेऽपि भावात् 'प्रकृष्टगन्धं चन्दनम्' इति; "द्रव्याश्रय्यगुणवान् गुणः" इति ह्युक्तम्। अत एव न द्रव्यान्तरम्। न च कर्म, कर्मणि भावाच्च 'प्रकृष्टगतिरश्वः' इति। जातित्वादि तु तस्य दूरनिरस्तावकाशम्। तस्मात् प्रकर्षो नाम तत्त्वतो व्यक्तिविशेष एव कश्चित्, कल्पनामात्रेण तु भिद्यते। स च व्यक्तेश्च विशेषः स्वत एव, न प्रकर्षयोगात्; प्रकर्षस्यैवाप्रकर्षात्, मिथश्चान्यथानवस्थानात्। ननु चिरेण प्रकर्षापायेऽपि चन्दनगन्धस्यानुवृत्तेस्ततोऽन्यः प्रकर्षः; मैवम्; गन्धोऽपि तत्र न प्राक्तनोपगत एव; अन्य एव तूदकादिसंपर्कात् कुतश्चिद्विपन्नस्य चन्दनस्य गन्धपरिणामश्चिरेण जात इत्यवेहि। तदेवं कल्पनयार्थभेदादपर्याय-

त्वप्रसिद्धिः ; अथ च तत्त्वतः प्रकाशविशेष एव सवितरि प्रकर्षः ; स च शब्दद्वयेन प्रतीयते, एकैकस्मादप्रतीतेरिति 'न च प्रकृष्टप्रकाशशब्दयोः' इत्यादि सूक्तम् । एवमानन्दशब्दस्य दुःखाभावोपाधित्वं दुःखाभावार्थत्वं च निरस्येदानीमानन्दस्य "एषोऽस्य परमानन्दः" इति या परमता श्रुता, तामपि ये "सर्वं परवशं दुःखम्" इति विषयसुखोपायस्रक्चन्दनादि-पारतन्त्र्यरूपायास्तदुच्छेदरूपायाश्च दुःखिताया अभावादौपचारिकीमाहुः, तान्
P. 5-11. निराकुर्वन्नाह—परमतामिति । प्रमाणान्तरगोचरो हि तदनुसारेण वर्ण्यते, शब्दैकगोचरस्तु शब्दशक्त्यनुसारेण ग्रहीतुमुचित इति भावः । कुत इत्याह—न हीति । विरोध्यसंसर्गादिति ; आनन्दविरोधिनो दुःखस्याभावादित्यर्थः । प्रकरणार्थमुपसंहरति तस्मादिति । आत्मप्रकाशेति स्वप्रकाशत्वेन विज्ञान-रूपताम्, प्रकृष्टेति च मुख्यां परमताम्, आनन्दस्वभावेति च दुःखाभावस्य भावत्वानुपपत्तेरानन्दस्य भावरूपत्वमभेदं च सूचयतीति विवेक्तव्यम् । भाव-रूपानवच्छिन्नानन्दस्वभावत्वे च ब्रह्मणो यत् "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति लौकिकं सुखं परमानन्दस्य मात्रेत्युक्तं तदपि घटत इत्याह—एवं चेति । मात्रा एकदेशः, अल्पो भाग इति यावत् । कुत इत्याह—अवच्छेदादिति । भावो ह्यनवच्छिन्नो विषयैरवच्छिद्याल्पीकर्तुं शक्यते यथा आकाशं घटादिभिः, नाभावः खपुष्पाद्यभाववत् । तदुक्तम्—दुःखनिवृत्ताविति । भावरूपानन्दस्य स्वभावत्वे हेत्वन्तरमाह—इतश्चेति । परमप्रेमविषयत्वं हेतुं श्रुत्या साधयति—श्रूयत इति । न केवलं श्रूयते, अनुभवसिद्धं च तदित्याह—प्रतीयते चेति । अनुभवमाह—तथा हीति । आत्माशीरिति; आत्मन्याशंसेत्यर्थः । तामाह—मेति । ततः किमित्याह—सापीति । न केवलं श्रुतिः, अपि तु साप्यात्माशीः इत्यपिशब्दार्थः । तथापि किमित्याह—प्रेमा चेति । दुःखान् द्वेषः, सुखदुःखोभयरूपरहिते चोपेक्षणमिति विवेकः । आत्मनः सुखात्मकत्वानुभवे मतान्तरमाह—अन्ये त्विति । सुषुप्ते सत्यनन्तरं प्रतिबुद्धस्य परामर्शादित्यन्वयः । कथं पुनरस्मात् परामर्शादनुभवसिद्धिरित्यत आह—न हीति । अनुभवपूर्वकत्वात् परामर्शस्य ततः स कल्प्यत इत्यर्थः । किं च सर्वथाननुभवे 'अस्वाप्सम्' इत्यभ्युपगमोऽपि न स्यादित्याह—सुषुप्तेति । 'न स्यात्' इत्यनुवर्तते । नन्वे-

वमस्त्वनुभवः; 'सुखानुभवः' इति विशेषः कुतः? दुःखानुभव एव किं न स्यादित्यत आह—न चेति। 'स्यात्' इति पूर्वेणान्वयः। सुखपरामर्शाद्विशिष्टानुभवसिद्धिरिति भावः। नन्वस्तु सुखानुभवः, तथापि कथमात्मनः सुखस्वभावत्वम्? पृथगेव सुखमनुभूयत इति किं न स्यात्? इत्यत आह—न चेति। तत्र सुषुप्ते सर्वकरणोपरमादात्मनोऽन्यन्नानुभूयते; अतः स एव सुखस्वभावः स्वतो भासत इति तस्य सुखात्मत्वसिद्धिरिति। इममर्थं श्रुत्या द्रढयति—तथा चेति। "एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्ति, य एतं ब्रह्मलोकं न विन्दति" इति श्रुतिः। तदिदमन्ये नानुमन्यन्ते; यतः परामर्शान्यथानुपपत्त्यानुभवः कल्प्यः; स च दुःखाभावनिमित्तोऽप्युपपद्यत इति; तदाह—तत्रेति। तत्र परामर्शलिङ्गकसुखानुभववादिन एवमाहुः—आत्मनः सुखात्मत्वादन्यथात्वे असुखात्मत्वे प्रमाणान्तरादवगते दुःखाभावनिमित्तः सुखशब्दो गौणः कल्प्यते, अन्यथा असुखात्मत्वे त्वनवगते मुख्य एव युक्त इति; तदाह—तानिति। तदेतद्दूषयति—तत्रेति। जीवस्यैव हि प्रतिबुद्धस्य परामर्शादनुभवः कल्प्यो नान्यस्य। न च तस्य तदानीमुपसंहृताखिलोपाधेः संस्कारमात्रशेषस्याविद्याच्छादितात्मनः सुषुप्ते सुखोपलम्भः संभवति। तस्मात् 'सुखम्' इति परामर्शमात्रमिदम्। तच्च सुखे क्षुद्दुःखादिनिवृत्तौ दुःखोपरमे चोभयत्रापि दृश्यते; उपपद्यते च सुखाविनाभावेन दुःखोपरमोऽपि। ततश्च न ततः सुखानुभवरूपस्यार्थस्य प्रसिद्धिः। तदाह—तत्रेति। अथवा 'सुखमहमस्वाप्सम्, न मया किंचिच्चेतितम्' इति चोभयथा व्यपदेशात् स्वापे सर्वथा अज्ञानम्; सुखपरामर्शस्तु दुःखोपरमनिमित्त इत्येवं व्यपदेशद्वयस्योपपत्तेश्च न व्यपदेशमात्रात् सुखानुभवसिद्धिरित्यर्थः। ननु दुःखोपरमोऽपि स्वापे न ज्ञातः; सत्यम्; प्रतिबुद्धस्तु सुखमनुसंधाय दुःखोपरममवगच्छति। ननु दुःखाननुभवोऽपि तदा न ज्ञातः कथमनुसंधीयते? यदि दुःखमन्वभवत्, ततो दुःखमस्मरिष्यत्; न चैवम्; अतो 'न दुःखमन्वभवम्' इत्येवं दुःखानुभवाभावमनुसंधत्त इत्यदोषः। P. 6-1.

इदानीमेकपदं व्याख्यातुं तद्व्यावर्त्यमात्मनामात्मद्वयस्योद्देश्यानां चान्योन्यभेदं पराभिमतं तावदुपन्यस्यति—अत्रेति। कश्चित् सुखी कश्चित्

दुःखीति भोगव्यवस्था, कश्चिन्मुक्तः कश्चित् संसारीति च विभाग आत्मनां भेदे घटते; अन्यथैकस्मिन् सुखिनि मुक्ते च सर्वे सुखिनो मुक्ताश्च स्युरित्यात्मनां भेदे युक्तिः। दृश्यं विना चात्मनो दृकूछक्तिरफला स्यात्।
P. 6-8. आत्मानं तया द्रक्ष्यतीति चेत्, तत्राह—स्वात्मनीति। स्वव्यापारव्याप्यतया स्वस्य कर्मत्वं विरुध्यत इत्यर्थः। किं च दर्शनव्याप्यं हि दृश्यम्; दर्शनं च कार्यत्वात् समवायिकारणं द्रष्टारमनुमापयतीत्येवं दृश्येन द्रष्टुरनुमानम्; अतोऽस्ति द्रष्टुरन्यद्दृश्यमिति आत्मदृश्ययोर्भेदे युक्तिः। दृश्यस्येत्यादि दृश्यानां मिथो भेदे युक्तिरिति विवेक्तव्यम्। सुखादिभेदवत्त्वं च शब्दादेस्त्रिगुणजत्वात्; एवं च सुखादिलक्षणोऽपि दृश्यभेदः कटाक्षित इति द्रष्टव्यम्। यथा विरुद्धानां सुखादीनां भेदोपलब्धिः, एवं विरुद्धानामपि शब्दादीनामित्यर्थः। तदेवं भेदे सति "एक एवायमद्वितीयः" इत्यात्मैकत्वश्रुतिमात्मत्वजातेरभेदाद्देशकालाभेदाच्च, जगदेकश्रुतिमपि सत्तारूपेणैकत्वतो गौणीम्, "आत्मैवेदम्" इति च तादर्थ्यात् तच्छब्दं ये मन्यन्ते तान् प्रत्युच्यते—एकमिति। अत्र श्रुतिमाह—इन्द्र इति। मीयतेऽनयेति माया बुद्धिः; अतश्चेन्द्रियबुद्ध्यात्मा द्विपदादिरूपः प्रतीयत इत्यर्थः; अतः कथं नानात्वस्य मिथ्यात्वमिति चेत्; न, यौगिकत्वात्; यौगिको हि मायाशब्दो बुद्धौ, रूढश्च मिथ्याभावे; रूढिश्च योगाद्बलीयसीति न्यायः; तस्माद्रूढिरेव ग्राह्या। यद्यपि बुद्धिनामसु क्वचित्पाठोऽस्ति, तथापीह न सा ग्राह्या; यद्धि प्रतीयते तद् बुद्ध्यैव; अतो मायेति विशेषणं व्यर्थं स्यात्। न च सर्वत्र वेदे बुद्धिवाची मायाशब्दः, "मायां तु प्रकृतिं विद्धि" इति व्यभिचारादिति। ततः किमित्याह—तत्रेति। नानात्वे सत्येकत्वमुपचरितम्; असत्त्वे तु तस्मिन् श्रुत्योक्तमेकत्वमेव सत्यमापद्यते, नोपचरितमित्यर्थः। एकत्वोपचारे श्रुत्यन्तरविरोधमाह—तथेति। 'नोपचरित एकत्वेऽवकल्पत' इति वक्ष्यमाणेन सर्वत्र संबन्धः। पूर्वं मायाभिधानेनार्थानां नानात्वं निषिद्धम्, इह तु साक्षादिति व्यक्तत्वाभिधानम्। अत्राहुः—आकृतेः पदार्थत्वान्नानाशब्दो नानात्वमाह; ततश्च "असदेवेदम्" इत्यतः प्रकृते जगत्कारणे नानात्वं निषिध्यते, न तु नानाभूतं जगदिति। अत्र ब्रूमः—नानात्ववाच्यपि नानाशब्दो 'घटान्नाना पटः' इति-

वत् तद्वति जगति वर्तते । तत्र पटशब्दसामानाधिकरण्यात् 'शुक्लः पटः' इतिवद्वर्तेत इति चेत्, अत्रापि 'किंचन' इत्यनिर्धारितविशेषजगत्सामानाधिकरण्यमविशिष्टम् । तस्मान्नानाभूतजगदेव निषिध्यते, न नानात्वमिति सिद्धम् । न च 'एकस्मिन्नायतने एक एवाद्वितीयो भोक्ता, न नाना' इत्ययमस्यार्थः कल्प्यः, अश्रुतकल्पनाप्रसङ्गादिति । तत्रैव श्रुत्यन्तरविरोधमाह—नानात्वेति । एकत्वे उपचरिते नानात्वं परमार्थं स्यात्; न च P. 6-14. तस्य निन्दा युक्तेति भावः । तत्रैव पुनः श्रुत्यन्तरविरोधमाह—भेदेति । भेददर्शनादन्यस्मिन् तदाभासे इव शब्दो घटते, न तु तत्रैवेत्यर्थः । न च "भेददृष्टिरिव" इति "अण्व्य इवेमा धानाः" इतिवदवधारणार्थ इवकारः, नासत्त्वद्योतनार्थ इति वाच्यम्; भ्रमादित्यनुपपत्तेः । अत एव च भेददृष्टेर्भ्रान्तित्वे स्थिते भेदस्य मिथ्यात्वात् 'नाना' इत्ययमपीवकारो मिथ्यात्वद्योतनार्थो नावधारणार्थ इति सिद्धम्, अन्यथा तद्विरुद्धार्थः स्यात्; "नेह नाना" इति च नानाभूतस्य निषिद्धत्वात् कारणं विना प्रसिद्धतरार्थत्यागायोगाच्च । तत्र तु स्त्रीलिङ्गनिर्देशात् कारणान्तरादतिक्रम इति विशेषः । नानात्वनिवृत्तिश्रुतेर्नैकत्वोपचार इति पूर्वमुक्तम्; अधुना एकत्वमुपचरितमभ्युपगम्य तदा नानात्वनिवृत्तिश्रुतिर्न घटत इत्याह—काममिति । भाविकस्येति; तात्त्विकस्येत्यर्थः । ननु नानात्वनिवृत्तिरपि सत्तादिरूपाभेदेऽनानात्वादुपचाराद्भविष्यतीत्याशङ्क्य दूषयति—सापीति । ननु मास्तु प्रयोजनम्; तदुपचारनिमित्तं सत्तादिजात्यभेदो भवतु; किं प्रयोजनेनेत्याशङ्क्याह—सतीति । निमित्तवदुपचारे प्रयोजनमपेक्ष्यम् । न हि स्तुतिं प्रयोजनमनपेक्ष्य तेजस्वितानिमित्तमात्रभावादादित्यशब्दो यूप उपचर्यते । न हि श्रुतिः सतो नानात्वस्याभावं निष्प्रयोजनमेव दर्शयतीति भावः । ततः किमित्याह—न चेति । न केवलं स निष्प्रयोजनः, किं तु प्रयोजनविरोधी यावदित्याह—विपर्ययाच्चेति । यत् प्रयोजनं यथा चोपचारस्तद्विरोधी, तदाह—अभ्युदयेति । सा नानात्वनिवृत्तिः स्वर्गः साध्यः, यागः साधनम्, प्रयाजादीनीतिकर्तव्यतेति च विभागं निवर्तयन्ती तेन विनानुष्ठानाभावादभ्युदयविरोधिनी; सर्वत्र विषयेषु 'आत्मैवेदम्' इत्यभिमानमाविर्भावयन्ती निःश्रेयसविरोधिनी स्यादित्यर्थः । तयोर्विरोधिनीति

द्विवचनान्तेन समासः । अभ्युदयविरोधित्वं प्रसिद्धत्वादुपेक्ष्य निःश्रेयसविरो-
P. 6-21. धित्वे हेतुमाह—तथा हीति । "नान्यत्र सर्वसंत्यागान्मोक्षं विन्दति
मानवः" इति सर्वत्यागान्मोक्षः श्रुतः । न च पुत्रकलत्रादावात्मा-
भिमाने सति त्यक्तुं शक्य इति मोक्षो न स्यादित्यर्थः । एकत्वोपचारोऽ-
भ्युपगममात्रेणोक्तः, न तु श्रुतेरभिप्रेत इत्यभिप्रायेणाह—तथेति । अव-
धार्यतेऽनेनेत्यवधारणमेवकारः, अद्वितीयशब्दश्च, ताभ्यां तस्यैवार्थस्याभेद-
रूपस्य पुनः पुनरभिधानात् सर्वप्रकारं न केवलं जात्याद्यात्मना अपि तु
व्यक्त्यात्मनापि भेदनिवृत्तिपरता श्रुतेर्लक्ष्यत इत्यर्थः । अत्र हेतुमाह—
अभ्यासे हीति । भूयस्त्वं वैपुल्यमतिशयितत्वम्, सर्वथा भेदस्य गन्धोऽपि
नास्तीति यावत् । एवं च भेदाभेदवादिनोऽपि श्रुत्यैव निरस्ता इति
मन्तव्यम् ।

एवमभेदपरादाम्नायादात्माद्वैतं प्रसाध्य अधुना भोगव्यवस्थानादित्या-
त्मनां भेदे हेतुं परोक्तमनुमाप्य दूषयति—यत्त्विति । आत्मैकत्वेपि बुद्ध्या-
द्युपाधिभेदेन कल्पिताद्भेदात् स्वस्य करकापवरकभेदादल्पत्वमहत्त्वव्यवस्थेव
भोगव्यवस्थापि सेत्स्यतीत्यर्थः । न चेयमदृष्टकल्पना ; दृश्यते हि कल्पि-
ताद्भेदाद् भोगव्यवस्थेत्याह—तथा हीति । एकस्मिन् ; एकदेहगते जीव
इत्यर्थः । न च पादशिरसोरेव तत्र वेदनेत्याह—न हीति । ननु विभो-
रणोर्वात्मनोऽनवयवत्वादस्तु कल्पितनिबन्धना भोगव्यवस्था ; देहपरिमाणस्य
तु संकोचविकासवत्त्वेन सावयवत्वात् तद्भेदात् सत्यैव सेत्स्यति ; अत
आह—शरीरेति । नात्मावयवा एव वेदनाभाजः, किं तु आत्मावयव्यपि ;
अन्यथा आत्मावयविनो वेदना न स्यात् । अतश्च आत्मावयवयोर्भेदा-
दन्योन्यवेदनानुसंधानासंभवात् पादशिरसोर्वेदनयोरनुसंधातैको न स्यात् ;
अस्ति चासौ । न चासौ परवेदनामेवानुसंधत्ते, 'मे वेदना' इत्यस्मा-
दसंभेदात् । तस्मादात्मावयव्यपि वेदनाभाक् । न च तस्य कृत्स्नदेहव्यापिनः
सर्वत्र वेदनाभाक्त्वम्, अपि तु पादशिरसोरेव ; ततश्च न स्यादनवयव-
त्वात् पादाद्युपलक्षितस्वावयवभेदकल्पितभेदस्यैव वेदनाव्यवस्थेत्यर्थः । अथ
नग्नानामप्यनवयवात्मा तदायं पादाद्यवयवाभिप्रायेण ग्रन्थो योज्यः । तथा

च पृथङ्निर्देशाभिप्रायो वाच्यः । अत्र चोदयति—स्यादेतदिति । यथै- P. 7-6.
कस्मिन् देहे एक एवात्मा पादशिरसोर्वेदनामनुसंधत्ते, तथा देहद्वयेऽप्येक आत्मा किं नानुसंधत्त इत्यर्थः । सिद्धान्ती तु सिद्धान्तान्तरदूषणं नाम निग्रहस्थानमाह—अन्यदिति । आत्मैक्ये देहद्वयेऽप्येकदेहवदनुसंधानं स्यात्, न च तदस्ति; तस्मान्नात्मैक्यमिति प्रकृतसिद्धान्तदूषणमेवेदमित्यपरितोषात् परिहारान्तरमाह—अपि चेति । यथैकस्मिन् देहे शिरःपादकल्पितभेदो जीवप्रदेशो नान्योन्यस्य वेदनामनुसंदधाति, तथैकस्य परमात्मनोंऽशा बुद्ध्याद्युपाधिकल्पितभेदा जीवा अपीत्यर्थः । परमात्मनस्त्वनुसंधानमसंभवानिरस्तम्; तद्ध्यन्तःकरणधर्मः; न च तस्य तदस्तीति भावः । कल्पितभेदनिबन्धनव्यवस्थायां दृष्टान्तान्तरमाह—तथेति । गुरुत्वादीनां भेदाभावेऽपि मणिरूपाणादौ वर्णस्य श्यामादेः संस्थानस्य चावयवसंनिवेशविशेषस्य भेदेन व्यवस्थानं संदृश्यते तथात्रापीत्यर्थः । एवं भोगव्यवस्थामुपपाद्य इममेव न्यायं मुक्तसंसारिव्यवस्थायामप्यतिदिशन्नाह—एवमिति । इममेवार्थं दृष्टान्तेन द्रढयति—तथा हीति । यथैकोऽपि जीवः शिरःपादाद्युपाधिकल्पितभेदप्रदेशद्वारेण सुखादिभिर्युज्यमानो यत्र तैर्युक्तः तत्र बद्धः ततोऽन्यत्र तैर्मुक्त इत्यवगम्यते तथास्माकमपि भविष्यतीति भावः । अत्रैव दृष्टान्तान्तरमाह—तथेति । यथा मलिनामलिनयोर्दर्पणयोरेकमपि मुखं मलिनममलिनं भाति तथा मलिनामलिनयोरन्तःकरणयोरेकोऽप्यात्मा दुःखी सुखी चेति द्विविधसंसारिकथनम्; यथा वादर्पणं तदेव मुखं तद्दोषमुक्तं तथानन्तःकरणात्मा तद्दोषदुःखादिभिर्मुक्तो भवतीति व्यवस्थासिद्धिरिति भावः । अत्र चोदयति—स्यादिति । कल्पनेति भावप्रधानो निर्देशः । कल्पनात्वमसदर्थत्वं प्रतिपत्तुः प्रत्ययस्य धर्मः, न वस्तुधर्मः; अतो न वस्तु व्यवस्थापयितुमलमित्यर्थः । यद्वा प्रतीयतेऽनेनेत्यन्तःकरणं प्रत्ययः, तस्य धर्मो मिथ्याज्ञानं कल्पना; न खल्वित्यत्र तु कल्पनैव प्रत्यय इति । कुत इत्याह—न खल्विति । न हि यद्यथा ज्ञानं तत्तथैव स्यात्; न हि शुक्ती रूप्यतया ज्ञाता रूप्यमेव स्यात्; ततश्च उपाधिभेदादात्मा भिन्नो विज्ञातः, न तत्त्वतो भिन्नः स्यात्; अतो न भोगादिव्यवस्थेति भावः । किं च कल्पिताज्जीवात्कार्यमपि दृष्टमदृष्टं च न स्यात् कल्पिताग्निभावादिव माणवकादित्याह—न चेति ॥

ननूक्ता शिरःपादादिभेदेन कल्पितादपि भेदात् व्यवस्था; सत्यमुक्ता;
P. 7-16. किं तु भ्रान्तिः सा, न तत्त्वत इत्याह—उदाहृतेति। 'सत्यम्' इत्यभ्युपगमे। सिद्धान्ती त्वाह अत्रापीति। अस्माकमपि सर्वं विभ्रम एवेत्यर्थः। उदाहृता तु व्यवस्थेत्ययमेव सिद्धान्तः। तत्र 'सत्यम्' इति परेण चोदिते, अत्रापि विभ्रमत्वमिति पुनः परिहार इति ग्रन्थो योज्यः। यथोक्तं कल्पितात् कार्यं न दृष्टमिति तद्व्यभिचारयति—कल्पितोऽपीति। कल्पित इति; असति दंशे भ्रान्त्याध्यवसित इत्यर्थः। न च ज्ञानं तत्र मृतिहेतुः, न त्वसत्यमिति वाच्यम्; ज्ञानमात्रस्य सर्वत्राविशेषात्। अथाहिदंशविशिष्टमित्युच्यते, प्राप्तं तर्हि यथा मृतिहेतुत्वं तथा कल्पितत्वमित्यदोषः। दंशः सर्वथा कल्पितः, जीवे तु भेदमात्रम्; अतो न सर्वथा साम्यमिति तदर्थं प्रतिसूर्यमुदाहरति—प्रतिसूर्यक इति; दर्पणादौ कल्पितभेदमात्रं सूर्यप्रतिबिम्बं प्रकाशकार्याय कल्पत इत्यर्थः।

तदेवमात्मभेदहेतुं भोगादिव्यवस्थामात्माभेदेऽप्युपपाद्याधुना द्रष्टृदृश्ययोर्दृश्यानां च मिथो भेदहेतुं दूषयितुमनुभाषते—यदपीति। तत्राद्यं तावद्धेतुमसिद्धत्वेन दूषयति—तदपीति। द्रष्ट्रवगमपुरःसरो दृश्यावगमः, न तु विपर्ययः; यथा चैतन्निर्वहति तथोक्तम् 'यथा च कर्तृसंवेद्ये' इत्यत्रेत्यर्थः। द्वितीयमपि हेतुमसिद्धत्वेनैव दूषयति—दृश्येति; प्रमाणस्य प्रत्यक्षादेर्दृश्यभेदग्रहणासामर्थ्यादित्यर्थः। वक्ष्यत इति 'आहुर्विधातृ प्रत्यक्षम्' इत्यत्रेत्यर्थः। योऽपि भिन्नदृश्यसद्भावहेतुर्दृच्छक्तेरर्थवत्त्वमुक्तः, सोऽपि दृश्याभावेऽपि घटत इत्याह—दृगिति; आत्मानमेव तया द्रष्टा द्रक्ष्यतीत्यर्थः। ननु कर्तुः कर्मत्वं विरुध्यत इत्युक्तमित्याशङ्क्याह—न चेति। यथा प्रदीपः प्रदीपान्तरनिरपेक्षः स्वत एव प्रकाशते तथात्मापि; ततश्च न विरोध इति भावः। यदि नाम प्रदीपः प्रदीपान्तरनिरपेक्षः बुद्धिवेद्यस्तु भवत्येवेति अबुद्धिवेद्यकं स्वतःसिद्धं प्रमाणफलं दृष्टान्तयति—प्रमाणेति। 'न च संवेद्यम्' इत्यत्रोक्तमित्यर्थः। इदानीं स्वपक्षे गुणमाह—अपि चेति; द्रष्टृदृश्ययोरेकत्व इत्यर्थः। कुत इत्यत आह—द्रष्टुरिति। तेन तेन दृश्यरूपेण विपरिणमादिति परमतम्। विवर्तनादिति; अतद्रूपस्य भ्रान्त्या तद्रूपाध्यासादिति स्वमतम्। किमत्र

विशेषनिरूपणेन ? मतद्वयेऽपि दृक्स्वरूपेण द्रष्टृसंवन्धादर्थानां दृश्यत्वं घटत इति भावः । भेदे तु तयोस्तादात्म्यलक्षणसंवन्धरहितयोरात्मानात्मनो-रनवयवत्वादन्ययोगोलिकवच्च परस्परमसंसृष्टयोरत एवासंबद्धयोर्द्रष्टृदृश्यभावो न स्यादित्याह—नानात्वे त्विति । कुतो न स्यादित्याह—न हीति । स्वतो P. 7-24. जडत्वादर्थानामिति भावः । ननु स्फटिकोपमे चेतसि इन्द्रियप्रणाल्या संक्रान्ता-नामर्थानां तत्रैव संक्रान्तेनात्मचैतन्येन संबद्धानां तद्दृश्यत्वं घटिष्यत इत्याशङ्कयति—एकेति । तद्रूपयति—नेति । एकान्तःकरणसंक्रान्ताया अपि चितो नार्थसंसर्गकालुष्यमस्ति, विशुद्धत्वात् । न च विशुद्धापि तत्र संक्रान्ता अर्थाकारेण परिणमते, कौटस्थ्येनापरिणामात् । एतच्च संक्रान्तिमपेक्ष्योक्तम् ; तत्त्वतस्तु सापि निष्क्रियत्वाच्चितो नास्ति, अर्थस्य च ; अतः कुतोऽर्थस्य तत्संवन्धाच्चेत्यत्वमिति भावः । अथोच्यते—न बाह्योऽर्थो दृश्यः, किंतु बुद्धिरेवार्थाकारेण परिणता अर्थाकारेण दृश्या ; सा चात्मचितः संनिधेः चिति-च्छायां वहति ; अतोऽर्थो दृश्यत इत्युच्यते ; न तु चितेरशुद्धत्वं परिणा-मित्वं संक्रान्तिर्वेति ; तदाह—दृश्येति । तद्रूपयति—अथेति । अचिति-रूपाया बुद्धेश्चितिरूपता चेत्तच्छायता, मिथ्या तर्हि ; न च मिथ्याभूतेन चितिसंबन्धेन परमार्थतो दृश्यं दृश्यते ; न च परमार्थेनादृश्यमानं दृश्यं द्रष्टुर्वा अतिरिक्तमस्तीति शक्यते भणितुम् ; अतो द्रष्टृद्वैतसिद्धिरिति भावः । योऽपि मीमांसको मन्यते—दृश्यतयैव वाच्यवद्दृश्यस्य व्यवस्था, न संबन्धेन ; वाच्यवाचकवद्द्रष्टृदृश्यभाव एवानयोः संबन्धः, नान्य इति यावत् ; दर्शनं च 'नीलमिदम्' इति व्यतिरिक्तं नीलमुपस्थापयति, न 'अहं नीलम्' इत्यव्य-तिरिक्तम् ; अतो द्रष्टृव्यतिरिक्तं दृश्यमिति ; स वक्तव्यः—सत्यं दर्शनं व्यतिरिक्तवस्तुविषयम् , किं त्वेकस्यैवात्मनस्तेन तेन नीलादिना व्यतिरि-क्तरूपेण भ्रान्त्याध्यवसायादव्यतिरेकेऽपि तद्व्यतिरेकदर्शनमिति । तत्सर्वमाह—योऽपीति । अत्र दृष्टान्तमाह—दर्पणेति । आत्मन इति ; आत्मीयस्य देहस्येत्यर्थः । तदेव प्रपञ्चयति—तथा हीति । यथा बिम्बात् प्रतिबिम्बम-भिन्नमपि भिन्नं प्रत्येति तद्वदित्यर्थः । ननु तत्र बाधादस्त्वेवम्, इह तु किं नोपपद्यते, येनैवं कल्प्यते इत्यत आह—चितेरित्यनि । चितेर्विविक्तमतदा-त्मकतया वा असंसृष्टं तया चेत्यत इति दुरवगमम् ; अतश्चेत्यत्वानुपपत्त्यैवं

कल्प्यत इति भावः । वाच्यवाचकयोरभिधानक्रियागर्भः संबन्धः, चितेस्तु न काचित् क्रियास्तीति वैषम्यम् । आत्माव्यतिरेके च दृश्यस्य श्रुतिरप्यस्तीत्याह
P. 8-11 —एवं चेति । आत्मव्यतिरिक्तस्य सर्वस्याभावादात्मैव सर्वस्य तत्त्वम्; अत आत्मनि ज्ञाते सर्वं ज्ञातं भवतीति श्रुतेरर्थः । न च सदेव सर्वमात्मनो भिन्नाभिन्नम्, तेनाभेदांशेनात्मनि ज्ञाते सर्वं ज्ञानं भवतीति वाच्यम्; अश्रुतकल्पनाप्रसङ्गात्, भेदांशेन चाज्ञानादैकान्तिकज्ञातत्वानुपपत्तेः, भेदाभेदयोश्च निराकरिष्यमाणत्वादिति । तस्माच्छोभनम् 'एकम्' इत्युक्तिमित्युपसंहरति—तस्मादिति ।

इदानीम् 'अमृतम्, अजम्' इति व्याख्यातुं तद्व्यावर्त्यं बौद्धमतद्वयमुपन्यस्यन् माध्यमिकमतं तावदाह—क्षणिकेति । तदुक्तम्—"प्रदीपस्येव निर्वाणं विमोक्षस्तस्य तायिनः" इति । विषयवासनया सहितस्याविद्यादिक्लेशस्य सम्यगुच्छेदनादित्यर्थः । विषयवासनोच्छेदात् ग्राह्याभावः, तदभावाच्च ग्राहकाभावः; नाग्राह्यं ग्राहकं संभवतीति विज्ञानापरमहेतुः । माध्यमिकस्य शून्यलक्षणं ब्रह्म; अतस्तत्प्राप्तिरेव ब्रह्मप्राप्तिः । इममर्थं श्रुत्या द्रढयति—तथा चेति। संसारात् प्रेत्य ज्ञानं नास्तीत्यर्थः। योगाचारमतमाह—अन्ये त्विति; सम्यगुच्छिन्ना सकला विषयादिवासना यस्य स तथोक्तः, तस्मादित्यर्थः । विधूतो विगतो विषयाकारेणोपप्लवः संसर्गो यस्य; अत एव विशुद्धस्य विज्ञानस्योत्पादः, तल्लक्षणां ब्रह्मप्राप्तिमाहुरिति पूर्वेणान्वयः । नित्यात्मवादिनां तु दोषमाह—अनादीति । जन्मनाशरहितत्वे कौटस्थ्ये इत्यर्थः । ततः को दोष इत्यत आह—इतीति; इतिर्हेत्वर्थः। तदर्थानीति; अपनयोपनयप्रयोजनानीत्यर्थः । अपनेयोपनेयाभावमेव प्रपञ्चयति—तथा हीति। कुत इत्याह—अविद्याया इति । न तावदविद्या निवर्त्या, विद्यात्मनि तस्या अभावात्; न च विद्योपनेया, तस्याः स्वभावसिद्धत्वात् । न चाविद्यास्वभावं ब्रह्म; तत्राविद्यापनीयते इति वाच्यम्; नित्यस्य हि ब्रह्मणः स्वभावनाशेऽनित्यत्वप्रसङ्गात्; पूर्वस्याविद्यास्वभावस्यात्यागात्, विद्यास्वभावस्य चानाधेयातिशयत्वेनानापत्तेः विद्याविद्योभयस्वभावत्वं च विद्याया अवाप्तत्वेनानुपनेयत्वात्, अविद्यायाश्च तत्स्वभावत्वेनानपनेयत्वादित्यर्थः । 'न किंचिन्निवर्त्य

मवास्तव्यं वा' इति पक्षद्वयेऽपि परतोऽनुवर्तते। इति ये प्राहुः तान्प्रत्याह— P. 8-21.
अमृतमजमिति। तत्र परोक्तं तावद्दोषद्वयं परिहरति—न चेति। नन्वनादिरविद्या ब्रह्मवत् तदनुच्छेद्येत्यत आह—सर्वेति। सर्ववादिसिद्धत्वान्नेदं वयमेवोपालभ्याः; दृश्यते च प्रागभावस्यानादेरप्युच्छेद इति भावः। पर इदानीमाह नेति। नित्यब्रह्मस्वभावस्याविद्यारूपस्यानुच्छेद इति ब्रूम इति पूर्वेणान्वयः। स एवाशङ्क्य दूषयति—अथेति। ततश्च द्वैतप्रसङ्ग इति भावः। अथैतद्भयादर्थान्तरमपि सा नेष्यते, ततो न सा स्वभावः, न चार्थान्तरमिति नास्त्येव; अतः किं निवर्त्यमित्याह—न वेति। परः पुनराशङ्कयति अथेति। नाविद्या ब्रह्मणः स्वभावः, तथापि न द्वैतप्रसङ्गः, ग्रहणाभावरूपाया अवस्तुत्वेनानर्थान्तरत्वात्; न च तत एवानिवर्त्या, सर्वप्रमाणानां प्रमेयाग्रहणनिवृत्त्यर्थत्वादित्यर्थः। तदनिवर्तकत्वे सत्यपि प्रमाणे प्रमेयाज्ञानमनुवर्तेतेति भावः। एवमाशङ्क्य दूषयति - तदपीति। कुत इत्याह—तत्त्वेति। यस्मात्तत्त्वाग्रहणात्मिकाविद्या तद्विरुद्धया तत्त्वग्रहणात्मिकया विद्यया निवर्त्या नान्येन; सा च ब्रह्मस्वभावत्वान्नित्या; अतो नित्यानिवृत्तेवाविद्येति न तन्निवृत्त्यर्थत्वेन शास्त्रादीनामर्थवत्तेति भावः। अथ ब्रह्मणो नाविद्या, किं तु जीवानां ब्रह्मविषया; सा च तेषां श्रवणादिप्रयत्नलभ्यया ब्रह्मविषययागन्तुकया विद्यया निवर्त्यते; अतो न नित्यमविद्यानिवृत्तिप्रसङ्ग इत्युच्यते; तदपि न, ब्रह्मव्यतिरिक्तजीवाभ्युपगमे द्वैतप्रसङ्गात् इत्यभिप्रायेणाह—न चेति। अस्तु तर्हि ब्रह्मण्येवाविद्येत्यत आह—ब्रह्मणीति। दूषणान्तराभिधित्सया पुनरुपन्यास इति द्रष्टव्यम्। अथैतद्दोषभयादविरोधस्तयो रिष्येत तत्राह—अविप्रतिषेध इति। विरुद्धा हि सती विद्या तां निवर्तयेत्, नाविरुद्धा, रस इव रूपमिति भावः। एवमग्रहणात्मिकामविद्यां दूषयित्वा विपर्ययग्रहणात्मिकामिदानीं दूषयति—यस्य त्विति। ब्रह्मस्वभावत्वेऽर्थान्तरत्वाद्द्वैतविघात इति भावः। दोषान्तरमाह—कस्य चेति; निराश्रयविपर्ययग्रहणासंभवादिति भावः। न तावत्तद्विपर्ययग्रहणं ब्रह्मणोऽन्यस्य, तदभावात्; नापि ब्रह्मण एव, तस्य विद्यास्वरूपस्य विप्रतिषिद्धाविद्याश्रयस्यायोगादित्याह—ब्रह्मण इति। अथाविरोधस्तत्राह—अविप्रतिषेध इति।

केन निवर्त्येत? न केनापीत्यर्थः। विद्याया अविरुद्धत्वेनानिवर्तकत्वादन्यस्य च तन्निवर्तकस्यादृष्टत्वादिति भावः।

P. 9-11. अत्र सिद्धान्तमाह—अत्रोच्यत इति। 'न स्वभावो नार्थान्तरम्' इति स्वभावास्वभावपक्षोक्तदोषावनभ्युपगमेनैव परिहरति। यदि ब्रह्मणो न स्वभावः, नाप्यर्थान्तरमविद्या, नास्त्येव तर्हीत्यत्राह—नेति। यदि न ब्रह्मणो भिन्ना, अभिन्ना वा, न सती, नाप्यसती, कीदृशी नाम सा? इत्यत आह—एवमिति; ईदृश्येव सा, अनवस्थितैकरूपेत्यर्थः। न चेयमलौकिकीत्याह—अविद्येति; लोक इति वाक्यशेषः। एवमादिभिः शब्दैरसौ रूढा, न सदसदादिशब्दैरिति दर्शयितुं विशिष्टपर्यायनिर्देशः। तत्र सत्त्वाभावे तावत् प्रमाणमाह—स्वभावश्चेदिति; तस्याः सत्त्वाभावे तावदविद्यात्वान्यथानुपपत्तिरेव प्रमाणमिति भावः। तथा ब्रह्मस्वभावत्वे सत्यत्वात् ब्रह्मवद्बाधानुपपत्तिरपि तत्र प्रमाणमूह्यम्। अर्थान्तरत्वाभावस्तुल्यदोषत्वात् स्वभावान्यत्वपक्षतुल्यत्वाद्वा न स पृथगुक्त इति। अत्यन्तासत्त्वाभावे तु व्यवहाराङ्गत्वानुपपत्तिः प्रमाणम्; न ह्यसतो व्यवहाराङ्गत्वं दृष्टमित्यभिप्रायेणाह—अत्यन्तेति। उपलक्षणं चेदम्; उपलम्भोऽप्यसतः खपुष्पवन्नोपपद्येतेति सोऽपि प्रमाणम्। ननु व्यवहाराङ्गं चेत् ततोऽर्थक्रियाकारित्वात् सत्त्वस्य कथं न सती? मैवम्, देहात्मभावस्याशेषव्यवहाराङ्गस्याप्यसत्त्वात्। तज्ज्ञानं तत्र सदेव व्यवहाराङ्गमिति चेत्, तदपि न; यतो न ज्ञानमात्रं व्यवहाराङ्गम्। नन्वविद्या प्रमाणेन चेत् प्रतीयते, ततो ब्रह्मवत् सती; नो चेत्, खपुष्पवदसती; कथमनिर्वचनीया? मैवम्; अवभाति हि सा; न तु प्रमाणेन, शुक्तिरूप्यवत्; अत एव खपुष्पाद्विशिष्यते। न च सदसती, विरोधात्; अतो बलादापन्नमनिर्वचनीयं सदसत्त्वाभ्यां राश्यन्तरम्। ननु न तदन्यत् किंचिद्दृष्टम्। मा नाम दृश्यताम्, तथाप्युक्तप्रमाणबलात् सिद्धमनिर्वचनीयत्वमविद्याया नापलपनीयम्; न हि भुवो गन्धवत्त्वमन्यत्रादृष्टमिति तत्र दृष्टमप्यपलप्यते। नन्वनिर्वचनीयेति निरुच्यते, कथमनिर्वचनीया? मैवम्, सदसत्त्वाभ्यामिति विशेषितत्वात्। नन्वविद्या चेदुपेयते, अवश्यं ब्रह्मणो भिन्ना अभिन्ना वा स्यात्, राश्यन्तरासंभवात्। मैवम्, शुक्तिरूप्य-

वादेत्युक्तोत्तरत्वात्; शुक्तिरूप्यं हि न शुक्तेर्भिन्नमभिन्नं भिन्नाभिन्नं वा घटते; तस्मादस्ति प्रकारान्तरसंभव इति । सर्वमूरीकृत्योपसंहरति—तस्मादिति । P. 9-14.
इयं चेदृशी सर्वैरेव वादिभिरभ्युपेया; तेन न वयमेवोपालभ्या इति युक्तिबलेन सर्वानभ्युपगमयति—सर्वेति । एतदेव प्रपञ्चयति—तथा हीति । सर्वशून्यवादिनां माध्यमिकानां यादृशं जगद्दृश्यते तादृशं चेत् सत्, ततः परमार्थत्वान्नाविद्या; अथात्यन्तमसत्, ततः खपुष्पवत् व्यवहाराङ्गं न स्यात्; नावभासेत । तथा ज्ञानमात्रवादिनो योगाचारस्य बाह्यार्थावभासानपह्नवात्तथा सत्त्वे नार्थापह्नवः स्यात्; अत्यन्तासत्त्वे खपुष्पवदव्यवहाराङ्गत्वम् । बाह्यार्थवादिनोऽपि पतञ्जलेः "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मबुद्धिरविद्या" इतीयं नित्यादिबुद्धिर्मिथ्येष्टा; सा प्रतिभासमाननित्यत्वाद्यर्थस्य सत्यत्वे न मिथ्या स्यात्; असत्यत्वे न तन्निबन्धनो व्यवहारः स्यात्; अतः सर्वैरनिर्वचनीयैवाविद्याभ्युपेतव्येत्यर्थः । ननु शुक्तिरजतादिविभ्रमे रजतमसत्, न तु तज्ज्ञानम्; तच्चाविद्या; अतः सत्येव सा; कथमनिर्वचनीयता? इति चोदयति—स्यादेतदिति। सिद्धान्ती त्वाह—नैतदिति । असत्यवभासमानेऽर्थे तदवभासोऽपि सत्यत्वेन दुर्निरूपः; किं त्ववभासमात्रं सत्यं स्यात्; तदवभास इत्यपि भ्रान्तिरेव; तस्यैवाभावात्; न केवलमर्थः, अपि त्वर्थाभासोऽपीत्यर्थः । एतदुक्तं स्यात्—अर्थानुबन्धरहितमनुभवमात्रं नो नित्यं सदेव; तस्य च भ्रान्तेनार्थानुबन्धेनाविद्यात्वम्, न स्वतः; असत्यार्थानुबन्धरूपेण न सतीति स्वतः सत्यपि 'न सती' इत्युच्यत इति। एवमनिर्वचनीयत्वमाक्षिप्तं समाधाय पुनरुपसंहरति—तस्मादिति। तदेव द्रढयति—अत इति । कुत इत्याह—स्वभावाहानादिति : यद्यविद्या सत्स्वभावा स्यात्, न स्वभावं जह्यादग्निरिवौष्ण्यम् । न च तथाभूतस्यान्यथाभावः; अन्यथाभूतस्य चान्यथाभावेऽनवस्था स्यात्; अतो न बाधकज्ञानेनान्यथाक्रियेत । अथासती, ततः स्वत एव निवृत्तत्वान्न तेन निवर्त्येतेत्यर्थः । एवमनिर्वचनीयत्वमविद्यायाः प्रतिष्ठाप्य 'सत्त्वे द्वैतापत्तिः, असत्त्वे ब्रह्मस्वभावत्वे च निवर्तनीयाभावः' इति परोक्तं दोषद्वयं परिहरति—एवमिति ।

इदानीं कस्याविद्येति यदुक्तं तदनुभाष्य तत्रोत्तरमाह—यत्त्विति । अत्र परश्चोदयति—नन्विति । ब्रह्मणश्च नाविद्या, विद्यात्मभावत्वादिति भावः ।

P 10-4. कुत इत्याह—एवं हीति। 'जीवेनात्मना' इत्यात्मशब्देन ब्रह्मवादिना सामानाधिकरण्यं श्रूयते; न च तयोर्भेदे घटपटयोरिव तत् स्यादिति भावः। तथा "क्षेत्रज्ञं चापि मां विद्धि" इत्यादिविरोधः, द्वैतापत्तिश्च तयोर्भेदे स्यादित्यूहनीयम्। सिद्धान्तवादी त्वाह—सत्यमिति; न भिद्यत इत्यनुवर्तते। कथं नाम भिद्यत इत्याह—कल्पनयेति; अयथार्थबुद्धेरित्यर्थः। परमार्थेनाभिन्ना अपि ब्रह्मणो जीवाः कल्पनया मिथ्याबुद्धयो बिम्बप्रतिबिम्बवच्चन्द्रवच्च ततो भिद्यन्ते; एवं च भेदमात्रमत्र काल्पनिकम्, न जीववस्त्वेवेत्युक्तं भवति। अत एव "तत्त्वमसि" इति भेद एव बाध्यते, न तु 'तत्त्वमसि' इति जीव इति। पुनश्चोदयति—कस्येति। कस्य कल्पना जीवपरयोर्भेदिकेत्यर्थः। तत्र मतभेदेन परिहारद्वयं विवक्षुरेकं तावदाह—अत्रेति। यद्यविद्या नाम वस्तु स्यात् ततो नासिद्धा जीववस्तुसिद्धयेऽलम्, जीवं च विना न तत्सिद्धिः इतीतरेतराश्रयदोषः स्यात्; मायामात्रं तु सा; अतो न दोष इत्यर्थः। कुत इत्याह—न हीति। कुत इत्याह—अनुपपन्नार्थैव हीति। अनुपपन्नविषयैव सा माया; उपपन्नार्थत्वे तु तस्या यथार्थत्वात् स्वरूपहानिरेव स्यात्; अतोऽनुपपन्नार्थत्वं तस्या भूषणम्, न तु दूषणमित्यर्थः। परिहारान्तरमाह—अन्ये त्विति। अहंकारादिकल्पनादतस्तदवच्छिन्नस्तद्गुणसारो घटाकाश इव जीवः, ततस्तत्कल्पनेति बीजाङ्कुरवदनादित्वं मन्तव्यम्। कारणाविद्या त्वनादिः। अनादित्वमेव स्वयूथ्योक्त्या द्रढयति—तथा चेति। अविद्या उपादानकारणं यस्य भेदप्रपञ्चस्य तद्वादिभिरित्यर्थः। तत्रानादित्वस्य फलमाह—तत्रेति। तथा प्रसङ्गोक्तस्याप्रयोजनत्वस्य फलमाह—अप्रयोजनत्वाच्चेति; 'विद्यमानस्य प्रपञ्चस्य सृष्टौ किं प्रयोजनम्?' इति यः पर्यनुयोगः तस्यावकाशो न भवतीत्यर्थः। तत्र पर्यनुयोगं तावदाह—यदेक इति। यद्यपि सृष्टेः प्रागप्यनुग्राह्याः सबीजावस्था जीवाः सन्ति, अन्यथा पुनः सृष्ट्यभावप्रसङ्गात्; तथाप्युपाधिलये ब्रह्मणि लीना इवेति यथादृष्टपृथग्भूतानुग्राह्याभावउक्तः। इतश्च न परानुग्रहः प्रयोजनमित्याह—दुःखोत्तरत्वाच्चेति। अनुग्रहाद्धि सुखिनमेव सृजेत्, न दुःखिनम्;

दुःखबहुला च सृष्टिरित्यर्थः; तदुक्तम्—"सृजेच्च शुभमेवैकमनुकम्पा-प्रयोजितः" इति । न च स्वोपयोगि किंचित्प्रयोजनमस्तीत्याह—नेति । P. 10-18
आप्तकामत्वादिति ; "आप्तकामः आत्मकामः" इति श्रुतेराप्ताशेषकाम्यत्वेन कृतार्थत्वादित्यर्थः । तदुक्तम्—"क्रीडार्थायां प्रवृत्तौ च विहन्येत कृतार्थता" इति। क्रीडादिरित्यादिशब्देन कुतूहलमुच्यते । एवं पर्यनुयोगमुक्त्वा तस्यानवकाशत्वमाह—तस्येति । कुत इत्याह—न हीति । तदेव लौकिकदृष्टान्तैर्द्रढयति—नेति । प्रकृतिविकारपक्षोक्तोऽपि दोषो नास्मत्पक्षमास्कन्दतीत्याह—तथेति ; विमलस्यापि व्योम्नस्तलमलिनादिभ्रमदर्शनादिति भावः । अविद्याकृता सृष्टिरप्रयोजनेत्युक्तम्; इदानीमभ्युपगम्यैव क्रीडार्थां प्रवृत्तिं पूर्वोक्तदोषाभावमाह—अपि चेति । क्रीडार्थप्रवृत्तिः; क्रीडा भवतीत्यध्याहार्यम् । उल्लासादिति ; प्रोत्साहादित्यर्थः । प्रार्थनेति; कामप्रार्थनावता कृतार्थप्रवृत्तिरेव क्रीडोच्यते, न कार्यार्थिनेति भावः । ननु सुखिदुःखिदृष्टे रागद्वेषहेतुत्वेन द्रष्टृत्वादीश्वरस्य तद्वत्त्वेन वैषम्यं स्यात्; तथा दुःखिनः सृजतो नैर्घृण्यं च स्यादित्यत आह—न चेति । कुत इत्याह—न हीति । मायां करोतीति मायाकरः शाम्बरिकः, तस्य संपूर्णमसंपूर्णाङ्गं च रूपादिप्रपञ्चं दर्शयतो यथा न रागद्वेषौ तथेति स्वपक्षे दृष्टान्तः। सत्यप्रपञ्चवादिपक्षेऽपि तमाह—चित्रेति । पुस्तं लेख्यम् ; 'कृताम्' इति कृञः क्विबन्तात् षष्ठीबहुवचनम् । विकलाविकलत्वमसंपूर्णसंपूर्णाङ्गत्वम् । चित्राणीत्युपलक्षणम्, लेख्यमपि द्रष्टव्यम् । प्रतिकृतिः प्रतिरूपकम् । परिहारान्तरमाह—कर्मेति । पर्जन्यस्थानीयो हीश्वरः साधारणं कारणम् । सुखिदुःखिभेदस्तु स्वकर्मभेदाद्बीजभेदादिवाङ्कुरभेदः । तस्मान्न तस्य वैषम्यादिदोष इत्यर्थः । नन्वेवं कर्माशयपारतन्त्र्यात् स्वातन्त्र्यलक्षणमैश्वर्यं न स्यादित्यत आह—न चेति । एतदुक्तं भवति—नान्यापेक्षित्वमात्रेणानीश्वरत्वं स्यात्; न हि लोके सेवाविशेषापेक्षः फलं प्रयच्छन् प्रभुरप्रभुः; अतश्च तदपेक्षोऽपि यथा फलं दातुं प्रभवतीति स प्रभुः, नेतरः; तथा कर्मापेक्षोऽपि स एव फलं दातुमीष्टे नेतर इति तस्यैवेश्वरत्वमिति । "पुरुषस्य च शुद्धस्य नाशुद्धा विकृतिः" इति चाद्यं

मायिकीं सृष्टिमाश्रित्य विकारपक्षानभ्युपगमेन पूर्वं परिहृतम्; अधुना तदभ्युपगमेऽपि नैष दोषः, किमुतास्माकं मायावादिनामित्यभिप्रायेणाह—

P. 11-6. तथेति । प्रकृतिविकारयोरत्यन्तमवैलक्षण्ये प्रकृतिमात्रवत् प्रकृतिविकारभावभेदो न स्यात्; अतोऽस्ति तयोर्वैलक्षण्यम्; एवं च शुद्धादप्यशुद्धा विकृतिर्भविष्यतीत्यर्थः । दृष्टं चान्यत्रापि प्रकृतिविकारयोर्वैलक्षण्यम्, तद्वदिहापि स्यादित्यभिप्रायेणाह—द्रवाणामिति । अचेतनचेतनौ चेतनानधिष्ठिताधिष्ठितौ द्रष्टव्यौ ।

इदानीमद्वैतिमते पुनश्चोदयति—नन्विति । विशुद्धस्वभावाः; विमलविद्यास्वभावा इत्यर्थः । सिद्धान्ती तु शुद्धादभिन्नमप्यशुद्धं भात्येवेति दर्शयन्नाह—वार्तमिति; असारमित्यर्थः; वार्तात आगतं वार्तम्; निष्प्रमाणकमित्यर्थः । कुत इत्याह—न तावदिति । कथं पुनर्बिम्बात्प्रतिबिम्बं न भिन्नम्? सावयवस्यावयवसंयोगमन्तरेणानुपपत्तेः । न च तस्यावयवा दृश्यन्ते । न च कल्प्या, अन्यथापि तत्प्रतिपत्त्युपपत्तेः । सावयवस्य च निरन्तरे दर्पणे स्थित्यनुपपत्तेः; बिम्बरूपप्रत्यभिज्ञानाच्च; स्पर्शनेन चानुपलब्धेः; सावयवस्य अवयवतत्संयोगनाशमन्तरेणानाशात्; अस्य च बिम्बसंनिधिमात्रेणाभासात्; तस्माद्बिम्बमेव भ्रान्त्या भिन्नं भातीति स्थितम् । ननु शुद्धादभिन्नस्याशुद्धिस्तत्त्वतो न घटते; प्रतिबिम्बे तु भ्रान्तिः सेत्याशङ्क्य इहापि भ्रान्तिरित्याह विभ्रम इति । भ्रान्तित्वमेव द्रढयति—अन्यथेति । तत्त्वतस्तु जीवानामशुद्धस्वभावत्वे शुद्धिर्न स्यादिति 'स्वभावाहानात्' इत्यत्रोक्तमित्यर्थः । अत्र पुनश्चोदयति—स्यादिति । एकात्म्यवादिनस्तद्व्यतिरिक्त आगन्तुको हेतुर्नास्तीति भावः । सिद्धान्ती त्वाह—किमत्रागन्तुकेनान्येन हेतुना? आगन्तुके हि प्रतिबिम्बादिभ्रमे सोऽपेक्ष्येत; अनादिस्त्वयं जीवभ्रमः; अतश्चानादेस्तत्त्वाग्रहणादेवोपपत्तेरागन्तुकबाह्यहेत्वन्वेषणमयुक्तमित्यभिप्रायेणाह - अनादाविति । अनादित्वाच्चाविद्याप्रवृत्तिहेत्वभावचोद्यमपि परिहृतमित्याह—तथा चेति । अत्र चोदयति—नन्विति । हेतूच्छेदाद्धि हेतुमदुच्छेदो दृष्टः; अविद्या त्वनादित्वात् स्वाभाविकीति निर्हेतुः; अतः कथमुच्छिद्येतेत्यर्थः । सिद्धान्ती तु स्वाभाविक्यप्युच्छिद्यते तावदविद्या; अन्यथा

तन्निवृत्त्यर्थानि शास्त्राणि व्यर्थानि स्युरित्यभिप्रायेणाह—सर्वेति । दृश्यते च P.11-17.
स्वाभाविकस्याप्युच्छेद इत्याह—अपि चेति । परस्तु श्यामतादिवैषम्यमापादयन् चोदयति—नन्विति । प्रत्ययः; हेतुरित्यर्थः । न विद्यते आगन्तुको द्वितीयोऽर्थो यस्य स तथोक्तः । तदभावात्; विलक्षणप्रत्ययोपनिपाताभावादित्यर्थः । कुतो निवृत्तिः? अविद्याया इत्यध्याहार्यम् । ननु मा भूदागन्तुको हेतुः; आत्मनो विद्यात्मकत्वात् तत्स्वभावभूतैव विद्या अविद्यां निवर्तयिष्यतीत्यत आह—न खल्विति । विद्याविद्ये चेदेकत्रात्मनीच्छसि, ततस्तयोः स्वभावावस्थानादविरोधे न निवर्त्यनिवर्तकभावः; विरोधे वा विद्यात्मन्यविद्या नित्यनिरस्तेति तन्निबन्धनत्वाभावान्नित्यमुक्तं जगत् स्यादित्यर्थः । अविद्याया इति काकाक्षिवदुभयत्र संबध्यते । तयेति; विद्ययेत्यर्थः । श्रवणादिजन्यमागन्तुकं विद्यान्तरमविद्यां निवर्तयिष्यतीति चेदत आह न चेति । आगन्तुकस्यापि विद्यान्तरस्य ब्रह्मस्वभावत्वात् नैकात्म्यहानिरिति चेदत आह—आगन्तुकेति । नानित्यस्य नित्यस्वभावत्वं घटत इत्यर्थः । अत्रैवार्थे परोक्तं पठति—तदुक्तमिति । अत्र सिद्धान्तमाह अत्रेति : प्रतिबिम्बदृष्टान्तेनोक्तमित्यर्थः । कस्मान्न ब्रह्मण इत्याह—तद्धीति । अविद्यानिवर्तक आगन्तुकोऽर्थोऽस्य नास्तीत्यर्थः । यद्वा अनागन्तुकार्थमनाधेयातिशयमित्यर्थः । तत्र नित्यप्रकाशत्वेन स्वाभाविक्यविद्या नास्तीत्युक्तम्; अत्रानागन्तुकार्थत्वेन चागन्तुक्यपि सा नास्तीत्युक्तमिति विवेकः । विद्यास्वभावे ब्रह्मण्यविद्याकलुषितत्वं नास्तीत्युक्तम्; यदि च स्यात्ततो महान् दोषः स्यादित्याह—अन्यथेति । ब्रह्मभूयं गतस्येति; ब्रह्मभावं प्राप्तस्येत्यर्थः । ततः किमित्यत आह—तत्रेति । ब्रह्मैव संसरति मुच्यते च, न जीवा इति च तेषां मतम्; तदनुभाष्य दूषयति—अथेति । ब्रह्मैव; न जीवा इत्यर्थः । कुत इत्याह—यत इति । अभेददर्शनाद्ब्रह्मणि मुक्ते, अन्यस्य भेदद्रष्टुर्बद्धस्याभावात्सर्वभेदप्रत्यस्तमये युगपत् सर्वमोक्षप्रसङ्ग इत्यर्थः । स्वपक्षमुपसंहरति तस्मादिति । नन्वस्तु जीवानामविद्या; तथाप्यैकात्म्ये विलक्षणहेत्वभावात् कथमविद्यानिवृत्तिरिति पूर्वोक्तमाशङ्क्य परिहरति—तेषामिति । विलक्षणसत्यहेत्वभावेऽपि जीवाना

मविद्याकलुषाणामविद्याकल्पितश्रवणादिलक्षणहेतुकविद्योदयादविद्यानिवृत्तिर्घटत इत्यर्थः । विलक्षणः प्रत्ययः कारणं यस्य स तथोक्तः, विलक्षणप्रत्ययश्चासौ विद्योदयश्चेति कर्मधारयः; विलक्षणश्चासौ प्रत्ययविद्योदयश्चेति वा ।

P. 12-8. ननु जीवानामपि विद्या नैसर्गिक्यस्ति, अतः सैवाविद्यानिवर्तिका, नागन्तुकी विलक्षणेत्यत आह—न हीति । अविद्यामय एव जीव इत्युच्यत इत्यर्थः । ननु विद्यास्वभावाद् ब्रह्मणो जीवानामभेदात् कथमविद्यामयत्वमित्यत आह—अव्यतिरेकेऽपीति । यथा बिम्बं मुखाद्यवदातं तत्प्रतिबिम्बं च कृपाणाद्यनवदातमेवं ब्रह्मणो विद्यात्मत्वेऽपि जीवानामविद्येति व्यवस्थेत्यर्थः । ननु न तावद्ब्रह्माविद्यानिवर्तकम्, नित्यनिवृत्तिप्रसङ्गात्; न चाविद्यान्तरम्, अविद्यात्वाविशेषेणाप्रतियोगित्वात्, निवर्तकानिवृत्तिप्रसङ्गाच्च, निवर्तकान्तरकल्पनायां चानवस्थानात्; न च ब्रह्माविद्याभ्यामन्यन्निवर्तकं नवास्तीत्यभिप्रायेण पृच्छति—केनेति । सिद्धान्ती तु रजस्त्वाविशेषेऽपि यथा कतकरजो रजोऽन्तरप्रतियोगि तन्निवर्तकं च भवति तथा अविद्यात्वाविशेषेऽपि श्रवणाद्यविद्या प्रपञ्चाविद्यायाः प्रतियोगिनी निवर्तिका च भविष्यतीत्यभिप्रायेणाह—श्रवणेति । तत्र श्रवणमननयोः शाब्दविद्योत्पत्तिक्रमेण, ब्रह्मचर्यादेश्च कल्मषक्षयक्रमेण, ध्यानादेश्चाध्यात्मप्रकाशाभिव्यक्तिक्रमेणाविद्यानिवृत्त्युपायत्वमिति विवेकः । श्रवणं वेदान्तस्य, मननं तर्केण तदर्थानुसन्धानम्, ध्यानाभ्यासस्तदर्थानुचिन्तनावृत्तिः । परश्च तुल्यजातीयस्य श्रवणादेः प्रतियोगित्वासंभवाभिप्रायेण पुनः पृच्छति—कथमिति । सिद्धान्ती तु किमत्र वक्तव्यम्? अविद्यात्वाविशेषेऽपि श्रवणमननपूर्वको न कर्णमूलोपदेशपूर्वको योऽयं "स एष नेति नेति" इति वीप्सया प्रतिषिद्धाखिलभिद्यमानप्रपञ्चे ध्यानाभ्यासः सोऽत एव प्रपञ्चदर्शनप्रतियोगी; अतस्तन्निवर्तयतीत्याह—योऽयमिति । प्रतिषिद्धोऽखिलभेदप्रपञ्चो यस्मिन् स तथोक्तः । देहादीनामात्मत्वप्रतिषेधोऽयम्, नाखिलप्रपञ्चप्रतिषेध इति चेत्, न; देहादेरश्रुतत्वादश्रुतकल्पनाप्रमाणाभावाच्च । तस्मात्प्रतिषेध्यापेक्षायामगृह्यमाणविशेषत्वादखिलप्रपञ्चप्रतिषेध एवायमिति सूक्तम्—प्रतिषिद्धाखिलभेदप्रपञ्च इति । नन्वेवमपि श्रवणादेर्भेददर्शननिवर्तकस्य निवर्तका

न्तरानुपपत्तेरनिवृत्तावनिर्मोक्षप्रसङ्ग इति पराभिप्रायमाशङ्क्य परिहरति—स चेति । सामान्येनेति; अविशेषेणेत्यर्थः । 'सः' इति श्रवणादिपूर्वो ध्यानाभ्यासः परामृश्यते । एतदेवान्वयव्यतिरेकाभ्यां प्रपञ्चयति—न हीति । यदि श्रोतृश्रवणादिभेदं विहाय भेदान्तरप्रविलापकाः श्रवणादयः स्युः, ततः स्यादेष दोषः; ते विशेषेण सर्वभेदान् प्रविलापयन्तस्तदन्तर्गतत्वादात्मानमपि प्रविलापयन्ति; ततश्च न तेषामनिवृत्तिः; नापि निवर्तकान्तरापेक्षेति भावः; ततश्च नानिर्मोक्षदोष इत्याह—तथा चेति । स्वच्छ इति स्वभावनिर्मलत्वमाह । परिशुद्ध इति; अपगतागन्तुकाविद्याकालुष्य इत्यर्थः । अत्र दृष्टान्तमाह—यथेति; यथा द्रव्यविशेषस्य कतकादेश्चूर्णरूपं रजः कर्तृ प्रक्षिप्तं सत् रजोऽन्तराणि संहरत् स्वयं च संह्रियमाणं रजःसंपर्ककलुषमुदकं कर्मभूतं स्वरूपावस्थां नयतीत्यर्थः । दृष्टान्तमुक्त्वा दार्ष्टान्तिकेऽपि योजयति—एवमिति । भेददर्शनत्वेन विशेषाभावात् तद्गते श्रवणादिगते च भेदे प्रविलीयमाने जीवः स्वच्छे स्वरूपेऽवतिष्ठत इत्यर्थः । ननु ब्रह्मणो विभक्तो जीवोऽविद्याविलये स्वरूपस्थोऽपि तथैवावतिष्ठते; अतो न ब्रह्मीभावोऽस्य स्यात्; श्रूयते चासौ—"ब्रह्म वेद ब्रह्मैव भवति" इत्याशङ्क्याह—अविद्ययेति । यदि ब्रह्मणो जीवस्तत्त्वतो भिन्नः स्यात् ततः स्यादेवम्; किं त्वविद्यया; अतो विद्ययाविद्यानिवृत्तौ यथाब्रह्मस्वरूपमेव भवतीत्यर्थः । अत्र दृष्टान्तमाह—यथेति । भेदे; विदारण इत्यर्थः । तदाकाश इति; घटाकाश इत्यर्थः । पर इदानीं विजातीयत्वप्रयुक्तमुष्णशीतादिषु निवर्तकत्वं दृष्टमित्यभिमानेन पुनः प्रत्यवतिष्ठते—स्यादिति । श्रवणादिभेदेन प्रपञ्चः कथं निवर्तेत? अविद्यात्वाविशेषादिति भावः । सिद्धान्ती तु सजातीयस्यापि रजसः प्रतियोगिनो रजोन्तरनिवर्तकत्वं दृष्टम्; विजातीयस्यापि रूपरसादेरप्रतियोगिनो न दृष्टम्; अतः शीतोष्णादावपि प्रतियोगित्वप्रयुक्तमेव निवर्तकत्वम्; तच्च श्रवणादिभेदस्याविद्याकृतत्वेऽपि व्यक्तमस्तीत्याह—भेदेति । प्रतिपक्षत्वमाह—व्यक्तमिति । श्रवणादेः स्वयं निवृत्तौ सजातीयस्य च निवर्तकत्वे दृष्टान्तद्वयमपरमाह—यथा चेति । यद्यपि पयो जाठरेणाग्निना जीर्यति, तथापि पयोन्तरमनपेक्ष्य जीर्यतीत्येतावता साम्येन स्वयमित्युक्तम्; F.12-14

न हि दृष्टान्तेन सर्वथा साम्यं भवतीति भावः । श्रवणाद्यविद्यैवाविद्यां
P. 13-2. निवर्तयतीतीमं श्रुत्या द्रढयति—यथोक्तमिति । मन्त्रार्थं स्पष्टयति—एतदिति । विद्या विशुद्धविज्ञानं नित्यम्; अविद्या श्रवणादि; ते ह्युपायोपेयभावेन सहिते संबद्धे इति यथाक्रममभिसंबन्ध इति । ननूपेया चेद्विद्या, साध्या तर्हि; न ह्यसाध्यस्योपेयत्वं घटते; अतश्चानित्यत्वमित्याशङ्क्य मन्त्रस्योत्तरार्धं योजयति—साध्येति । तद्व्याचष्टे—एष इति । नाविद्या विद्यां जनयति, किं त्वविद्यानिवृत्तिम्; विद्यां तु व्यनक्ति, तेन व्यङ्ग्यतयापेयत्वं विद्यायाः, न जन्यतया; अतो नानित्यत्वमित्यर्थः । एतच्चात्मस्वभावभूतनित्यविद्याभिप्रायेणोक्तम् । ननु "मृत्युं तीर्त्वा" इति मृत्युनिवृत्तिः श्रूयते, नाविद्यानिवृत्तिः; कथमविद्या निवर्त्यत इत्युच्येत? इत्याशङ्क्याह—मृत्युरिति । चतुर्थं मन्त्रपादं योजयति—तस्यामिति । 'विद्यया' इति इत्थंभूतलक्षणे तृतीया । स्वरूपावस्थानमित्यमृतविवरणम् । नन्वविद्या चेदविद्यां निवर्तयति न ततः स्वरूपलाभाय प्रयतितव्यमित्याशङ्क्याह—स्फटिकेति; यथा स्फटिकमणेर्जपाद्युपाध्यपनयाय प्रयत्नादेव तन्निबन्धनरागत्यागात् प्रयत्नान्तरमन्तरेण स्वरूपेऽवस्थानं तद्वदिहापीत्यर्थः ।

अत्र केचिदाहुः—"कुर्वन्नेवेह कर्माणि" इत्यतो मन्त्रात् कर्म प्रकृतमविद्याशब्देन विद्यापर्युदासेनोच्यते; तस्मात् ज्ञानकर्मसमुच्चयपरोऽयं मन्त्र इति । तदसत्; 'अविद्या' इति हि नञ्श्रुतिरधर्मवत् स्वशक्त्या विद्याविरुद्धमसम्यग्ज्ञानमज्ञानं चाह, नान्यमात्रम् । अत्र श्रुतिश्च प्रकरणाद्बलीयसी । तस्मान्न ज्ञानकर्मसमुच्चयपरोऽय मन्त्र इति ।

मन्त्रस्यार्थान्तरमाह—अन्य इति । अविद्या प्रपञ्चदर्शनं न विद्यया कूटस्थात्मप्रकाशेन रहितमस्तीत्यर्थः । एतदेव दर्शयति—तथा हीति । न जडस्य स्वतः प्रकाशः संभवति; न च परतः, स्वभावाहानात्; न चात्मस्थेन प्रकाशान्तरेण स्वप्रकाशेन, अविकारित्वादात्मनः । न च प्रकाशेनासंबद्धस्य प्रकाश इति भावः । उपसंहरति—तस्मादिति । तथा तयेति; तेन तेन प्रपञ्चरूपेणेत्यर्थः । एतदेव श्रुत्या द्रढयति—यथेति । अत्र कश्चिदाह—

सर्वशब्दोऽयं प्रकृतविषयः; प्रकृतं चात्र "न तत्र सूर्यो भाति न चन्द्रतारकम्" इत्यतः सूर्यादि; तेनायमर्थः—तस्य ब्रह्मणो भासा प्रभावेण सर्वमिदं सूर्यादि भाति विद्योतत इति, न तु तत्प्रकाशेन सर्वं जगत्प्रकाशत इति। तदयुक्तम्; भाःशब्दो हि प्रकाशवचनः; प्रभावशक्त्यादिवाचित्वे सत्यलौकिकोऽर्थः कल्पितः स्यात्; तस्मात् तस्य भासा प्रकाशेन सर्वं प्रकाशत इत्ययमेवार्थः। नन्वेवं ब्रह्मणः प्रकाशात्मकत्वात् 'तस्य' इति व्यतिरेको न घटते। 'राहोः शिरः' इतिवदुपचारादुपपत्तेः। नन्वेवमपि प्रकृतत्वात्सूर्यादेरेव ब्रह्मप्रकाश्यत्वमुक्तं स्यात्, न सर्वस्य जगतः। न; तत्सामान्यादितरेषु तथात्वात्, ब्रह्मक्षत्रादिवदुपलक्षणोपपत्तेश्च। सर्वशब्दश्च स्वरसेनाशेषवचनः; स स्वार्थानुपपत्त्या संकोच्यमानः प्रकरणादिभिर्नियम्यते; यथा—'सर्वमन्नं भुक्तम्' इति। न त्विह तथेति श्रुतसंकोचो न युक्तः। उक्तः पर एव प्रकाशस्तथा तथा प्रकाशत इति स किं स्वभावात्परिणामाद्वा? नेत्याह—किं त्विति। अत्रार्थेऽभियुक्तवाक्यमाह—यथेति। P. 13-14.
सर्वं दर्शनं सर्वं ज्ञानम्; अन्यूनं संपूर्णम्, परप्रकाशस्वरूपमिति यावत्। अविकल्पं वियदादिविकल्परहितं वियदादिरूपेण विकल्प्यमानमिव तु अयमान्तरः देहान्तर्गतो जीवो मन्यत इत्यर्थः यद्वा विकल्पोऽसदर्थज्ञानम्, तन्न भवतीत्यविकल्पम्, असन्तं विकल्पमिवासदर्थं ज्ञानमिव मन्यत इत्यर्थः। पूर्वं विद्याविद्ययोरुपायोपेयभावेन सहभाव उक्तः, इह त्वविद्यायाः प्रपञ्चदर्शनस्य विद्यानुबद्धत्वेनेति विवेकः। ननु जीवानामविद्या, न ब्रह्मण इति पूर्वमुक्तम्; कथमिदानीं तस्यैवाविद्यानुबद्धत्वमुच्यते? पूर्वं ब्रह्मस्वरूपाज्ञातृत्वेन जीवानामविद्येत्युक्तम्; अधुना तु निरधिष्ठानविभ्रमानुपपत्तेरज्ञातत्वेन शुक्तिवत् ब्रह्मणः कार्याविद्यानुबद्धत्वमुच्यत इत्यविरोधः।

एवं प्रपञ्चाविद्याया नित्यविद्यया सहभावमुक्त्वा श्रवणादिविद्याया अविद्यया सहभावमाह—तथेति। विद्याविद्ययोरन्योन्यसहभाव इत्युक्तं भवति। अत एवोक्तम्—'उभयं सह' इति। कुत इत्याह—श्रोत्रिति। एवं मन्त्रस्य पूर्वार्धं व्याख्याय तस्योत्तरार्धं व्याचष्टे—तत्रेति। श्रवणादिविभागाविद्यया नित्यविद्यागतामविद्यां प्रपञ्चदर्शनं तीर्त्वेत्यर्थः। नन्वविद्यात्वे

तुल्ये को विशेषः, येन सा जगतो भेददर्शनमविद्यां बाधेतेत्याशङ्क्य विशेष
P. 13-17. उक्तः — विद्याप्रत्यासन्नेति। ऐकात्म्यश्रवणादिविद्यायां तत्सहभावेन नित्यप्रकाशरूपायां चाभिव्यञ्जकत्वेन श्रोतृश्रवणादिभेदाविद्या प्रत्यासन्नेति विशेषः। विद्यालक्षण इति; नित्यप्रकाशलक्षण इत्यर्थः। तन्निवृत्ताविति; कालुष्यानिवृत्तावित्यर्थः। अत्रेदानीमैकात्म्ये भेदस्यासत्यत्वात् श्रोत्रादिभेदाश्रयाः श्रवणादयोऽप्यसत्याः; ततश्च कथमविद्यानिवृत्तिकार्यं कुर्युः? इति परश्चोदयति — स्यादिति। मरुमरीचिकाजलादौ स्नानादिकार्यादर्शनादिति भावः। श्रवणादेरसत्याच्च ब्रह्मप्रतिपत्तिरसत्या स्यादित्याह — असत्याच्चेति। वह्नेरित्यध्याहृत्य प्रतिपत्तिपदेनानुषञ्जनीयम्। सिद्धान्ती त्वसत्यादपि सत्यं कार्यं सत्यार्थप्रतिपत्तिश्च दृष्टेत्याह — उच्यत इति। शाम्बरिकदर्शिता स्त्र्यादिमाया प्रीतेः, व्याघ्रादिमाया च भयस्य निमित्तमिति विवेकः। सत्यप्रतिपत्तेरित्यत्र निमित्तमित्यनुषञ्जनीयम्; इदमुदाहृतम्। रेखा गवयादिरूपेणासत्यापि रेखास्वरूपेण तावत् सत्या; श्रवणाद्युपायास्तु स्वरूपेणाप्यसत्या इति विशेषं दर्शयन् परः पुनः प्रत्यवतिष्ठते — स्यादेतदिति। सिद्धान्ती तु रेखास्वरूपेण सत्या अपि रेखागवयादयो येन गवादिरूपेण सत्यगवयादिप्रतिपादकास्तद्रूपमसत्यमेव; रेखारूपसत्यत्वं तु सत्यगवयादिप्रतिपत्तिकार्यानुपयोग्यकिंचित्करमेवेत्यविशेषमाह — उच्यत इति। यदि तु केनचिद्रूपेण सत्यत्वमन्तरेण न तुष्यति भवान्, तदप्यस्तीत्याह — अपि चेति। ब्रह्मैवाविद्यया श्रवणादिरूपेण गृहीतं शुद्धब्रह्मप्राप्तावुपाय इत्यर्थः। रेखादयोऽपि स्वरूपेण सन्तोऽपि वर्णादिनाविद्यादिरूपेणैव वर्णादीनां गमकाः, न स्वरूपेणेति सर्वथा साम्यं प्रकटयति — यथेति। अत्र परमतमुपन्यस्य दूषयति — योऽपीति। लोकविरोधं प्रकटयति — तथा हीति। असत्याच्च सत्यार्थप्रतिपत्तावुदाहरणान्तरमाह — तथेति। बहिः प्रतिबिम्बलाञ्छितमादर्शमुपलभ्य गृहे बिम्बानुमानं न मृषेत्यर्थः। अत्रैवोदाहरणान्तरमाह — शब्दाच्चेति। नित्यत्वं सर्वदा सत्त्वम्; तच्च दीर्घत्वादेर्दीर्घकालत्वादिलक्षणस्यासत्यत्वद्योतनार्थमुक्तमिति मन्तव्यम्। एवमसत्यात्सत्यकार्यार्थप्रतिपत्तेर्भेदेनोदाहरणानि दत्त्वा अधुनोभयत्राप्येकमुदाहरणमित्याह — तथेति। सत्यप्यहिदंशे कस्य-

चिन्मरणमूर्च्छयोरदर्शनादनैकान्तत्वं हेतोराशङ्क्य विशिनष्टि—कालादीति । P.14-15.
तेनेदृशमिदमनुमानम् 'मरिष्यत्ययं मूर्च्छां वापत्स्यते, राहोः पङ्गोर्वा काले वल्मीकादौ देशे दष्टत्वात् पूर्वदृष्टदष्टवदिति दृष्टान्तविशेषणत्वे हेतुत्वमुन्नेयम् ।

एवं परोक्तं दोषं स्वपक्षे परिहृत्य परस्मै चापादयन्नाह—यस्यैवेति । ननु ज्ञानमेवैताभिरपनेष्यते; अतः कथमपनेयाभाव इत्याशङ्क्याह—क्षणिकस्येति । ज्ञानापनयो हि तद्विनाशः, स च तस्य क्षणिकस्य स्वभावसिद्ध एवेत्यर्थः । ननु पूर्वमशुद्धस्य ज्ञानस्य विशुद्धिरतिशयस्ताभिरुपनेष्यते; अतः कथमुपनेयाभावः ? इत्याशङ्क्याह—अनाधेयेति । द्वितीये क्षणे ज्ञानस्य शुद्धिर्जन्या, न च तदस्तीति भावः । यद्वा द्वितीये क्षणे किंचिदपनेयमुपनेयं वा; न च क्षणिकस्य सोऽस्ति, स्वरसेन विनाशात् । किं च तथाभूतस्यैवासंभवात्; कंचिदतिशयं विकारमाधाय किंचिदुपनेयमपनेयं वा; न च क्षणिकस्य क्षणिकत्वादेवातिशयाधानमस्तीत्यर्थः । न चैकस्मिन् क्षणेऽतिशयानतिशयौ संभवतः, विरोधात् इत्याह—एकस्मिन्निति । न चैकस्मिन्नेव क्षणे पूर्वापरार्धभेदेन तयोरविरोधः, एकस्मिन् क्षणे पूर्वापरार्धभेदासंभवादित्याह—क्षणस्येति । यस्तु विशुद्धात् क्षणात् विशुद्धस्यैव क्षणान्तरस्योदयमाह तस्यान्यो बद्धोऽन्यो मुच्यत इति दुर्घटमापद्यते । एवं संतानिन्युपनेयासंभवमुक्त्वा संप्रति संततावाशङ्कयति—यदीति । स्थायिनी हि संततिरिति भावः । तद्दूषयति—तदसदिति । संसारिणो मोक्षेऽधिकारः; स च कर्तृत्वभोक्तृत्वलक्षणः; न च संततिस्तादृशी, अवस्तुत्वात्; अतोऽस्या मोक्षेऽनधिकारादुपनयापनयावकिंचित्कराविति भावः । अवस्तुत्वं च संतानस्य संतानिभ्यो व्यतिरेकानभ्युपगमादिति द्रष्टव्यम् । दूषणान्तरमाह—कथं चेति; खपुष्पादावदर्शनादिति भावः । अत्रैव परमतमाशङ्कयति—अथेति । एतद्दूषयति—कल्पितस्तद्दाति । स्वोक्तमाह—उक्तमिति । परस्मादात्मनो भिन्नतया कल्पितो जीवः, तद्विषयौ बन्धमोक्षौ, न परस्मिन् परमात्मनि सत्य इति 'तस्मादविद्यया जीवाः' इत्यादावुक्तमित्यर्थः । एवं संसारमोक्षावपि कल्पितविषयत्वात् कल्पिताविल्युक्तं भवति । किं चाना-

दिनिधनस्यात्मनो मुक्तिसंसारौ न संभवत इति क्षणिकपक्षोऽभ्युपगतः; तं चाभ्युपगम्यापि चेदनादिनिधनायाः संततेरेव तावीष्टौ, तत आत्मना कि-
P. 16-2. मपराद्धम्, येन तस्य तौ नेष्टौ? इत्यभिप्रायेणाह— अपि चेति । अनादि-निधनत्वमेव संततेरुपपादयति—तथा हीति । संततेर्नोत्पादः, संसारस्यानादित्वात्; उत्पादे हि न सोऽनादिः स्यात् । अवस्तुत्वाच्च संततेर्नोत्पादः; न चोच्छेदः, अवस्तुत्वादेव; न ह्यवस्तुनो जन्मोच्छेदौ स्त इत्यर्थः । इतश्च नोच्छेद इत्याह—अन्त्येति । अनुपपत्तिमाह—स हीति । अपर आह— आरभत इति । योगिनोऽन्त्यक्षणस्य सर्वविषयत्वेन सर्वज्ञज्ञानार्थक्रियाकारित्वान्नासत्त्वम्; अतो न तदसत्त्वात् पूर्वक्षणानामसत्त्वम्; अतो न संतानाभावः । न च तस्यानुच्छेदः, संतानान्तरे सति स्वसंतत्युच्छेदादिति भावः । सिद्धान्ती तु पूर्वमपि हेतुफलभावानुवृत्तावेकसंततिरासीत्; इदानीमपि चेद्योगिनोऽन्त्यक्षणस्य सर्वज्ञज्ञानस्य च हेतुफलभावोऽस्ति, न तर्हि संतानान्तरत्वम्; न हि हेतुफलपरंपरामन्तरेणान्यदेकसंततेर्हेतुः; अतो न संतत्युच्छेदः; अतश्च न तल्लक्षणो मोक्ष इत्यभिप्रायेणाह—सतीति । परः पुनर्विशेषमाह—नेति । ततः किमित्याह—न चेति । योगिज्ञानसंततौ चरम इत्यर्थः । यदि नोपादानं किं तर्हि स इत्याह—आलम्बनेति । प्रत्ययः कारणम्; विषयरूपं कारणमित्यर्थः । उपादानं तु समनन्तरपूर्वभावि कारणमुच्यत इत्याह—समनन्तरेति । तत्र सर्वज्ञज्ञानेऽन्य एव स्वसंतानवर्ती पूर्वक्षणः, चरमस्तु सर्वज्ञज्ञानग्राह्यत्वात् विषयरूपं कारणमित्याह—सेति । सिद्धान्ती तु न तावद्यदात्मकं कार्यं तदुपादानमेव, नापि यदाश्रयः; क्षणानां परस्परमनात्मत्वादनाश्रयत्वाच्च; यदि तुल्यजातीयमुपादानम्, प्राप्तं तर्हि योगिज्ञानं सर्वज्ञज्ञानस्य ज्ञानमात्ररूपतया तुल्यत्वेनोपादानम्; अतो न संतानान्तरत्वमित्यभिप्रायेणाह—यदीति । यदि तु योगिसर्वज्ञज्ञानयोरसर्वसर्वविषयत्वेन विषयभेदादतुल्यजातीयत्वम्, अतो न योगिज्ञानमुपादानम्, अतो विलक्षणसर्वज्ञज्ञानोत्पत्तौ योगिज्ञानसंतानोच्छेद इत्युच्यते; अतो रूपज्ञानप्रवाहे सति यदा रसज्ञानं भवति तदापि पूर्वसंतानोच्छेदादपवर्गप्रसङ्गः स्यादित्याह—योऽपीति । अथ तत्र कथंचि-

द्बोधरूपतया तुल्यत्वमुच्यते, तदविशिष्टं योगिसर्वज्ञज्ञानयोरपि; ततश्चोपादानोपादेयभावादेकसंतानत्वं पूर्वसंतानानुच्छेदात्पुनरप्यनिर्वाणं स्यादित्याह — कथंचिदिति ॥ P.15–16.

इदानीं क्रमप्राप्तं विज्ञानपदं व्याख्यातुं तद्व्यावर्त्यं परमतमुपन्यस्यति— केचिदिति । आत्ममनःसंयोगजं विज्ञानं गुणो यस्येति विग्रहः । अविज्ञानस्वभावमिति; स्वतो जडमित्यर्थः । सम्यगुत्खाता उन्मूलिताः सकला बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराख्या विशेषगुणा यस्मिन्निति विग्रहः । तस्येति; आत्मतत्त्वस्येत्यर्थः । ज्ञानस्वभावोऽपि चेन्मनःसंयोगसापेक्षो जानाति तत एव तर्हि ज्ञानमुत्पत्स्यते, तेन वृथा तत्स्वभावत्वकल्पनेति कणभुजो मतम् । कथं स्वरूपावस्था ब्रह्मशब्देनोच्यत इत्याशङ्क्य तस्य प्रवृत्तिनिमित्तमाह— सा हीति । देहादिभिरनवच्छिन्नत्वं बृहत्त्वे हेतुः; बृहत्त्वाच्च ब्रह्मेति गीयते; 'बृह बृहि वृद्धौ' इत्यस्मात् ब्रह्मशब्दव्युत्पत्तेरिति भावः । एतच्च श्रौतत्वलेशद्योतनार्थमुक्तमिति मन्तव्यम् । ज्ञानस्वभावात्मपक्षे तु दोषमाह— ज्ञानस्वभावत्वेति । चशब्दस्तुशब्दार्थे । न तावदसंनिधानात् सर्वं न बुध्यते, सर्वगतस्य सर्वत्र संनिधानात् । न च सर्वगतोऽप्यसर्वगतदेहेन्द्रियादिसापेक्षः सर्वं न बुध्यते, नित्यत्वाज्ज्ञानरूपस्य; ज्ञानोत्पत्त्यर्थं हि देहाद्यपेक्ष्यते; नित्यत्वादात्मनो ज्ञानरूपं नित्यम् । अतश्च संनिहितविविधज्ञेयविशेषत्वात सर्वमात्मा बुध्येत; ततश्च बद्धस्य मुक्तस्य च यथादृष्टनियतार्थगोचरात संसारात् सर्वदर्शित्वेन बृहत्तरः संसारः स्यादित्यर्थः । अथैतद्दोषभयात् न किंचिज्जानातीत्युच्यते, प्राप्तं तर्हि जडत्वम्; गतेरिव गम्यमन्तरेण जानात्यर्थस्य ज्ञेयं विनानुत्पत्तेः । न चात्मैव ज्ञेयः, कर्तृकर्मत्वविरोधात् । तदेतत् साशङ्कमाह— अथेति । तदेव परमतमुपन्यस्य तन्निवृत्तये विज्ञानपदं योजयति— तानिति । परः पूर्वोक्तदोषदृष्टिः पृच्छति— कुत इति । सिद्धान्ती तु न वयं प्रयोजनबलात् चित्स्वभावत्वं ब्रूमः, किं तु श्रुतिबलादिति मन्यमान आह— श्रूयत इति । ननु प्रागुक्तदोषबलाच्छ्रुतेरर्थान्तरत्वं कल्पयिष्याम इत्यत आह— न चेति । स्यादर्थान्तरकल्पना श्रुतेः, यद्युक्तो दोषः स्यात्; स तु नास्तीत्यर्थः ।

P.15-25. कुत इत्याह—यथेति । यथा दाहकोऽप्यग्निर्न सर्वं दहति, यथा च दर्पणादिर्यदुपनीयते तच्छायामापद्य तदेव दर्शयति, उपनायकाभावे शुद्धमवतिष्ठते; तथा आत्मापीन्द्रियाद्युपनीतं बुध्यते, न सर्वम्; मुक्तश्चोपनायकाभावान्न बाह्यं बुध्यत इति । अदाह्यमिति; अयोग्यमित्यर्थः । भोगायतनशरीरस्थ इति; अन्यत्र सतोऽपि भोगनिवृत्त्यर्थं विशेषणम्; मुक्तौ च भोगाभावे उपनायकाभावो हेतुरिति मन्तव्यम् । ननु वह्न्यादेरसर्वगतस्यासंनिहितदाह्याद्युपनयनापेक्षा युक्ता, न तु सर्वगतस्यात्मनो नित्यसंनिहितसर्वविषयस्य; अतः सर्वदर्शित्वं मुक्तस्य च बाह्यविषयोपलब्धिः स्यादिति चोदयति—स्यादिति । सिद्धान्ती तु तवाप्येष दोषोऽस्ति; अतो यस्ते परिहारः स नोऽपि भविष्यतीत्यभिप्रायेण परस्यापि तद्दोषमासञ्जयति—उच्यत इति । आत्ममनःसंयोगेनात्मना च ज्ञानमुपजन्यते; स चात्ममनःसंयोगः सर्वमनोभिः सर्वात्मनां सर्वगतत्वेनाविशिष्ट इति सर्वोपलम्भप्रसङ्ग इत्यर्थः । ननु सर्वात्मनां सर्वमनोभिः संयोगाविशेषेऽपि यो विषयो यस्य विषयत्वे वर्तते स एव तमेवावबुध्यत इति नाव्यवस्था स्यादित्याशङ्क्याह—मन इति । न हि विषयाणामात्मनः प्रति स्वतो विषयत्वम्, अपि तु मनःसंयोगमुखेन; अतः सर्वसंयुक्तैः सर्वमनोभिः संयोगाविशेषात् सर्वे विषया विषयत्वेऽस्य वर्तन्त इत्यर्थः । अथ सर्वमनोभिः संयोगाविशेषेऽपि स्वकर्मनिमित्तत्वादुपभोगस्य स्वकर्मोपनीतमेव भोग्यमुपलभत इति व्यवस्थोच्यते, ततोऽस्माकमपि ज्ञानरूपोऽप्यात्मा कर्मपाशवशीकृतोऽस्वतन्त्रस्तदुपनीतमेवार्थं बुध्यते, न सर्वमिति व्यवस्था सेत्स्यतीत्याह—अथेति । ननु जन्यज्ञानवादिनः कर्मवशात् क्वचिज्ज्ञानं जन्यते क्वचिन्नेति युक्ता व्यवस्था; नित्यज्ञानस्वभावात्मवादिनस्तु कथं कर्मनिमित्ता व्यवस्थेति वाच्यम्; न हि तस्य कर्मभिर्नियतार्थविषयं ज्ञानं जन्यते, नित्यत्वात्; तज्जन्मनि च तत्स्वभावात्मजन्मप्रसङ्गात् । न च विषयान्तरं प्रतिभास्यते, अनित्यत्वादात्मनाशापत्तेश्च । तदा च सर्वानुपलब्धिः प्रसज्यते, न तु व्यवस्था; न ह्येकस्य विषयभेदेन नाशानाशौ संभवतः । अत एव न तिरोधीयतेऽपि । न चार्थ एव कश्चिदात्मनः सर्वगतादपसार्यते, पटादिभिरिवाव्रियते वा कर्मभिः; यतोऽव्यवस्था स्यात् । अपि च कर्मनिमित्ता चेद्व्यवस्था, ततो

मुक्तस्य क्षीणाशेषकर्मणः सर्वदर्शित्वं दुर्निवारम् । उच्यते—ज्ञानमात्मा, न ज्ञाता; ज्ञातृता च तस्य कर्तृशक्त्यहंकारोपरागनिबन्धना; अहंकारश्च भोगायतनस्थस्तत्रैव ज्ञातृतामवभासयति; तेन विभोरप्यात्मनो ज्ञातृत्वं प्रादेशिकमेव, न सार्वत्रिकम्; अतो भोगायतनस्थ एवात्मा ज्ञाता, नान्यत्र सन्नपि; ततश्च यदेव भोगसाधनैः कर्मभिर्भोगायतनं प्रत्युपनीतं तदेव ज्ञातुः संनिहितमिति तदेव वेत्ति, नेतरदिति व्यवस्थासिद्धिः । ननु ज्ञानरूपस्यात्मनो विभुत्वात् सर्वज्ञेयसंबन्धोऽस्ति । बाढम् । किमिति तर्हि 'सर्वमिदं जाने' इति न परामृशति? अज्ञातृत्वात्, ज्ञातुर्ह्ययं परामर्शो 'जाने' इति; ज्ञातृत्वं च भोगायतनस्थम्, न सार्वत्रिकमित्युक्तम् । अत एव मुक्तस्यापि न बाह्यविषयज्ञातृता; सा हि शरीरस्थेत्युक्तम् । अतो नाशरीरस्य भवितुमर्हति । ततश्च मुक्तौ ज्ञानमात्रतयावतिष्ठते, न ज्ञातृतया; अतस्तेन संबद्धमपि जगत्तत्त्वं न ज्ञेयतया संबद्धम्; कर्तुर्हि कर्मणा संबन्धः । ननु न ज्ञानमपि ज्ञेयं विनास्ति; सकर्मको हि ज्ञानार्थ इत्युक्तम्; अतः कथं ज्ञेयं विना मुक्तज्ञानमवतिष्ठते—इति चेत्, न; आदित्यप्रकाशवदुपपत्तेः; यथा खल्वादित्यप्रकाशः प्रकाश्यानपेक्षसिद्धिः, एवं ज्ञानमपि ज्ञेयानपेक्षसिद्धिः । ननु सकर्मको जानात्यर्थः । सत्यम्; बुद्धिवृत्तं तु तत्; तद्धि सकर्मिका क्रिया, सा कर्मापेक्षेति युक्तम्; नित्यं च ज्ञानम्, न क्रिया; क्षणिका हि सा । कथं तर्हि तस्याध्यस्तज्ञातृभावस्यापि ज्ञेयेन संबन्धः? न; क्रियागर्भो हि सः। सा च बुद्धेरित्युक्तम् । न चान्यक्रियागर्भोऽन्ययोः कर्मकर्तृभावो भवति । सत्यम्, अन्यत्वावगतौ; अविवेके तु तयोरन्यक्रियाया अपि तत्कर्मण्यस्य कर्तृता स्यादेव; यथा देहगतया गत्या तद्विविक्तस्यास्मदर्थस्यात्मनो 'ग्राममहं गच्छामि' इति । तत्किमिदानीं द्वे ज्ञाने? चिदेव स्वप्रकाशा ज्ञानम्; तदविवेकात्तु लोको बुद्धिवृत्तौ ज्ञानपदं प्रयुङ्क्ते । ननु लोकप्रयोगगम्यः शब्दार्थः; अतस्तत्र प्रयोगात्तदेव ज्ञानपदार्थः स्यात्; न तु चित्स्वप्रकाशा । न, स्वयंप्रकाशज्ञानाध्यासेनैव बुद्धिवृत्तौ प्रयोगात्; यदध्यासेन यः शब्दो यत्र प्रयुज्यते स एव तस्य मुख्योऽर्थः, शुक्ताविव रजतशब्दस्य रजतम् । कथं पुनरवगम्यते अध्यस्तस्वप्रकाशज्ञाने बुद्धिवृत्तौ लोके ज्ञानपदप्रयोग इति?

'घटमहं जाने' इति ज्ञानावभासात् । न च तदवभासोऽन्यतोऽवकल्पत इत्युक्तम् । न च बुद्धिवृत्तमेव स्वतोऽवभाति, जडत्वात् । न च बुद्धिवृत्तस्य स्वतो जडस्य घटादिवदर्थप्रकाशत्वम् । इन्द्रियं तु प्रकाशकम्, न प्रकाश इति विशेषः । अस्ति च नित्यज्ञाने ज्ञानशब्दो वेदे; यथा— "सत्यं ज्ञानमनन्तम्" इति । न हि बुद्धिवृत्तस्य क्षणिकस्यानन्त्यमवकल्पते; योग्यतालक्षणो वा दृशो दृश्येन संबन्धो नान्यः; "असङ्गो ह्ययं पुरुषः" इति श्रुतेः । दर्शनयोग्यता चार्थस्य बुद्ध्युपारूढस्यैवेति नान्यत्रोपलब्धिप्रसङ्गः । तस्मात् स्वप्रकाशमेव ज्ञानं मुख्यम्; नान्यत् । बुद्धिवृत्तं तु भ्रान्तममुख्यमिति सिद्धम् । तदेतत् स्वमतेऽप्युपयुज्यत इति सांख्यमतप्रस्तावेनोक्तमित्युपरम्यते ।

P. 16–9. एवं परमतेन व्यवस्थामुक्त्वा अधुना स्वमतेनाह—अपि चेति । भेददर्शनमविद्या; तस्याम् 'आत्मैवेदं सर्वम्' इत्यभेददर्शनेन विद्यया निवर्तितायामात्ममात्रावशेषे जगति दृश्यमेव नास्ति, कुतो मुक्तस्य सर्वदर्शित्वमित्यर्थः । बद्धस्य तु "एषोऽणुरात्मा चेतसा वेदितव्यः" इत्यादिश्रुतेरणुबुद्ध्यवच्छिन्नत्वेनाणुत्वान्नियतार्थोपनेतृविद्योपनीतार्थमात्रद्रष्टृत्वाच्च सर्वगतपक्षोक्तसर्वदर्शित्वदोषो दूरत एवेति भावः । अत्रैव दृष्टान्तद्वयमाह—दग्धुरिवेति । तमेवार्थं श्रुतिद्वयेन द्रढयति—तदुक्तमिति । द्रष्टुरात्मनो दृग्रूपताया इति व्यधिकरणे षष्ठ्यौ । एवं स्वपक्षमुपपाद्य परपक्षे दोषमाह—विज्ञान इति । कुत इत्याह—न हीति; बुद्ध्यादिगुणरहितस्य नित्यमनवबुध्यमानस्य न सत्त्वमसत्त्वाद्विशिष्यत इत्यर्थः । न चात्माभाव एव पुरुषार्थः, पुरुषैरनर्थ्यमानत्वादित्याह—कश्चेति ॥

मतान्तरमाशङ्क्य दूषयति—स्यादिति । उद्दहन्त इत्यत्र स्वोच्छेदाय यतमाना दृश्यन्त इति पूर्वेणान्वयः । संसारिणस्तु नैवंविधाः, येन स्वोच्छेदाय यतेरन्नित्याह न त्विति । अनेवंविधत्वद्योतनार्थं विविधेत्यादिविशेषणम् । ततः किमित्याह—तत्रेति । स्वपक्षे तु मोक्षस्यानिष्टनिवृत्तीष्टप्राप्तिभ्यामैकान्तिकं पुरुषार्थत्वमाह—यस्य त्विति ।

इदानीं क्रमागतमक्षरपदं व्याचष्टे---अक्षरमिति । शब्दात्मतामिति । P.16-23
यदागमैकसमधिगम्यं येनाकारादिवर्णविशेषाखिलशब्दार्थविशेषानुस्यूतमोंकारस्य शब्दतन्मात्ररूपं तदात्मतामागमैकगम्यामात्मन आहेत्यर्थः । नन्वक्षरशब्दोऽकारादिवर्णोपेतं विशेषरूपमोंकारमाह; तत्कथमपेतवर्णविभागमखिलशब्दार्थानुस्यूतत्वेन सामान्यरूपमोंकारमाहेत्यत आह ---विशेषेणेति । अक्षरशब्दवाच्येनाकारादिविशेषरूपेण श्रोत्रेण सर्वात्मत्वे श्रुतिविरोधात् अतीन्द्रियमोंकारस्य पूर्वोक्तं सामान्यरूपं लक्ष्यत इत्यर्थः । यद्वा—अक्षरशब्दो वर्णात्मकं शब्दविशेषमाह; तत्कथमपेतविशेषशब्दमात्ररूपतोच्यत इत्याशङ्क्याह - विशेषेणेति । व्याख्यान्तरमाह—अपरिणामित्वं वेति; अक्षरमित्याहेत्यनुवर्तते । कथमक्षरशब्देन तदुच्यत इत्याह---परिणाम इति । परिणामे पूर्वधर्मनिवृत्तिरूपस्य क्षरणस्य भावात्, नास्ति क्षरणं च्यवनमस्य पूर्वधर्मादिति क्षरणव्युदासेनापरिणाम्युच्यत इत्यर्थः । तत्र ब्रह्मणः शब्दात्मत्वे प्रत्यक्षादेरभावं वक्ष्यमाणश्रुतीनां प्रतीकोपासनापरत्वं च मन्वानः पृच्छति -- कथमिति । सिद्धान्ती तु नेमाः प्रतीकोपासनपराः श्रुतयः, अपि तु ब्रह्मस्वरूपपरा इति मन्वानः श्रुतिमेव प्रमाणत्वेनोदाहरति---परं चापरमिति । नन्वोंकाराभिधेयं ब्रह्म; तदुक्तम्—"तस्य वाचकः प्रणवः" इति। तेन तदभिधेयस्य ब्रह्मणः परापररूपतात्रोच्यते, नोंकारस्येत्याशङ्क्याह—न चेति । ननु "वर्णात् कारः" इति विवक्षितैकसंख्यत्वात् कथं वर्णसमुदायात् 'ओम्' इति नाम्नः कारप्रत्यय इत्यत आह—अवर्णादिति; एकवर्णादन्यस्मादपीत्यर्थः; तस्मात् 'वर्णात्' इत्येकत्वमविवक्षितमिति भावः। अत्र चोदयति---नन्विति । प्रतीकमालम्बनं विषय उपासनाबुद्धेः; ओंकारविषये ब्रह्मबुद्धिः कार्येत्यर्थः । अत्र दृष्टान्तमाह—यथेति । देवताया अव्यक्तत्वेन साक्षात् पूजाया असंभवात् तल्लाञ्छने तस्या देवताया लाञ्छनानि चिह्नानि शङ्खचक्रादीनि यस्मिन् दारुणि शिलायां वा तत्र देवताबुद्ध्या पूजाविधानम्, तथा सा पूजिता प्रसीदतीति कृत्वा यथा तथेत्यर्थः । यद्वा ओमिति वर्णभेदेन नाम्ना ब्रह्मैव ध्येयम्; तथा तत्प्रसीदतीत्याह---अनेन चेति । एवं मतद्वयमुपन्यस्य दूषयति -- उच्यत इति । यत्र

ध्यानाङ्गतोंकारस्य श्रूयते, तत्र भवतु प्रतीकाद्युपासनोपदेशः; यत्र तु 'युञ्जीत' इत्यादेरश्रवणादश्रुतकल्पनाप्रमाणाभावाच्च ब्रह्मणः सर्वस्य चोंकारात्मत्वे वाक्यं पर्यवस्यति तत्र न प्रतीकाद्युपदेश इत्यर्थः। तदुदाहरति—
P.17-11. यथेति। "तद्यथा शङ्कुनैकेन सर्वाणि पर्णानि संतृण्णानि, एवमोंकारेण सर्वा वाक् संतृण्णा"; "ओंकार एवेदं सर्वम्" इति सोपक्रमोपसंहारं वाक्यं पठितम्; यथा शङ्कुना पत्रमध्यवर्तिना वंशकेनैकेन सर्वतः प्रसृताभिः सिराभिः प्रत्येकं सर्वपत्राणि संतृण्णानि व्याप्तानि तथेत्यर्थः। ननु यद्यप्योंकारेण सर्वा वाचोऽनुगताः, तथापि कथं तासां तदात्मत्वम्, तादात्म्येऽपि च तासामर्थभागस्यातादात्म्यात् कथमोंकारस्य सर्वात्मत्वम्—इत्याशङ्क्य द्वयं संपादयति—अत्र हीति; सर्ववाचोऽनुगमेनोंकारस्य सर्ववाचां तद्रूपात्यागादव्यभिचारित्वम्; अव्यभिचारि वस्तुनस्तत्त्वम्, न व्यभिचारि शुक्तेरिव रूप्यम्; अन्योन्यव्यभिचारिणश्च वाचां विशेषाः, न त्वोंकार इत्योंकारो वाचस्तत्त्वं सत्यरूपम्, न तद्विशेषा इति "सर्वा वाचः संतृण्णाः" इत्यन्तेन दर्शितत्वात् सर्वार्थानां च सविकल्पकज्ञानैर्वागनुविद्धानामुपलब्धेः पूर्ववद्वाग्रूपत्वं सत्यम्; ततश्चार्थानां वाक् तत्त्वम्, वाचश्चोंकार इत्यभिप्रेत्य "ओंकार एवेदं सर्वम्" इत्युपसंहरति। सर्वं च ब्रह्म; अत ओंकारो ब्रह्मेति भावः।

एवमोंकारसर्वात्मत्वमविवेकवाक्यगम्यमुक्त्वा इदानीं सविवेकेऽपि तद्गम्यत इत्याह—पतापीति। एतेन पूर्वोक्तसर्वात्मत्वेनोंकारेणेत्यर्थः। नन्वर्थवादत्वात् स्तुत्यर्थोऽयमुपचार इत्याशङ्क्याह—न चेति। कुत इत्याह—मुख्यार्थत्व इति। अर्थवादा अपि गुणाभिधानलक्षणत्वात् स्तुतेः कंचिदर्थमभिवदन्तः स्तुवन्ति, एवमेव स्तुत्यवगमात्; तस्य च स्तुते रवेरिव "नक्तं ददृशे" इतिवत् प्रमाणान्तरविरोधो निमित्तम्; स चेन्नास्ति ततः प्रतीयमानस्यार्थस्याबाधितस्यापेक्षितस्य मुख्यस्य च त्यागेन नाश्रुतगौणार्थकल्पना युक्तेति भावः। ननु सर्वस्य चेदोंकारात्मत्वम्, ततः प्रत्यक्षादिना गृह्येत; न चैवम्; अतः प्रत्यक्षाद्यनुपलब्धिविरुद्धत्वात् कथमविरोध इत्याशङ्क्याह—सर्वस्य हीति। न हि

वर्णात्मना श्रोत्रेण सर्वस्योंकारात्मत्वम्, किं तु प्रत्यक्षाद्यनवसेयेनागमगम्ये-नात्मना; अतो न प्रत्यक्षाद्यनुपलब्धिविरोध इत्यर्थः। ननु शास्त्रैकगम्येऽपि प्रत्यक्षाद्यनुपलब्धिविरोधोऽस्त्येव, कथमविरोध इत्याशङ्क्याह—न हीति। P.17-17. प्रमाणान्तरेण प्रत्यक्षादिना, अनवगमः अनुपलब्धिः, प्रमाणान्तरस्य शास्त्रस्य, विषयं सर्वस्य ओंकारात्मत्वं धर्मादिकमिव नापहरति न बाधते। न हि शास्त्रगम्यं धर्मादि प्रत्यक्षाद्यनुपलब्धितोऽसत् भवतीत्यर्थः। इतश्चार्थवादो-क्तमपि सर्वात्मत्वमोंकारस्य विवक्षितमित्याह—तस्मादिति। "तस्माद्विद्वाने-तेन परं पुरुषम्" इति ज्ञानिनोऽधिकारः श्रुतः; ज्ञानी च प्रत्यासत्ते-रोंकारसर्वात्मत्वज्ञानी; तच्चास्य नान्यतः प्रमाणात्, अनुपलब्धेः; अतः प्रत्यासत्तेरर्थवादाज्जातं ग्राह्यम्; तस्मादनन्तरमेवार्थवादवाक्यमोंकारसर्वात्मत्वे पर्यवसितम्; न तदतिक्रमेण गौणपर्यवसानम्; तत् पुनर्ध्यानविध्येकवाक्यतां नयति। ततोऽर्थवादाज्ज्ञातोंकारसर्वात्मत्वज्ञानस्य पुंसो ध्यानोपदेशोऽयमिति सिद्धमोंकारस्य सर्वात्मत्वमिति भावः। पक्षान्तरमाह—अथवेति। विश्वा इति "सेश्छन्दसि बहुलम्" इति सेर्लोपः; सर्वाणीत्यर्थः। तत्र "विश्वा भुवनानि जज्ञे" इति भोग्यवर्गस्य वागुपादानत्वेन वागात्मत्वमुक्तम्; उत्तरत्र तु वागभेदात् भोक्तृवर्गस्येति विवेकः। वागभेदश्च वाचः सर्वात्मत्वेन ब्रह्मत्वात्; ब्रह्मणश्च जीवानामभेदो द्रष्टव्यः। तथा वाचैव स्वयमात्मनः सर्वात्मत्वमुक्तमिति सदृष्टान्तमाह—तथेति; वसुरुद्रादिभिः सह चरामि, तेष्वनुगतास्मीत्यर्थः। पूर्वमोंकारस्य सर्वात्मत्वमुक्तम्; अधुना तु वाक्शब्द-वाच्यस्य शब्दतत्त्वस्य सर्वनामरूपविकल्पविशेषास्पदस्य सर्वात्मत्वमुक्तमिति भेदः। तदुक्तम्—"अनादिनिधनं ब्रह्म शब्दतत्त्वं यदव्ययम्।" इति।

एवमागमबलेन वाचः सर्वात्मत्वमुक्त्वा संप्रत्यनुमानबलेनाह—अपि चेति। प्रकृतिरूपान्विता विकारा इति व्याप्तिकथनम्; वाग्रूपान्वितमिति च पक्षधर्मोपनयः; अत इति निगमनम्। तदयं प्रयोगार्थः—जगद्धर्मि, वाचः परिणामो विवर्तो वेति साध्यो धर्मः; तद्जातिगुणभूतेन वाग्रूपेणान्वितत्वात्; यद्यद्जातिगुणभूतयद्रूपान्वितं तत्तत्परिणामस्तद्विवर्तो वा; यथा—घटादयो मृद्रूपान्विता मृदः परिणामाः, यथा वा बिम्बरूपान्वितं प्रतिबिम्बं बिम्ब-

विवर्त इति । व्यक्तयस्तु तज्जातिभूतेन गोत्वादिनान्विता इति न ताभिर्व्यभिचारः; तथा गुणेष्वपि द्रष्टव्यम् । शब्दोऽर्थावगमेऽभ्युपायमात्रम्; अतोऽर्थे शब्दरूपानुगतत्वमसिद्धो हेतुरित्यभिप्रायेण परः पृच्छति—कथमिति । तदनुगमः वाग्रूपान्वितत्वमित्यर्थः। अत्रोत्तरमाह—तदिति । वाग्रूपानुरागेण यद्विज्ञानं तद्वेद्यत्वादर्थानाम्; शब्दानुरक्तार्थज्ञानाच्छब्दरूपत्वमर्थानाम्, यथा मृदनुरक्तघटादिज्ञानान्मृद्रूपत्वं घटादेरित्यर्थः । पराभिप्रायं परिहरति—तथा हीति । यदि चक्षुर्वदुपायमात्रं शब्दः स्यात्, ततश्चक्षुषीवाप्रतिभाति शब्देऽर्थसंवेदनं स्यात्; न च शब्दानुल्लेखे घटाद्यर्थोल्लेखोऽस्तीत्यर्थः । ननु धूमवत्तर्हि ज्ञातस्योपायत्वं भविष्यतीत्याशङ्क्य तद्वैषम्यमाह—नापीति । धूमवदुपायत्वे शब्दस्य यथा 'धूमादग्निः' इति व्यधिकरणतया प्रतीतिः, न तु 'धूमोऽग्निः' इति, तथा शब्देऽपि स्यात्; न च सास्ति, 'घटोऽयम्' इति शब्दाभेदेनार्थप्रतीतेरित्यर्थः । युक्त्यन्तरमाह—इतश्चेति । न हि शब्दयोः स्वतः सामानाधिकरण्येन विशेषणविशेष्यभावः; किं तु अर्थगतोऽसौ शब्दयोः 'नीलमुत्पलम्' इति दृश्यते; स च शब्दस्यार्थाभेदे घटते, नोपायत्वे; अन्यथा काकवत्त्वोर्ध्वत्वयोरिव स्वतो भिन्नं स्थाणुं गमयतोर्न स्यात्; किं तु 'ऊर्ध्वत्वे सति काकवत्त्वात् स्थाणुः' इतिवद्व्यधिकरणाभ्यां नीलोत्पलशब्दाभ्यामर्थान्तरभूतस्यार्थस्य प्रतीतिः स्यादित्यर्थः । किं च अन्यत्र धूमादावुपायमात्रे न केवलं प्रमाणान्तरोपाये, धूमोपायेऽपि यावदग्नौ धूमरूपेण निश्चयो न भवति; इह तु प्रमाणान्तरोपायेऽपि शब्दरूपेण निश्चयो भवति; तस्मादितोऽपि न धूमादिवदुपायत्वेनार्थे शब्दरूपप्रत्ययः, किं तु शब्दरूपत्वादर्थस्येत्याह—अपि चेति । ननु तर्हि शब्दोपाय एवार्थप्रत्ययः, न प्रमाणान्तरोपायः; तत्र तदानन्तर्यात् तद्बुद्धिरर्थे भ्रान्ता किं न स्यादित्याशङ्क्याह—तद्दर्शनादिति । प्रमाणान्तरोपायेऽर्थे शब्दरूपत्वदर्शनात् शाब्देऽपि तथा शब्दरूप एवार्थ इति प्रतीतौ नोपायभूतशब्दानन्तर्यात् शब्दात्मकार्थभ्रान्तिरित्यर्थः । नन्वस्तु सविकल्पकज्ञाने शब्दानुरक्तार्थज्ञानादर्थस्य शब्दात्मत्वम्, बालादिज्ञाने तु निर्विकल्पके कथमित्यत आह—बालानामिति। बालप्रवृत्तिर्धर्मिणी, शब्दानुविद्धेति साध्यो धर्मः, निश्चयपूर्वत्वात् अस्मदादि-

P. 18-3.

प्रवृत्तिवत् । बालादीनां निश्चयो धर्मी शब्दानुविद्धः, अस्मदादिसविकल्पक-निश्चयवत् । तेषां चेह जन्मनि शब्दव्युत्पत्तिविरहेऽपि पूर्वजन्मव्युत्पन्न-शब्दसंस्कारभाजां संभवति हृदयस्थशब्दानुवेधः; अनुच्चारणं तु करणपाटवा-भावादिति परानुपलम्भोऽपि न दोष इति भावः । ततः किमित्याह—तथा चेति । तच्छब्दाभ्यां वाचः परामर्शः । यद्यपि विपरिणामोऽपि P.18-17.
पूर्वमुक्तः, तथापि विवर्त एवास्य स्वमतमिति स एवोपसंहृतः । इतश्च शब्दविवर्तो जगदित्याह—अपि चेति । व्यावहारिका इति; व्यवहाराय प्रभवन्ति, व्यवहारमात्रसिद्धा इत्यर्थः । तेषामेव तर्हि शब्दविवर्तत्वमस्तु, नेतरेषामित्यत् आह—तदिति । अन्येऽपि शब्दार्थाः शब्दविवर्ताः, शब्दार्थत्वात् विध्यादिवदिति प्रयोगः । तानुदाहरति—यथेति । वाक्यार्थः संसर्गः, समूहो वनादिः, असन्तश्च प्रसिद्धा एव । तत्र विधिनिषेधयोस्ताव-च्छब्दविवर्तात्मत्वमाह—तत्रेति । 'प्रवृत्तिनिवृत्ती' इतिपदेन प्रवर्तकनिवर्तकौ लक्षयति; ते एव पुरुषव्यापाररूपेण कार्यतयावगते विधिनिषेधाविति भावः । ननु कार्ये प्रवृत्तिनिवृत्ती विधिनिषेधौ, न कालरूपावच्छिन्ने; अतो न त्रिधा प्रयोगस्याविशेष इत्यभिप्रायेणाशङ्कयति—कार्ये इति । तद्दूषयति—नेति । कालत्रयातिरेकेण कार्यत्वं नाम चतुर्थं गत्यन्तरं न निरूप्यत इत्यर्थः; कार्यत्वमपि भूतं भविष्यद्वर्तमानं वा स्यादिति भावः । उपसंहरति—तस्मादिति । अवस्तुकमिति; अविद्यमानबाह्यविधिनिषेधवस्तुकमित्यर्थः । ततः किमित्याह—न चेति । तथापि किमित्याह—न चेति । प्रकृतमुपसंहरति—तस्मादिति । यद्यपि प्रवृत्तिनिवृत्ती विधिनिषेधाविति व्याख्यानम्, तदापि कार्यत्वधर्मोपेते प्रवृत्तिनिवृत्ती विधिनिषेधौ, न स्वरूपेण; तेन कार्यत्वमेव प्रयोजकमिति मन्वानः प्रवृत्तिनिवृत्त्यनुगुणमिति कार्यत्वमेव भेदेनाहेत्य-विरोधः । तथा 'नीलमुत्पलम्' इति वाक्यार्थोऽपि संसर्गः तद्विशिष्टो वा स्यात्; तत्र न तावत्संसर्गः, संसर्गिव्यतिरिक्तस्य तस्याभावात् । कथम्? तद्व्यतिरेके तस्य घटपटयोरिव संसर्गान्तरापत्तेरनवस्थानात्; व्यतिरेका-व्यतिरेकौ तु न संभवत इति वक्ष्यामः । अव्यतिरेके तु पदार्था एव, न संसर्गः; अत एव न संसर्गी असंसर्गिरूपात्पदार्थान् भिन्नोऽस्ति, यो वाक्यार्थः स्यात् । तस्मात् प्रतिभामात्रमिदम् । न च सा निरालम्बना संभवति; न च शब्दोपरागरहितः

P. 19-1. सविकल्पकः प्रत्ययोऽस्ति ; तस्माद्वाक्त्त्वमेव तथा तथा चकास्तीत्याह—एवमिति । तथा वनादावप्यसति वस्तुनि वस्तुबुद्धिर्भवन्ती वाक्त्वमेवालम्बत इत्यतिदिशति—एवमिति । इदानीं गानशास्त्रानभिज्ञस्य षड्जादिषु गपादिषु च निर्विकल्पकं शब्दानुवेधशून्यं ये ज्ञानमिच्छन्ति, तान् प्रति—यद्यपि षड्जादिषु षड्जादिशब्दाभावेऽपि 'गानमिदम्' इत्यादिसामान्यशब्दानुरोधोऽस्ति; यद्यपि च निर्विकल्पकेऽपि सूक्ष्मा वागस्ति इत्युत्तरमास्ति; तथापि तन्मतमेवोपजीव्य— सर्वज्ञानेषु प्रकारान्तरेण शब्दानुवेधमुपपादयति—अपि चेति । अतादृक्त्वमेवाह—अविविक्ता हीति । तथा चोक्तम्

"गानमात्रं विजानन्ति तत्रानधिकृतास्तु ये ।
विवेकं प्रतिपद्यन्ते येषां तत्संस्कृता मतिः ॥"

इति । शब्दानुविद्धा प्रतिपत्तिर्विवेकवतीत्येतल्लोकव्यवहारेण द्रढयति—तथा चेति । ततः किमित्यत आह—एवं चेति । शब्दसंस्पर्शे सति विवेकवतोऽर्थबोधस्य व्यवहारोपयुक्तविवेकवत्तयोत्कर्षदर्शनात्, तत्प्रतिसंहारे शब्दाभावे संचेतितानामप्यसंचेतितकल्पत्वात् ; कुतः ? पथि गच्छतः पुंसः पद्भ्यां स्पृश्यमानानामपि गुच्छतृणादीनामपकर्षात् ; अतोऽन्वयव्यतिरेकाभ्यां वाग्रूपाधीनमेव चितेश्चितित्वमिति बलादापद्यत इत्यर्थः । अर्थप्रकाशात्मकत्वं हि चितेश्चितित्वम्, न वस्तुमात्रत्वम् ; तच्च शब्दसंस्पर्शे सत्युत्कृष्यते, तदभावे चापकृष्यते ; तस्माद्वाग्रूपाधीनं चितेश्चितित्वं नाम रूपम् । मतान्तरमाह—वाक्शक्तिरिति ; वाचोऽर्थप्रकाशशक्तिर्वाक्शक्तिः । वाक्शक्तिश्चेच्चितिः, कथं तर्हि वागुपसंहारेऽर्थश्चेत्यत इत्यत आह—तत्प्रतीति । तत्रापि चितिश्चेदस्ति, अस्ति सूक्ष्मा वाक्, चितेर्वाक्शक्तित्वात् । ततः किमित्यत आह—सर्वथेति ; सर्वथा वाग्रूपाधीनत्वे वाक्शक्तित्वे चेत्यर्थः । हेतौ 'इति'शब्दः । 'मृदः' इति विकारे, 'चन्द्रमसः' इति विवर्ते दृष्टान्तः । अतश्च वागात्मकं सर्वम् ; वाक्च "यथा शङ्कुना" इति श्रुतेरोंकारात्मिका ; तेनोंकारः सर्वः ; सर्वं च ब्रह्म ; अत ओंकारो ब्रह्मेति सिद्धम् ।

इदानीमक्षरपदस्यार्थान्तरं वक्तुं तद्व्यावर्त्यं परमतं वक्तुमुपक्रमते—अन्य इति। 'मृदादिदृष्टान्तदर्शनात्' इत्येकदेशेन कृत्स्नोऽनुमानप्रयोगः सूचितः; सोऽयं प्रयोगः—ब्रह्म कार्यरूपेण परिणमते, प्रकृतित्वात् मृदादीव घटादिरूपेणेति; प्रकृतित्वं च "यतो वा इमानि भूतानि" इत्यादिश्रुतिसिद्धम्; श्रुतौ वा मृदादिदृष्टान्तदर्शनादित्यर्थः। एवं परमतमुपन्यस्य तन्निराकरणार्थत्वेनाक्षरपदं योजयति—तदिति; तत् ब्रह्मणः परिणामित्वम्, अपाकीर्यते निरस्यते; अक्षरमित्यनेनेत्यर्थः। परस्तु पूर्वोक्तानुमानबलेन पृच्छति—कुत इति। सिद्धान्ती तु श्रुतिविरुद्धमनुमानमप्रमाणं मन्यमानः श्रुतिमाह—ध्रुव इति। अत्र परमतमाशङ्कयति—अथेति। परिणामित्वेऽप्यात्मनो नित्यता न व्याहन्यते मृद इव घटादौ, तत्त्वाविघातात् तत्स्वरूपस्याविनाशात्; अतो नित्यताश्रुतिः परिणामित्वेऽप्युपपन्नत्वान्न परिणामित्वानुमानं बाधत इति भावः। एतदेवाभियुक्तवचनेन द्रढयति—यथोक्तमिति। यस्मिन् कार्यात्मना परिणतेऽपि तत्त्वं कार्येषु प्रत्यभिज्ञानात् कार्यरूपेण न व्यावर्त्यते तदपि नित्यम्; न केवलं कूटस्थमेवेत्यर्थः। एवमाशङ्क्य दूषयति—सत्यमिति। सत्यं परिणामिनि नित्यत्वमप्यस्ति, किं त्वात्मनि तन्न संभवति; स हि सर्वात्मना परिणमेत्, एकदेशेन वा; तत्र सर्वात्मना परिणतावात्मस्वरूपस्य विनाशादनित्यत्वं स्यात्, एकदेशपरिणतौ च सावयवत्वान्नित्यत्वस्य व्याघातः स्यात्; यद्धि सावयवम्, तदवयवसंयोगजत्वात् कार्यं दृष्टम्; यच्च कार्यम्, तदनित्यं दृष्टम्; तथा चात्मनः सावयवत्वे अवयवानां मिथोऽवयविनश्च भेदादेकत्वमद्वयत्वं व्याहन्येतेत्यर्थः। एवं परिणामपक्षेऽनुपपत्तिमुक्त्वा विवर्तपक्षे उपपत्तिमाह—तदेतदिति। तदेतत्स्वरूपेण विशुद्धत्वं प्रपञ्चात्मना चाविशुद्धत्वम्, तथा प्रपञ्चनाशेऽपि स्वतो नित्यत्वम्, प्रपञ्चभेदेऽप्येकत्वं चाकाशकल्पे विशुद्धत्वानवयवत्वादिभिराकाशोपमे अविद्याकल्पितेन प्रपञ्चेन कल्पितावच्छेदे ब्रह्मणि घटते; नान्यथेत्यर्थः। कथं घटते? इत्याह—कल्पितेति। यथा कल्पितावच्छेदमप्याकाशं वस्तुवृत्तेनानवच्छिन्नमस्त्येव, अवच्छेदनाशादनित्यमपि कल्पनया तत्त्वतो नित्यम्, अवच्छेदभेदात्कल्पितभेदमपि वस्तुवृत्तेनैकम्, तदविशुद्ध्या P. 19-13

वाशुद्धमपि तत्त्वतः शुद्धम्; तथा ब्रह्मापि; न हि कल्पना वस्तु अन्यथाभावं नयतीति भावः। अथोच्यते—यदि कल्पितावच्छेदं ब्रह्म, ततः कल्पितानामेवैकदेशानां परिणामोऽस्तु; तथा सति च नित्यत्वमेकत्वं च न
P.19-21. व्याहन्निष्यते; परिणामस्तु सेत्स्यतीत्याशङ्क्य दूषयति—अथेति। कल्पितस्य असम्यग्बुद्ध्याध्यवसितस्य एकदेशस्य यः परिणामः, स कल्पनयैव असम्यग्बुद्ध्यैव स्यात्; न चासम्यग्बुद्ध्याध्यवसितस्य सत्यत्वम्; अतोऽपरिणामित्वमेव ब्रह्मण इति सिद्धो नः पक्ष इति सूक्तम् 'अक्षरम्' इति। इदं चाक्षरपदस्य व्याख्यान्तरं न पूर्वत्रापरितोषेण, पूर्वत्र दूषणानभिधानात्; तस्मादावृत्त्या वृत्त्यन्तरेण वा विषयव्याप्त्यर्थमिति मन्तव्यम्।

इदानीमसर्वपदं व्याख्यातुं तद्व्यावर्त्यं सत्यप्रपञ्चवादिमतं तावदुपन्यस्यति—केचिदेति। केचित् "सर्वगन्धः सर्वरसः सर्वकामः सर्वकर्मा" इत्यादिश्रुतेः सत्यप्रपञ्चात्मतां ब्रह्मणोऽभ्युपगतवन्त इत्यर्थः। न केवलं श्रुतितः, अर्थापत्तितोऽप्ययमर्थो लभ्यत इत्याह—एवमिति। सर्वात्मत्वे सति च विषयाणामुपभोगः प्रकाशो घटत इत्यर्थः। कथमित्याह—प्रकाशेति। सर्वात्मके ब्रह्मणि प्रकाशस्वभावस्य ब्रह्मात्मनः स्वभावभूता विषयाः प्रकाशात्मकत्वात् युक्तं प्रकाशेरन्निरत्यर्थः। ब्रह्मणोऽन्यत्वे तु प्रकाशासंसृष्टस्य स्वतो जडस्य च विषयस्य प्रकाशो नावकल्पेत। तदेवं विषयप्रकाशोऽसर्वात्मत्वे ब्रह्मणोऽनुपपद्यमानो ब्रह्मणः सर्वात्मत्वं गमयतीत्यभिप्रायेणाह—अन्यत्व इति। निष्प्रपञ्चब्रह्मश्रुतयश्च "अस्थूलम्" इत्याद्याः निष्प्रपञ्चमिति सप्रपञ्चं ब्रह्मोपास्यम्—इत्येवंपराः, न तु प्रपञ्चात्मत्वप्रत्याख्यानपरा इति भावः।

अत्र सिद्धान्तमाह—तानिति। न सर्वात्मकं ब्रह्म, किं तु निष्केवलमद्वयमिति यावत्। परस्तु तेनैव श्रुत्यर्थापत्त्यवष्टम्भेन पृच्छति—कुत इति। उत्तरमाह—अस्थूलमिति। उपरागस्तादात्म्यम्। नेयमुपासनापरा श्रुतिः, उपास्तेरश्रुतत्वात्; अप्रकृतत्वादध्याहारप्रमाणाभावात्; उपनिषदां तु सिद्धेऽर्थे प्रामाण्यात्; अतोऽस्थूलादिश्रुतेर्न सर्वात्मकं ब्रह्म। ननु सर्वगन्धादिश्रुतिरप्यस्ति; तस्यास्तर्हि का गतिः? उच्यते—सर्वगन्धादिविकल्पास्पदत्वात् 'सर्वगन्धः' इत्याद्युक्तमित्यविरोधः। विषयोपभोगोपपत्तिश्च

विवर्तपक्षेऽप्युक्तेति न पुनरुक्ता । एवं प्रमाणाभावेन विपर्ययप्रमाणेन च प्रपञ्चस्वभावत्वं ब्रह्मणः प्रतिषिध्य, इदानीं तदभ्युपगमे दोषमाह—सर्वेति । P. 20-2. सर्वगन्धादिविशेषैरवियोगादात्मन इत्यर्थः । कुत इत्याह—न हीति । ननु स्वभावादपि किंचिद्वियोज्यते; कथमिव? घट इव पाकेनेत्याशङ्क्याह—अथापीति । वियोगोऽपि भवन् कतिपयैरेव प्रपञ्चैः स्यात्, न सर्वैस्त्रैलोक्यवर्तिभिः; प्रपञ्चप्रबन्धस्य कृत्स्नस्य प्रपञ्चस्यानुच्छेदात्; अतश्च नित्यसंसारिता स्यादित्यर्थः । ननु प्रलये सर्वोच्छेदो दृष्टः; नैवम्, आत्यन्तिकलयाभिप्रायत्वादस्य; स हि मुक्त्युपयोगी; नेतरः, पुनः सृष्टेः । प्रपञ्चप्राबल्यस्यानुच्छेदं प्रकटयति—सर्वथेति । स्वभावस्याऽवियोगे वियोगे च, बुभुक्षादिप्रपञ्चोऽस्यात्मन आत्मा स्वभावरत्वत्पक्षे; न च बुभुक्षादि-प्रबन्धस्य सर्वजन्तुगतस्य बुभुक्षादेरुच्छेदः केनचिदिष्यते, एकमुक्तौ सर्वमुक्ति-प्रसङ्गादित्यर्थः । बुभुक्षादेराध्यात्मिकस्य पुरुषविह्वावकस्य प्रत्यासन्नमति-शयितं बन्धहेतुत्वमिति विशेषतः परिग्रहः । तत्र सर्वात्मकैकात्मवादिनस्तव मोक्षो न स्यादित्याह—तत्रेति । एतेन कल्पितभेदस्य जीवस्यापि ब्रह्म प्राप्तस्य मुक्तिः प्रत्युक्ता । कस्य नाम निर्मोक्षः स्यादित्यत आह—आत्मेति । आत्मभेदवादिनस्तु कस्यचिदात्मनो बुभुक्षादिप्रपञ्चोच्छेदान्मुक्तसंसारस्य विभागः स्यात्; न त्वस्य सर्वात्मत्वमिष्टमित्यर्थः । प्रकृतमुपसंहरति—तस्मादिति । यदि न ब्रह्मस्वभावभूतः प्रपञ्चः, कीदृशस्तर्हीत्यत आह—अविद्येति । अयमाशयः—तत्त्वतः प्रपञ्चात्मत्वे ब्रह्मणः प्रपञ्चस्य बहुदोष-दुष्टत्वात् तद्दोषकल्पितत्वादमेध्यादीनां दुर्गन्धादिप्रपञ्चेन नित्यदुःखित्वं दुर्निवारं स्यात्; अकलुषमानन्दैकरसं च तच्छ्रूयते, तद्व्याहन्येत । विकार-दोषास्ते न प्रकृतिं स्पृशन्तीति चेत्, तत्किममेध्यादिदुष्टे घटे मृदमदुष्टां मन्यसे? येनैवम् । अथ भिन्नाभिन्नत्वात् प्रपञ्चस्य भेदाभेदेन न तद्दोषलेप इति चेत्, न; भेदाभेदेन तदापत्तेर्दुष्टमदुष्टं च ब्रह्म स्यात्; अत्यन्तविशुद्धं च तच्छ्रुतम् । अविद्याक्रीडिते तु प्रपञ्चे नैष दोषः; न खल्वविद्याक्रीडितेन दोषेण तत्त्वमुपलिप्यते गगनमिव मलिनतादिना । तस्मादत्यन्तविशुद्धं ब्रह्मेच्छता अविद्यापक्ष एवोपास्य इति ।

P. 20-8. अत्रेदानीं शून्यवादी प्रत्यवतिष्ठते—यदीति । यदि परमार्थं तत् ब्रह्म "तत्सत्यम्" इति श्रुतेः, अविद्याक्रीडिते च प्रपञ्चे तच्छून्यतैव सत्या; अतः सैवास्तु ब्रह्मेत्यर्थः । एतमर्थं श्रुत्या द्रढयति—तथा चेति । तत्र सिद्धान्तमाह—तत्रेति । पूर्वोक्तासर्वत्वाविरुद्धं सर्वत्वमपि भ्रमापनुत्तये विवृणोति — एतदिति । ब्रह्म सर्वात्मकं न भवतीत्युक्तम्; इदानीं तु सर्वं ब्रह्मात्मकम्, तेनात्मना सत्, न तु शून्यमित्यविरोध इत्यर्थः । तत्र हेतुमाह—नित्येति । सर्वशून्यत्वे निष्प्रपञ्चलक्षणस्य मोक्षस्यायत्नसिद्धत्वान्मोक्षार्थयोरुपदेशप्रवृत्त्यो-रानर्थक्यं स्यादित्यर्थः । परमतमाशङ्कते—नित्येति । यथा तव नित्य-मुक्तस्यात्मनोऽविद्यानिबन्धनः संसारः, तथा मम शून्यताया भविष्यतीत्यर्थः । उत्तरमाह—यदीति । कुत इत्याह—मुक्तावपीति । मुक्तावपि ग्रहणाभावस्य तुल्यत्वात् तद्वदेव संसारेऽपि न किञ्चित् प्रकाशेत, तस्यावस्तुत्वादिति भावः । अथ विपर्ययग्रहणमविद्या, ततस्तस्य सत्ताभ्युपगमान्न सर्वशून्य-तेत्याह—अथेति । श्रुतिविरोधश्च स्यादित्याह— तेनेति । 'न स्यात्' इत्यध्या-हार्यम् । श्रुत्यैवायं पक्षः स्वयं निषिद्ध इत्याह— कथमिति । श्रुतिविरोधश्च स्वावष्टम्भेनोक्तः; न तु बौद्धस्य श्रुतिप्रामाण्यं सिद्धम् । सर्वशून्यतायां प्रपञ्चविभ्रमस्य निरधिष्ठानत्वेन निष्कारणता स्यात्; न चाकारणं कार्यं भवतीत्यभिप्रायेण श्रुत्यर्थमेवोपपादयति—भावो हीति । रज्ज्वादिरधिष्ठानं यथावत्स्वरूपेणानवभासमानमध्यस्ताविद्यमानसर्पादिरूपं प्रकाशते; शून्ये त्वधिष्ठानाभावात् क्व कस्याध्यासोऽध्यारोपः? तदभावे च किं प्रकाशताम्? प्रकाशते च प्रपञ्चः; अस्य निष्कारणतैव स्यादित्यर्थः; न हि निरधिष्ठानो भ्रमो दृष्ट इति भावः । इतश्च न शून्यत्वमित्याह—विज्ञानमिति । न हि शून्यस्य विज्ञानानन्दरूपता संभवति; तस्मान्न शून्यरूपं ब्रह्म; किं तु सर्वस्याविद्याकल्पितस्यात्मा निजस्वरूपमित्यर्थः ।

इदानीं क्रमागतमभयपदं व्याख्यातुं तद्व्यावर्त्यां भयाशङ्कामाह— के चिदिति । सुखस्य दुःखेनाविनाभावान्नास्ति काप्यवस्था दुःखसंस्पर्शरहिता; अतो मुक्तावपि दुःखभयमस्तीति के चिन्मन्यन्ते । कथमविनाभाव इत्याह— केवलेति; दुःखरहितस्येत्यर्थः । अकैवल्यमुपपादयति—न हीति । ननु

सुखस्य दुःखाविनाभावो वाच्यः—'न हि कश्चित् सुख्येव' इति; 'दुःख्येव' इति तु प्रकृतानुपयोगि; न हि दुःखस्य सुखेनाविनाभावोऽत्र प्रकृतः। उच्यते---सिद्धस्य साध्यत्वेनोपन्यासो दृष्टान्तार्थः। वाशब्दोऽयमिवार्थः; तदुक्तम्—"इववाशब्दावुपमानार्थौ" इति। तेनायमर्थः—यथा सुखं विना न कश्चित् दुःख्येवोपलभ्यते, तथा दुःखेनापि विना न कश्चित् सुखीति। इतश्च न दुःखरहितावस्थास्तीत्याह--दुःखवत इति। अत्र P. 21-1. दृष्टान्तमाह—तापवत इति। तेन मुक्तौ सुखं दुःखसहचरितम्, सुखत्वात् अस्मदादिसुखवदिति। तत्र सिद्धान्तमाह---तत्रेति। अभयं विवृणोति—सर्वेति। हेतुमाह--असक्तादिति। श्रुतिमाह—अभयमिति। अनुमानमेतदागमविरुद्धमिति भावः। श्रुत्यर्थं युक्त्या द्रढयति—तथा हीति। भयमिति; दुःखभयमित्यर्थः। दुःखवत एव सुखं सुखत्वेऽवतिष्ठत इत्यप्युक्तमयुक्तमित्याह—न चेति। यदि दुःखाभावः सुखं स्यात्, ततः स्यादेवम्; भावान्तरे तु सुखे दुःखाभावेऽपि तत् स्यादेवेत्यर्थः।

अभयपदस्यार्थान्तरमाह—अपर इति। तत्र भयं तावदभयपदपर्युदस्यमाह---इहेति। तदुपपादयितुमनेकविधसंसारप्रदर्शनमुखेन संसारप्रकारभेदं तावदाह---इहेति। इह संसारे विज्ञानात्मानो जीवा ब्रह्मणः सकाशाद्विभक्ता वा स्युः, अविभक्ता वा। यदा च विभक्तास्तदापि द्वयी गतिः—आत्मनः सकाशात् ब्रह्मणैव वा विभज्येरन्; किमर्थमित्यत आह—भोगार्थमित्यादि; यद्वा न भोगाद्यर्थम्, किं तु स्वभावात्; स्वभावोऽयं ब्रह्मणो यज्जीवान् विभजतीत्येका गतिः। गत्यन्तरमाह—अविद्येति; अविद्यानिबन्धनो वा बिम्बप्रतिबिम्बवद्विभागः। पक्षान्तरमाह--विज्ञानात्मान इति। तत्रापि गतिद्वयमाह—तेषामिति। देहादिकर्मणः 'अहं करोमि' इत्यात्मन्यध्यासः कर्माविद्या। तत्रानन्तरपक्षे तावदावृत्तिभयप्रसक्तिमाह—तत्रेति। द्रष्टुरात्मनो दृश्यस्य च विषयाकारपरिणतायास्त्रिगुणात्मिकायाः प्रकृतेः या द्रष्टृदृश्ययोग्यता तया दृश्यान् पश्यन् विज्ञानात्मा जीवो बध्यत इति यदुच्यते, ततस्तयोर्नित्ययोग्यताया नित्यत्वेनानपायात् पुनरावृत्तिभयमस्त्येवे-

त्यर्थः । अथ प्रकृतिः पुरुषस्य भोगकार्याय विषयाकारेण परिणमते; तच्च तथा संसारावस्थायामेव कृतमिति मुक्तस्य पुनर्न करोति; अतो नास्ति पुनरावृत्ति-
P.21-14 भयमित्याशङ्कयति—अथेति । अत्र दोषमाह—सकृदिति । सकृच्छब्दादि-मुपनीय कृतकृत्या प्रकृतिर्न पुनरात्मनस्तदुपनयेत्; अतः संसारिणोऽपि सकृच्छब्दाद्युपलम्भः स्यादित्यर्थः । अथानन्तविकारा प्रकृतिः सर्वविकार-रूपेणात्मनोपलब्धा सती पुनः शब्दादिविषयाकारेण न परिणमते; सकृ-च्छब्दाद्युपलब्धौ विकृतशब्दादिरूपान्तरोपलब्धये पुनः शब्दाद्याकारेण परिणमत एव; अतश्च पुनः शब्दाद्युपलब्धिर्घटत इत्युच्यते; ततोऽनन्त विकारत्वादेव प्रकृतिपुरुषविवेकवशा मुक्तेन सर्वात्मनोपभुक्तेति तं प्रति पुनर्विषयाकारेण परिणमेत्; अतस्तस्यापि पुनर्विषयोपभोगलक्षणसंसारभयं स्यादेव; तदेतदाह—अथेति । अथ पूर्वोक्ता या अविद्या तत्पूर्वतया आत्मन्यध्यस्तं कर्मबन्धहेतुरित्युच्यते, ततः संसारस्यानादित्वेन कर्मणामान-न्त्यात् बहुतरकर्मक्षयेऽपि कर्मशेषाणां मुक्तस्यापि संभवात् पुनरावृत्तिभयम-स्त्येव । अनन्तरफलदानि कर्माणि फलमनन्तरं दत्वा निवृत्तानि; अतः कुतस्तेषां मुक्तौ संभव इति चेत्, न; तेषामनियतविपाककालत्वात्; अनियतविपाकस्य फलदानस्य कालो येषामिति विग्रहः; ततश्च बहुतर-कालातिक्रमेऽपि स्वसहकारिणं कालं प्राप्य कदाचिन्मुक्तमपि बध्नीयुः; ततश्च प्रलयावस्थात इव मुक्त्यवस्थातोऽपि पुनरावृत्तिः स्यात्; तदेतदाह—अविद्येति । अविद्यानिबन्धनेऽपि बन्धे पुनरावृत्तिभयमाह—अविद्येति । न तावन्मुक्तस्य हेत्वभावात् प्रयोजनाभावाद्वा नाविद्या प्रवर्तते, यतो निर्हेतुका निष्प्रयोजना च सा; न तस्या हेतुप्रयोजनापेक्षास्ति; ततश्च कदाचिन्मुक्तमपि पुनर्बध्नीयादित्यर्थः । न चेदमसंभावनीयम्, सुषुप्ते ब्रह्म प्राप्तस्य ततः पुनरावृत्तिदर्शनादित्याह—तथा चेति । अत्राविद्यास्तीति चेत्, मुक्तावपि तथा भाव्यमित्युक्तम्; अतः साम्यम् । ब्रह्मप्राप्तिश्च सुषु-प्तस्य "सति संपद्य न विदुः" "एतं संपस्यामहे" इत्यादिश्रुत्योक्तेति द्रष्टव्यम् । तथा स्वतन्त्रेऽपि ब्रह्मणि स्वतो भिन्नानामभिन्नानां वा जीवानां विभज्य भोगक्रीडाविभूतिख्यापनस्वभावाख्यैर्हेतुभिर्देहेन्द्रियभोगानां हेतावभ्युप-गम्यमाने पुनर्देहादिसंबन्धभयमस्तीत्याह—स्वतन्त्रे त्विति । कुत इत्याह—

स्वतन्त्रो हीति । अत्र दृष्टान्तमाह— लौकिक इति । अथ ईश्वरः कर्म- P.21-24
सापेक्षः न त्वस्य बन्धने स्वातन्त्र्यम्; कर्मसु वा नास्य स्वातन्त्र्यम्, येन तान्याहूय पुनर्बध्नीयात्; अतो न स्वातन्त्र्यख्यापनाय मुक्तौ पुनर्बध्नातीत्युच्यते; तथाप्यनादौ संसारे कर्मणामानन्त्यात् अनियतफलपरिणतिकालत्वाच्च कल्पशतातिक्रमेऽपि स्वफलपरिणामकालं प्राप्य कदाचित् तानि मुक्तं बध्नीयुरित्यस्त्येवावृत्तिभयमित्याह — अथेति । ननु पूर्वपूर्वजन्मनि कृतः कर्माशयः कर्मसङ्घातो मरणेनाभिव्यक्तः समनन्तरजन्मनि फलानि दत्वा कात्स्न्र्येन निवर्तते; ततश्च प्रतिजन्म समाप्तत्वान्न कर्मणामानन्त्यम्; अतः समनन्तरपूर्वजन्मकृतस्य कर्माशयस्यान्त्यदेह एव कात्स्न्र्येन नाशान्न पुनर्बन्धसंभावनेत्याशङ्क्यानन्त्ये हेतुमाह—यत इति । एको भव एकजन्म, तत्र भवतीत्यैकभविकः । कुत इत्याह—न हीति । न हि मरणमात्रमेवाभिव्यञ्जकम् फलं दातुमुद्द्योतकम्, किं तु देशकालाद्यपि; तेन सत्यप्यनन्तरं मरणे स्वदेशकालावपेक्षमाणानि कर्माणि चिरतरमप्यनुवर्तन्त इति नैकभविकत्वमित्यर्थः । कथं पुनर्न मरणमात्रमभिव्यञ्जकमित्याह— तथा हीति । मरणमात्रे ह्यभिव्यञ्जके तदनन्तरमेव सर्वकर्माणि युगपत् फलानि दद्युः; न चैवम्, यत एकस्मिन्नपि देहे तानि स्वं स्वं देशं कालं वापेक्ष्य क्रमेण फलानि ददति; अतो न तेषां मरणमात्रमभिव्यञ्जकम्, अपि तु देशाद्यपीति भावः । किं च मरणमात्रेऽभिव्यञ्जके पूर्वजन्मकृतानि विरुद्धदेवनरतिर्यक्स्थावरजातिभोगनिमित्तानि कर्माणि मरणानन्तरं युगपत् स्वफलानि दद्युः; तत्र युगपद्विरुद्धानेकदेहोपादानासंभवादेकैकस्मिन् देहे कृतेऽन्येषामावापगमनं—तत्रानुप्रविश्य स्वफलजननं—स्यात्; तदपि नास्ति; विरुद्धजन्मभोगानामेकत्र जन्मनि समवायासंभवादित्याह—विरुद्धेति । आवापापगमनासंभवादिति वा पाठः; तत्र चोपनयापनयासंभवादित्यर्थः । गर्भमृत्यूनां च तत्र जन्मन्यकृतकर्मणां न मरणाभिव्यङ्ग्यं देहादिकारणं कर्मास्तीति मुक्तिः स्यादित्याह—गर्भेति । तेन नैकभविकः कर्माशयः; अतश्चानादौ संसारे कर्मणामानन्त्यान्मुक्तस्यावृत्तिफलमस्तीत्याशङ्क्य तन्निवृत्त्यर्थमभयपदं योजयति —तत्रोच्यत इति । कुत इत्याह— परा हीति ।

P. 22-8 परा प्रकृष्टेत्यर्थः। किमिति नास्तीत्याह—न तावदिति। ननु कर्मणामनन्तत्वात् स्वफलैकविनाश्यत्वाच्चाकृतभोगानां विनाशासंभवात् किमिति कर्मनिमित्तः संसारो न स्यादित्यत आह—विद्ययेति। न तावत्फलेनैव कर्मणां नाश इति नियमः, प्रायश्चित्तेनापि तन्नाशात्; नाप्यानन्त्यादनाशः, विद्याया आनन्त्यदग्धृत्वादिति भावः। न च प्रायश्चित्तं नैमित्तिकमात्रम्, एतदपि भोगेनैव क्षीयत इति वाच्यम्; "द्वादशाब्देन गोघाती तस्मात्पापात्प्रमुच्यते" इति स्मृतिविरोधात्। नन्वागमसिद्धत्वादस्तु प्रायश्चित्तस्य पापक्षयहेतुत्वम्, विद्यायास्तु कथमनन्तकर्मक्षयहेतुत्वमित्याशङ्क्यात्राप्यागममाह—उक्तं हीति। एवमदृष्टशक्त्या प्रायश्चित्तवद्विद्यायाः सर्वकर्मक्षयहेतुत्वं परमतेनोक्त्वा अधुना स्वमतेन दृष्टशक्त्या तदाह—अथ वेति। अविद्याहेतुकः कर्तृकर्मादिविभागः, तस्य विद्यया निवृत्तौ कुतस्तस्य पुनरावृत्तिभयं स्यादिति भावः। अविद्यानिबन्धनेऽपि बन्धे मुक्तस्य पुनः संसारभयं नास्तीत्याह—नापीति; पुनः संसार इति पूर्वेणान्वयः। कुत इत्याह—तादिति; 'तत्' इत्यविद्यां परामृशति। किमिति तत्प्रवृत्तिहेतुर्नास्तीत्याह—अनादिरिति। कस्मात्पुनरनादिर्हेतुं नापेक्षत इत्याह—प्रागिति। यदि नामाविद्यानादित्वादहेतुका, ततः किमित्याह—विद्ययेति। पूर्वा तावदनादिरविद्या मुक्तस्य विद्यया हता; इतरा च निर्हेतुकत्वान्न हेतुमन्तरेणोत्पत्तिमर्हतीत्यर्थः। ननु सुषुप्तवदुच्छिन्नापि पुनरुत्पत्स्यत इत्यत आह—सुषुप्ते त्विति। सुषुप्ते प्रपञ्चात्मना विस्तारमात्रमविद्याया निवृत्तम्; स्वयं तु सा आत्मतत्त्वाग्रहणात्मना विक्षेपसंस्कारात्मना चावस्थितैव; अतः प्रबोधे पुनः प्रपञ्चमादर्शयति; मुक्तस्य तु सर्वथोच्छिन्नेति विशेषः। यदि तु सुषुप्तेऽपि सर्वथोच्छिन्ना स्यात्, न मोक्षात् सुषुप्तं विभज्येतेत्यर्थः। सुषुप्ते चेदविद्या नोच्छिन्ना, कथं तर्हि "तत्राहरहरिमाः प्रजा ब्रह्मलोकम्" इत्यादौ ब्रह्मप्राप्त्यभिधानमित्यत आह—विक्षेप इति। यद्यपि तत्र कारणाविद्यास्ति, तथापि कार्याविद्यानिवृत्तिसामान्याद् गौणं ब्रह्मप्राप्त्यभिधानमिति भावः। स्वातन्त्र्ययोग्यतापक्षयोस्तु पुनरावृत्त्याशङ्का तयोरनभ्युपगमेनैव प्रत्युक्तेति पुनर्न प्रत्युक्ता। प्रकृतमुपसंहरति—तस्मादिति।

केन पुनः प्रमाणेनास्य प्रथमश्लोकोक्तस्याद्वयात्मतत्त्वरूपस्यार्थस्यावगमः? P.22-19.
न तावत् प्रत्यक्षेण, तस्याभेदविपरीतनीलपीतादिभेदविषयत्वात् । नाप्यनुमानेन, तस्य लिङ्गिलिङ्गादिभेदग्राहकप्रत्यक्षपूर्वकत्वात्; तदभावे चाभावात् अभेदप्रत्यनीकत्वात् । नाप्युपमानेन, तस्य भेदाधिष्ठानसादृश्यविषयत्वेन भेदसापेक्षत्वात् । अनुमानोपमाने भेदसापेक्षे, न तु भेदं साक्षात् गृह्णीतः; प्रत्यक्षं तु गृह्णदपि वस्तूपसर्जनं गृह्णाति, न तु तमेव साक्षात् । अर्थापत्तिः पुनरभेदविपर्यये भेद एव साक्षात् प्रमाणं सुतरां प्रतिपक्षभूता; यतो न भेदमन्तरेण प्रमातृप्रमेयादिभेदव्यवहारः क्वचिदुपपद्यते; अपेक्षितश्चासौ; अन्यथा तं विना निर्भेदब्रह्मावगमोऽपि न स्यात् । अभावोऽपि न भावरूपे ब्रह्मणि तावत् प्रमाणम् । न च प्रपञ्चाभावे, तस्य प्रमाणपञ्चकाभावरूपस्य प्रत्यक्षादिषु सत्त्वसंभवात् । आगमस्य बहुवक्तव्यत्वात् पूर्वमुपमानाद्यभाव उक्त इति द्रष्टव्यम् । एवमागमस्यापि; यस्य तावदाप्तः प्रणेता, स प्रमाणान्तराधिगतवस्तुविषयत्वात् तदगोचरे ब्रह्मणि न प्रमाणम् । नापि वेदः, तस्य विधिनिषेधात्मकत्वात्; विधिनिषेधयोश्च सिद्धे ब्रह्मतत्त्वेऽसंभवात् । न च विधिनिषेधावनपेक्ष्य सिद्धे वस्तुनि शब्दस्य प्रामाण्यं युक्तम्; तथा हि—घटोऽयमितिवत् सिद्धानुवादत्वे प्रमाणान्तरापेक्षा स्यात्; न च तदलौकिके ब्रह्मणि संभवतीत्यप्रामाण्यमेव स्यात् । इतश्च सिद्धेऽर्थे न वेदस्य प्रामाण्यम्; यतो लोके शब्दस्य वाचकसामर्थ्यावगमः, तत्र च कार्यपरतयैव कार्यान्वयिस्वार्थे पदानि प्रयुज्यन्ते, तथा प्रयोजनवत्त्वात्; अन्यथा निष्प्रयोजनानि स्युः । किं च न सिद्धानुवादात् शब्दस्य वाच्यवाचकसंबन्धावगमः, किं तु प्रवर्तकाद्वाक्यात्; यतः 'पिकमानय' इत्युक्ते प्रेष्यस्य प्रवृत्त्यार्थप्रत्ययं विनानुपपद्यमानया तस्यार्थप्रत्ययमनुमाय शब्दानन्तर्यात् तन्निमित्तान्तरादर्शनाच्च 'शब्देनायं कृतः' इति तस्य तत्र सामर्थ्यमवगम्यते; ततश्च प्रवृत्तिसंबन्धेन व्युत्पन्नशक्तयः शब्दा न सिद्धं ब्रह्मावगमयितुमर्लमिति न तत्र प्रमाणम् । किं च ब्रह्मणः प्रमाणान्तरेण सिद्धत्वे शब्दस्यानुवादकत्वादप्रामाण्यम्, असिद्धत्वे नतराम्; अज्ञातस्य हि ब्रह्मणः पदेन संबन्धाज्ञानादपदार्थत्वे वाक्यार्थत्वायोगात् । कथम्? पदार्थ एव पदार्थान्तरविशिष्टो वाक्यार्थो भवति; ब्रह्मपदार्थस्त्वन्येन प्रमा-

णेनात्यन्तमदृष्टोऽनवगतसंबन्धतया पदादनवगम्यमानः पदार्थसंसर्गात्मके वाक्यार्थे गुणत्वेन प्रधानत्वेन वा नानुप्रवेशमर्हति । तस्मान्न शब्दप्रमाणकं ब्रह्म । अपि च निरस्तसमस्तविशेषणं ब्रह्मतत्त्वं प्रतीतिगोचर एव न भवति। कथम्? सर्वा हि प्रतीतिः 'एवंप्रकारमिदम्, नान्यप्रकारम्' इत्येवं वस्तु व्यवच्छिन्दती प्रवर्तते, अन्यथा प्रतीतिरेव न स्यात्; निरस्तसमस्तप्रकारे तु ब्रह्मणि कथं प्रतीतिः स्यादित्येवं प्रमाणाभावेनाद्वयं ब्रह्माक्षिप्य तत्र
P.23-18. प्रमाणमाह—आम्नायत इति । 'निरूपणाम्' इत्यत्र प्रचक्षत इत्यनुवर्तते ।

यत्तावदुक्तम्—सिद्धानुवादित्वे वेदस्य प्रमाणान्तरसापेक्षत्वं स्यादिति, तत्तावन्नास्तीति नियोगकाण्डे वक्ष्यामः । यच्चोक्तम्—कार्यनिष्ठान्येव लौकिकवाक्यानीति, तदपि नैकान्तिकम्; अकार्यनिष्ठान्यपि हि प्रियाख्यानानि प्रियमाख्यायते यैस्तानि 'पुत्रस्ते जातः' इत्यादीनि वाक्यानि प्रवृत्तिनिवृत्तिप्रयोजनशून्यानि लोके सन्ति; न च तावता निष्प्रयोजनान्येव, पितृसुखोत्पादप्रयोजनत्वात् । न च तत्र 'सुखी भव' इति प्रवृत्त्युपदेशः कल्प्यः, ज्ञातपुत्रजन्मवस्तुसामर्थ्यादेव सुखित्वसिद्धेरुपदेशानपेक्षत्वात् । अथ मतम्—अस्ति तावत्तत्र पितुः सुखे प्रवृत्तिः; तत्रैव वचसस्तात्पर्यम्; अतस्तदपि प्रवृत्तिनिष्ठमेव । सत्यम्; 'पितुः सुखमुत्पद्यताम्' इत्यभिसंधानेन प्रयुक्तत्वाद्वाक्यस्योत्पत्तिरूपेणास्ति तत्र तात्पर्यम्; न तु ततो वाक्यात्प्रधानतया 'सुखप्रवृत्तिः प्रतीयताम्' इत्येवं प्रतीतिरूपेण, तद्वाचकपदाभावात्; अपदार्थस्य चावाक्यार्थत्वात्; यतः प्रतीतिः सिद्धार्थनिष्ठैव । एतच्चाभ्युपेत्योक्तम्; न तु सुखे प्रवृत्तिरस्तीति वक्ष्यति । न च पितृसुखोत्पादप्रयोजनवत्त्वे सति सिद्धार्थपर्यवसितस्यैव शब्दस्य "पूषा प्रपिष्टभागः" इतिवत् प्रवृत्तिपर्यन्तो व्यापारः शक्यः कल्पयितुम्; तेन सिद्धार्थनिष्ठमेव तद्वाक्यम्, न प्रवृत्तिनिष्ठम् । अपि च प्रवृत्तिनिष्ठत्वेऽपि न तावत् पुत्रजन्मनि सुखोपाये पुरुषाऽप्रवृत्तः प्रवर्त्यः, तस्य सिद्धत्वात्; नाप्युपेये सुखे उपायाज्ञानेन पूर्वमप्रवृत्त उपायज्ञापनद्वारेण प्रवर्त्यः; वाक्यार्थज्ञानोत्तरकालीने हि स्वव्यापारे पुरुषः प्रवर्त्यः; न च सुखस्य सिद्धये व्यापारान्तरमस्ति, 'पुत्रस्ते जातः' इति वाक्यार्थज्ञानादेव तदुत्पत्तेः । एतेन

दुर्जनवचांस्यपि व्याख्यातानि । तथा भ्रमभीतस्य भ्रमापनुत्तये 'रज्जुरियम्, न सर्पः' इति तत्त्वाख्यानं स्वरूपनिष्ठमेव दृश्यते । न च तत्रापि 'मा भैषीः' इति नियोगः कल्प्यः; तत्र हि नियोगो भवति, यत्र तज्ज्ञात्वा तत्सामर्थ्यात् तत्पूर्वया चेच्छया पुरुषः प्रवर्तते निवर्तते च; अत्र रज्जुतत्त्वज्ञानमात्रादभयहेतो रज्जुसर्पसत्यत्वाभिमानस्याभावादेव नियोगमिच्छां वानपेक्षमाणस्यैव भयनिवृत्तेर्नार्थो नियोगेन । क्व च पुरुषो नियोज्यः? न तावद्भयनिवृत्तौ, नियोगस्याप्रवृत्तप्रवर्तकत्वात्, भयनिवृत्तौ च स्वत एव स्वर्गादिवत् प्रवृत्तत्वात्; नापि तदुपाये, रज्जुतत्त्वज्ञानेन तस्य 'रज्जुरियम्' इति शब्दादेवोत्पत्तेः; शब्दार्थज्ञानोत्तरकालीनस्य च व्यापारस्यान्यत्र विधिनिबन्धनत्वेन दृष्टत्वात् । एवमतिविदूरत्वेनासंभवद्धानोपादानमत्यन्तदूरदेशवृत्तान्ताख्यानवाक्यमपि स्वरूपनिष्ठमेव । न चानर्थकम्, कुतूहलिनामौत्सुक्यनिवृत्त्यर्थत्वात् । P. 24-4.

यत्रापि हानोपादानसंभवः, यथा 'एष प्रतिरोधकवानध्वा' 'निधिमानेष भूभागः' इति, तत्रापि निधेः प्रमाणान्तरावगतमुपकारकत्वं स्मृत्वेच्छया प्रवर्तते, प्रतिरोधकस्य चापकारकत्वं स्मृत्वा द्वेषेण निवर्तते; शब्दस्तु भूभागस्वरूपमात्रोपक्षीण एव, न हानोपादाने वदति । ननु बुद्धिपूर्वकारी वक्ता प्रवृत्तिनिवृत्त्यर्थमेव वाक्यं प्रयुङ्क्ते, नैवमेवादृष्टाय वा; ततश्च तदपि प्रवृत्तिनिवृत्तिनिष्ठमेव; केवलमिदं तत्र प्रयोगार्हमप्यालस्यादिना न प्रयुज्यते, यत्—'गृहाणैनो निधिम्' 'मा वानेनाध्वना गच्छ' इति; स्वरूपपरत्वेऽनर्थकमेतद्वाक्यं स्यात् । मैवम्; यद्यानर्थक्यं स्वरूपे, तेनाश्रुतप्रवृत्तिनिवृत्तिपर्यन्तं वाक्यव्यापारं कल्पयसीति, मा तर्हि कल्पय, स्वरूपनिष्ठस्याप्यस्य प्रत्यक्षादिवत् स्वरूपसमर्पणद्वारेण प्रवृत्तिनिवृत्त्यङ्गत्वोपपत्तेः; प्रत्यक्षादयो हि सिद्धार्थपरिच्छेदोपरतव्यापारा लेशतोऽपि प्रवृत्तिनिवृत्ती न गोचरयन्ति, अथ च तदङ्गत्वं न जहति; तथा शब्दोऽपीति न दोषः । प्रत्यक्षादौ वस्तुमात्रमभिसंहितम्, न प्रवृत्तिनिवृत्ती; इदं तु प्रवृत्तिनिवृत्ती अभिसन्धाय वाक्यं प्रयुक्तम्; तेन ते एवात्र शब्दार्थाविति चेत्, मैवम्; न हि यदभिसंहितं तच्छब्दार्थः, किं तु यत्र शब्दस्य वाचकसामर्थ्यम् । न च

P. 25-3. 'निधिमान्' इति शब्दस्य 'गृहाण' इत्यत्र सामर्थ्यम्। यदि त्वभिसन्धानमात्रेण शब्दार्थत्वं स्यात्, तदा निधिसाध्यमुपभोगाद्यपि तस्य वक्तुरभिसंहितमिति तदपि शब्दार्थः स्यात्। किं च यदा 'घटे प्रवर्तिष्ये, सर्पान्निवर्तिष्ये' इति चाभिसन्धाय तद्वस्तु प्रत्यक्षादिभिर्जिज्ञास्यते, तदाभिसंहिते अपि ते न शब्दार्थः। यदि वा अभिसन्धानमात्रेण निधिवाक्ये प्रवृत्तिरर्थः स्यात्, ततः शब्दशक्तेरेकरूपत्वात् सर्वेषां प्रवृत्तिबुद्धिरेव स्यात्; नोपेक्षाबुद्धिः; अस्ति च सा कस्यचित्; अतो न प्रवृत्तिः शब्दार्थः। तेन सिद्धार्थनिष्ठमेव तद्वाक्यमिति न लोके सर्वं वाक्यं कार्यनिष्ठम्।

यदप्युक्तम्—प्रवर्तकवाक्याद्धि पिकानयनादिव्यवहारः, ततो लोके वाच्यवाचकसंबन्धावगमः, तेन प्रवृत्तिनिष्ठतैव सर्वशब्दानामिति; तदपि न, वर्तमानापदेशादपि संबन्धावगमदर्शनात्; तथा हि—'देवदत्तः काष्ठैरोदनं पचति' इत्युक्ते व्युत्पन्नौदनादिपदार्थस्तथा व्युत्पन्नतृतीयार्थश्चाव्युत्पन्नकाष्ठपदार्थो यत्पाके करणं पश्यति तत्काष्ठपदार्थ इति व्युत्पद्यते। तथा हर्षादिप्रयोजनेभ्यः 'पुत्रस्ते जातः' इत्यादिभ्यस्तत्त्वाख्यायकवाक्येभ्यः सिद्धार्थेभ्योऽपि प्रवर्तकवाक्यादिव हर्षादिनिमित्तेषु पुत्रादिषु भवति पुत्रादिशब्दवाच्यत्वे व्युत्पत्तिः। यथैव हि पिकानयनादिव्यवहारविषयं प्रवृत्तिविशेषं दृष्ट्वा तदन्यथानुपपत्त्या प्रवृत्तिविशेषज्ञानं तन्निमित्तनियोगज्ञानं वा बालेन प्रेष्यस्यानुमीयते—शब्दानन्तरभावात्, कारणान्तरस्य चादर्शनात्, दृष्टत्यागेनादृष्टकल्पनानुपपत्तेः, शब्दस्यैव तत्र ज्ञाने सामर्थ्यं कल्प्यत इति कार्यवाक्यार्थव्युत्पत्तिः, तथा पित्रादेर्मुखप्रसादादिना लिङ्गेन हर्षाद्युपलम्भ्याकारणककार्यानुपपत्त्या हर्षादिनिमित्तज्ञानमनुमीयते; तच्च शब्दानन्तर्यात्, अन्यस्य हेतोरदर्शनात्, शब्देन कृतमिति शब्दस्य तत्र हर्षादिनिमित्तज्ञाने जननसामर्थ्यकल्पना भवति। तदेवं 'हर्षनिमित्तं किंचिदस्यानेन शब्देनोक्तम्' इति सामान्यतोऽवगते, अथ किं तद्धर्षनिमित्तमिति विशेषवाञ्छायां स्वसन्तानज्ञातहर्षनिमित्तभावस्याव्युत्पन्नपुत्रशब्दवाच्यत्वस्य व्युत्पन्नशब्दान्तरस्य पुत्रजन्मनस्तस्य वाक्योपात्तस्यैव पितुः संबन्धितयावगतत्वात्, अन्यस्य च हर्षनिमित्तस्यानुपलब्धेरभावात्, दृष्टहानेनादृष्टकल्पनानुपपत्तेश्च 'पुत्रजन्मन्येवेदं वाक्यमात्तेन प्रयुक्तम्; अनेन च पित्रा तदेवास्माद्वाक्यात् प्रती-

तम्' इति पार्श्वस्थोऽवधारयति । तदेवं प्रागुक्तप्रकारेणाप्तकृतवाक्यप्रयोग- P. 25-19
पुत्रजन्मगोचरपितृप्रत्ययाभ्यामस्मिन् पुत्रजन्माख्यार्थे वाक्यस्य प्रतिपादनसामर्थ्यं पार्श्वस्थः प्रतिपद्यते । ततश्चास्ति सिद्धार्थादपि वाक्यात् व्युत्पत्तिः; अतो न कार्यवाक्यादेव व्युत्पत्तिः; अतो न तद्बलेन कार्यैकनिष्ठता सर्वशब्दानामिति सिद्धेऽप्यर्थे न प्रामाण्यं व्याहन्यते । यद्यपि पदानि व्युत्पत्तिमपेक्षन्ते, न वाक्यम्, अभिनवविरचितादपि वाक्यादर्थप्रतीतेः; तथापि वाक्यप्रयोगाद्व्युत्पत्तिः, न पदमात्रप्रयोगादिति पदमेवाभिप्रेत्य तत्र वाक्यस्य सामर्थ्यं प्रतिपद्यत इत्युक्तम् ।

अधुनाभ्युपेत्योच्यते—भवतु वा सर्ववचसां प्रवर्तकता, तत एव वाच्यवाचकसम्बन्धावगमः, तथापि व्युत्पत्तिवाक्य एव प्रवर्तके विधायकपदमपोद्धृत्य तद्व्यतिरिक्तानां पदानां क्व तात्पर्यम्? शक्तिः किं पदार्थमात्रे? किं वा कार्यसंसर्गे? किं वा कार्येणाकार्येण चाकाङ्क्षितयोग्यसन्निहितेन पदार्थान्तरमात्रेण संसर्गे? इतीदं विचार्यम् । तत्र तेषु पक्षेषु मध्ये पदानां स्वार्थमात्रपरत्वेऽङ्गीक्रियमाणेऽयःशलाकाकल्पाः सर्वेऽपि पदार्थाः परस्परमसंस्पृष्टाः स्युः; ततश्च संसर्गरूपवाक्यार्थप्रत्ययाभावः स्यात्; अस्ति चासौ । किं च पदार्थमात्रप्रतिपत्तेर्निष्प्रयोजनत्वात् पदप्रयोगवैयर्थ्यं च स्यात् । यस्मादेतद्दोषद्वयमस्मिन् पक्षे भवति तस्मादेतद्दोषद्वयपरिहारायान्योन्याकाङ्क्षितयोग्यसन्निहितेन कार्येणाकार्येण वार्थमात्रेण व्यतिषङ्गः अन्योन्यसंसर्गः कल्पनीयः; तावता चान्यार्थमात्रव्यतिषङ्गेण पदप्रयोगवाक्यार्थप्रत्यययोरुपपत्तौ सत्यां प्रयोक्तृप्रतिपत्त्रोर्निराकाङ्क्षत्वान्न कार्यरूपपदार्थविशेषव्यतिषङ्गे प्रमाणमस्ति; स्वार्थमात्रपर्यवसाने हि पदानां प्रयोगप्रत्ययावनुपपद्यमानौ तदतिक्रम्य पदार्थमात्रसंसर्गपर्यन्ततात्पर्यशक्तिं गमयतः; तौ च तावतैवोपपन्नौ न कार्यात्मकार्थान्तरसंसर्गपर्यन्ततां गमयितुमलमिति भावः । इतश्च—यो हि कार्यात्मकार्थान्तरव्यतिषङ्गं कल्पयति, कार्यस्याप्यर्थान्तरत्वात् कल्पयत्यसावर्थान्तरव्यतिषङ्गम्; तेनोभयवादिसिद्धत्वादर्थान्तरमात्रव्यतिषङ्ग एवाश्रयितव्यः, न कार्यव्यतिषङ्गः; विगत्यधिकत्वादिति भावः । किं च कार्यसंसर्गो व्यभिचरति, कार्येणाकार्येण संसर्गात्; अर्थान्तरमात्रसंसर्गस्त्वव्यभि-

चारी; तस्मात् स एवाश्रयितव्यः । एवं चेत्कार्याकार्यात्मकार्थान्तरमात्र-
संसर्गे पदानां तात्पर्यशक्तिरवधृता, तथा सति यत्र लोके व्यवहाराय पदं
प्रयुज्यते वेदे च, तत्र तेन संसर्गः; यत्र तु वेदान्ते कार्यं न श्रूयते, तत्र
विनापि तेन पदार्थानां परस्परसंसर्गादन्योन्यविशिष्टसिद्धार्थप्रत्ययसिद्धिरिति
सिद्धं सिद्धेऽप्यर्थे शब्दस्य प्रामाण्यम् । अतश्च लोके व्युत्पत्तिवाक्ये दृष्टो
ऽपि कार्यव्यतिषङ्गो न कार्यमात्रान्वयं शब्दतात्पर्यशक्तिनियामकत्वेनाश्रयि-
तव्यः । एतच्चावश्यं त्वयाप्यङ्गीकर्तव्यम्, अन्यथा यल्लोके दृष्टं तच्च सर्वं
पदशक्तिनियामकत्वेनाश्रीयेत, ततो लोके व्युत्पत्तिवाक्ये वक्तृविवक्षापरत्वं
पदार्थान्वयस्य दृष्टमिति वेदे वक्तुरभावेन विवक्षाभावात् विधायकेभ्योऽर्थ-
प्रतीतिर्न स्यात्; अस्ति च सा। तस्मात् कार्यव्यतिषङ्गो व्युत्पत्तावतन्त्र-
मित्यकार्येणापि पदार्थानां संसर्गात् सिद्धं सिद्धेऽप्यर्थे शब्दस्य प्रामाण्यम्।
अपि च सर्वेषां पदानां पदार्थानां कार्येणैव संसर्गेऽङ्गीक्रियमाणेऽरुणादीनां
परस्परं क्रीणातिना च क्रियाकारकलक्षणः संसर्गो न स्यात्; तत्रारुणादि-
कारकविशिष्टक्रयविषयो नियोगो न प्रतीयेत, किं तु क्रयमात्रैकपदार्थ-
साध्य एव स स्यात् । अथ मतम्— कारकविशिष्टधात्वर्थविषयो हि नियोगः
प्रतीयते, न धात्वर्थमात्रविषयः; न च कारकसंसर्गमन्तरेण धात्वर्थो
विशिष्टो भवति; तेन विनियोगं प्रति न प्रत्यर्थी, अपि त्वर्थी नियोगः;
ततश्च नियोगान्वयेऽपि पदार्थानां न परस्परान्वयव्याघातः । तत्रोच्यते—
नियोगाच्च यावत्पूर्वभावी तर्हि विनियोगः । परस्तु भवतु पूर्वभावी विनि-
P. 28-8. योगः, तथाप्यस्ति तावन्नियोगान्वय इति पृच्छति— किमतो यद्येवमिति ।
सिद्धान्ती तु स्वाभिप्रायं प्रकटयति— एवं सति अस्ति नियोगातिरिक्तपदा-
र्थान्वयेऽपि पदस्य तात्पर्यसामर्थ्यम्; अतः सिद्धो नः पक्षः। ननु नियो-
गान्वयानामन्योन्यमन्वयः, न तु तन्निरपेक्षाणाम्; अतो नियोगनिबन्धन
एवासाविति न तेन विनोपनिपततु पदानामन्वयशक्तिरिति; तत्राह—
नियोगनिरपेक्षमेव पदानामन्योन्यान्वयसामर्थ्यम् । कुतः? पूर्वं परस्परान्वि-
तानां सतां पदानां पश्चान्नियोगेनान्वयात् । अयमाशयः— विशिष्टेन हि
विषयेण नियोगस्यान्वयस्त्वयेष्टः; न चासौ कारकैरनन्वितो विशिष्टो भवति;
न चाविशिष्टो नियोगेनान्वीयते; अविशिष्टस्याविषयत्वात्, अविषयस्य च

नियोगेनानपेक्षणाम्, अपेक्षानिबन्धनत्वाच्चास्य ; तस्मान्नियोगान्वयात्पूर्वः पदानामन्वय इति । नियोगान्वयनिरपेक्ष एव चेत्, विनापि तेनोपनिषत्सु सिद्धेऽप्यर्थेऽन्वयः सिद्ध इति । ननु यदि नाम नियोगान्वयपूर्वः पदार्थान्वयो न भवति, तथापि नियोगाकाङ्क्षानिबन्धनोऽसौ ; स हि विशिष्टविषयसिद्धये पदार्थानामन्योन्यान्वयमाकाङ्क्षते ; अन्यथा कार्यान्वयशून्यः पदार्थान्वयोऽपि व्यर्थः स्यात्, एकवाक्यता च न स्यात् । एवं चेदुपनिषत्सु न नियोगेन विनान्वयसिद्धिरित्याह—न च नियोगाकाङ्क्षानिबन्धनः पदार्थानां परस्परसंसर्ग P. 26-10 इतीममर्थं वक्ष्यति नियोगकाण्डे । यच्चोक्तम्—ब्रह्मणः प्रमाणान्तरासिद्धत्वे संबन्धाग्रहादपदार्थत्वे सत्यवाक्यत्वमिति, तत्रोच्यते—प्रमाणान्तरेणानधिगतमपि ब्रह्म तत एव ब्रह्मान्तर्याम्यादिस्वशब्देनानधिगतवाच्यत्वसंबन्धमपि शक्यम् "अस्थूलमनण्वह्रस्वम्" इत्यादिशब्देन निरूपयितुम् । कथम्? उच्यते—'स्थूलोऽहम्' 'अणुरहम्' 'ह्रस्वोऽहम्' इत्यविद्याध्यस्तस्थूलादिविशेषप्रतिषेधद्वारेण । न च येन शब्देन तथा प्रतिपाद्यते तस्याप्यसंगतिदोषस्तुल्य इति वाच्यम्, स्थूलादिविशेषशब्दानां नञश्च स्वेन स्वेनार्थेन विदितसंबन्धत्वात् । न च ब्रह्मान्तर्याम्यादिशब्दवदसंगतिदोषोऽस्ति । तेन स्वसिद्धस्य जीवस्य स्थूलादिविशेषनिषेधमुखेनास्थूलादिशब्दानामस्ति विगतनिःशेषदोषतत्त्वाभिधानशक्तिरिति भावः । तथा च श्रुत्यापि "अस्थूलमनण्वह्रस्वमदीर्घमलोहितम्" इत्याद्यया इत्थमेव स्थूलादिविशेषनिषेधमुखेनैव तद्ब्रह्म सर्वविशेषातिगं सर्वान् स्थूलत्वादिविशेषानतिक्रान्तमुपदिश्यते ; नास्माभिः स्वोत्प्रेक्षयेदमुक्तमिति भावः । उक्तेऽर्थे श्लोकार्धं योजयति—एतत्कथयतीति । एतच्च चतुर्थे काण्डे वक्ष्यत इतीह न प्रपञ्चितम् । इतीति समाप्तौ ।

अस्यैव श्लोकस्यान्योऽर्थ उच्यते—यदप्युक्तं पूर्वपक्षे प्रत्यस्तमितसकलविशेषं ब्रह्म प्रतिपत्तेरेवाविषय इति, तत्रोच्यते—विशेषनिवृत्त्यैव तन्निर्विशेषं वस्तु शब्देन प्रतिपाद्यते । इदमुक्तं स्यात्—द्विविधं हि प्रतिपादनं दृष्टम्; एकं विशेषमुखेन, यथा 'अयं कुण्डली, स कटकी' इति; एकं च विशेषनिषेधमुखेन, यथा 'नाङ्गदी न मकुटी, स न कटकी' इति । ततश्च यदि नाम निर्विशेषं तत्त्वम् 'इत्थंभूतम्' इति विशेषमुखेन वक्तुं न शक्यते, तथाप्यविद्याध्यस्तविशेषनिषेधमुखेन प्रतिपादयिष्यते प्रतिपत्स्यते चेति । अत्र

P. 28-16. दृष्टान्तमाह—सुवर्ण तत्त्ववदिति। तत्प्रपञ्चयति—न हीति। सुवर्णतत्त्वं पिण्डरुचकादिसंस्थानविशेषैर्य उपप्लवः—उपरागः, संमिश्रत्वम्, अपृथग्भावः—तेन रहितं रुचकादिविलक्षणविशेषशालि, तेभ्यः पृथक् न दृश्यत इति। न च रुचकादय एव सुवर्णतत्त्वमिति वाच्यम्, रुचकत्यागेन संस्थानान्तरे स्वस्तिकेऽपि भावात्; सुवर्णतत्त्वस्य हि रुचकाभेदे च रुचकवत् तदपि स्वस्तिके न भवेत्; अस्ति च; तस्मात् ततः पृथक्। एवं स्वस्तिकेऽपि द्रष्टव्यम्। एवं सुवर्णतत्त्वं रुचकादिभ्योऽन्यदपि पृथक् न दृश्यते; अथ च तादृशमपि तत्र स्वस्तिकः, रुचके भावात्; न रुचकः, स्वस्तिके भावात्; अतोऽन्यदिति विवेकबुद्ध्या 'न तद्रुचको न स्वस्तिकः' इति रुचकादिभेदापोहद्वारेण रुचकादिविशेषनिषेधे तेभ्यः सर्वान्तरं सुवर्णतत्त्वं स्वयं प्रतीयते परस्मै च प्रतिपाद्यते, तथा ब्रह्मापीत्यर्थः। न दृष्टः संस्थानभेदोपप्लवात् विवेको यस्येति विग्रहः। एतच्च गोत्वादावपि तुल्यम्; उदाहरणमात्रं सुवर्णम्। इममर्थं श्रुत्या द्रढयति—स एष इति। अस्मिन्नेवार्थेऽभियुक्तवाक्यद्वयं पठति—तथेति। उक्तमिति वाक्यशेषः। स्थूलाद्याकाराणां विशेषाणामुपसंहारे विलये अन्ते अवसाने यत् व्यवतिष्ठते तत्सत्यमित्यर्थः। तथा परैरप्युक्तम्—परमार्थतो निष्प्रपञ्चमेव ब्रह्म; तदविद्यया प्रपञ्चस्याध्यारोपेण तदपवादेन तन्निषेधेन च प्रपञ्च्यते व्याख्यायत इत्यर्थः।

एवं ब्रह्मणः प्रपञ्चविलयद्वारेणाम्नायगम्यत्वमुक्त्वा आम्नायविशेषनिर्धारणाय इदमिदानीं विचार्यते—किं कृत्स्न एव स्वरूपकार्यनिष्ठ आम्नायो भेदनिषेधद्वारेणाद्वयं ब्रह्म गमयति, उत कश्चिदस्याम्नायस्य वेदान्ताख्य एकदेश इति। तत्र तस्मिन् संदेहे केचिदाहुः—सर्वत्राम्नाये क्वचित् कस्यचिद्भेदस्य प्रविलयो गम्यते। तेन तद्द्वारेण कृत्स्न एवाम्नायो ब्रह्म गमयतीति भावः। तद् दर्शयति—यथा "स्वर्गकामो यजेत" इत्याम्नायात् शरीरस्यात्मत्वप्रविलयो गम्यत इति पूर्वेणान्वयः। कथम्? उच्यते—अत्र हि वाक्ये देहस्य लोकान्तरमननुवर्तमानस्य जडस्य च जन्मान्तरीयस्वर्गोपभोगसामर्थ्याभावात् तद्व्यतिरिक्तो जन्मान्तरानुवर्ती चेतनश्च स्वर्गोपभोगसमर्थोऽधिकारी गम्यते; स एव चात्मेति देहात्मविलयो गम्यत इति

पूर्वेणैवान्वयः । तथा "गोदोहनेन पशुकामस्य" इत्यत्र गोदोहनस्याक्रियात्मनोऽनन्योत्पादनस्वभावस्य साक्षात्पशुसाधनत्वासंभवात् क्रियां स्वाश्रयमपेक्षमाणस्य प्रकरणात् दार्शपौर्णमासिकीं प्रणयनक्रियामाश्रित्य पशुसाधनत्वमित्यर्थात् दर्शपूर्णमासाधिकृतस्यैवाधिकारादधिकारी भिन्नो निषिध्यते । P. 27-4.
नन्वेवमादिषु भवतु भेदविलयः, विधिनिषेधचोदनासु तु प्रवृत्तिनिवृत्तिमात्रफलासु तदसंभवान्न कृत्स्नाम्नायो भेदप्रविलयपर इत्याशङ्क्य तत्रापि भेदप्रविलयमाह—तथेति । तथा विधिनिषेधचोदनास्वपि स्वाभाविकीनां रागद्वेषनिबन्धनानां बाह्यप्रवृत्तीनां निषेधो गम्यत इत्यन्वयः । तत्र निषेधेषु साक्षादेव 'नेदं कुरु' इति प्रवृत्त्यन्तरानिषेधोऽवगम्यत इत्याह—निषेधेष्विति । नन्वेवमस्तु निषेधेषु; विधिषु तु प्रवृत्तिमात्रफलेषु कथमित्यत आह—विधिष्विति । विधिषु तु "सन्ध्यामुपासीत" इति प्रवृत्त्यन्तरनियोगेन तत्कालबाह्यप्रवृत्तिनिषेधोऽवगम्यते । एतदुक्तं भवति—उभयत्रापि बाह्यप्रवृत्तिविलयो न विशिष्यते; अयं तु विशेषः—यन्निषेधेषु साक्षात्, विधिषु पुनरर्थादिति । लोकदृष्टं चेदं प्रकारद्वयमित्याह—लोक इति । लोकेऽप्यनभिप्रेतात् पथः सकाशात् 'अनेनाध्वना मा गच्छ' इति साक्षाद्वा निवारणं दृश्यते, मार्गान्तरोपदेशेन वा विवक्षितानभिमतमार्गनिषेधेनार्थात् । तदेवं विधिनिषेधचोदनास्वपि रागादिनिबन्धनप्रवृत्तिविलयो गम्यत इति स्थितम् । एवं चैष गुणो भवति—रागादिनिबन्धननैसर्गिकप्रवृत्तिरूपभेदविलयद्वारेण मुमुक्षोः शान्तताद्यधिकारिविशेषणमुपपादयन्तो दृष्टेनैवोपकारेणावघातादिवत् सन्निपत्योपकारितया कर्मविधयः "आत्मा ज्ञातव्यः" इत्यात्मज्ञानाधिकारोपयोगिनः स्युरित्यदृष्टकल्पनागौरवं न भवतीति भावः । श्रुत्यापि रागादिनिबन्धनाशेषबाह्यप्रवृत्तिनिवृत्तिरधिकारिविशेषणं दर्शितमित्याह—तथा हीति । शान्तस्य समाहितस्य चात्मनि विषये दर्शनमुपदिश्यते—"तस्माच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्येत्" इत्यादिश्रुत्या । तत्र शान्त इत्यन्तःकरणपूर्वकरागादिजप्रवृत्तिनिवृत्तिरधिकारिविशेषणमुक्तम्; दान्त इति बहिःकरणपूर्वकरागादिजप्रवृत्तिनिवृत्तिः । अन्ये तु विपर्ययमाहुः—अवश्यं चैतदधिकारिविशेषणमास्थेयम्, यतः समर्थोऽधिकारी भवति; तच्चात्मज्ञानं शान्तदान्तसमाहितस्यैव शक्यम्,

नेतरस्य ; तेन स एवाधिकारी, नेतर इति भावः । कुतः पुनरितरस्यात्म-
P. 27-10. ज्ञानमशक्यमित्यत आह – न हीति । विषयै रमणीयतयाभिमुखमाकृष्यमाणो
विषयस्योपाये या प्रवृत्तिः तत्र कृतं चेतो येन तत्प्रसक्तमना यः, स
यस्मान्न शक्नोत्यात्मनि विषये समाधानं कर्तुम् , न वासमाहितः शक्नोत्या-
त्मानं वेत्तुम् , अतोऽसमर्थत्वान्नासावधिकारीति भावः । यः पुना रागनिबन्ध-
नाभ्यो नैसर्गिकीभ्यः प्रवृत्तिभ्य उपरतः शान्तो दान्तोऽत एव नियतमा-
नसो निरस्तबाह्यान्तरविक्षेपः स शक्नोत्यात्मनि समाधातुमित्यात्मज्ञानसमर्थत्वा-
दात्मदर्शनेऽधिक्रियते । तस्मान्नैसर्गिकप्रवृत्तिनिषेधपरत्वे कर्मविधयो दृष्टेनैव
ज्ञानाधिकारोपयोगिनो भवन्तीति तत्परा एव ते युक्ता इति केचित्
मन्यन्ते ।

अन्ये त्वन्यथा आत्मज्ञानाधिकारोपयोगितां कर्मविधीनां मन्यन्ते ; कथं तत् ? उच्यते – अनवाप्तकामः, काम्यन्त इति कामाः स्वर्गादयः, अनवाप्ताः कामा येन सोऽनवाप्तकामः ; कामोपहतमनाः, कामना कामः विषयसुखाभिलाषः, तेनोपहतमस्वस्थीकृतं मनो यस्य स परमाद्वैतदर्शनयोग्यो न भवतीति न तत्राधिक्रियते ; न खल्वयोग्योऽधिकारं प्रतिपद्यते । यः पुनराधानादारभ्य सहस्रसंवत्सराख्यसत्रपर्यन्तैः कर्मभिरुपनीताशेषकाम्यैरवाप्ताशेषकाम्यतया कृतकामनिर्बर्हणः, कृतः कामस्य विषयसुखाभिलाषस्य निर्बर्हणं विनाशो यस्य स प्राजापत्यान् प्रजापतेरिदं प्राजापत्यं पदं ततः परमवाप्ताशेषकाम्यतया अनुपहतमनाः सन्नद्वैतमात्मानं प्रतिपद्यते । एवं कामनिर्बर्हणद्वारेण कर्मविधीनामात्मज्ञानाधिकारोपयोग इत्यन्ये मन्यन्ते । एवं चैष सर्वत्राम्नाये वाक्यार्थो ज्ञातः – सहस्रसंवत्सरान्तं कर्मजातमात्मनि जिज्ञासुना कार्यमिति । उभयोरपि चानन्तरयोः कर्मविधीनामात्मज्ञानाधिकारोपयोगित्वपक्षयोः कृत्स्न आम्नाय आत्मज्ञानैककार्यपर्यवसायी, आत्मज्ञाने एकस्मिन् कार्ये पर्यवस्यति समाप्यते ; तत्पर इति यावत् । न भावान्तरकार्यपर्यवसायीत्येकग्रहणम् । तत्राद्ये पक्षे विवक्षितावान्तरनियोगफलानां कर्मनियोगानामात्मज्ञानपरमनियोगान्वयः, द्वितीये त्ववान्तरकर्मनियोगफलद्वारेणेति विवेकः ।

मतान्तरमाह—अन्येषां दर्शनमिति । पृथक्कार्या एव, मोक्षफलात् P. 27-17
ज्ञानात् पृथक्कार्याः पृथक्फलाः; पृथक्करणा वा, करणं कार्यं येषां ते तथोक्ताः; स्वप्रधाना इति यावत्; ते पृथक्कार्या एव सन्तो मुमुक्षुं पुरुषमात्मज्ञानाधिकारमवतारयन्ति; अधिकारयोग्यं कुर्वन्तीति यावत् । द्विकर्मकोऽयं निर्देशः 'अजां ग्रामं नयति' इति यद्वत् । कुतः? अनपाकृतऋणत्रयस्य, अनपाकृतमृणत्रयं येन, तस्य तत्रात्मज्ञानेऽनधिकारात् । कुतस्तस्यानधिकारः? "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्" इति मनुवचनात् । ऋणत्रयं च श्रुत्यैवोक्तम्—"जातस्त्रिभि ऋणै ऋणवान् जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इति । ननु कामनिबर्हणपक्षेऽपि पृथक्कार्यत्वं कर्मविधीनामस्त्येव; अतः कोऽस्य पक्षस्य विशेषः? अयं विशेषः—तत्र हि न फलं फलायोक्तम्, किं तु कामावाप्त्या तत्कामनिवृत्तावकामस्यात्मज्ञानाधिकारलाभाय; तेन तत्रावान्तरकार्यमविवक्षितम्; इह तु विवक्षितावान्तरर्णापाकरणकार्या एव कर्मविधय "बृहस्पतिसवेनेष्ट्वा वाजपेयेन यजेत" इतिवदात्मज्ञानाधिकारोपयोगिन इति न दोषः ।

मतान्तरं चाह—अन्ये त्विति । श्रुतस्वर्गादिफलसंप्रयुक्तानामत एव प्रयोजनान्तरनिरपेक्षाणामपि "तमेतं यज्ञेन दानेन तपसानाशकेन विविदिषन्ति" इति विदिना संयोगपृथक्त्वेन ज्ञानेनापि पृथक् सम्बन्धान्तरश्रुतेः "एकस्य तूभयत्वे संयोगपृथक्त्वम्" इति न्यायेन "खादिरो यूपो भवति" "यूपे पशुं बध्नाति" "खादिरं वीर्यकामस्य" इतिवत् नित्यनैमित्तिककाम्यानां सर्वकर्मणामेवात्मज्ञानाधिकारानुप्रवेशं विनियोगादेवान्ये त्वाहुरिति सम्बन्धः । तुशब्दो विशेषार्थः । विशेषश्चात्र पक्षे ज्ञाने कर्मान्वयस्य विनियोगित्वम् । तथा मनोविक्षेपनिवृत्तिद्वारेण कर्मणामात्मज्ञानाधिकारानुप्रवेशित्वपरं श्रुत्यन्तरमाह—येन केनेति ।

मतान्तरमाह—अन्ये त्विति । संस्कृतो हि पुरुष आत्मज्ञानाधिकारयोग्यो भवतीत्यर्थः । अत्रार्थे स्मृतिद्वयमाह—महायज्ञैरिति । महायज्ञैः ब्रह्मदेवपितृमनुष्यभूतयज्ञैः इतरयज्ञैरियं तनुः ब्राह्मी ब्रह्मण्यधिकृता, ये या

ब्रह्मविद्यायाम् "तदधीते तद्वेद" इत्यणो विधानात्, क्रियत इत्यर्थः। तनुरिति तात्स्थ्ये उपचारादात्मोच्यते। स हि ब्रह्मज्ञानेऽधिकारी ब्रह्मविच्च; न तनुः, जडत्वात्। यस्य पुंसो गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनवेदव्रतचतुष्टयस्नानसहचारिणीसंयोगपञ्चमहायज्ञाष्टकापार्वणश्राद्धश्रावण्याग्रहायणीचैत्राश्वयुज्याख्यसप्तपाकयज्ञसंस्थाग्न्याधेयाग्निहोत्रदर्शपूर्णमासचातुर्मास्याग्रयणेष्टिनिरूढपशुबन्धसौत्रामण्याख्यसप्तहविर्यज्ञसंस्थाग्निष्टोमात्याग्निष्टोमोक्थ्यषोडशिवाजपेयातिरात्राप्तोर्यामाख्यसप्तसोमसंस्था इत्येते चत्वारिंशत्संस्काराः, अष्टौ च दयाक्षान्त्यनसूयाशौचानायासमङ्गलाकार्पण्यास्पृहाख्याश्चात्मगुणाः, स ब्रह्मणः सायुज्यं ब्रह्मणा हिरण्यगर्भेण सहैकत्वं सालोक्यं समानलोकतां च गच्छति; तत्र प्रलये परे ब्रह्मणि लीयत इति क्रममुक्तिं दर्शयति। तदुक्तम्—

"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥" इति।

P. 28–4. मतान्तरमाह—अन्ये त्विति। एतदेव पुरुषसंस्कारकत्वं विपरीतं यत्कर्मणामात्मज्ञानाधिकारं प्रत्युक्तम्, तदात्मज्ञानस्यैव कर्माधिकारं प्रति वर्णयन्ति। तदेवाह—आत्मज्ञानमित्यादिना। देहव्यतिरिक्तनित्यकर्तृभोक्त्रात्मविद एव स्वकर्मस्वधिकारः, नेतरस्य। तथा चोक्तम्—"न ह्यनध्यात्मवित् कश्चित् क्रियाफलमुपाश्नुते" इति। तेन कर्मसूपयोक्ष्यमाणस्य कर्तुरयं संस्कार इति भावः।

मतान्तरं च—अन्ये त्विति। साध्यसाधनादिद्वैतविषयं कर्म, "एकमेवाद्वितीयम्" इति चाद्वैतविषयमात्मज्ञानम्; अतोऽनयोः परस्परविरोधादसंबन्ध एवेत्यन्ये मन्यन्ते।

एवं सप्तपक्षानुपन्यस्याद्यं पक्षं दूषयति—तत्रेति। कल्प इति कल्पनेत्यर्थः। कुत इत्याह—न हीति। कर्मादीत्यादिशब्देन गोदोहनादिद्रव्यविषयोऽभिमताः; यद्वा कर्मशब्देन प्रवृत्तिलक्षणो धर्म उक्तः, आदिशब्देन तु निवृत्तिलक्षणं तपः; तद्विषयः; ते स्ववाक्यसमधिगतस्वर्गादिकार्याः,

स्ववाक्यसमधिगतं स्वर्गादि कार्यं फलं येषां ते तथोक्ताः; अत एव कार्यान्तरम् आत्मज्ञानाख्यं कार्यं नापेक्षन्ते, स्ववाक्यश्रुतफलैनैराकाङ्क्ष्यादिति भावः। नन्वेवमस्तु कर्मविधीनामनपेक्षत्वम्; आत्मज्ञानविधिस्तु साधनत्वेन तानपेक्षिष्यते; भवति चैकापेक्षयापि संबन्ध इत्याशङ्क्याह—नापीति। P. 28-9. तत्रैवं सत्युभयोर्निराकाङ्क्षयोराकाङ्क्षालक्षणपरस्परसंबन्धाभावात् कुत एककार्यत्वेनैकाधिकारकत्वं कर्मज्ञानविध्योरित्यर्थः। अत्र परमतमाशङ्कयति—अथेति। स्ववाक्येऽनवगतफलाः कर्मविधयः फलाकाङ्क्षायामात्मज्ञानविध्यधिकारमनुप्रवेक्ष्यन्तीति भावः। ननु "स्वर्गकामो यजेत" इति श्रूयते, ततः कथमनवगतफलत्वमित्याशङ्क्याह—स्वर्गादीनामिति। सत्यं स्वर्गादि श्रूयते; किं तु प्रीतिकृतचन्दनादिद्रव्यं तत्; यच्च द्रव्यं, तत् 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते' इति कर्मणि गुणत्वेनाप्रधानत्वेन साधनतयेति यावत्, अभिसंबध्यते; न प्रधानतया फलत्वेनेति भावः। यद्वा स्वर्गकाम इति पुरुषविशेषणत्वेन स्वर्गादीनां गुणत्वेनाभिसम्बन्धात् न फलत्वमित्यर्थः। सिद्धान्ती तु सोपहासमाह—स्वर्गेति। तत्र हि प्रीतिः स्वर्गः, न द्रव्यम्; प्रीत्यर्थं च सर्वम्, न प्रीतिरन्यार्था; अतः सा फलत्वेन प्रधानतया संबध्यते, न साधनत्वाद् गुणत्वेन पुंविशेषणम्। अपि च स्वर्गादि काम्यमानतया प्रधानमित्येवं स्थितम्; तदप्यनेन स्वर्गादिगुणत्ववादिना नावबुद्धम्; अतोऽस्मै तदधिकरणं व्याचक्षीतेत्यर्थः। अपि च सर्वविधिनिषेधानां नाम शब्दः, रूपम् अर्थः, तदुभयात्मकप्रपञ्चविलय एव कार्यं तदपवर्गित्वे तत्पर्यवसायित्वेऽभ्युपगम्यमाने विधिनिषेधानामन्यपरत्वेन निष्प्रमाणकत्वात्, विहितप्रतिषिद्धयोरर्थानर्थसाधनत्वं न स्यात्; ततश्च प्राणिनां य इमे स्वर्गादयः अभ्युदयाः, ये च नरकादिष्वपि विनिपाताः, ते विहितप्रतिषिद्धकर्मनिमित्ता न स्युः; अतश्चाकर्मनिमित्ताः सन्त आकस्मिका अकारणकाः स्युः; न चाकारणं कार्यं युक्तमिति भावः। यदि त्वभ्युदयनिपाता आकस्मिका भवेयुः, ततोऽपवर्गोऽपि तथा तद्वदेवाकस्मिकः स्यात्; ततश्च तदुपायोपदेशकस्य शास्त्रस्य वैयर्थ्यं स्यात्; तदाह—तथेति। इतिशब्दो हेत्वर्थः।

अथ मतम्—यदा कदाचित् कश्चित् क्वचिद्वक्ति 'नगरं गच्छ, तत्र तावदमुकं ग्रामं गच्छ, ततोऽमुकम्' इति ; अत्र यथा तत्तद्ग्रामप्राप्तिकार्याणामपि तद्द्वारेण मार्गग्रामगमनोपदेशानां नगरगमनोपदेशानुप्रवेशित्वम्, एवं कर्मविधीनां स्ववाक्यसमधिगतस्वर्गादिकार्याणामपि स्वर्गादिकार्यद्वारेण ज्ञानाधिकारानुप्रवेशित्वात् भिन्नकार्यत्वेऽप्येकाधिकार्यत्वं भविष्यति; तदाह
P. 28-14 —अथेति । स्वर्गादिलोभात् कर्मविधिषु प्रवृत्तौ बाह्यप्रवृत्तिविलयात् स्वर्गादिकार्यस्य द्वारत्वं मन्तव्यम् । तत् दृष्टान्तं वैधर्म्येण दूषयति —तदसदिति । तत्र हि नगरप्राप्तिर्वक्तुरभिलषिता, न तु मार्गग्रामप्राप्तिः; अतोऽनीहितग्रामप्राप्त्युपदेशानां युक्तमीहितनगरप्राप्त्युपदेशानुप्रवेशित्वमित्यर्थः । कस्मात्पुनर्मार्गग्रामप्राप्तिरनीहितेत्यत आह—न हीति । नगरप्राप्तौ हि पराभिमतपुरुषार्थप्राप्तिर्भवति, न मार्गग्रामप्राप्तौ; तेन नगरप्राप्तिरेव वक्तुरीहिता, न मार्गग्रामप्राप्तिरित्यर्थः । अतो मार्गग्रामोपदेशाः पुरुषार्थसाकाङ्क्षत्वात् यत्र नगरगमनोपदेशे पुरुषार्थप्राप्तिः, तमनुप्रविशन्ति; तदाह —अत इति । कर्मविधिषु नैवमित्याह—न त्वेवमिति । स्वर्गादीनां स्ववाक्येषु श्रुतत्वादिति भावः । न च श्रुतानामप्यपुरुषार्थत्वम्, ततः कुतः कर्मविधिषु पुरुषार्थलाभ इति वाच्यमित्याह—स्वर्गादीनामिति । न हि पुरुषार्थो नाम जात्या कश्चिदस्ति, किं तु यत् पुरुषेणार्थ्यते स पुरुषार्थः; स्वर्गादयश्च तथा; अतस्ते पुरुषार्था इति न कर्मविधिषु पुरुषार्थालाभः । तथापि किमित्याह—तत्र चेति । तत्र तस्मिन् स्वर्गादिपुरुषार्थलाभे सति कर्मविधीनां मोक्षात्मकपुरुषार्थान्तरं प्रति नैराकाङ्क्ष्यात् कथमन्यस्मिन्नात्मज्ञानविधावनुप्रवेश इत्यर्थः । एवं पुरुषार्थकार्यवत्त्वेन दार्ष्टान्तिकदृष्टान्तयोर्वैधर्म्ये उक्ते परः पुनः साम्यमापादयति—अथेति । 'इमं ग्रामं गच्छ, तत्रायं गुणो यत्र मृष्टान्नादि सम्पत्स्यते' इत्युपदिष्टस्तत्र गतो लब्धमृष्टान्नश्चानेनैव क्रमेणोत्तरोत्तरग्रामगुणप्रदर्शनेनाभिमतनगरप्रदेशं प्रलोभ्य यदा कश्चित् नीयते, तदा पूर्वग्रामोपदेशाः प्राप्ताभिमतकार्याः, प्राप्तं लब्धमभिमतं पुरुषार्थरूपं मृष्टान्नादि कार्यं यैस्ते तथोक्ताः, स्ववाक्ये लब्धमृष्टान्नादिपुरुषार्थनिराकाङ्क्षा इति यावत्; ते यथा तन्निराकाङ्क्षाश्च नगरगमनविध्यन्तरानुप्रवेशिनश्च, तथा कर्मविधयोऽपि स्वर्गादिकार्यनिराकाङ्क्षा अपि

ज्ञानविधिमनुप्रवेक्ष्यन्तीति भावः। तद्दूषयति— युक्तमिति। एतदेव विवृणोति P. 28-22
— प्रमाणान्तरेति। एतदुक्तं भवति— यद्यपि पूर्वग्रामोपदेशाः फलवत्पूर्वग्रामप्राप्तिपराः शब्दवृत्तानुसारेण प्रतिभान्ति, तथापि 'नगरप्राप्तावस्य वक्तुरिदमभिमतं फलम्; अनेनैव चाभिप्रायेण तत्तद्ग्रामनगरगमनमुपदिष्टवान्' इति प्रमाणान्तरेण प्रतिपद्य पूर्वग्रामोपदेशानां नगरोपदेशानुप्रवेशं प्रतिपद्यते; तेन प्रमाणान्तरे सति भावात् तस्यायं प्रसादः, न शब्दवृत्तस्येति। न केवलं प्रमाणान्तरे सति भावात्, असति चाभावादप्येवमित्याह— इतश्चेति। प्रतिग्रामं वक्तुः श्रोतुश्च सत्यां मृष्टान्नादिप्रयोजनप्राप्तौ यदा वक्तुर्नगरग्रामगमनाभिप्रायः प्रमाणान्तरेण नावगम्यते, तदा पूर्वग्रामोपदेशान् पूर्वार्थान् पूर्वोऽर्थौ मृष्टान्नादि प्रयोजनं येषां ते तथोक्ताः तान् पूर्वार्थानेव पार्श्वस्था उदासीनाः प्रतिपत्तारश्च मन्यन्ते; न तु नगरग्रामप्राप्त्यर्थान्; नगरोपदेशं च स्वनिष्ठं मन्यन्ते। नैषामेकार्थत्वम्। यदि तु शब्दवृत्तानुसारेण पूर्वोपदेशानामुत्तरार्थत्वं स्यात्, ततस्तस्य नियतरूपत्वात् तत्रापि स्यात्; न त्वेवमस्ति; तस्मात् प्रमाणान्तरप्रसादः स इति भावः। ननु पूर्वपूर्वग्रामप्राप्तिं विनोत्तरोत्तरनगरप्राप्त्यभावात् तदर्था अपि किं न स्युरित्याशङ्क्याह— यद्यपीति; नोपकारमात्रेण शाब्दमैदमर्थ्यं भवतीति भावः। अत्र न्यायसिद्धदृष्टान्तमाह— द्रव्यार्जनादीनीति। यथा यजनादिद्रव्यार्जननियमविधेरद्रव्यस्य क्रतोरसिद्धेः क्रतुविध्युपकारे सत्यपि न शाब्दं क्रत्वैदमर्थ्यम्, तद्वदित्यर्थः। आदिशब्देनाधानादिविधेर्ग्रहणम्। एवं दृष्टान्ते शब्दतो निराकाङ्क्षाणामपि प्रमाणान्तराधीनं विध्यन्तरानुप्रवेशित्वमुपपाद्य कर्मविधिषु तदसंभवमाह— शब्दवृत्तेति। शब्दव्यापारानुसारेणेह कर्मविधिषु तात्पर्यं युक्तम्; न प्रमाणान्तरबलेन, वैदिकेऽर्थे तदसंभवात्। शब्दवृत्तं च प्रतिविध्यर्थं पर्याप्तम्, न ज्ञानविधिपर्यन्तं याति; अतो न तदनुप्रवेश इति भावः। किं च मार्गग्रामोपदेशानामपि न परदेशप्राप्तिपरता; अतो दृष्टान्तासिद्धिः; यतोऽवगतेऽपि परदेशगमनाभिप्राये 'तच्चेदं चास्याभिप्रेतम्' इति मार्गग्रामप्राप्तिपरत्वाभिमानेनैव मार्गग्रामगमनमृष्टान्नादिफलप्राप्तिश्च भवति नगरप्राप्तिपरत्वे तु तेषां मार्गग्रामप्राप्तेरविवक्षितत्वात् नगरप्राप्तेरेव विवक्षितत्वान्मार्गान्तरेणापि गच्छेत्। न च नियोगतः फलप्राप्तिः स्यात्,

अन्यपरेषु फलश्रुतेः "द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात्"
P. 29-6. इत्यर्थवादत्वादिति। तदेतत्सर्वमाह—अपि चेति। इममेव न्यायमुपजीव्याह —तदिति। यदि विधिनिषेधानां ज्ञानकार्यमोक्षपरत्वं स्यात्, ततो न ते स्वर्गादिकार्याः स्युः; अतश्च जन्तूनामभ्युदयविनिपाता निर्निमित्ताः स्युरिति भावः; स्वर्गादिः कार्यो येषामिति विग्रहः। यद्यपि कर्मविधीनामुत्तरो विचारोऽनुवर्तते, तथापि तुल्यदोषत्वादुपक्रमे चोपन्यासादिह निषेधानां निक्षेपः कृतः। स्वर्गादीत्यादिशब्देन नरकाद्यपि ग्राह्यम्। ननु प्रधानोपकारलक्षणं प्रयाजादिकार्थं यथा प्रधानकार्यस्वर्गादिपरमपि नाविवक्षितम्, तथा स्वर्गाद्यपि कार्यमात्मज्ञानकार्यमोक्षपरमपि नाविवक्षितं भविष्यति; ततश्च विधिनिषेधा ज्ञानकार्यपरा अपि स्वर्गादिकार्याः किं न स्युरित्याशङ्क्याह—न खल्विति। प्रयाजादेः कार्यस्य स्वयमपुरुषार्थत्वात् पुरुषार्थकार्यानुप्रवेशो युक्तः; न तु स्वर्गादिकार्यस्य, स्वयं पुरुषार्थत्वादिति भावः। एवं तावच्छ्रुतस्वर्गादिनिराकाङ्क्षाः कर्मविधयो नात्मज्ञानाधिकारमनुप्रविशन्तीति स्थितम्।

इदानीं यदुक्तम्—दृष्टेनैव कर्मविधय आत्मज्ञानाधिकारोपयोगिन इति, तद्दूषयति—कथं चेति। अत्र पराभिप्रायमाशङ्कयति—यदीति। यदि तावद्रागद्वेषादिप्रयुक्तदृष्टार्थप्रवृत्तिप्रतिबन्धद्वारेण समाहितत्वमापादयन्तः कर्मविधयो दृष्टेनात्मज्ञानाधिकारोपयोगिन इत्युच्यत इत्यर्थः। तद्दूषयति—भवत्विति। प्रतिषेधानां रागादिप्राप्तप्रवृत्तिनिवृत्त्यर्थत्वाद्भवतु ज्ञानाधिकारं प्रति दृष्टोपकारित्वम्, न च कर्मविधीनामित्यर्थः। अत्र हेतुमाह—न हीति। परिसंख्यायां हि रागतस्तत्र चान्यत्र च प्राप्तौ "पञ्च पञ्चनखा भक्ष्याः" "शशकः शल्यकः" इति शशकादिव्यतिरिक्तमनुष्यादिपञ्चनखभक्षणनिवृत्तिपरं वाक्यम्। तथा "व्रीहिभिर्यजेत" इति यागापेक्षद्रव्यमात्रप्राप्तौ तदन्तर्गतत्वेन व्रीहेरपि प्राप्तत्वाद्द्रव्यान्तरनिवृत्तिपरं वाक्यम्। कर्मविधयस्तु न नियामकाः, न परिसंख्यापकाः; किं तु विधायका एव; अतो नान्यनिवृत्तिपरा इत्यर्थः। कुत इत्यत आह—अत्यन्तमिति। न

प्राप्तोऽर्थो विषयो रागादिना येषां ते तथोक्ताः, कर्मविधयोऽन्यपदार्थः । न ह्यग्निहोत्रादौ रागादिभिः प्रवृत्तिः प्राप्तेति भावः । कस्मात्पुनरत्यन्तमप्राप्तार्था अपि कर्मविधयो नियामकाः परिसंख्यायका वा न स्युरित्यत्र हेतुमाह—प्राप्तार्थो हीति । रागादिभिः प्राप्तो विषयो यस्य विधेः स P. 29-14. प्राप्तप्रापकत्वे वैयर्थ्यादन्यनिवृत्तिफलो विज्ञायते; कर्मविधयस्त्वत्यन्तमप्राप्तं प्रापयन्त एव सप्रयोजना इति न वैयर्थ्यदोषादन्यनिवृत्तिप्रयोजना विज्ञायन्त इत्यर्थः । तदुक्तम्—

"विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति कीर्त्यते" ॥ इति ।

यद्यपि नाम कर्मविधयो न रागादिजप्रवृत्तिनिवृत्तिफलाः, तथापि रागादिजवैधप्रवृत्त्योस्तुल्यकार्यत्वलक्षणेन विरोधेन वैधप्रवृत्त्या रागादिजप्रवृत्तेर्निवृत्तिर्भविष्यति; तथा हि—यदेव रागादिजप्रवृत्तेः सुखम्, तज्ज्योतिष्टोमादिवैधप्रवृत्तेरपि; तच्च वैधप्रवृत्तित एव सिद्धमिति कृतकार्यत्वाद्रागादिजप्रवृत्तेर्निवृत्तिरिति यद्युच्येत तदपि नेत्याह—न चेति । कुत इत्याह—अनियतेति । अनियतकालं फलं यासामिति विग्रहः । अनियतकालफला नैयोगिक्यः प्रवृत्तय इह वामुत्र वा फलप्रदाः; अतोऽदृष्टार्थास्ताः; रागादिप्रयुक्तास्तु स्वाभाविक्यो रागादेः पुरुषस्वभावाज्जाताः प्रवृत्तयो दृष्टार्थाः । दृष्टार्थत्वेनैहिकफलत्वं लक्षयन्ति; ऐहिकफला इत्यर्थः । ततश्च भिन्नकालकार्यत्वात् तयोरविरोध इति न नैयोगिक्या प्रवृत्त्या रागादिजप्रवृत्तेर्बाधः । यद्वा अभ्यर्हितत्वाद् दृष्टार्थयैवादृष्टार्थाया बाधः स्यादिति भावः । ननु स्वर्गादिफलमामुष्मिकमेव; तत्कथमविशेषेणोक्तम्—अनियतकालफला इति ? विधिशक्तिमपेक्ष्येदमुक्तम्, न वस्तुनः शक्तिम्; न हि विधिरिह वा अमुत्र वा स्वर्ग इत्याह, कालविशेषानिर्देशात्; वस्तुशक्तिस्त्वेषा—यदिह स्वर्गो भोक्तुं न शक्यत इत्यमुत्रैव स्यादिति । यद्वा उपलक्षणमनियतकालत्वम्, आमुष्मिकफलत्वमपि द्रष्टव्यम्; तत्रापि कालभेदादविरोध एव । विपरीतो वा बाधः । किं च यदि दृष्टादृष्टार्थप्रवृत्त्योस्तुल्यकार्यत्वे विरोधः स्यात्, ततः सेवासाङ्ग्रहण्योरपि स्यात्; न चैव-

P. 29-17. मस्तीत्याह—न चेति । साङ्ग्रहण्या ग्रामकामेष्टेरदृष्टार्थाया दृष्टार्थायाश्चेश्वरसेवाया एकग्रामकार्योपायत्वेऽपि सति न कश्चिद्विरोधः, फलभूमार्थिन उभयत्र प्रवृत्तिसंभवादिति भावः । विरुन्ध्यादपि साङ्ग्रहणी सेवाम्, यदि तद्विधिशास्त्रमन्यनिवृत्तौ प्रमाणं भवेत्; 'साङ्ग्रहणी कार्या' इत्येतावति तु तत्प्रमाणम्, नान्यनिवृत्तौ; अतो न तयोर्विरोध इत्याह—एतावतीति । तत्रैवमविरोधे सति युगपत् क्रमेण वा फलभूमार्थिनः फलबहुत्वार्थिनः सेवासाङ्ग्रहण्यावनुतिष्ठतः को विरोध इत्याह—तत्रेति । ततश्च यथा तत्र तुल्यकार्यत्वेऽप्यविरोधः, तथेह नैयोगिकरागाक्षिप्तप्रवृत्त्योरपि तुल्यकार्यत्वेऽप्यविरोधान्न मिथो बाध्यबाधकभाव इति भावः । किं च नैयोगिकप्रवृत्तिभ्यो रागाद्याक्षिप्तप्रवृत्तिनिरोधेऽभ्युपगम्यमाने नियोगनिष्ठा अपि प्रवृत्तयो निरुध्येरन्; अतश्च इष्टविघातकार्येयं पक्ष इत्यभिप्रायेणाह—अपि चेति । अत्र हेतुमाह—अनार्जितधनस्येति । न उपार्जितं धनाख्यं साधनं येन तस्यानार्जितधनस्य, अत एव यागादिसाधनपश्वादिद्रव्येण विकलस्य हीनस्य पुंसोऽशक्तत्वेनानधिकारात् तासां नियोगनिष्ठप्रवृत्तीनां द्रव्यसाध्यानामसंभवान् अवश्यं धनार्जनं कार्यम्; तच्च रागप्रयुक्तम्, न तु क्रतुप्रयुक्तमिति कर्मकाण्डे सिद्धम्; तत्र नैयोगिकप्रवृत्तीनां रागाक्षिप्तप्रवृत्तिनिरोधकत्वे धनार्जनमपि निरुध्येत; अतश्चासाधनस्य नैयोगिकप्रवृत्त्यसंभवात् ता अपि विरुध्येरन्निति भावः ।

दूषणान्तरायोपक्रमते—अपि चेति । दृष्टार्थायाः स्त्रीसंभोगादिप्रवृत्तेरदृष्टार्थायाश्च ज्योतिष्टोमादिप्रवृत्तेस्तुल्ये सुखोपायत्वे रागप्रयुक्तत्वे न कश्चिद्विशेषः; उभे अपि सुखरागप्रयुक्ते इत्यर्थः । तुल्यत्वमेव दर्शयति—तथा हीति । इतिशब्दः स्वरूपनिर्देशार्थः । स्वर्गकामशब्देन "तस्य लिप्सार्थलक्षणा" इति न्यायेन स्वर्गे रागतः प्राप्तां प्रवृत्तिमनूद्य तत्र ज्योतिष्टोमादिसाधनविशेषो विधीयत इत्यर्थः । यदि नाम दृष्टादृष्टार्थप्रवृत्तीनां रागप्रयुक्तत्वं तुल्यम्, तथापि किमित्यत आह—तथा चेति । तथा तुल्ये रागप्रयुक्तत्वे सति च रागाक्षिप्तसुखसाधनादिप्रपञ्चाभिनिवेशे तुल्ये को विशेषः, येन नैयोगिकी आत्मज्ञानं प्रत्यनुगुणा भवति, अपरा

तु दृष्टार्था आत्मज्ञानविरोधिनीति; न कोऽप्यस्तीत्यर्थः । अविशेषे हेतुमाह—कामेति । कामः सुखाभिलाषो रागः, तेनाकर्षणं मनसो दृष्टा- P. 22-24.
र्थायामदृष्टार्थायां च प्रवृत्तावविशिष्टम्; दृष्टार्थप्रवृत्तिवददृष्टार्थायामपि स्वर्गादिसुखकामाकृष्टं मनोऽसमाहितं नात्मज्ञानक्षमम्; अतः सापि तद्विरोधिनीति भावः । अथ स्वर्गस्य गुणत्वेनान्वयान्न ज्योतिष्टोमादेः काम्यस्वर्गोपायत्वम्; अतो न तत्र कामाक्षेपो मनस इत्यस्ति विशेष इत्याशङ्कयति—अथेति । तत्र दूषणमाह—वर्णितमिति । ज्योतिष्टोमादेरकामोपायत्वे जन्तूनामभ्युदयविनिपाता आकस्मिकाः स्युरिति वर्णितमित्यर्थः । दोषान्तरमाह—उक्तश्चेति । स्वर्गस्य साध्यत्वेनान्वय इति षष्ठाद्ये जैमिनिनोक्तश्च न्यायः प्रत्युद्ध्रियेत; उच्छब्द उद्धारार्थः; प्रतिशब्दश्च तत्प्रातिपक्षार्थः; अधः क्रियेतेत्यर्थः । पूर्वापरविरुद्धश्चायं पक्ष इत्याह—तुल्येति । दृष्टादृष्टार्थप्रवृत्त्योस्तुल्यकार्यत्वेन विरोधात् या पूर्वं दृष्टादृष्टार्थप्रवृत्त्योर्निरोधाशङ्का कृता, सापि ज्योतिष्टोमादेरकामोपायत्वे तुल्यकार्यत्वाभावात् दूरे निरस्तावकाशा स्यादित्यर्थः; दूरनिरस्तोऽवकाशो यस्या इति विग्रहः । प्रकारान्तरेण कर्मविधीनामात्मज्ञानानुगुण्यं दृष्टेनाशङ्कयति—अथेति । कामस्याप्राप्तौ कामानुकूलः पुरुषोऽसमाहितत्वान्नात्मज्ञानक्षमः; कर्मविधिभिः काम्येषु प्रापितेषु कामनाः प्रविलीयन्ते; तेन काम्यप्राप्तिद्वारेण कर्मविधयः कामान् कामनाः प्रविलापयन्त आत्मज्ञानाधिकारानुगुण्यं भजन्त इत्यर्थः । प्रविलीनकामस्य ज्ञानोत्पत्तिद्वारेण मुक्तिरित्यत्रैव श्रुतिमाह—यथोक्तमिति । तद् दूषयति—तदप्यसदिति । कुत इत्याह—यत इति । साधु ब्रूते भवान्, यदि कामप्राप्त्या तत्कामनाः प्रविलीयन्ते; न तु तत्प्राप्त्या ताः प्रविलीयन्त इत्यर्थः । केन तर्हि तत् प्रविलीयन्त इत्यत आह—अपि त्विति । विषयाणामनित्यतादिदोषपरिभावना अनुचिन्तनम्, ततो भवतीति दोषपरिभावनोद्भूतेन प्रसंख्यानेन विवेकेन विलय इत्यर्थः । काम्यसंस्पर्शस्तु मनसो विपर्ययकारीत्याह—कलयेति । मात्रयापि चेत्काम्यैर्मनः संस्पृश्यते ततो ह्रियत एव तदत्यन्तमाकृष्यत एव तैर्हारिभिः मनोहरणशीलैः; न तु तेभ्यो निवृत्तकामं मनो भवतीत्यर्थः । तदेवाभियुक्तवाक्याभ्यां द्रढयति—

P. 30-6. उक्तमिति । न केवलं धर्मविधयः काम्यविलयहेतवो न भवन्ति, प्रत्युत विपर्ययकारिण इत्याह— अनुपायत्वादिति । कर्मविधिष्वसत्सु कामोपायभूतयागाद्यज्ञानादनुपायत्वादपि तावदयं पुमान् कामेभ्यो निवर्तेत; उपशाम्यत्यनेनेत्युपशमः, निखिलस्याविद्यादेः क्लेशस्योपशमः, तद्रूपं चात्मज्ञानमाश्रयेन्; कर्मविधिषु तु सत्सु तैर्दर्शितो विविधो यागदानादिरुपायो यस्य स तथाविधः पुमान् तानेव काम्यान् प्रकृतिहारिणः प्रकृत्या स्वभावेन मनो हर्तुं शीलान्, प्रकृतिं च स्वभावं पुंसो हर्तुं शीलान्, अपि तु तं विकृतं कर्तुं शीलानभिनिविशेत तेष्वेव सुतरां बद्धग्रहो भवेत्; तेषां कामानां च प्रविलयः, प्रविलीयतेऽनेनेति प्रविलयः, तद्रूपाच्चात्मज्ञानादिष्टविघातकत्वेनोद्विजेतेत्यर्थः ।

ननु विषयसुखमनित्यमल्पं दुःखानुषङ्गि च; ज्ञानफलं च परमानन्दस्तद्विपरीतः, "परमो ह्येष आनन्दः" इति श्रुतेः; तेन तत्रैवाभिलाषः प्राप्तः; स च विषयानन्दाभिलाषमुच्छेत्स्यति; तेन सत्स्वपि कर्मविधिषु तत्फलकामेभ्यो निवर्तेत, न तेष्वभिनिविशेत; न चात्मज्ञानादुद्विजेतेत्याशङ्क्याह— श्रुतोऽपीति । विषयानन्दो ह्यसकृदनुभूतः; यश्चानुभूतः स एव चित्तमाकर्षति; न तु श्रुतिमात्रगम्यः, अननुभूतत्वादिति भावः । प्रागेवेति ; किमुतेत्यर्थः । उपसंहरति—तस्मादिति । अतो न कामप्रविलयद्वारेण दृष्टेनैव कर्मविधीनां ज्ञानविध्यधिकारानुप्रवेश इति सिद्धम् । यद्यपि कामप्रविलयपक्षो द्वितीयः, तथापि कर्मावधीनां दृष्टेनैवोपयोग इत्येतत्पक्षदूषणप्रसङ्गेनेहोक्त इत्यदोषः ।

यदप्युक्तं सर्वत्र वेदे क्वचित् कस्यचिद्देहस्य विलयो गम्यत इति, तदप्यनुभाष्य दूषयति—यदपीति । 'उक्तम्' इति वाक्यशेषः । कथमसदित्याह— अनिदमिति; "स्वर्गकामो यजेत" इति वाक्यस्येति शेषः । तदेव विवृणोति—न हीति । यत्परः शब्दः स शब्दार्थः; इदं तु स्वर्गकामवाक्यं न देहातिरिक्तात्मतत्त्वावबोधपरम्, श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्; अपि तु यागनियोगपरम्; अतोऽत्रैव तत् प्रमाणम्; न पूर्वत्रेति भावः । ननु यद्यपि देहातिरिक्तमात्मतत्त्वं न श्रुतम्, तथापि देहस्यानित्यस्य

जडस्य च जन्मान्तरीयस्वर्गोपभोगाशक्तेरर्थादिदं देहातिरिक्तमात्मतत्त्वमवगम्यते; भवति चान्यपरादर्थगम्योऽपि वेदार्थः; यथा "उपरि हि देवेभ्यो धारयति" इति हेतुपरादुपरिधारणविधिः; ततश्च देहात्मविलयो ज्योतिष्टोमादिविधेरर्थ इत्यभिप्रायेणाशङ्कयति—<u>अथेति</u> । दूषयति—<u>तदपीति</u> । P. 30-16.
तदपि हस्तिनि प्रत्यक्षेण दृष्टे हस्तिपदेन हस्तिनोऽनुमानं यथा व्यर्थत्वादनपेक्षितम्, तादृशमित्यर्थः । ननु तत्र प्रत्यक्षसिद्धो हस्ती, न त्विह तथा देहात्मविलय इत्याशङ्क्याह—<u>साक्षादिति</u> । सत्यमात्मज्ञानविधिर्देहात्मविलयमपेक्षते, स तु प्रत्यक्षश्रुतिलब्ध इति न तमर्थलभ्यमपेक्षते ; "यश्चार्थादर्थो न स शब्दार्थः" इति च न्यायः; ततश्चार्थगम्यो देहात्मविलयो न ज्योतिष्टोमादिविधिषु वेदार्थः; धारणे पुनरप्राप्तस्यानुवादासंभवात् तद्विधिरिति वैषम्यमिति भावः । किं च अर्थसिद्धमपि चेद्वेदार्थः स्यात्, ततो देहात्मत्वे देहस्यानित्यस्य जन्मान्तरीयफलभोक्तृत्वासंभवं मन्वानस्य तत्कामनया भोक्तृत्वाभिमानेन च यो मनसो ग्रन्थिः स शिथिलीभवेदपि; देहातिरिक्तेऽप्यात्मनि वेदार्थे यथा सोऽर्थगम्यो वेदार्थस्तथा तस्य नित्यस्य जन्मान्तरीयफलभोगं मन्वानस्य पुंसः तत्कामादिग्रन्थेः काठिन्यं दृढत्वं यदर्थात् सिध्यति तदपि वैदिकं स्यात्; ततश्च ज्योतिष्टोमादिविधयो विरक्तात्मज्ञानविधिप्रतिकूलत्वान्न तदेकवाक्यतां यायुरित्यभिप्रायेणाह—<u>अर्थाच्चेति</u> । वेददर्शितविविधोपायत्वेन वा यत् कामादिग्रन्थेः काठिन्यं तद्वैदिकं स्यादित्यर्थः । चकारो दूषणसमुच्चये ।

एवमाद्यपक्षं दूषयित्वा कामनिवर्हणद्वारेण कर्मविधीनामात्मज्ञानानुप्रवेशपक्षं द्वितीयं दूषयति—<u>द्वितीयोऽपीति</u> । "न जातु कामः कामानाम्" इत्यादिना वर्णितादेव काम्यानां कामनाविच्छेदसामर्थ्याभावात् स्ववाक्योपात्तस्वर्गादिकार्यनिराकाङ्क्षाणां कर्मविधीनामात्मज्ञानविध्यनुप्रवेशे वर्णितादेव प्रमाणाभावात् द्वितीयोऽपि पक्षोऽसमञ्जस इति व्यवहितेनान्वयः। किं च कर्मविधीनां सहस्रसंवत्सरान्तानां ज्ञानविधिशेषत्वे अङ्गप्रधानयोरेकाधिकारत्वे सति ज्ञानाधिकृतेनैकेनैव मुमुक्षुणा कृत्स्नकर्मोपसंहारः कर्तव्यः; ततश्च सर्वकर्मणां ज्ञानेन समुच्चयः, एकेन च कर्त्रोपसंहारः स्यात्; स चाशक्य इत्याह—<u>एकाधिकारत्व इति</u> । एकस्याधिकारो येष्विति विग्रहः । इतिः समाप्तौ ।

इदानीमुद्देशक्रमप्राप्ताननन्तरपक्षाननादृत्य बहुवक्तव्यत्वादात्मज्ञानस्य
P. 31-1. कर्तृसंस्कारतया कर्माङ्गत्वपक्षं दूषयितुमनुभाषयति—येऽपीति । पूर्वं कर्म ज्ञानाङ्गमित्युक्तम्, अधुना तु ज्ञानं कर्माङ्गमिति विपर्ययार्थः । तद्दूषयति—तैरिति । तैरपि ज्ञानस्य कर्मभिः संबन्धे श्रुत्यादीनामन्यतमं प्रमाणं वाच्यम्, तच्च दुर्वचमिति भावः । ननु व्रीहिप्रोक्षणादिसंस्कारवत् कर्तृसंस्कारतयात्मज्ञानं कर्मभिः संबध्यत इत्याशङ्क्य तद्वैषम्यमाह—न तावदिति । यथा तत्र कर्मभिः संबन्धे प्रमाणमस्ति न तथात्रेति शेषः । तत्र प्रोक्षणादौ तावत् कर्मसंबन्धे प्रमाणमाह—तत्र हीति । तत्र हि व्रीहिस्वरूपस्य कर्मण्यनुपयोक्ष्यमाणस्यासाधनीभूतस्य प्रोक्षणेन न कश्चिदर्थ इति व्रीहिस्वरूपप्रोक्षणस्यानर्थक्यादन्यत्र साधनीभूतं व्रीहिशब्दो लक्षयति; तत्रापि प्रकरणगृहीतस्य प्रोक्षणस्याप्रकृतकर्मापूर्वसाधनसंबन्धे प्रकरणबाधः स्यादिति प्रकरणात् प्रकृतकर्मापूर्वसाधनामिति गम्यते; तदेवं प्रकृतकर्मापूर्वसाधनत्वलक्षणद्वारेण व्रीहिशब्दः प्रोक्षणस्य प्रकृतकर्मापूर्वसंबन्धं बोधयतीत्यर्थः । ननु पर्णमयीत्ववदात्मज्ञानमसत्यपि प्रकरणे कर्मणा किमिति न संबध्यत इत्याह—नापीति । यथा "यस्य पर्णमयी जुहूर्भवति" इत्यत्र कर्मसंबन्धः, तथात्रेति वाक्यशेषः । कुत इत्याह—तत्रापीति । तत्रापि जुह्वादिद्रव्यमव्यभिचरितकर्मसंबन्धं न व्यभिचरितः कर्मसंबन्धो यस्य तत् तथोक्तम्; कर्मसमवेतमेव हि जुह्वादिद्रव्यम्, नान्यत्र तत्; अत एवासत्यपि प्रकरणे कर्मोपस्थापयतीत्यर्थः । ननु यदि नामैवं तथापि पर्णमयीत्वस्य केन प्रमाणेन कर्मसंबन्ध इत्यत आह—तत्रेति । तत्र तस्मिन् सति, तत्र वा पर्णमयीवाक्ये वाक्येनैव कर्मसंबन्धः; पर्णमयीत्वस्येति शेषः । तद्धि वाक्यं क्रत्वव्यभिचरितसंबन्धजुह्वनुवादेन पर्णमयीत्वं विदधत् क्रतुमनुप्रवेशयतीति भावः । एवं दृष्टान्तद्वये कर्मसंबन्धहेतुमुक्त्वा दार्ष्टान्तिके तदसंभवमाह—आत्मज्ञानं त्विति । नात्मज्ञानं प्रकरणे श्रुतम्, कर्मकाण्डबहिर्भावाज्ज्ञानकाण्डस्य; नाप्यव्यभिचरितक्रतुसंबन्धम्, लौकिकेऽपि कर्मण्यात्मनः कर्तृत्वस्येष्टत्वादिति भावः । तेन प्रमाणाभावादात्मज्ञानस्य कर्तृसंस्कारतया कर्मसंबन्धो वक्तुं न शक्यत इत्याह—तेनेति । आत्मज्ञानस्य कर्मसंबन्धाभावे

यदभिमतं सिद्धं भवति, तदाह—तथा चेति। आत्मज्ञानस्य कर्मसंबन्धाभावे सति अज्ञाते पारार्थ्ये "द्रव्यसंस्कारकर्मसु फलश्रुतिरर्थवादः स्यात्" इति न्यायेन "न च पुनरावर्तते" इत्यादिफलश्रुतिरर्थवादिनी न भवतीत्यतः पृथक्फलत्वात् पृथगधिकारत्वमिति 'ज्ञानकर्मणोर्विपर्ययेणैकाधिकारत्वम्' इति यदुक्तं तन्निरस्तं भवतीति भावः। ननु स्यादेवं यदीयं फलश्रुतिः स्यात्; इयं तु "घृतकुल्याः क्षरन्ति" इतिवत् वर्तमानापदेशत्वात् स्वर्गकामादिवत्कामोपबन्धाभावाच्च स्वरसतः फलश्रुतिर्न भवति; ततश्च यथा रात्रिसत्रे "प्रतितिष्ठन्ते" इति 'प्रतितिष्ठेरन्' इति विपरिणमय्य फलं कल्पितम्, तथा कल्पनीयम्; तच्च फलाकाङ्क्षायां सत्यां रात्रिसत्रवत् कल्पनीयः; न च दृष्टे फले सति फलाकाङ्क्षा भवति; अस्ति चात्मज्ञानस्य देहान्तरभोग्यफलेषु कर्मसु प्रवृत्तिर्दृष्टप्रयोजनम्; न हि नित्यात्मज्ञानं विना सा स्यात्; अतो न विपरिणमय्य फलं कल्प्यमित्यभिप्रायेणाशङ्कयति—अथेति। तस्मात् यथाध्ययनविधिर्दृष्टार्थो नार्थवादादिकं फलं प्रार्थयते, तथात्मज्ञानविधिरपीत्याह—तस्मादिति। अतः पृथक्फलाभावान्न कर्माधिकारादात्मज्ञानविधावधिकारान्तरमिति सिद्धमेकाधिकारत्वं ज्ञानकर्मणोरित्याह—तथेति। इतिर्हेत्वर्थः। तदेतद्दूषयति—तदप्यसदिति। कथमसदित्याह—यत इति। यस्मात् कर्मविध्यपेक्षितात् कर्तुः भोक्तुश्चात्मनोऽन्य एवाकर्तृभोक्तृरूप औपनिषद उपनिषदेकगम्यः पुरुषो वेदान्तेषु जिज्ञास्यते। न च तस्य ज्ञानं कर्मणि प्रवृत्तिहेतुरित्यर्थः। कुतस्तद्धेतुर्न भवतीत्याह—न हीति। कर्ता भोक्ता च कर्मसु प्रवर्तते; तेन तज्ज्ञानं कर्मप्रवृत्तिहेतुः, न पुनरौपनिषदात्मज्ञानम्; न हि तस्यौपनिषदात्मनः कर्तृत्वभोक्तृत्वे स्त इत्यर्थः। कुतः पुनस्तस्य कर्तृत्वभोक्तृत्वे न स्त इत्यत आह—एवमिति। 'नाश्नाति' न भुङ्क्ते, 'अनश्नन्' अभुञ्जान इति च भोक्तृत्वनिषेधः। उपलक्षणमिदम्; "निष्कलं निष्क्रियम्" इति "नायं हन्ति न हन्यते" इति च कर्तृत्वनिषेधो द्रष्टव्यः। एवं वेदान्तवेद्यस्यात्मनः कर्मण्यप्रवृत्तिमुक्त्वा यस्तु कर्मणि प्रवर्तते कर्ता भोक्ता च, न स वेदान्तवेद्य इत्याह—यस्त्विति। P. 31-7.

एवशब्दोऽवधारणार्थः । यस्तु कर्ता भोक्ता जीवः, स एव प्रत्यक्षसिद्धः 'अहम्' इत्यपरोक्षतया व्यवहारे स्वतः सिद्धः, न परमात्मा; तेन सोऽधिगतत्वात् न वेदान्तशब्दगम्य इत्यर्थः । अत्र चोदयति—नन्विति । जीवपरमात्मनोरभेदे परमात्मनि शब्दगम्ये जीवोऽपि शाब्द एव; अतः कथं न शब्दगम्य इत्युक्तमिति भावः । एकत्वमेव श्रुत्या द्रढयति—
P. 31-18. एवमिति । "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति श्रुतिः 'जीवेनात्मना' इति सामानाधिकरण्यात् 'व्याकरवाणि' इति चोत्तमपुरुषप्रयोगाज्जीवात्मनोरभेदमाह; तत्कथमनयोर्भेद इत्यर्थः । सिद्धान्ती तयोस्तात्त्विकमभेदमभ्युपगम्य शब्दगम्यागम्यत्वे व्यवस्थामाह—सत्यमिति । तस्यैव तु जीवस्यैकत्वेनाभिन्नस्य बिम्बप्रतिबिम्बादिवत् कल्पितभेदस्य कर्तृशक्त्यहङ्काराविद्यानुविद्धं बिम्बस्येव दर्पणाद्यनुविद्धं श्यामादिरूपं जीवाख्यमेकरूपमस्ति; तच्च कर्तृत्वात् कर्मणां प्रवृत्तिहेतुः, प्रत्यक्षसिद्धत्वान्न वेदान्तमपेक्षते; तेन तच्छब्दगम्यं न भवति । यत्तु तस्यैवाविद्याननुबद्धं रूपं स्वयंप्रकाशं सर्वकर्तृत्वादिविभागशून्यम्, तत् तादृशं लोकव्यवहारेष्वसिद्धत्वाच्छब्दाज्ज्ञातुमिष्यते; ततश्च सिद्धं जीवपरयोरभेदेऽपि परः शब्दप्रमेयः, न जीव इत्यर्थः । न च परज्ञानस्यैव वेदान्तजस्य कर्मसु प्रवृत्तिर्दृष्टं प्रयोजनमित्याह—तच्चेति । तच्च वेदान्तवेद्यं रूपं कर्मप्रवृत्तेर्विरोधि; कथं तज्ज्ञानस्य कर्मप्रवृत्तिर्दृष्टं प्रयोजनं स्यादित्यर्थः । विरोधित्वं प्रकटयति—तथा हीति । ब्रह्मानन्दादिरूपमात्मानं जानतः पुंसः प्रवृत्तौ प्रयोजनं सामर्थ्यं च नास्तीत्यर्थः । चाशब्दश्चार्थे । कुतः पुनर्ब्रह्मात्मविदः प्रयोजनसामर्थ्ये न स्त इत्यत आह—आप्तकामत्वादिति । तत्राप्तकामत्वं निष्प्रयोजनत्वे हेतुः । साधनाद्युपायाभावश्च प्रवृत्तावसामर्थ्ये हेतुः । आप्तकामत्वे च पूर्वोक्तं परमानन्दरूपत्वं हेतुः, सर्वानन्दानां तत्रान्तर्भावात् । अद्वयत्वं च कर्मसाधनेतिकर्तव्यताद्युपायाभावे हेतुरिति विवेकः । एवमविद्यानुबद्धं रूपं कर्मप्रवृत्तिहेतुः, न त्वौपनिषदम्; अतो न तज्ज्ञानं कर्माङ्गमिति स्थितम् । नन्वौपनिषदात्मज्ञानमेव कर्माङ्गत्वेन श्रुत्या चोदितम्, तत्कथमुच्यते न

तत्कर्माङ्गमितीति परश्चोदयति—स्यादेतदिति । यदि नामौपनिषदात्मज्ञानं P. 31-24.
दृष्टेन न कर्माङ्गम्, तथापि प्रयोजनादिवददृष्टेन भविष्यतीति भावः । ननु प्रवृत्तौ सत्यां प्रयोजनादिवददृष्टार्थत्वं स्यात्; औपनिषदात्मविदस्तु निष्प्रयोजनत्वान्निरुपायत्वाच्च कर्मणि प्रवृत्तिरेव नास्तीत्युक्तम्; अतः कुतौपनिषदात्मज्ञानमदृष्टेनाङ्गं भविष्यतीत्युच्यते? एताभ्य एव वक्ष्यमाणश्रुतिभ्यः परमानन्दाद्वयश्रुतिरुपचरितार्थे कल्प्येतेति परो मन्यते; ताः श्रुतीरुदाहरति—यदेवेति । 'विद्यया' इत्यात्मविद्योक्तेति पराभिप्रायः । तथा "यो वा एतदक्षरमविदित्वा गार्ग्यस्मिन् लोके जुहोति ददाति तपस्तप्यति बहूनि वर्षसहस्राण्यन्तवानेवास्य स लोको भवति" इतिश्रुत्या ब्रह्मविद्यारहिततया यागादिकर्मफलान्तवत्त्वप्रदर्शनद्वारेण केवलकर्मनिन्दया "न हि निन्दा निन्द्यं निन्दतुम्, अपि तु निन्दितादितरत् प्रशंसितुम्" इति विद्यासहितकर्मप्रशंसा कृता। प्रशंसा च विधानायेति ब्रह्मविद्याया यागाङ्गत्वं दर्शितम् । तथा "तं विद्याकर्मणी समन्वारभेते" इति संशब्दस्य सहार्थत्वात् ब्रह्मविद्याकर्मणोः समारम्भे सहभावो दर्शितः । एकप्रयोगे च कार्यारम्भे सहभावो भवति । न चासौ दर्शपूर्णमासवत्, समप्रधानयोः समुदाये फलाश्रवणात्, यागादिभ्यश्च फलश्रुतेः; यागादयः प्रधानम्, सामर्थ्यात्; विद्या अङ्गम्, "फलवत्सन्निधावफलं तदङ्गम्" इति न्यायादिति भावः । सिद्धान्ती त्वाह—पूर्वमिति । पूर्वं यत्प्रथममुपन्यस्तं "यदेव विद्यया करोति" इति वचनम्, तत्तावत् प्रकृता या उद्गीथविद्या उद्गीथे सामभक्तावक्षरोपासनलक्षणा तद्विषयम्, न ब्रह्मविद्याविषयम्; अतो न तस्याः कर्माङ्गत्वं बोधयतीत्यर्थः । 'विद्या' इति सामान्यशब्दोऽपि प्रक्रमविशेषात् विशेषे वर्तत इति वदितुं प्रकृतग्रहणम् । तावच्छब्दः क्रमार्थः । कथमुद्गीथविद्या प्रकृतेत्यत आह—ओमिति । तथा "यदेव विद्यया" इत्यतः परेणापि "यो वा एतदक्षरमविदित्वा" इत्यनेन क्षयिफलत्वेन कर्मनिन्दया अक्षरज्ञानस्तुतिः क्रियते, न तु ब्रह्मविद्यायाः कर्माङ्गत्वज्ञापनम् । ननु केवलकर्मनिन्दया विद्यासाहित्यं विधित्सितमिति गम्यते । नैवम्; एवं हि परस्तात् विद्यासहितं कर्म संस्तुयात्; इह तु "यदेतदक्षरं गार्गि विदित्वास्माल्लोकात् प्रेति स ब्राह्मणः" इत्यादिना केवलाक्षरज्ञानं स्तूयते; तस्मा-

दक्षरज्ञानस्तुतावेवास्य तात्पर्यम्, न विद्याकर्मणोः साहित्यविधावित्यदोषः।
32 5. तथा विद्याकर्मणोरन्वारम्भेऽपि साहित्यं नास्तीत्याह—विद्येति। भेदेनेति विभागेनेत्यर्थः। विभागमेवाह—विद्यावन्तमिति। ननु संशब्दे सहार्थे जीवति कथमेवं व्याख्यायते? विद्याकर्मणोरेकत्वसाहित्यासंभवादिति ब्रूमः। कथमसंभवः? उच्यते—न तावदपरविद्याकर्मणोरन्वारम्भे साहित्यम्, अन्योन्यनिरपेक्षत्वात्। अन्योन्यनिरपेक्षत्वं तु पृथक् फलश्रुतेः, ज्योतिष्टोमाग्निहोत्रादिवत्; एकफलत्वे हि कार्यारम्भे साहित्यं स्यात् यथा दर्शपूर्णमासयोः। परविद्या तु कर्मपरिपन्थिनी कथं कर्मणा समुच्चीयेत? न च सा जन्मान्तरारम्भिका, अपवर्गफलत्वात्। तस्माद्विभज्यैवापरविद्याकर्मणोरन्वारम्भकत्वम्। तदुक्तम्—"विभागः शतवत्" इति। संशब्दश्चाविवक्षितसहार्थः सम्यगर्थानुवादः। अतः सूक्तम्—भेदेनेति। प्रकरणार्थमुपसंहरति—तस्मादिति। एवमपीति; विपर्ययेणापीत्यर्थः। यद्वा न केवलमात्मज्ञानस्य दृष्टार्थत्वेन, अपि त्वेवमपि श्रुतिचोदितस्य तस्यादृष्टार्थतयापीत्यर्थः।

एवं ज्ञानं कर्माङ्गमिति विपर्ययपक्षं निरस्य पक्षान्तरं दूषयितुमनुभाषते—येऽपीति। असंबन्धमेव मन्यन्त इत्यनन्तरेण संबन्धः। कथं तयोर्विरोध इत्यत आह—द्वैतेति। साधनादिद्वैतविषयं कर्म, द्वैतरहितात्मविषयं त्वात्मज्ञानमिति हेतोर्विरोधादनन्वयः। इतिशब्दो हेत्वर्थः। दूषणमाह—तेषामिति। कुत इत्याह—प्रमाणादीति। यदि द्वैतविषयं कर्मेति विरोधादद्वैतज्ञानेन सह न संबध्यते, ततः प्रमाणप्रमेयप्रमात्रादिद्वैतमपि न तेन संबध्येत; न च प्रमाणाद्युपायसंबन्धमन्तरेण ज्ञानमुत्पद्यते; ततश्चाद्वैतज्ञानस्यानुत्पाद एव स्यादित्यर्थः। अथोच्यते—प्रमाणादिविभाग उपायः, उपेयं चाद्वैतज्ञानम्, तयोश्च पौर्वापर्यादयौगपद्यम्; अन्यथा सव्यदक्षिणशृङ्गवदुपायोपेयभाव एव न स्यात्; अतः कालभेदेन तयोरविरोधादन्योन्यसंबन्धे नाद्वैतज्ञानस्यानुत्पाददोष इति; तदाह—अथेति। यदि प्रमाणादिविभागाद्वैतप्रतिपत्त्योरविरोधः, ततो जातायामपि तस्यां प्रमाणादिविभागेन तथैवानुवर्तितव्यम्; अतो नाद्वैतप्राप्तिः; अतश्चानिर्मोक्षप्रसङ्ग

इत्याशङ्क्याह—प्रविलीयत एवेति । अद्वैतप्रतिपत्तौ सत्यां प्रविलीयत एव P. 32-10.
सर्वप्रमाणादिविभागः, अतो नानिर्मोक्षप्रसङ्ग इति भावः । यद्यद्वैतज्ञाने सति प्रमाणादिद्वैतं प्रविलीयते, प्राप्तं तर्हि तयोश्छायातपादिवद्विरोधः अनुपायत्वं च प्रमाणादिविभागस्य ; न हि प्रविलीयमानस्य कचिदुपायत्वं दृष्टम् ; अतो नाविरोधः, नाप्युपायत्वं प्रमाणादिविभागस्येत्याशङ्क्याह—न चेति । तत्राविरोधे तावद्धेतुमाह—उपायस्येति । न प्रविलाप्यप्रविलापकत्वमात्रेण विरोधः, किंतु कालभेदेन च, तादृशयोरपि छायातपयोर्भिन्नकालयोरविरोधात् । इह च तयोः कालभेदः ; तस्मादविरोध इति भावः । उपायत्वे हेतुमाह—तदा चेति । जाते अद्वैतज्ञाने प्रमाणादिद्वैतं प्रविलीयते, न पूर्वमेव ; पूर्वं च तस्योपायत्वम्, तदा च तदप्रविलीनमेवेत्यर्थः । इतश्च नानुपायत्वमित्याह—भेद इति । अद्वैतज्ञानस्य तावत् कार्यत्वादवश्यं कारणेन भाव्यम् ; न चाद्वैतमेव ब्रह्म तस्य कारणम्, तस्याकारकत्वात्, नित्यं च कार्योत्पत्तिप्रसङ्गात् ; अतः पारिशेष्यात् प्रमाणादिद्वैतेन भाव्यमिति भावः । यद्वा भेद एवान्योऽपीति सामान्याद्यभेदप्रतिपत्तावुपायो दृष्टः, तद्वत् प्रमाणादिभेदोऽपि भविष्यतीति भावः । एवं परमतमाशङ्क्य तदेवोपजीव्य कर्मज्ञानयोरसंबन्धहेतुं परोक्तं विरोधं परिहरति—नेति । यदि प्रमाणादिद्वैतं तूपायत्वाद्भिन्नकालमिति न तेनाद्वैतज्ञानस्य विरोधः, एवं तर्हि कर्मभिरप्युपायत्वादेव भिन्नकालैर्न तस्य विरोधः ; ततश्च न तस्य तैरसंबन्ध इति भावः । पर इदानीं कर्मणामनुपयोगेनोपायत्वमेवाक्षिपन् संबन्धमाक्षिपति—स्यादिति । भवेदेतत्कर्मणामुपायत्वं तेन च संबन्धः, यदि तेषामुपयोगः स्यात् ; स एव तु ब्रह्मणो नित्यत्वेनासाध्यत्वान्न विद्यते । न च कार्यसिद्धावनुपयुक्तस्योपायत्वमस्ति ; न चानुपायेऽपेक्षा ; न चानपेक्षितस्य संबन्ध इति भावः । कर्मणामनुपयोगे श्रुतिमुदाहरति—श्रूयत इति । अस्यार्थः—अकृतोऽकार्यो मोक्षो ब्रह्मस्वरूपं कृतेन कर्मणा नास्ति न भवति न सिध्यतीति । ननु मा भवतु ब्रह्मण्यसाध्ये कर्मणामुपयोगः, तज्ज्ञानोत्पत्तौ तु प्रमाणादिविभागस्येव केन वार्यत इत्याशङ्क्याह—न चेति । हेतुमाह—ज्ञानस्येति । ज्ञानं नाम प्रमाणाधीनम्, न कर्माधीनम् ; अन्यथा

कर्मापि सप्तमं प्रमाणं स्यात्; अतः प्रमाणस्यैव ज्ञानोत्पत्तावुपयोगः, न कर्मणामित्यर्थः। ननु यदि नाम कर्मणां ज्ञानोत्पत्तावुपयोगो नास्ति, ज्ञान-
32-16. कार्योत्पत्तौ तु सहकारित्वेनोपयोगो भविष्यतीत्याशङ्क्याह—न चेति। कुत इत्याह—ज्ञानस्येति। कार्यं हि संभूय कुर्वतः सहकारित्वम्, यथा क्षित्यादेरङ्कुरम्; न चात्मज्ञानस्य स्वविषयपरिच्छेदादन्यत् कार्यमस्तीत्यर्थः। नन्वस्त्येव ज्ञानस्य कार्यान्तरं मोक्षः; तथा च ज्ञानान्मोक्षः श्रूयत इत्याशङ्क्याह—न तस्येति। मोक्षो नाम ब्रह्मस्वरूपम्, तच्च नित्यमिष्टम्; तच्चेत्कार्यं स्यात्, ततोऽनित्यं स्यात्। अथवा मोक्षश्चेत् कार्यः स्यात्, ततस्तस्यानित्यत्वान्मुक्तस्य पुनरावृत्तिः स्यादिति भावः। ननु यदि नाम मोक्षः साक्षात्साध्यो न भवति, तथापि बन्धहेतुप्रध्वंसो ज्ञानस्य साध्यो भविष्यति; अतस्तत्र कर्मणां सहकारित्वेनोपयोग उपपत्स्यते; प्रध्वंसस्य च कार्यस्यापि नित्यत्वादनित्यत्वदोषोऽपि न संपत्स्यत इत्यभिप्रायेण पर आह—बन्धहेत्विति। ननु मोक्षः पुरुषार्थः, न बन्धहेतुविच्छेदः; स चेत् ज्ञानसाध्यः स्यात्, ततो ज्ञानमपुरुषार्थफलमनुपादेयं स्यात्; कुतश्च तदा मोक्षः स्यात्? न हि तस्य ज्ञानादुपायान्तरं श्रूयत इत्याशङ्क्य स एवाह—इतीति। इतिशब्दो हेतौ; यस्मात् बन्धहेतुविच्छेदो ज्ञानस्य साध्यः, तस्मात् तस्मिन् बन्धहेतौ ज्ञानाद्विच्छिन्ने तस्य बन्धहेतोरभावान्मुच्यते; ततश्च ज्ञानस्य मोक्षफलत्वान्नापुरुषार्थफलत्वम्, न च निरुपायत्वान्मोक्षासंभव इत्यभिप्रायः। तदेतद् दूषयितुं पृच्छति—क इति। इतर आह—अविद्येति। तद्दूषयति—न तर्हीति। विद्यायाः पृथक् व्यतिरिक्तो नाविद्याविच्छेदो विद्यासाध्योऽस्ति, यत्र कर्मणां सहकारित्वमिति भावः। किमिति नास्तीत्याह—यत इति। अग्रहणमविद्या, तच्च ग्रहणप्रागभावः, तस्य च निवृत्तिर्ग्रहणात्मकविद्योत्पाद एव, स्वप्रागभावविमर्दात्मकत्वात् भावोत्पादस्य; अतो नाविद्यानिवृत्तिर्विद्यया पृथक् साध्या, यत्र कर्मणां सहकारित्वं स्यादिति भावः।

अत्र चोदयति—स्यादिति। भवत्वग्रहणलक्षणायामविद्यायां विद्योत्पाद एवाविद्यानिवृत्तिरिति पृथक् साध्याभावः, विपर्ययज्ञानलक्षणायां न

विद्योत्पाद एव विपर्ययनिवृत्तिः; अतस्तन्निवृत्तिर्विद्यायाः पृथक् साध्या; अतश्च तत्र कर्मणां सहकारित्वेनोपयोगोऽस्तीति भावः। किमिति पुनरग्रहणनिवृत्तिवत् विपर्ययज्ञाननिवृत्तिरपि विद्योत्पाद एव न स्यादित्याशङ्क्य वैषम्यमाह—न खल्विति। अग्रहणं हि प्रागभावः, तस्य भावोत्पाद एव P. 32-21.
निवृत्तिर्युज्यते; विपर्ययज्ञानं तु विद्यातो भावान्तरम्; न च भावान्तरं विद्या विपर्ययज्ञानस्य भावान्तरस्य निवृत्तिरित्यर्थः। कुत इत्याह—न हीति। यदि परस्पराभावा भावा भवेयुः, ततो भावान्तरं भावान्तरस्याभावः स्यात्; न त्वेवमस्ति; ततश्च भावाद्भावान्तराभावः पृथक् साध्योऽस्ति; तत्र च कर्मणामनुप्रवेशो घटत इति भावः। कुत इत्याह—अभावत्वेति। अभावस्वभावत्वे हि भावानां भावस्वभावत्वाभावादभाव्यः स्यात्; ततश्च सर्वशून्यता स्यादिति भावः। चोदक एवाशङ्कयति—यदीति। न खलु तत्त्वं गृह्णतो विपर्ययज्ञानं भवति; तेन तत्त्वाग्रहणं विपर्ययज्ञानस्य निमित्तम्; अतस्तत्त्वज्ञानात्मिकया विद्यया निवृत्ते निमित्तनिवृत्त्यैव विपर्ययज्ञानं स्वयमेव निवर्तिष्यते। अतो भावान्तरत्वेऽपि न तन्निवृत्तिर्विद्यया पृथक् साध्या, यत्र कर्मणामनुप्रवेशः स्यादिति भावः। एवमाशङ्क्य दूषयति—तच्चेति। स्यादेवम्, यद्यग्रहणं कस्य चिन्निमित्तं स्यात्; न त्वेतदस्ति; अभावो ह्यग्रहः, तन्न कस्य चिन्निमित्तम्; अतो न विपर्ययस्यापीत्यर्थः। कुत इत्याह—मूर्च्छादीति। यद्यग्रहणं विपर्ययनिमित्तं स्यात्, ततो मूर्च्छादिषु तदस्तीति विपर्ययज्ञानं प्रसज्येत; न चैवमस्तीत्यर्थः। यद्यग्रहणमनिमित्तं विपर्ययस्य, किं तर्हि तस्य निमित्तमिति पृच्छति—किं तर्हीति। उत्तरमाह—अनादीति। अनादिरप्रयोजना या अनिर्वचनीयाविद्या, सा विपर्ययाविद्याया निमित्तमित्युक्तम् 'अमृतमजम्' इत्येतद्व्याख्यानावसर इत्यर्थः। न च तस्यामपि को हेतुरिति वक्तव्यम्, अनादित्वादित्याह—तत्र चेति। यद्वा तत्र च तस्यामनाद्यविद्यायां सत्यां विपर्ययस्य को हेतुरिति यः पर्यनुयोगः स निरवकाश इत्यर्थः। यदि त्वनाद्यविद्यातिरिक्तं विपर्ययस्य निमित्तमिच्छसि, तदपि शक्यं दर्शयितुमित्याह—विपर्यासेति। प्रपञ्चग्राहिणो विपर्ययज्ञानस्य प्रपञ्चसंस्कारो निमित्तम्। तस्य तर्हि किं निमित्त-

मित्युच्यते ? तस्यापि विपर्ययज्ञानमेव निमित्तम् । एवमुभयोरनादित्वेन बीजाङ्कुरादिवत् कार्यकारणभावेन व्यवस्थानान्न निर्निमित्तत्वादिदोष इत्यर्थः । तदेवं नाग्रहणनिवृत्त्या विपर्ययस्य स्वयं निवृत्तिः ; अतो विद्यया सोच्यते ; तेन तत्र साध्यस्थ सम्यग्ज्ञानस्य सहकार्यपेक्षा स्यात् ; सत्यां च तस्यां कर्मणामभिसंबन्ध इति फलमुपसंहरति । तदेतदसंबन्धवादी दूषयति—
३३–४. एतच्चेति ; तदप्यसारमित्यर्थः । कथमसारमित्याह—न खल्विति । खलु-शब्दः प्रसिद्धिद्योतनार्थः । प्रसिद्धमिदं लोके, यत् शुक्तिकादौ मिथ्याज्ञानपूर्वकसम्यग्ज्ञाने जाते मिथ्याज्ञाननिवृत्तये सम्यग्ज्ञानोत्पादात् पृथक् यत्नं न कुर्वन्ति ; न च सहकारि वा सम्यग्ज्ञानादन्यत् किंचित् कर्माद्यपेक्षन्ते, येन कर्मणां सहकारित्वेनानुप्रवेशः स्यादित्यर्थः । ननु दात्रेणेव लवनाय सम्यग्ज्ञानेन विपर्ययनिवृत्तये किमिति न प्रयतन्ते, किमिति वा तद्वदेव सहकारि नापेक्षन्ते इत्याशङ्क्याह । यदि हि दात्रादिव लवनं सम्यग्ज्ञानात् विपर्ययज्ञाननिवृत्तिः पृथक् कार्या स्यात् ततो दात्रेणेव लवनाय सम्यग्ज्ञानेन विपर्ययनिवृत्तये पृथक् प्रयतेरन्, सहकारि वान्यदपेक्षेरन् ; न त्वेतदस्ति ; न हि दात्रमिव सम्यग्ज्ञानमुत्पाद्य पश्चान्मिथ्याज्ञाननिवृत्तये व्यापार्यते । किं तर्हि ? तदुत्पाद एव मिथ्याज्ञाननिवृत्तिः ; यतोऽविद्याविरोधिनो भावान्तरस्योत्पाद एव पूर्वप्रध्वंसः, अतः किं पृथक् प्रयत्नेनेत्यर्थः । भावान्तरमात्रस्य पूर्वप्रध्वंसत्वे घटभावे मृदः प्रध्वंसः स्यादिति विरोधिग्रहणम् । भावो ह्यन्याभावः, अन्याभावो न भाव इति पूर्वोक्तः सर्वाभावप्रसङ्गदोषोऽपि नास्तीति भावः । ननु न विरोधिभावान्तरोत्पाद एव पूर्वप्रध्वंसः, किं तु शून्यं तदित्याशङ्क्याह—न शून्यमिति । शून्यवस्तु न किंचिदित्यर्थः । कुत इत्याह—अन्यथेति । यदि प्रध्वंसः शून्यं स्यात्, ततस्तस्य शशविषाणवदकार्यत्वान्न तत्र हेतुकृत्यमस्तीत्यहेतुमान् स्यात् ; मुद्गरादिहेतुकश्च स प्रसिद्ध इति भावः । ननु भवतु विरोधिभावान्तरोत्पाद एव पूर्वप्रध्वंसः, विद्या तु ज्ञानत्वेन सजातित्वान्न मिथ्याज्ञानविरोधिनीत्याशङ्क्याह---विरोधिनी चेति । अयमाशयः—न विजातित्वसजातित्वे विरोधाविरोधयोर्निबन्धनम्, तत्र विजात्योरपि रूपरसयोरेकत्राविरोधात् ; सजात्योरपि च विरोधात्, यथा विषं विषं शमयति, पयः पयो

जरयतीति ; तस्मात् यद्यस्य निवर्तकं तत् तस्य विरोधि ; निवर्तिका च विद्या मिथ्याज्ञानस्य ; तस्माद्विरोधिनीति । ततः किमित्याह—तदिति । P. 33-8. यदा विरोधिभावोत्पत्तिरेव पूर्वप्रध्वंसः विद्या च विरोधिनी, तदा विद्योत्पत्तिरेव मिथ्याज्ञानप्रध्वंस इति विद्योत्पत्तौ मिथ्याज्ञानं नष्टमेव भवति ; अतो दात्रेणेव लवनाय विद्यया मिथ्याज्ञाननिवृत्तये न पृथक् प्रयतन्ते, न सहकारि चापेक्षन्त इति न विपर्ययज्ञाननिवृत्त्यर्थं ज्ञानस्य कर्मसंबन्ध इति भावः ।

अथोच्यते—स्यादेतत्, यद्यविद्या बन्धहेतुः स्यात् ; किं तु कर्माणि बन्धहेतवः । न च तद्विरोधिनी विद्या, किं त्वविद्याविरोधिनी ; अतो न विद्योत्पत्तिरेव कर्मध्वंस इति पृथग्विद्यासाध्यः ; अतस्तत्र सहकारित्वेन कर्मापेक्षया कर्मानुप्रवेश इत्यभिप्रायेणाशङ्कयति—अथोच्येतेति । तद्दूषयति—तच्चेति । एतदुक्तं भवति—कर्माण्यविद्याविलसितान्यविद्याया निवृत्तौ निमित्तनिवृत्त्या स्वयमेव निवर्तन्ते, न तु तन्निवृत्तिः पृथक् साध्या, यत्र कर्माणि सहकारितयापेक्ष्येरन् । अविद्याया मूलत्वाद्यावदविद्या तावत् 'कर्मेदम्, इदं च फलम्' इति विभागव्यवहारमात्रम् ; तस्य व्यवहारस्य प्रमृष्टाः निरस्ताः अशेषाः प्रपञ्चभेदा यस्मिंस्तत् तथोक्तम् ; अत एव विशुद्धं च तत् विज्ञानं च तस्योदये कुतः संभव इत्यर्थः । मात्रग्रहणमपरमार्थत्वद्योतनार्थम् । इममर्थं श्रुत्या द्रढयति—तथा चेति । विपर्ययसंशयाभ्यां कर्मानपेक्षसम्यग्ज्ञाननिवर्त्याभ्यां सह कर्मणः सम्यग्ज्ञाननिवर्त्यत्वेन तुल्यवत् पाठात् कर्मानपेक्षसम्यग्ज्ञाननिवर्त्यत्वमवसीयत इत्यर्थः । हृदयग्रन्थिः विपर्यासो मतः । प्रकारान्तरेण ज्ञाने कर्मणामन्वयमाशङ्क्य दूषयति—अथेति । ज्ञाने हि संशयविपर्यासावेव मले, नान्यत् ; ते च प्रमाणजनिते ज्ञानेऽसंभवनिरस्ते ; तेन तन्निवृत्त्यर्थमपि कर्मापेक्षा वृथेत्यर्थः ।

पुनरपि प्रकारान्तरेण ज्ञाने कर्मान्वयमाशङ्कयति—अथ मतमिति । शब्दजनिताद्ब्रह्मज्ञानादन्यदपि विगलितोऽपभ्रष्टो विभागोद्ग्राहः प्रपञ्चभेदावभासो यस्मिंस्तत्, अत एव सर्वविकल्पातीतं वियदादिजगद्विकल्परहितं तत्त्वं ब्रह्मतत्त्वं यस्मिंस्तत्, तादृशं प्रत्यक्षं ज्ञानमिष्यते ; तस्यैव च ब्रह्म गोचरो

विषयः, न वेदान्तशब्दजनितस्य विभक्तानां नानाभूतानां पदार्थानामन्योन्य-संसर्गस्तमुद्ग्रहीतुं शीलं यस्य तस्येत्यर्थः। एतदुक्तं भवति—अद्वैतं ब्रह्म तु विगलितद्वैतविकल्पेनैव प्रत्यक्षज्ञानेन ज्ञातुं शक्यते, न तु शाब्दज्ञानेन ; वद्धि नानापदार्थसंसर्गरूपवाक्यार्थविषयत्वेन द्वैतविषयत्वान्नाद्वैतं ब्रह्म गमयतीति।

33-17. ततः किमित्याह—तदुत्पत्ताविति; निमित्तसप्तमी "चर्मणि द्वीपिनं हन्ति" इतिवत्। कर्मान्वयप्रस्तावे तुल्यन्यायत्वेन प्रसङ्गादुपासनाद्यन्वयोऽपि दर्शित इति द्रष्टव्यम्। उपासनमनुदिनमनुचिन्तनम्। आदिशब्देन ब्रह्मचर्यादि-ग्रहणम्। एवमाशङ्क्य दूषयति—क इति। अस्य प्रत्यक्षज्ञानस्य शाब्द-ज्ञानात् को विशेषः, येन हेतुना जातेऽपि शाब्दज्ञाने तत् प्रत्यक्षज्ञानं प्रार्थ्यते तदर्थं च कर्माण्यपेक्ष्यन्ते; "स एष नेति नेत्यात्मा" "एक एवायमद्वितीयः" इत्यादिशाब्दज्ञानस्याप्यद्वैतविषयत्वाविशेषान्न कोऽपि विशेषस्तस्यास्तीति भावः। इतरः शाब्दज्ञानात् प्रत्यक्षस्य विशेषमाह—स्पष्टाभत्वमिति। तत् दूषयति—नेति। अस्तु प्रत्यक्षस्य स्पष्टाभत्वम्; तथापि न तदर्थनीयम्। स्पष्टाभत्वस्यैवानुपयोगादित्यर्थः। अनुपयोगमाह—ज्ञानं हीति। ज्ञेयप्राप्तये ज्ञानमपेक्ष्यते, न च सा शाब्दज्ञानान्न भवतीत्यतः किं स्पष्टाभत्वेन? अतो न तदर्थं प्रत्यक्षं प्रार्थनीयमिति भावः। नन्वेवं तर्हि सर्वस्याः प्रमाणान्तर-जायाः प्रमितेः प्रत्यक्षपरत्वेन प्रत्यक्षमर्थ्यताम्; तदेतदाशङ्कयति—प्रमितेरिति। प्रत्यक्षं परं प्रधानं यस्या इति विग्रहः; प्रत्यक्षपर्यवसायित्वादित्यर्थः; तदर्थ्यत इति वक्ष्यमाणेनान्वयः। कुतः प्रमितेः प्रत्यक्षपरत्वमित्यत आह—तत्रेति। तत्र तस्मिन् प्रत्यक्षे सति प्रमातुः नैरुत्सुक्यादित्यर्थः। तथा हि—धूमा-दिना अग्न्यादि दूरे प्रमितमपि प्रमाता पुनः प्रत्यक्षेण प्रमित्सति; एवमा-शङ्क्य दूषयति—नैतदिति। न हि सर्वा प्रमितिः प्रत्यक्षपरा, वैदिक्या धर्मादिप्रमित्या व्यभिचारात्; अग्न्यादावपि व्यवहाराय संनिधानं प्रमाता-पेक्षते, न तु प्रत्यक्षप्रमितिम्; दैवात् तत्समीहितस्य सा भवतीति भावः। तथा ह्यसंनिहिते सूर्यगत्यादौ न सा भवति, भवति च प्रमातुर्नैरुत्सुक्यम्; अतो न प्रत्यक्षपरा प्रमितिः, किं तु प्रमेयाधिगममात्रपरा। तत्राधिगते प्रमेये किमपरमाकाङ्क्ष्यते? न किंचिदित्यर्थः। नन्वधिगतेऽपि प्रमेये प्रमाणान्तर-माकाङ्क्षिष्यत इत्याशङ्क्य दूषयति—प्रमाणान्तरमिति। प्रमाणान्तरं हि

प्रमेयसिद्ध्यर्थमाकाङ्क्ष्यते, नादृष्टाय; प्रमेयं च पूर्वप्रमाणादेव सिद्धमिति प्रमाणान्तराकाङ्क्षा व्यर्थैवेत्यर्थः। न व्यर्था, सिद्धस्यापि हि प्रमेयस्य पुनः सिद्ध्यर्थमपेक्षा भविष्यतीति चेत्; मैवम्; सिद्धस्यापि पुनः सिद्ध्या चेत्प्रयोजनम्, तदा पूर्वप्रमाणादेव सा सेत्स्यति; तथापि प्रमाणान्तराकाङ्क्षा व्यर्थैवेति। तदेतत्साशङ्कमाह—पुनरिति। एतच्च पुनः सिद्ध्याका- P. 33-22.
ङ्क्षामभ्युपगम्योक्तम्; परमार्थतस्तु सकृत्सिद्ध्यैव प्रमातुर्नैराकाङ्क्ष्यात् पुनः सिद्ध्याकाङ्क्षायां न कश्चिद्धेतुरस्तीत्याह—सिद्धस्येति। नन्वागमसिद्धस्यापि प्रमेयस्यागमादुपायान्तरं प्रत्यक्षमस्तीति ततः पुनः सिद्ध्यपेक्षा भवति। ततश्च कथमुच्यते हेतुर्नास्तीति? यावदुपायान्तरसद्भावो हेतुरित्याशङ्क्य दूषयति—उपायान्तरमिति। प्रमाणान्तरं तर्ह्यनुग्राह्यतयापेक्ष्यताम्; प्रमेये तु पूर्वसिद्धत्वात् प्रमातुर्नैराकाङ्क्ष्यमेव। न च प्रमेये सिद्धे प्रमाणान्तरं स्वतोऽपेक्ष्यम्; प्रमेयसिद्ध्यर्थत्वात् तदपेक्षाया इति भावः। अथ सिद्धस्यापि प्रियस्य पुनः सिद्धौ प्रीतिविशेषो भवति; प्रियश्चात्मा—"तदेतत् प्रेयः पुत्रात्" इति श्रुतेः; तेन प्रीतिविशेषः पुनः सिद्ध्यपेक्षाहेतुरित्याशङ्क्य निरस्यति—प्रीतीति। यदि ज्ञातस्यापीष्टस्य पुनर्ज्ञानात् प्रीतिविशेषो भवति, तथापि पूर्वप्रमाणजादपि पुनर्दर्शनात् स सिध्यतीति न प्रीतिविशेषसिद्ध्यर्थं प्रमाणान्तरमपेक्षणीयमित्यर्थः। किं च यद्यागमज्ञातमपि प्रीतिविशेषार्थं प्रत्यक्षेण पुनर्जिज्ञास्येत, ततः प्रत्यक्षदृष्टमप्यन्यैरनुमानादिभिर्जिज्ञास्येत, तत्रापि प्रीतिविशेषसंभवादेव तेषां विशेषाभावादित्याह—प्रत्यक्षदृष्टमिति। न च तेषामनिश्चायकत्वात् तैर्न जिज्ञास्यत इत्याह—निश्चायकत्वमिति। 'निश्चायकत्वे' इति पाठे तु निश्चायकत्वे विशेषाभावमुक्त्वा तत्र हेतुरुक्तः—इतरेषामिति। निश्चायकं हि प्रमाणं भवति; तान्यपि च प्रमाणम्; अतो निश्चायकानीत्यर्थः। प्रमाणभावादिति; प्रमाणत्वादित्यर्थः। अथोच्येत—संनिकृष्टविषयं प्रत्यक्षम्, संनिकृष्टं च हानोपादानयोग्यम्; अनुमानादि तु विप्रकृष्टविषयम्, न तेन व्यवहर्तुं शक्यम्; तेनेतरैः प्रमितमपि प्रत्यक्षेण प्रमित्स्यते, न प्रत्यक्षप्रमितमितरैरिति; तदाशङ्कयति—हानादीति। हानादियोग्यो विषयो यस्य तत् तथोक्तम्। संनिकृष्टोऽर्थो विषयो यस्य तत्; संनिकृष्टार्थत्वादिति हानादियोग्यविषयत्वे हेतुः। तन्निरस्यति; यदि संनिकर्षोऽपेक्षित

स्तर्हि तद्धेतुरेव प्रमेयस्य समीपानयनं प्रमातुर्वा तत्समीपगमनमपेक्ष्यताम्, न तु प्रमाणम्; तद्धि प्रमितयेऽपेक्ष्यते; सा च पूर्वप्रमाणादेव सिद्धेत्यर्थः। प्रकृते चात्मनि प्रमेये नैव संनिकृष्टासंनिकृष्टलक्षणो विशेषोऽस्ति, येन संनिकर्षार्थं प्रत्यक्षमपेक्ष्येत; आत्मनो नित्यसंनिकृष्टतमत्वादित्यभिप्रायेणाह—
P. 31-4. प्रकृते चेति। अथ मतम्—सामान्यविषयाः शब्दादयः, विशेषविषयं प्रत्यक्षम्; तेन शब्दात् सामान्यतः प्रमितमपि विशेषतः प्रमातुं प्रत्यक्षमपेक्ष्यत इति। तदयुक्तम्; एवं तर्हि शब्देन हेतुनानधिगतमेव विशेषरूपं प्रत्यक्षविषयः स्यात्; ततश्च सिद्धो नः पक्षः; न सिद्धस्य पुनः सिद्ध्यपेक्षायां हेतुरस्ति; तदेतत्सर्वं साशङ्कमाह—सामान्येति। इतर इदानीं तथैव प्रत्यवतिष्ठते—बाढमिति। अस्माकमप्यभिमतमेतत्, यच्छब्देनानवगतविषयं प्रत्यक्षमिति; अतस्तदर्थं कर्मोपासनाद्यपेक्षा घटिष्यत इत्याशयः। उक्तमिति। 'तस्य च ब्रह्म गोचरः, न शब्दस्य' इत्यत्रोक्तमित्यर्थः। तदेतत् दूषयति—यदीति। यदि शब्देन हेतुना विशेषतोऽनधिगतं ब्रह्म, कथं तर्हि तस्मिन् ब्रह्मणि विशेषरूपेणोपासना प्रवर्तताम्? न ह्यज्ञातमुपासितुं शक्यमिति भावः। न च शब्दाधिगतं सामान्यरूपमुपासिष्यते, विशेषरूपं चापरोक्षं भविष्यतीति वाच्यम्; अन्यस्मिन्नुपासितेऽन्यस्य साक्षात्करणासंभवादित्याह—न चेति। किं च सामान्यमात्रविषयाः शब्दा इत्यप्यसिद्धम्, अपहतपाप्मानन्दादिविशेषस्यापि ततः प्रतीतेः; यदि त्वपहतपाप्मानन्दादिपुरुषार्थरूपं शब्दान्न गम्येत, ततः कस्य रूपस्य साक्षात्करणाय "यज्ञेन दानेन" इति श्रुत्या यज्ञादिविधानं स्यात्? अपि तु न स्यादेवेत्यभिप्रायेणाह—कस्य चेति। यथा शब्दाद्विशेषरूपे ज्ञाते यज्ञादिविधानं घटते, यथा चाज्ञाते न घटते तदुभयमाह—शब्देति। अयमर्थः—यदि शब्देनानन्दादिरूपब्रह्मस्वभाव आत्मा दर्शितः स्यात्, तत आनन्दादिपुरुषार्थावाप्तये साधनापेक्षायां यज्ञादीनां विधानमवकल्पते; शब्दतस्त्वानन्दादौ पुरुषार्थरूपेऽनधिगते, तद्विपरीतेऽपुरुषार्थरूपे चात्मन्यधिगते यज्ञादिविधिरसदर्थोऽविद्यमानार्थो व्यर्थः स्यात्; तस्मादानन्दादिविशेषरूपमपि शब्दादवगम्यत इति भावः। शब्देनोपदर्शितं निरतिशयानन्दापहतपाप्मादिरूपं यस्य ब्रह्मणः तत्स्वभावस्यात्मन इत्यर्थः। तत्र निरतिशयानन्द इतीष्टप्राप्तिरूपपुरुषार्थ उक्तः।

अपहतपाप्मेति चानिष्टनिवृत्तिरूप इति विवेकः । अविदितं पुरुषार्थरूपं यस्येत्यात्मान्यपदार्थः । उपसंहरति—तस्मादिति । अपहतपाप्मादिगुणक- P. 34-12. ब्रह्मस्वभावे आत्मनि निर्विचिकित्सात् निःसंशयात् शब्दात् प्रमाणात् प्रकटतां गते नापरं प्रत्यक्षमपेक्षणीयमस्ति; अतः शाब्दमेव ज्ञानमपवर्ग-हेतुरित्यभिप्रायः ।

ननु शाब्दमेव ज्ञानं चेदपवर्गहेतुः, ततस्तस्मिन्नुत्पन्ने संसारधर्मैः क्षुत्पिपासादिभिर्निवर्तितव्यम्; ते त्ववगतेऽपि "तत्त्वमसि" इति शब्दात् 'ब्रह्मैवाहम्' इति ब्रह्मात्मत्वे, अज्ञावस्थायामिव दृश्यन्ते; अतस्तन्नि-वृत्तयेऽन्यत् साक्षात्कारि ज्ञानमपेक्ष्यमिति चोदयति—नन्विति । यद्यपि "तत्त्वमसि"वाक्यमात्मनो ब्रह्मभावं वदति, न तु ब्रह्मण आत्मभावम्; तथाप्यर्थात् सोऽप्युक्त इति ब्रह्मात्मभाव इत्युक्तम् । दूषयति—नेति । देहेन्द्रियधर्मास्ते लाक्षाधर्मा इव मणौ मिथ्याज्ञानेनात्मन्यध्यस्ताः, न तत्त्वतः । अतस्तस्मिन् सम्यग्दर्शनपराहते कुतस्तन्निमित्तानां धर्माणामात्मनि संभव इत्यर्थः । अवगतो ब्रह्मण आत्मभावो येनेति विग्रहः । अत एव विदितात्मयाथातथ्यो विदितमात्मनो याथातथ्यं परमार्थरूपं येन स तथोक्तः । न केवलमुपपत्तिः, श्रुतिरप्यत्रार्थेऽस्तीत्याह—श्रूयते चेति । न हि संसारधर्मानुवृत्तौ ब्रह्मविदो ब्रह्मीभावः श्रुत्युक्तो घटत इति भावः । न च ते ब्रह्मण एव धर्माः, येन ब्रह्मविदोऽप्यनुवर्तेरन्नित्याह—न चेति । पुण्यपापनिमित्तास्तेऽपहतपाप्मनि ब्रह्मणि न संभवन्तीत्यर्थः । पाप्मेति पुण्यमप्युच्यते । अत्रैवार्थे श्रुत्यन्तरं चाह—तथेति । परमानन्दमद्वयमा-त्मानं चेत् विजानीयात्, ततः किमिच्छन् कस्य च पुत्रादेः कामाय शरीरोपाधिकेन दुःखेन शरीरमनुसंज्वरेत् संतप्येदिति विदुषः संसारधर्मा-तिक्रममाह । श्रुत्यन्तरं चाह—तथेति । वाशब्द एवकारार्थे । नन्वियं श्रुतिः शरीरपातादूर्ध्वमशरीरस्य प्रियाप्रियास्पर्शमाह, न तु जीवतः; जीवत एवात्मविदः संसारधर्मप्रसङ्गश्चोदितः, स तु सशरीर एव; कथम-शरीरश्रुत्योच्यत इत्याशङ्क्याह—मिथ्येति । न खल्वात्मनः कर्मनिमित्तः संसारशरीरसंबन्धः, "निष्कलं निष्क्रियम्" इति श्रुतेर्निष्क्रियत्वात्,

पुत्रादिष्विव चेदंप्रत्ययप्रसङ्गात्; किं तु योऽयमनात्मनि शरीरे
'अहम्' इति मिथ्यात्मकत्वाभिमानः सत्यत्वेनाभिमतः, तन्निमित्तः ।
तस्मिन् शरीरसंवन्धे देहातिरिक्तात्मतत्त्वदर्शनात् निमित्तनिवृत्त्या निवृत्ते
संस्कारमात्रेण सत्यामपि शरीराभासानुवृत्तौ जीवत एवाशरीरत्वमित्यर्थः ।
?. 34-22. एवमशरीरत्वं व्याख्याय तत्र श्रुत्यर्थं योजयति—तत्रेति । तत्र तादृश्य-
शरीरत्वं प्रियस्येष्टस्याप्रियस्य चानिष्टस्यास्पर्श आत्मन्याख्यायते; अनया
श्रुत्येति वाक्यशेषः । उपसंहरति—तस्मादिति । व्यतिरेकमाह—यस्त्विति ।
तथेति, सांसारिकधर्मभागित्यर्थः । इतिः पूर्वपक्षसमाप्तौ ।

'स्यादेतत्—असाध्यत्वात् ब्रह्मणो न कर्मणानुपयोगः' इत्यारभ्य नानाप्रकारकर्मज्ञानसंवन्धं निरस्य पुनः प्रत्यक्षानुभवसिद्ध्यर्थं कर्मोपासनादिसंवन्धमाशङ्क्य 'शाब्दज्ञानादेव निःश्रेयसम्, न प्रत्यक्षानुभवात्; अतो न तदर्थमपि कर्मोपासनापेक्षा' इति सिद्धान्तमाह—अत्रोच्यत इति । अत्र दृष्टान्तमाह—यथेति । आप्तवचनेन विनिश्चितं दिक्चन्द्रयोस्तत्त्वं येषां तेषां पुंसां द्विचन्द्रदिग्विपर्यासादयो यथानुवर्तन्त इति पूर्वेणान्वयः । दार्ष्टान्तिके योजयति—तथेति । निर्विचिकित्सादाम्नायादवगतमात्मतत्त्वं येन तस्य पुंसोऽनादिमिथ्यादर्शनस्याभ्यासेन पौनःपुन्येनोपहितस्य सहितस्य स्वत एव च भवतः संस्कारस्य सामर्थ्यान्मिथ्यावभासस्यानुवृत्तिरस्ति; अतस्तन्निवृत्तयेऽस्ति शाब्दज्ञानादन्यदपेक्षणीयम् । यदपेक्ष्यं तदाह—तच्चेति । मिथ्यादर्शनबाधकस्य तत्त्वदर्शनस्याभ्यासः संस्कारदार्ढ्यकरत्वेन लोक एवान्वयव्यतिरेकासिद्धः । यज्ञादयश्च "तमेतं यज्ञेन" इत्यादिशब्दप्रमाणका इत्यर्थः । तत्राभ्यासस्योपासनापरपर्यायस्योपयोगमाह—अभ्यासो हीति । तत्त्वदर्शनाभ्यासः संस्कारं द्रढयति; दृढीभूतः संस्कारः पूर्वमिथ्यादर्शनजं संस्कारं प्रतिबध्य स्वकार्यं तत्त्वदर्शनाख्यं संतनोति प्रवाहयति; ततश्चात्मस्वरूपाविर्भाव इति भावः । कर्मणां चोपयोगमाह—यज्ञादयश्चेति । अत्रैव मतान्तरमाह—श्रेय इति । उपयुज्यत इत्यध्याहार्यम् । अत्र हेतुमाह—नित्यानामिति ।

तदेवं मिथ्यावभासनिवृत्त्यर्थं कर्मोपासनानुप्रवेशो दर्शिते शाब्दज्ञान-मात्रवादी पुनः प्रत्यवतिष्ठते—स्यादेतदिति । भोक्तृत्वाभिमानात् भोगोप-करणेषु स्रक्चन्दनादिषु रागः; ततः शुभा ज्योतिष्टोमादिलक्षणा अशुभा च ब्रह्महत्यादिलक्षणा प्रवृत्तिः; ततः पुनः शरीरग्रहणमित्येवं भोक्तृत्वाद्यभिमानो बोधात्पूर्वं प्रमाणत्वेन गृहीतः प्रवृत्तिहेतुः; स शाब्देनाभोक्तृत्वादिरूपात्मतत्त्वावबोधेन बाधितोऽनुवर्तमानोऽपि न पूर्ववत्प्रवृत्तिं प्रसूते; न हि सूर्योदयावगतप्राचीदिक्तत्त्वो दिङ्मूढोऽप्युदीचीं व्यवहरति, किं तु प्रामाणिकतत्त्वनिश्चयानुरूपमेव; तेनोत्पन्नात्मतत्त्वबोधस्य कर्मोपासनादौ प्रवृत्तिरेव नास्ति; अतो न मिथ्यावभासानुवृत्तिनिवृत्तये कर्मोपासनाद्यपेक्ष्यमिति भावः । तदेतद्दूषयति—उच्यत इति । मिथ्या अर्थो येषां ते मिथ्यार्थाः, मिथ्यार्था इव मिथ्यार्थाः; न तु मिथ्यार्था एव, तत्त्वनिश्चयानां मिथ्यार्थत्वानुपपत्तेः; मिथ्याविषयज्ञानवत् स्वानुरूपं व्यवहारं न प्रवर्तयन्ति; मिथ्याज्ञानमेव तु बाधितमपि स्वानुरूप व्यवहारं प्रवर्तयतीत्यर्थः । अत्र दृष्टान्तमाह—यथेति । यथा दिङ्मूढस्याप्तबोधितदिक्तत्त्वस्याप्यननुसंहिताप्तवचसस्तत्र निश्चया अपि मिथ्यार्था भवन्तीति पूर्वेणान्वयः । कुत इत्याह—प्रागिवेति । दृष्टान्तान्तरमाह—तथेति । उपसंहरति—तस्मादिति । संस्कारस्य हेतोरभिभवोच्छेदमुखेन हेतुमतो मिथ्यावभासस्य निवृत्तिरभिप्रेता । इममर्थं श्रुत्या द्रढयति—तथा चेति । "श्रोतव्यः" इति वेदान्तश्रवणादुत्पन्नशाब्दतत्त्वदर्शनस्यापि "निदिध्यासितव्यः" इत्युत्तरकालमभ्यास उच्यत इत्यर्थः । तथा दमादि विधीयत इत्याह—दमेति । व्यतिरेकमाह—अन्यथेति । शाब्दज्ञानादेव सांसारिकधर्मनिवृत्तौ ध्यानाद्युपदेशो व्यर्थ एव स्यादित्यर्थः । पुनः परमतमाशङ्कयति—स्यादेतदिति । ब्रह्मचर्याद्युपकरणादाम्नायात् तत्त्वज्ञानं भवति; तेन शाब्दज्ञानसिद्ध्यर्थ एव ब्रह्मचर्यादिसाधनोपदेशः, न व्यर्थ इत्यर्थः । तद्दूषयति—तदसदिति । शब्दमात्रादेव शमादिनिरपेक्षात् शाब्द्याः प्रतिपत्तेरुत्पत्तिः; अतो न तदुत्पत्तये शमाद्यपेक्षा; न चानपेक्षितमुपकरणं भवतीति भावः । एतदेव युक्त्योपपादयति—न हीति । साधनविशेषेभ्यः शमादिभ्यः प्रागाम्नायो नावाचकः, शब्दार्थसंबन्धस्यौत्पत्तिकत्वात् । न च संबन्धज्ञानवद्वाचकस्यापि शमाद्य- P. 35-8.

पेक्षोचिता ; न हि संबन्धज्ञानेनैव शमब्रह्मचर्यादिभिर्विना शब्दादर्थप्रतीतिर्न जायत इति भावः । न च वाच्यम्—यदि नाम प्राक् साधनविशेषेभ्यो नावाचक आम्नायः, तथापि पुरुषमात्रवाक्यवदनिश्चायकः ; तेन निश्चयार्थं शमाद्यपेक्षिष्यत इति ; यतः पुरुषाश्रयाणां दोषाशङ्कानामपौरुषेयवेदे नास्ति
P. 35-20 संभव इत्याह—नापीति । यदि पुनरपौरुषेयोऽप्याम्नायो न निश्चायकः स्यात्, तदाम्नायोपदिष्टेषु शमादिसाधनेष्वपि निश्चयाभावात् प्रवृत्तिर्दुर्लभा स्यादित्याह—अन्यथेति । ननु यद्याम्नायो निश्चायकः, ततो 'ब्रह्माहम्' इत्यपि ततो निश्चयो जातः ; तथा सति च कुतः संसारधर्मानुवृत्तिः ? न हि तत्त्वनिश्चये जाते मिथ्याधर्मानुवृत्तिर्युक्ता । यत्तु दिङ्मूढाद्युदाहृतम्, तत्र विस्मृततत्त्वस्य प्रागिव प्रवृत्तिर्युक्ता ; न त्विह तथेत्याशङ्क्योदाहरणान्तरमाह—अपि चेति । रङ्गे नाट्यस्थाने भरता नटा रामादयो भूत्वा प्रविष्टाः सीतादिवियोगात् दुःखेन रुदन्तः 'नेमे रामादयः, किं तु नटाः' इति तत्त्वं जानतामपि प्रेक्षकाणां शोकं महज्जनयन्ति ; तथा व्याघ्रीभूय भयम्, क्वचिद्दर्पम् ; एवमात्मतत्त्वनिश्चयेऽपि सांसारिकधर्मानुवृत्तिरपि भवतीत्यर्थः । उदाहरणान्तरमाह—निश्चिते चेति । उपसंहरति—तस्मादिति । यस्मादात्मतत्त्वं जानतामपि मिथ्यावभासाः शोकभयादीन् संसारधर्माननुवर्तयन्ति, तस्मात्तन्निवृत्तये निश्चितो ब्रह्मण आत्मभावः आत्मत्वं येन तेनापि पुंसा शोकादिसंसारधर्मनिवर्तकसाक्षात्कारज्ञानसाधनानि शमादीन्यपेक्षितव्यानीत्यर्थः । विदितात्मयाथातथ्यस्यापि दृष्टार्थ इवादृष्टार्थेऽपि कर्मणि प्रवृत्तिसिद्धेरिति भावः ।

न चैवं सति यज्ञादिकारणसापेक्षत्वात् मुक्तेः कार्यता स्यादिति वाच्यमित्याह—यथेति । न खलु यज्ञादिभिः साक्षान्मुक्तिः क्रियते, किं त्ववस्थाविशेषोऽभिव्यज्यते ; ततश्चाम्नायात् प्रमाणादात्मतत्त्वाभिव्यक्तौ यथा मुक्तेर्न कार्यता, तथा यज्ञादिसाधनेभ्य आनन्दावस्थाभिव्यक्तिविशेषेऽपि साक्षात्काररूपे । ननु शाब्दज्ञानाच्चेन्न मुक्तिः किं तु यज्ञाद्यपेक्षात्, कथं तर्हि ज्ञानान्मुक्तिमुपदिशन्त्यः "ब्रह्म वेद ब्रह्मैव भवति" इत्याद्याः श्रुतयो व्याख्येया इत्याशङ्क्याह—श्रुतयस्त्विति । प्रथमं शब्दाद्विज्ञायात्म-

तत्त्वं तस्यानुचिन्तनमभ्यासः, तस्य परिनिष्पत्तौ सत्यां या विगलितसकल-शोकादिसंसारधर्मसाक्षात्कारिज्ञानावस्था तद्विषया इत्यर्थः । एतदुक्तं भवति —"ब्रह्म वेद" इति विदिना न शाब्दज्ञानमभिधीयते, किं तु साक्षात्कारि ज्ञानमेवेति । यद्वा शाब्दमेव ज्ञानं विदिनोच्यते इत्येतदाह— शब्दसाधनेति । शब्दः साधनं यस्येति तथोक्तम् । शब्दसाधनं च तत् P. 30-2. ज्ञानं चेति विग्रहः । तत् ज्ञानं विषयत्वेनापेक्षन्त इति तदपेक्षाः श्रुतयो भवन्त्वित्यर्थः । ननु शाब्दज्ञानमात्रान्न मुक्तिरित्युक्तम्, मुक्त्यनुगुणं च ज्ञानं विदिनोच्यते; तत्कथं शाब्दज्ञानमुच्यत इत्याशङ्क्याह—तद्धेतुत्वादिति । शाब्दज्ञानहेतुत्वादुत्तरस्य साक्षात्कारिज्ञानस्येत्यर्थः । यद्यपि शाब्दज्ञानं न साक्षान्मुक्तिसाधनम्, तथापि मुक्त्यात्मकसाक्षात्कारिज्ञान-हेतुत्वात् पारंपर्येण मुक्तिहेतुतया विदिनोच्यत इति भावः ।

एवं कर्मसाक्षात्कारज्ञानयोरुपायोपेयलक्षणसंबन्धप्रदर्शनेन ज्ञानकर्मणो-रसंबन्धपक्षं दूषयित्वा ऋणापाकरणपक्षमिदानीं दूषयितुमनुवदति—यदपीति । इत्युक्तमिति वाक्यशेषः । तद्दूषयति—तदपीति । अपाकृतऋणस्य मोक्षा-धिकार इति यदुक्तं तदपि न नियोगतो नियमेनेत्यर्थः । कुत इत्याह— आश्रमेति । यद्यपाकृतऋणस्यैव मोक्षेऽधिकारः, ततो गार्हस्थ्यं विना ऋण-त्रयापाकरणासंभवात् गृहस्थाश्रममात्रमुपदिशेत्; ततश्चाश्रमविकल्पश्रवणमनर्थकं स्यात्; अतो नायं नियमः—यदपाकृतऋणस्यैव मोक्षेऽधिकार इति । किं पुनस्तदाश्रमविकल्पस्मरणमिति तदाह – तस्येति । न केवलं स्मृतिः, अपि तु श्रुतिरप्याश्रमान्तरस्थस्यापि मोक्षेऽधिकारमाहेत्याह—यदि वेति । तथा श्रुत्यन्तराण्याह—एतदिति । अग्निहोत्रादिनित्यकर्मभिर्देवमृणं प्रजया पैत्र्यं स्वाध्यायेनार्षमपाक्रियते । तद्यद्यपाकृतऋणत्रयस्य मोक्षेऽधिकारः स्यात्, ततो मुमुक्षोरग्निहोत्रादिकर्मप्रजास्वाध्यायानां त्यागश्रुतयो न घटेरन्निति भावः । एवं च कर्मत्यागदर्शनादित्युपलक्षणम्, प्रजास्वाध्यायत्यागावपि द्रष्टव्यौ । यद्यनपाकृतऋणत्रयस्यापि मोक्षेऽधिकारः, का तर्हि "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्" इत्यादिस्मृतेर्गतिरित्याशङ्क्य पूर्वो-दाहृतश्रुत्यविरोधेन तां व्याचष्टे—प्रतिपन्नेति । प्रतिपन्नं प्राप्तं कार्यत्वे-

नाङ्गीकृतं गार्हस्थ्यं येन तस्यात्मविद्यामुपादाय तयैव कृतकृत्यो भविष्या-
P. 30–10 मीति मन्वानस्यात एव ऋणापाकरणं प्रत्यनादृतस्येति संबन्धे षष्ठी, तत्संबन्धित्वेनात्मविद्योत्पत्तिप्रतिबन्धृत्वं दर्शयतीयं वक्ष्यमाणा स्मृतिः । कस्य प्रतिबन्धृत्वमित्यपेक्षायामाह—अवश्यकर्तव्यतया यद्विहितमृणापाकरणं तस्य यदकरणं तदेव निमित्तं यस्य पाप्मनः तस्येति कर्तरि षष्ठी, विद्योदयस्येति च कर्मणि ; तेनायं स्मृत्यर्थः--गृहस्थः सन् ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्, अनपाकृतर्णस्तु मोक्षमिच्छन् विहिताकरणनिमित्तपापप्रतिबद्धविद्यत्वात् न मोक्षं विन्दति ; किं तु तेन पापेनाधो गच्छतीत्यर्थः । यद्यपि स्मृताववश्यं गृहस्थ इति विशेषो नास्ति, तथापि पूर्वोक्तश्रुतिविरोधात् कल्प्यः ; अन्यथा स्मृतिरप्रमाणं स्यात् । तदुक्तम्—" विरोधे त्वनपेक्षं स्यात् " इति ।

एवमृणापाकरणपक्षं दूषयित्वा संयोगपृथक्त्वपक्षं कर्मणां साक्षात्कारिज्ञानोपयोगित्वेन सिद्धान्तानुगुणमुपपन्नमभ्युपगच्छति—इदं त्विति । स्ववाक्योपात्तस्वर्गादिकार्यान्तरनिराकाङ्क्षाणामपि कर्मणां " तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति " इति विद्यासंयोगस्य पृथक्त्वात् विद्याङ्गभावो विद्याङ्गत्वं यदुक्तमिदं युक्तमित्यर्थः । तु शब्दः पूर्वोक्तपक्षेभ्यो विशेषं दर्शयति । एवमङ्गभावं प्रसाध्योत्पत्तौ कार्ये चोभयथापि द्रव्यादिप्रयाजादिवदङ्गभावस्य दर्शनात् विशिनष्टि—सोऽपि कर्मणां विद्यां प्रत्यङ्गभावः यथोक्तप्रकारेण विद्योत्पत्त्यर्थतया, न तु यथा दर्शपूर्णमासादिकार्यं स्वर्गादिकं प्रत्युपयोगेन प्रयाजादीनां तथेत्यर्थः । उत्पत्तिरत्राभिव्यक्तिरभिप्रेता ; कस्मात्पुनः कार्योपयोगेनैव कर्मणां विद्याङ्गत्वं न भवतीत्याह—विद्याया इति। दर्शादौ हि स्वर्गादि कार्यमस्ति, तेन युक्तं तदुपयोगेन प्रयाजादीनामङ्गत्वम् ; इह तु विद्यायाः साक्षात्करणलक्षणाया न कार्यान्तरमस्ति । मोक्षः कार्य इति चेन्न ; तस्या एव मोक्षत्वात् ; कार्यत्वे चानित्यत्वात् । नन्वविद्यानिवृत्तिरेव कार्यं भविष्यति । मैवम् । विद्योदय एव तन्निवृत्तिः, न पृथक् ; तदुक्तम्—" विरोधिभावान्तरोत्पाद एव पूर्वप्रध्वंसः " इति । एवं पृथक्संयोगपक्षं स्वसिद्धान्तानुगुणत्वेन युक्तत्वेन चाभ्युपगम्येदानीं ' कर्मभिः संस्कृतस्य ज्ञानाधिकारः ' इतीममपि पक्षं स्वसिद्धान्तानुगुणं

युक्तमेव मन्यमान आह—संस्कारपक्षो वेति । युक्तमिति लिङ्गव्यत्ययेनानु- P. 36-16
वर्तते । कुतः पुनः प्रमाणादयं पक्षः सिध्यति, येन युक्तमित्युच्यत इत्या-
शङ्क्याह—स्मृतेरिति । "यस्यैते चत्वारिंशत्संस्काराः" इत्यादिस्मृते-
रित्यर्थः । ननु यदि पुरुषसंस्कारार्थानि कर्माणि, न तर्हि विद्योपयोगित्वम्;
तच्च पूर्वमुक्तम्; तत्कथमित्याशङ्क्याह—संस्कृतस्येति । न हि संस्कारः
संस्कार्यार्थः । किं तर्हि? संस्कृतस्य कार्यान्तरात्पत्त्यर्थः; तच्चात्मसाक्षात्कार-
लक्षणा विद्येत्यर्थः । पक्षद्वयमपि सूत्रकारवचनेन द्रढयति—तदुक्तमिति ।
न केवलं स्वार्थं विद्या शमाद्यपेक्षते, अपि तु ब्रह्मचर्याद्याश्रमचतुष्टय-
संबद्धं यथाक्रममग्निसमिन्धनाग्निहोत्रतपश्चरणध्यानादिकर्मापि विद्यापेक्षते,
विहितत्वादिति सूत्रार्थः ।

अत्र पक्षद्वयेऽपि चोदयति—नन्विति । दृष्टरूपोऽभ्यास उपायो
यस्य स दृष्टोपायः साक्षात्करणलक्षणविद्योत्पादः; अत्र दृष्टैव दृष्टोप-
कारिवेतिकर्तव्यता चित्तविक्षेपहन्त्री शमदमादिकापेक्ष्यताम्; दृष्टोपाये हि
कार्ये दृष्टैवेतिकर्तव्यता दृष्टा; यथा अग्न्युपाये पाकेऽग्निसमिन्धनादिका
दृष्टरूपा; यज्ञादयस्त्वदृष्टार्थाः, तेन विद्योत्पादेन नापेक्ष्या इत्यर्थः ।
चित्तविक्षेपहन्त्रीति शमादेर्दृष्टोपकारितामाह । ननु यदि नाम शमादि-
रितिकर्तव्यता चित्तविक्षेपहन्त्री, तथापि विद्योत्पादे कथं तस्या दृष्टोप-
कारित्वमित्याशङ्क्याह—समाहितस्येति । एतदुक्तं भवति—शमादिभि-
श्चित्तविक्षेपविघातात् समाहितचित्तः पुरुषो भवति; समाहितचित्तस्याभ्य-
स्यतो ज्ञानस्य प्रसादः प्रशान्तिर्विशुद्धता भवतीत्यर्थः । कस्मात्पुनर्यज्ञा-
दयो नापेक्ष्यन्त इत्याशङ्क्याह—तैरिति । यज्ञादिभिर्विनाप्यभ्यासेनैव
ज्ञानप्रसादसंभवादित्यर्थः । अभ्युपगमेनैवोत्तरमाह—सत्यमिति । एतदेव
द्रढयति—तथाचेति । तैरिति; यज्ञादिभिरित्यर्थः । ननु पूर्वं यज्ञादेर्विद्या-
ङ्गत्वमुक्तम्, अधुना विद्यायास्तदनपेक्षत्वमभ्युपगच्छतः पूर्वापरविरोध
इत्याशङ्क्याह—किंत्विति । मुक्तेरेकरूपत्वात् स्वर्गादिवत् साधनविशेषात्
स्वरूपविशेषो न संभवतीत्यतः कालकृत एवात्र विशेषो युक्त इति भावः ।
तमेव विशेषमाह—साधनेति । यथा यथा कारणे विशेषः प्रकर्षी भवति,

तथा तथा सा विद्या शीघ्रं शीघ्रतरं च व्यज्यते; यथा यथा च तदभावो विशेषाभावः साधनापचयो भवति, तथा तथा चिरेण चिरतरेण च सा व्यज्यत इत्यर्थः । एतदुक्तं भवति—केवलाभ्यासश्चिरतरेण विद्यामभिव्यनक्ति, यज्ञादिष्वेकैकसहितः शीघ्रम्; सर्वसहितः शीघ्रतरमिति।
P. 36-23 एतदेव सूत्रकारवचनेन द्रढयति—तदुक्तमिति । सूत्रार्थमाह—एष इति । कर्मभिर्विनाप्यभ्यासलभ्यायामपि कर्माण्यपेक्ष्यन्ते विद्यायाम्, "यज्ञेन" इति श्रवणादित्यर्थः । यथान्तरेणेति निगदव्याख्यातो दृष्टान्तार्थः ।

अत्र चोदयति—नन्विति । "सत्यं ज्ञानमनन्तम्" इति श्रुतेर्विशुद्धज्ञानस्वभावं ब्रह्म, विद्यापि चाभ्यासलभ्या विशुद्धज्ञानस्वभावैव; अतो ब्रह्मैव सा, न ब्रह्मणोऽन्या; द्वैतप्रसङ्गाच्च । ब्रह्म च नित्यम्; अत एवाकार्यम्; तत्र तस्मिन् सति तत्र च नित्याकार्यस्वभावे ब्रह्मणि कथं किंचित् यज्ञाद्यपेक्ष्येत? कार्यं हि साधनं तदनुग्राहकं चाङ्गमपेक्षते, नाकार्यमिति भावः । परिहरति—उच्यत इति । उप समीपे धीयते धार्यते इत्युपधानं जपाकुसुमादि, तेन तिरोहितं शुक्लरूपं यस्य स स्फटिकमणिरकार्योऽप्युपधानस्य जपादेरपकर्षणमपनयनमपेक्षते शुक्लरूपस्य व्यक्तये यथा, तथा अकार्यमपि ब्रह्म अविद्यातिरोहितस्वरूपाभिव्यक्तये यज्ञादीनपेक्षत इत्यर्थः । यद्यपि स्फटिकमणिः कार्यः, तथापि तद्व्यापारकार्यो न भवतीत्येतावतैव साम्यम् । ननु क्षणिकाः सर्वभावाः; तेनाग्निसंनिधानादिव काष्ठस्य जपाद्युपाधिसंनिधानात् स्फटिकस्य पूर्वरूपं नष्टम्, अन्यदुत्पन्नम्; उपाधेरपगमे च पुनरन्यदेव शुक्लं रूपमुत्पन्नम्; तेन कार्यमेव शुक्लं रूपमुपाध्यपकर्षणमपेक्षते, नाकार्यमिति विषमो दृष्टान्त इत्याशङ्क्याह—न हीति । कस्मात्पुनरेवं न भवतीत्याह—न हीति । अनेकैर्विसभागैर्विसदृशैर्लोहितस्फटिकक्षणैर्व्यवहितस्य लोहितक्षणेभ्यः पूर्वो यः शुक्लक्षणः तत्सभागस्य तत्सदृशस्य शुक्लक्षणस्य पुनरुत्पत्तिरकस्मात् कारणं विना न संभवतीत्यर्थः । ननु पूर्वक्षण एवोत्तरस्य हेतुः; तत्कथमकस्मादित्युच्यते? उच्यते—यस्तावदनन्तरो लोहितक्षणः स न शुक्लं क्षणमारभते, विसदृशत्वात्; सदृशारम्भको हि पूर्वक्षणः; तथा हि—घटक्षणो घटमारभते, न पटम् । ननु विसदृशमप्यारभते, यथा काष्ठ-

क्षणोऽङ्गारक्षणम् । सत्यं विसदृशहेतूपपाते; विसदृशो हि तत्र हेतुरग्नि-रुपहितः; तेन विलदृशमारभते; न चेह तथास्ति, विसदृशस्य जपादेरपनीतत्वात् । नन्वस्तु तर्हि पूर्वतरशुक्लक्षणोऽन्त्यस्य शुक्लक्षणस्य हेतुः । तदपि न शक्यते; बहुभिर्लोहितक्षणैर्व्यवहितश्चिरविनष्टो नोत्तरस्य हेतुर्भवितुमर्हति । तदिदमुक्तम्—अनेकविसभागक्षणव्यवहितस्येति । तत्रैव दृष्टान्तमाह—न हीति । तदेव स्फटिकदृष्टान्तमुपपाद्य दार्ष्टान्तिके योज- P. 37-8. यति—तस्मादिति । ननु स्फटिकस्य निजं रूपं स्थितमेव; न तदर्थमपकर्षणे पुरुषः प्रयतते, किंतु तज्ज्ञानाय; तच्च कार्यम्; अतः कार्यमेव ज्ञानं तत्रान्यापेक्षम्, नाकार्यं स्फटिकरूपमिति पुनश्चोदयति—स्यादेतदिति । तदेतत् विकल्प्य परिहरति—किं पुनरिति । व्यवहाराय हि पुरुषः प्रवर्तते; स चार्थेन; न ज्ञानमात्रेण, मिथ्याज्ञानेऽपि प्रसङ्गात्; तेनार्थरूपाय ज्ञानमर्थ्यते, न तु स्वतः; ततश्च ज्ञानार्थो व्यापारोऽर्थार्थः; अतश्च यद्यपि ज्ञानं कार्यम्, तथापि ज्ञानार्थो व्यापारोऽर्थेनैवापेक्षितो भवति, न ज्ञानेन; तस्यार्थप्रधानत्वादित्यर्थः । इदमुक्तं भवति—अर्थस्थैर्यैवेयमपेक्षा ज्ञानद्वारेणोपजाता 'जानीहि, ततो व्यवहर' इति । तेनाकार्यस्याप्यन्यापेक्षास्ति, तथा आत्मनोऽपि भविष्यतीति । ननु ज्ञानं चेदर्थार्थम्, ततो नूनमर्थे कंचिद्विकारमाधत्ते; न ह्यर्थे किंचिदकुर्वतस्तादर्थ्यमवकल्पते; विकारश्च कार्यः; तेन कार्यमेव सापेक्षम्, नार्थ इत्याशङ्क्याह—न चेति । स्यादेवं यदि ज्ञानेन विकारोऽर्थे जन्येत, न त्वेवमस्तीत्यर्थः । यद्वा ज्ञानेन चेदर्थोऽभिव्यज्यते, नूनं ज्ञानादर्थे कश्चिद्विकारः स्यात्, अकिंचित्करस्यानभिव्यञ्जकत्वात्; अतश्च ब्रह्मण्यभिव्यज्यमाने तथैव विकारापत्तेरनित्यत्वदोषः स्यादित्याशङ्क्य आस्तां तावद् ब्रह्मणि, अर्थेऽपि न ज्ञानात् विकारो भवतीत्याह—न चेति । यद्वा ननु ज्ञानमर्थं विकृत्याभिव्यनक्ति, इतरथा सर्वथानन्यथाभूतस्य प्रागिवाभिव्यक्त्ययोगात्; ततश्च युक्ता तत्राभिव्यक्तयेऽन्यापेक्षा; ब्रह्म त्वविकार्यत्वादभिव्यङ्क्तुमशक्यम्; अतः कथमर्थवदभिव्यक्तयेऽन्यदपेक्ष्यतामिति दृष्टान्तवैषम्यमाशङ्क्य साम्यप्रदर्शनार्थमाह—न चेति । यद्वा नन्वर्थो जडत्वाद-

नभिव्यक्तस्वभावस्तज्ज्ञानेन प्राकट्यमुपजनय्याभिव्यज्यताम्; अभिव्यक्तये चान्यदपेक्ष्यम्; ब्रह्म पुनरात्मज्योतिर्नित्याभिव्यक्तस्वभावं कथमभिव्यज्यते, अभिव्यक्तये चान्यदपेक्ष्यते इत्याशङ्क्य सर्वत्रैवाभिव्यक्तिर्न
P. 37-14 तात्त्विकी, किंतु मायामयीति दर्शयितुमाह—न चेति। यदि ज्ञानादर्थे प्राकट्यादिविकारः कश्चिद्भवेत्, ततस्तत्राभिव्यक्तिस्तात्त्विकी स्यात्; यदा तु नैवम्, तदा सर्वत्रैव सा मायामयी; तथा ब्रह्मण्यपि किं न स्यात्? न हि मायायां पूर्वोक्तानुपपत्तिर्दोषः; अनुपपन्नार्थैव हि मायेत्युच्यत इति भावः। ज्ञानादर्थस्य विकाराभावे हेतुमाह—तयोरिति। नासंबद्धं हीन्धनमग्निर्विकरोति; असंबद्धं च ज्ञानमान्तरं बहिरर्थेन; अतो नार्थं विकरोतीत्यर्थः। अथेतरसंबन्धाभावेऽपि योग्यदेशतालक्षणोऽर्थस्य ज्ञानेन संबन्धो भविष्यतीति चेदत आह—योग्येति। योग्यदेशता अर्थस्यार्जवेनावस्थानम्, तच्च रूपरसादौ समानाश्रये सर्वत्र समानम्; अतो रूपज्ञानं रूप इव रसादावपि प्राकट्याख्यं विकारं कुर्यादित्यर्थः। यद्यपि असंनिकृष्टस्य विकारकत्वमग्न्यादिषु न दृष्टमित्ययमत्र परिहारः, तथाप्यभ्युपेत्य परिहारान्तरमुक्तमिति। किंच ज्ञानं चेदर्थे प्राकट्यं जनयेत् ततः कस्यचिदेकस्य ज्ञानेन जाते प्राकट्ये अर्थः सर्वेषां प्रकटः स्यात्, यथैकस्य पाकेन जातलौहित्यो घटः सर्वेषां लोहितः, न पक्तुरेव, तदाह—सर्वेति। किंच वर्तमानेऽर्थे जन्यतां नाम ज्ञानेन प्राकट्यम्; अतीतानागते तु लिङ्गादिगम्ये न तत्संभवः, धर्मिण एवाभावादित्यभिप्रायेणाह—ध्वस्तेति। एवं दृष्टान्तस्वरूपमुपपाद्योपसंहरति—तस्मादिति। स्फटिकद्रव्यं हि लोहितकम्बलेनावकुण्ठनवत् न जपाकुसुमेन तिरोहितम्; नापि तत्प्रभया, तस्या अप्रभाद्रव्यत्वात्; अथ च तिरोहितमिवाभाति, न तु तत्त्वतस्तत्तिरोहितम्; अत एवातिरोहितत्वात् तत्त्वतो नाभिव्यज्यते, तथाप्यभिव्यज्यमानमिवोपधानापकर्षणप्रयत्नमपेक्षते यथेत्यर्थः। एवं दृष्टान्ते सिद्धमर्थं दार्ष्टान्तिके योजयति—तथेति। तथात्मतत्त्वमपि कृष्णकम्बलेनेव नानाद्यविद्यातिरोहितम, तथापि स्वरूपानवभासात् तिरोहितमिव यज्ञादि-

प्रयत्नादभिव्यज्यत इवेत्यदोष इत्यर्थः । एतदुक्तं भवति—तिरोधानमभिव्यक्तिः प्रयत्नापेक्षा चेति त्रितयमप्येतदात्मनो न तात्त्विकम्; अपि तु अविद्या भ्रम एव; तत्त्वतस्तु नात्मा तिरोहितो न च नित्याभिव्यक्तस्वभावत्वादभिव्यज्यते, न च प्रयत्नमपेक्षत इति ।

एवम् 'आम्नायतः प्रसिद्धिम्' इत्यादिना ब्रह्मसिद्धौ प्रमाणमुक्त्वा अधुना तत्प्रमेयस्य ब्रह्मणः स्वरूपमाह—संहृतेति । श्लोकार्थं विवृणोति— P. 37-19
यत इति । अन्यैर्ब्रह्मविद्भिरिति पूजार्थम्, न स्वमतं पर्युदसितुम् । संहृता उपसंहृता अखिला भेदा विशेषा यस्मिन् स संहृताखिलभेदः । सामान्यात्मा सामान्यस्वभावः, स आत्मा वर्णितः । यथा हेम कटकादिभेदानां विशेषाणामुपसंहारेण सूचितं निरूपितं तेषां कटकादिभेदानां सामान्यं तथेत्यर्थः । परिहार्यं कटकमुच्यते । "स एष महान्" इत्यादिना ब्रह्मविद्याभियुक्तग्रन्थं पठति । यद्विशेषापोद्धारेण प्रतीयते, तद्विशेषवत्; यच्च विशेषवत् तत् सामान्यम्, यथा सुवर्णतत्त्वम्; आत्मतत्त्वमपि "स एष नेति नेति" इति सर्वविशेषापोद्धारेण प्रतीयते; तस्मात् तदपि विशेषापोद्धारेण प्रतीयमानत्वात् सामान्यमिति तात्पर्यार्थः ।

श्लोकमन्यथा व्याचष्टे—ये वेति । यदि निर्विशेषं यत् तत् सामान्यं न भवेदिति निर्विशेषस्यासामान्यरूपता साध्यते, ततः सिद्धसाधनम्; अस्माकमप्यद्वयवादिनां वियदादिविशेषाणामभावे वस्तुवृत्त्या नात्मतत्त्वसामान्यमिष्टम् । कथं तर्हि ब्रह्मवादिभिः सामान्यमुक्तमत आह—सामान्यं तूक्तमुपचारत इति । ननु कुतश्चित् साधारणाद्धर्मादुपचारो भवति; यथा तीव्रत्वादग्निशब्दस्य माणवके; तदत्र कुतो धर्मादुपचार इत्यत आह—विशेषेति । सुवर्णादौ प्रसिद्धात् सामान्यस्य धर्मात् विशेषप्रत्यस्तमयमुखेन निरूप्यमाणत्वादात्मनि साधारणादुपचार इत्यर्थः । अस्मिन् व्याख्याने प्रसिद्धसुवर्णतत्त्वसामान्यसादृश्यप्रदर्शनार्थोऽयं श्लोक इति द्रष्टव्यम् । अथ निर्विशेषं यत्सामान्यं परैरिष्टं तन्न भवेत्, निर्विशेषत्वात् शशविषाणवदिति तस्याभाव एव साध्यते; ततो विशेषैरेव हेतोः व्यभिचारोऽनैकान्ति-

कृता । ननु विशेषाणामप्यवान्तराः सन्ति विशेषाः, ततश्च तेषु निर्विशे-
P. 38-5. षत्वं हेतुरेव नास्ति ; कस्य व्यभिचार इत्यत आह—निर्विशेषैरिति ।
यद्यपि पूर्वे विशेषाः, तेषामप्यनङ्गत्वाद्ये निर्विशेषा अवशिष्यन्ते तैर्व्यभि-
चार इत्यर्थः । एतच्चोच्छ्लोकमुक्तमिति न श्लोकयोजनायामभिनिवेष्टव्यम् ॥

इति श्रीब्रह्मसिद्धिव्याख्याने ब्रह्मकाण्डव्याख्यानं
शङ्खपाणिना कृतम् ॥

---

ओम्

## ब्रह्मसिद्धिव्याख्या शङ्खपाणिकृता

---

### तर्ककाण्डः

आम्नायप्रमाणकमद्वयं ब्रह्मेति ब्रह्मकाण्डे वृत्तम् । तत्राधुना यत् प्रत्यक्षादिविरुद्धं वचस्तदप्रमाणम्, प्रत्यक्षादिविरुद्धत्वात् शिलाप्लवनादिवाक्यवत्; अद्वयाम्नायोऽपि व्यावृत्तस्वभावनोऽवग्राहकैः प्रत्यक्षादिभिर्विरुद्धः; अतोऽप्रमाणमित्याक्षिप्य प्रत्यक्षादिविरुद्धत्वादिति हेतोरसिद्धतामभिधातुं प्रत्यक्षविरोधाभावं तावदाह---आहुरिति । यदि प्रत्यक्षम् 'घटः पटो न भवति' इति निषेद्धृ स्यात्, ततो भेदविषयत्वादद्वयाम्नायं विरुन्ध्यात्; न तु तन्निषेद्धृ विपश्चित आहुः; अपितु वस्तुस्वरूपमात्रस्य विधातृ ग्राहकम्; तेन हेतुना एकत्वेऽद्वयविषये योऽयम् 'एक एवायमद्वितीयः' इत्यादिराम्नायः स प्रत्यक्षेण न विरुध्यत इत्यर्थः । P. 39-3.

अत्रेदानीं प्रत्यक्षादिविरोधेऽपि नाम्नायस्य प्रामाण्यं व्याहन्यते; पौरुषेयं हि वचो वक्तृप्रमाणाधीनप्रामाण्यं तद्विरोधे स्यादप्रमाणम्, नापौरुषेयमनपेक्षप्रामाण्यम्; तथा सत्यपि प्रत्यक्षादिविरोधे यदि तदप्रमाणं तदा विपर्यय एव किं न स्यात्? न हि प्रत्यक्षादेराम्नायस्य च तुल्येऽनपेक्षत्वे कश्चित् विशेषहेतुरस्ति, येन प्रत्यक्षादिविरोधादाम्नायोऽप्रमाणम्, न तद्विरोधात् प्रत्यक्षादीति; अतो वृथैव प्रत्यक्षाद्यविरोधप्रतिपादनप्रयास इति तद्विचारारम्भमाक्षिपति - नन्विति । नापेक्षिता स्वप्रामाण्याय प्रत्यक्षादेः प्रमाणान्तरस्य वृत्तिः व्यापारः येन स तथोक्तः । तद्विरोधे इति प्रत्यक्षादिविरोधे इत्यर्थः ।

अत्रैकीयमतेन तावत्परिहारमाह---तत्रेति । प्रत्यक्षादिविरोधे आम्नायस्य दौर्बल्यम्; अतः प्रत्यक्षादिविरोधेन तदप्रामाण्यं प्राप्तम्; न तु तद्विरोधे प्रत्यक्षादेरित्याम्नायप्रामाण्याय प्रत्यक्षाद्यविरोधप्रतिपादनमर्थवत्, न तु वृथेत्यर्थः । कथं दौर्बल्यमित्याह---सापेक्षत्वादिति । सापेक्षत्वमाह---तथा-

हीति । पठितसिद्धः कश्चिदाम्नायः श्रौतप्रत्यक्षमपेक्षते, तथाचारेषु कर्तृसामान्यानुमेयोऽनुमानम्, मन्त्रलिङ्गादिगम्यश्चार्थापत्तिम्, प्राकृतश्चाङ्गविधेर्विकृतावुपमानम् । एवं सर्व एवाम्नायः प्रत्यक्षादीन्यपेक्षते; तदधीना हि
P. 39-11. तस्य स्वरूपसिद्धिरित्यर्थः । ततः किमित्याह—तथा चेति । तेषामिति प्रत्यक्षादीनामित्यर्थः । कुत इत्याह—तदिति । तेषां प्रत्यक्षादीनां तत्प्रामाण्यस्य चाम्नायेनापबाधनेऽभ्युपगम्यमाने सत्याम्नायस्वरूपस्यैव तावत् सिद्धिर्न स्यात्; दूरतरस्त्वर्थस्य यत इत्यर्थः । न च यथाम्नायः प्रत्यक्षादीन्यपेक्षते तथा तान्यपीति, येन तुल्यबलत्वं स्यात् । अतः प्रत्यक्षादिसापेक्षत्वादाम्नायस्तेभ्यो दुर्बल इत्याह—न त्वेवमिति । इतश्च दुर्बल इत्याह—दृष्टव्यभिचारत्वादिति । यदेव यथाविधमेकदार्थे संवदति वाक्यम्, तदेव तथाविधमेव पुनरन्यदा विसंवदति; न हि दुष्टोऽपि वक्ता शब्दं कलाध्मातादिना दूषयति । प्रत्यक्षे तु दुष्टेन्द्रियजं व्यभिचारि, नेतरदिति विशेषः । प्रत्यक्षग्रहणं तूपलक्षणार्थम्, अनुमानाद्यपि द्रष्टव्यम् । यद्यपि वेदे व्यभिचारो न दृष्टः, तथापि लोके दृष्टः शब्दत्वसामान्यात् तत्राशङ्क्यत इति भावः । इतश्चाम्नायो दुर्बल इत्याह—अपिचेति । ततः किमित्याह—अनवकाशाश्चेति । न तावदात्मा प्रत्यक्षादीनामवकाशः, तस्येन्द्रियाद्यगोचरत्वात्; तत्र प्रपञ्चोऽपि चेन्न स्यात् ततो निर्विषयत्वादनवकाशास्ते स्युरित्यर्थः । शब्दस्तु सावकाश इत्याह—सावकाश इति । कथमित्याह—गौणेनेति । एतदेव स्पष्टयति—तथा हीति । भिन्नमपि जगत् सत्ताद्यात्मना एकत्वात् "एकमेवाद्वितीयम्" इत्युपचर्यत इत्यर्थः । प्रकारान्तरेण सावकाशत्वमाह—विवक्षितार्थानामिति । तदेव द्रढयति—उपनिषद इति; इदं स्ववचनं वेदान्तानां जपोपयोगित्वमाहेत्यर्थः । इतश्चाम्नायो दुर्बल इत्याह—किंचेति । व्याकुलत्वमाह—कर्मेति । कर्मविषयो हि यस्मात् साध्यसाधनादिभेदं विषयत्वेनाश्रयन्ते; वेदान्तास्त्वभेदमद्वैतमित्यर्थः । ततः किमित्याह—परस्परेति । अतः परस्परव्याघातादेव तावत् वेदान्ता दुर्लभप्रामाण्याः; परस्परमव्याहतम् अत एवाम्नायस्वरूपसिद्ध्यर्थत्वेन वा सर्ववादिसिद्धार्थत्वेन वा प्रतिष्ठितं प्रामाण्यं येषां प्रत्यक्षा-

दीनां तैर्विरोधे तु सुतरां दुर्लभप्रामाण्या इत्यर्थः। उपसंहरति—तस्मादिति। P. 39-21
यस्मात् प्रत्यक्षादिविरोधे वेदान्तानामप्रामाण्यं प्रसज्यते तस्मादित्यर्थः। सति विरोधे प्रत्यक्षादीनामाम्नायबाधकत्वे हेत्वन्तरमाह—मुख्यत्वादिति। प्रत्यक्षादीनां प्राथम्यादित्यर्थः। प्राथम्यमाह—मुख्या हीति। जातमात्रस्य जन्तोः प्राणिनो मुख्याः पूर्वभाविनः प्रत्यक्षादयः; व्युत्पन्नपदार्थस्य च प्रबुद्धस्य कस्यचिदेव पश्चात्काल आम्नायः प्रमाणम्। कतिपयपुरुषसमवेतादाम्नायादशेषजन्तुगतत्वेनापि प्रत्यक्षादेरतिशयद्योतनार्थं जन्तुग्रहणम्। ततः किमित्याह—स इति। स आम्नायः तैः प्रत्यक्षादिभिः पूर्वभावितयानुपजातविरोधित्वेन प्रतिष्ठितार्थैः प्रतिष्ठितो भेदरूपोऽर्थो विषयो येषां तैरपहृतोऽपनीतो यथाश्रूयमाणोऽद्वैतरूपो विषयो यस्य स तथोक्तः, अत एव कल्पनीयार्थः प्रत्यक्षादिविरोधेन कल्पनीयं श्रुतादर्थान्तरं यस्य स बाध्यते; अननुग्राह्यश्चेत् तदा प्रत्यक्षादिविरोधात् श्रुतार्थत्यागः, अर्थान्तरं च न कल्प्यत इति विषयापहारलक्षण एवायं बाधः। अथानुग्राह्यः, तदा प्रत्यक्षाद्यनुसारेण प्रत्यक्षादिगृहीतद्वैतापरित्यागेन जात्यात्मनाद्वैतमित्येवमर्थकल्पनामर्हतीत्यर्थः। यद्वा प्रत्यक्षादि प्रतिष्ठितार्थम्; आम्नायस्तु प्रमाणान्तरानुसारेण कल्पनीयार्थः, अतोऽप्रतिष्ठितार्थः; तेन दुर्बलत्वात् बाध्यते, तदनुसारेण चार्थकल्पनमर्हतीत्यर्थः। एवं स्वरूपतो मुख्यतामुक्त्वार्थतोऽपि प्रत्यक्षादीनां मुख्यतामाह—अर्थेन इति। कथमित्याह—पदेति। पदपदार्थविभागे ज्ञाते सत्याम्नायार्थस्य परिच्छेदः, स च पदपदार्थविभागः प्रत्यक्षादिष्वायतते प्रत्यक्षाद्यायत्तः; एतदुक्तं भवति—प्रत्यक्षादेर्विषयः पदपदार्थभेदः पूर्वभावी, आम्नायस्य चाभेदः पश्चाद्भावी; तेन विषयमुख्यत्वेनापि प्रत्यक्षादेर्मुख्यत्वमिति। उपसंहरति—अत इति। यतो मुख्यत्वेन बलीयसा प्रत्यक्षादिना विरोधे नाम्नायस्य प्रामाण्यं स्यादत इत्यर्थः।

मतान्तरमाह—अन्य इति। तुल्यबलत्वमत्र पूर्वोक्तया युक्त्या नास्ति, तथापि प्रत्यक्षाद्याम्नाययोर्विरोधे द्वैताद्वैतयोः संशयः स्यात्, न निर्णयः। तेन तत्त्वनिर्णयायाविरोध उपपाद्यत इत्यर्थः। ननु षोडशिग्रहणादिवत् विकल्पो भविष्यति, न संशय इत्याशङ्क्याह—वस्त्विति; करिष्यमाणत्वादनुष्ठानं विकल्प्यते, न तु सिद्धं वस्त्वित्यर्थः।

P. 40-3. एवं मतद्वयेन विरोधपरिहारप्रयोजनमुक्त्वा स्वमतमाह—अन्यादेति। आम्नायबलवत्त्वे न्यायमुपन्यस्यति—पौर्वेति । "अध्वर्युं निष्क्रामन्तं प्रस्तोता संतनुयात्, तमुद्गाता, उद्गातारं प्रतिहर्ता, तं ब्रह्मा, ब्रह्माणं यजमानः" इति सोमयागे अन्योन्यहस्तनिग्रहेण संततानामृत्विजां यज्ञशालातो निष्क्रमणं श्रुतम् । तत्र च नैमित्तिकं श्रूयते —"यदि प्रस्तोतापच्छिद्येत ब्रह्मणे वरं दत्वा स एव प्रवर्तितव्यः; यद्युद्गातापच्छिद्येतादक्षिणो यज्ञः संस्थाप्यः; यदि प्रतिहर्तापच्छिद्येत सर्ववेदसं देयम्" इति; अपच्छिद्येतेति विश्लिष्येतेत्यर्थः । तत उद्गातृप्रतिहर्त्रोः पौर्वापर्येणापच्छेदद्वये सति अतुल्यबलत्वाददक्षिणसर्वस्वदक्षिणयोश्च विरोधाद्विकल्पसमुच्चययोरसंभवात् किं पूर्वं बलवत्? अथोत्तरम्? इति संशये मुख्यत्वात् श्रुतिलिङ्गादिवत् पूर्वबलीयस्त्वे प्राप्ते प्रत्याह—"पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" इति । श्रुतिलिङ्गादिषु पूर्वं शीघ्रभावित्वात् प्राप्तं सत् अप्राप्तमेव परं बाधते; तेन तत्र पौर्वापर्यमेव नास्ति, परस्यानुत्पत्तेः। इह तु परमपि प्रत्यक्षश्रुतिप्राप्तम्; अतः पौर्वापर्ये नैमित्तिकद्वयस्य पूर्वस्य दौर्बल्यम्, पूर्वमनुपमृद्य परस्यानुत्पत्तेः; अतस्तदेव बाध्यते, प्रकृतिवत्; यथा प्राकृताः कुशा विकृतावतिदेशप्राप्ताः प्रत्यक्षश्रुतैः शरैरपोद्यन्ते तद्वदित्यर्थः। एतदेव भट्टवाक्यात् द्रढयति—पूर्वाबाधेनेति । ननु पौर्वापर्ये भवतु पूर्वदौर्बल्यम्; इह तु तदेव नास्ति, प्रत्यक्षाम्नाययोरनिदंप्राथम्यादित्याशङ्क्याह—तथा हीति । सर्वस्य जन्तोः प्रत्यक्षादिनिबन्धनो विभक्तस्य भिन्नस्य वस्तुनः परिच्छेदो निसर्गजो जन्ममात्रसिद्ध इति भेदप्रत्ययस्य पूर्वत्वमुक्तम्; नायं विभक्तवस्तुतत्त्वपरिच्छेदस्तत्त्वतः, किंतु मायामात्रमिति द्योतनार्थः किलशब्दः । अद्वैतावगमस्तु विभक्तपदपदार्थवस्तुप्रत्यक्षपरिच्छेदापेक्षः, अत एव तत्पूर्वकः, अत एवानिसर्गजोऽजन्ममात्रसिद्धः, अत एवागन्तुरुत्तरकालभावी कस्यचिदेव जनकादेर्भवति न सर्वजन्तोरिति अद्वैतावगमस्य परत्वमुक्तम् । एवं द्वैताद्वैतज्ञानयोः पौर्वापर्यमुक्त्वा पूर्वस्य बाध्यत्वमाह—स इति । आम्नायबलवत्त्वे हेत्वन्तरमाह—इतश्चेति; आम्नायो बलवानित्यनुवर्तते । कुत इत्याह—संभवदिति; संभवन्तो विचित्रा नानाभूतास्तिमिरादयो विभ्रमहेतवो येषु ते तथोक्ताः । विगलिता-

विगता अखिला दोषाशङ्का यतः स तथोक्तः; असंभवद्दोषाशङ्कस्याम्नायस्य संभवद्दोषेभ्यः प्रत्यक्षादिभ्यो बलीयस्त्वं युक्तमित्यर्थः । नैकरूपः सर्वत्र भ्रमे भ्रमहेतुः, अपितु विचित्रः; तेनेन्द्रियादिदोषासंभवेऽपि दोषान्तरं प्रपञ्चज्ञाने कल्पयिष्याम इति सूचनार्थं विचित्रग्रहणम् । तत्राम्नायस्य विगतदोषाशङ्कत्वे हेतुमाह—पुरुषेति । निर्दोषाम्नायबलादेव प्रत्यक्षादिषु P. 40-8. दोषकल्पनेति पश्चादुक्तमप्याम्नायनिर्दोषत्वं पूर्वमुपपादितम् । पुरुषाश्रयो हि शब्दे सर्वो दोषः; स तदभावे कथमाम्नाये संभवेदित्यर्थः । ननु प्रत्यक्षादिष्वपि दोषा न दृष्टाः; येषु दृष्टाः न तानि प्रत्यक्षादीनि, किंतु तदाभासाः; न चान्यत्र दृष्टानामन्यत्र प्रमाणं विना कल्पनोचिता, अतिप्रसङ्गात्; अतस्तेष्वनुपलभ्यमानविभ्रमहेतुदोषकल्पनायां किं प्रमाणमित्याशङ्क्य प्रमाणमाह—शक्यो हीति । इत एव निर्दोषत्वसिद्धप्रामाण्यादद्वैताम्नायात् द्वैतग्राहिषु प्रत्यक्षादिषु दोषसंभावनानिश्चयौ शक्यावित्यर्थः । ननु तिमिरादयो लोके दोषाः प्रसिद्धाः; ते च प्रत्यक्षादिषु योग्यानुपलब्धिवारिताः कथमाम्नायादपि कल्पयितुं शक्या इत्याशङ्क्योक्तम्—अनादिरिति । उक्तमिदम्—न हि सर्वत्रैकरूप एव दोषो भवतीति; तेन तिमिराद्यसंभवेऽपि अविद्यासंस्काराख्यं दोषान्तरं कल्पयिष्याम इति भावः । अविद्यासंस्काराख्यदोषोत्पत्तेः प्राक् निर्दोषस्य प्रत्यक्षादेराम्नायेन सह तुल्यबलत्वं प्राप्तमित्याशङ्क्य विशिनष्टि—अनादिरिति । दार्ढ्यसूचनार्थं वा—द्वैतदर्शनम्, अविद्यासंस्कारः, ततः पुनर्द्वैतदर्शनमित्येवमनादिनाविद्यासंस्काराख्यदोषेणानुबद्धत्वात् नित्यमाम्नायात् प्रत्यक्षादेर्दुर्बलत्वमिति भावः । अविद्यैव वा संस्कारः; संस्क्रियते तया आत्मा अतिशयमिवापद्यत इति कृत्वा अविद्यावासना वा अविद्यासंस्कारः । निश्चय एवात्राभिमतः; संभावना तु दोषसंभावनामात्रेणापि यावत्प्रत्यक्षादीन्यसंभावितदोषादाम्नायात् दुर्बलानि, किमुत निश्चितदोषाणीति प्रौढवादेनोक्ता । संभावितस्य च साध्यत्वात् संभावनाक्रमेण निश्चय एवोक्तः । तदुक्तम्—"संभाविनः प्रतिज्ञायां पक्षः साध्येत हेतुना" इति । क्व पुनराम्नायात् तिमिरव्यतिरिक्तस्यानादेरविद्यासंस्कारस्य विभ्रमहेतुत्वं प्रसिद्धम्, येनात्र

P. 40-10. कल्पित इत्याशङ्कयाह—देहेति। देहे 'अहम्' इत्यात्मज्ञानं देहात्माभिमानः; तत्र यथा देहातिरिक्तात्मावबोधकादाम्नायादनादिरविद्यासंस्कार एव जन्मनि जन्मनि देहात्मविभ्रमहेतुस्तथेहापीत्यर्थः। ननु 'मम शरीरम्' इति व्यतिरेकप्रत्ययात् देहात्माभिमाने विभ्रमहेतुः क्लृप्तः, नाम्नायात्। मैवम्; 'ममात्मा' इत्यव्यतिरेकेऽपि व्यतिरेकप्रत्ययदर्शनात् नायमैकान्तिको हेतुः। अत आम्नायादेव देहात्माभिमानेऽनादिरविद्यासंस्कारो विभ्रमहेतुः क्लृप्त इति सूक्तम्। अविद्यासंस्कारभ्रमहेतुत्वमात्रदृष्टान्तोऽयम्। एतावता च कथं सर्वजनीनः प्रपञ्चप्रत्ययो भ्रम इत्यपि निरस्तम्; सर्वजनीनोऽपि हि देहात्मप्रत्ययो विभ्रमो दृष्ट इति। किमिति पुनराम्नायात् प्रत्यक्षादिषु विभ्रमहेतुर्दोषः कल्प्यते, न तु प्रत्यक्षादिबलेनाम्नाय एवेत्याशङ्कयाह—न त्वेवमिति। न हि स्वभावतः शब्दो दुष्टः, किंतु पुरुषदोषेण; तेनाम्नाये निराश्रयस्य दोषस्य शङ्कापि कर्तुमशक्या, दूरतस्तु निश्चय इत्यर्थः। शङ्कायां तु दोषमाह—सत्यामिति। सत्यां वा दोषशङ्कायामाम्नायः प्रमाणमेव न स्यादित्यर्थः। नन्वेवं प्रत्यक्षादयोऽपि सदोषाः कथं प्रमाणम्? अस्ति च तेषु लोके 'प्रमाणम्' इति प्रसिद्धिरित्याशङ्कयाह—प्रत्यक्षादीनां त्विति। तुशब्दो विशेषप्रदर्शनार्थः। इदमुक्तं भवति—द्विविधं प्रामाण्यं तत्त्वावेदनलक्षणं व्यवहाराविसंवादलक्षणं च। तत्र दोषवत्त्वे प्रत्यक्षादीनामपि तत्त्वावेदनलक्षणं प्रामाण्यं सत्यं नास्त्येव; व्यावहारिकं त्वस्ति; अतो न प्रसिद्धिहानिरिति। ननु दोषवत्त्वेन रजतादिभ्रमवत् व्यावहारिकमपि प्रामाण्यं कथमित्याशङ्कयाह—अविद्येति। दोषनिवृत्तौ हि व्यवहारसंवादो भवति। अयं त्वविद्यादिसंस्कारोऽनादित्वात् स्थिरः पूर्ववत् व्यवहारेऽप्यनुवर्तते। तेन व्यवहारविपर्ययाभावात् प्रत्यक्षादीनां व्यावहारिकं प्रामाण्यं घटत इत्यर्थः। ननु दोषवत्त्वेऽपि चेत् व्यावहारिकं प्रामाण्यम्, अप्रामाण्यं तर्हि क भविष्यति? अस्ति च रजतादिभ्रमेषु तत्प्रसिद्धिरित्याशङ्कयाह—यत्र चेति। तेन प्रत्यक्षादेः रजतभ्रमस्य च दोषवत्त्वाविशेषेऽपि लौकिकप्रमाणाप्रमाणविवेको घटत इति भावः। ननु दोषवतामपि चेत् प्रत्यक्षादीनां प्रामाण्यम्, तर्हि शब्देऽपि दोषवति तथैव भविष्यति;

अतः 'सत्यां वा प्रमाणमेव न स्यात्' इति यदुक्तं तदयुक्तमित्याशङ्क्य तदुपपादयति—शब्दे त्विति । तुशब्दः प्रत्यक्षादिभ्यो विशेषमाह । P. 40-13. संभावितदोषेऽपि यावत् शब्दे नोभयविधं प्रामाण्यम्, किमुत निश्चितदोषे इति संभावितग्रहणम् । ननु दोषवति शब्दे तत्त्वावेदनलक्षणं प्रामाण्यं मा भवतु, व्यावहारिकं तु प्रत्यक्षादिवत् किमिति न भवतीत्याशङ्क्याह—अदृष्टार्थत्वादिति । अदृष्टोऽर्थो विषयो यस्येति विग्रहः । प्रत्यक्षादिषु व्यवहारविपर्ययादर्शनात् व्यावहारिकं प्रामाण्यं युक्तम्; आम्नायस्य त्वदृष्टार्थत्वात् न तद्व्यवहाराविपर्ययज्ञानमस्ति; अतो न तस्य व्यावहारिकमपि प्रामाण्यमित्यर्थः । इतश्च सदोषस्य शब्दस्य न व्यवहाराविसंवादलक्षणं प्रामाण्यमित्याह—दोषेभ्य इति । ज्ञानकारणदोषेभ्यो व्यवहारविसंवादि ज्ञानमन्यत्र रजतभ्रमादिषु दृष्टम्; अतश्च शब्देऽपि चेत् दोषाः स्युः, तेऽपि व्यवहारविसंवादिज्ञानहेतवः दोषत्वात् तिमिरादिवदिति सामान्यतो दृष्टेन व्यवहारविसंवादिज्ञानहेतवः कल्प्येरन्; ततश्च कुतो व्यवहाराविसंवादलक्षणं प्रामाण्यमित्यर्थः । नन्वेवं तर्हि प्रत्यक्षादिदोषा अपि धर्मिणो व्यवहारविसंवादिज्ञानहेतवः दोषत्वात् इन्द्रियादिदोषवदिति तेऽपि व्यवहारविसंवादिज्ञानहेतवः कल्प्येरन्, ततश्च प्रत्यक्षादीनामपि दोषवत्त्वे व्यवहाराविसंवादलक्षणं प्रामाण्यं न स्यात्, विरोधादित्याशङ्क्याह—प्रत्यक्षादीनां त्विति । तुशब्दः शब्दाद्विशेषमाह; प्रत्यक्षादीनां तु व्यवहारे संवादो दृश्यते; अतः प्रत्यक्षाविरोधात् नास्मादनुमानात् तेषु व्यवहारविसंवादिज्ञानहेतुर्दोषः शक्यते कल्पयितुम् । एवं हि स कल्प्येत यदि तेषु व्यवहारे विसंवादः स्यात्, स तु नास्तीत्युक्तम् । अतः सत्यपि दोषे प्रत्यक्षादीनां व्यावहारिकं प्रामाण्यं न विरुध्यते इति भावः । यदि प्रत्यक्षादिषु व्यवहारासंवादहेतुर्दोषो न कल्प्यते, कीदृशस्तर्हि, कुतश्च स तादृशः कल्प्यते—इत्यपेक्षायाम्, यादृशोऽसौ यतः स तादृशः कल्प्यते तदुभयमाह—तत्त्वदर्शनस्य त्विति । "एकमेवाद्वितीयम्" इत्यादिवेदान्तागमजन्यस्याद्वैततत्त्वज्ञानस्य प्रत्यक्षादिप्रमेयद्वैतप्रतिपक्षत्वात् तद्बाधकत्वात् प्रत्यक्षादिप्रमेयद्वैतस्य यत् तत्त्वं पारमार्थिकं तत्प्रतिघातमात्रहेतुरेवानादिरविद्यानुबन्धः कल्प्यते, न

व्यवहारप्रतिघातहेतुस्तिमिरादिरित्यर्थः । एतदुक्तं भवति—न हि प्रत्यक्षादिषु प्रमाणान्तरगम्यो दोषः ; किं त्वाम्नायबलात् कल्प्यः । अतस्तदनुसारेणैव स कल्पनामर्हति । आम्नायश्चाद्वैतं दर्शयन् प्रत्यक्षादिप्रमेयद्वैतमात्रप्रतिपक्षो न व्यवहारं स्पृशति । तेन तदनुसारेण दोषः कल्प्यमानोऽनृतद्वैतज्ञानजननसमर्थोऽविद्यासंस्कार एव कल्प्यते, न व्यवहारविसंवादिज्ञानजननसमर्थस्तिमिरादिरिति । अतो दोषवत्त्वेऽपि प्रत्यक्षादिषु व्यवहाराविसंवाद-
P.40-18 लक्षणं प्रामाण्यं देहात्माभिमानवत् न विरुध्यते इत्युपसंहरति—तत इति । शब्दस्य च सदोषस्य प्रामाण्यं न स्यादिति यदुक्तं तदप्युपसंहरति—शब्दस्त्विति । तत्रैव पूर्वोक्तां युक्तिमपि स्मारयति—दृश्यते हीति । तत्त्वप्रतिघातस्य चेत्यत्र 'शङ्कितत्वात्' इत्यनुषज्यते। इदानीं पूर्वप्रकृतं प्रत्यक्षादिविरोधे शब्दस्य बलीयस्त्वमुपसंहरति—तस्मादिति । यो हि प्रत्यक्षादिविरोधे सत्याम्नायस्याप्रामाण्यमाह स नियतमविरोधे सत्यदोषत्वेन तस्य प्रामाण्यमभ्युपगच्छति; तथा सति निर्दोषस्याम्नायस्य प्रागुक्तयुक्तिकल्पितदोषेभ्यः प्रत्यक्षादिभ्यो बलवत्त्वं युक्तमित्यर्थः ।

इदानीं प्रत्यक्षादिसापेक्षत्वादाम्नायस्तेभ्यो दुर्बल इति यदुक्तं तदनुभाषते—यच्चेति । तत्र दूषणमाह—तत्रेति । सत्यं शब्दस्य प्रत्यक्षादिविषयापेक्षास्ति ; न तु सा प्रमितौ स्वार्थपरिच्छेदे, किंतु स्वरूपसिद्धावित्यर्थः । एतदेव द्रढयति—अन्यथेति । यदि तु प्रमितौ शब्दस्य प्रत्यक्षाद्यपेक्षा स्यात् तदा अनपेक्षालक्षणत्वात् प्रामाण्यस्य शब्दः प्रमाणमेव न स्यादित्यर्थः । यद्वा यदि स्वरूपसिद्धौ शब्दः प्रत्यक्षादि नापेक्षते, ततोऽनवबुद्धः प्रमामकुर्वन् प्रमाणमेव न स्यादित्यर्थः । यदि नाम प्रमितावनपेक्षः शब्दः, ततः किमित्याह—तथा चेति । कार्ये प्रमितिलक्षणे शब्दस्य प्रत्यक्षाद्यनपेक्षत्वात् न शब्दः प्रत्यक्षादिभ्यो हीयते, प्रामाण्याविशेषादित्यर्थः । ननु कार्येऽनपेक्षोऽपि शब्दः स्वरूपसिद्धौ प्रत्यक्षाद्यपेक्षते, न तु प्रत्यक्षादि शब्दम् ; अतः किमिति तेभ्यो न हीयत इत्याशङ्क्याह—प्रत्यक्षादयोऽपीति । स्वरूपसिद्धौ सापेक्षत्वं प्रत्यक्षादिष्वपीन्द्रियाद्यपेक्षत्वादस्ति ; न च तदप्रामाण्यमावहति ; यतः कार्ये सापेक्षत्वं सामर्थ्यमपकर्ष

करोति ; अपकृष्टसामर्थ्यं चोत्कृष्टसामर्थ्येन बाधितमप्रमाणीभवति । तेन न सापेक्षत्वमात्रमप्रामाण्यहेतुः, अपि तु कार्ये सापेक्षत्वम् ; तच्च शब्दस्यापि नास्ति ; अतो न शब्दस्याप्रामाण्यमित्यभिप्रायः ।

इदानीं प्रत्यक्षाद्यधीनत्वादाम्नायस्वरूपसिद्धेरवश्यमाम्नायस्वरूपसिद्धये तेषां प्रामाण्यमनुमन्तव्यम्, अतश्चाम्नायविरोधे तेषामेव बलवत्त्वमुचितमिति तदनुभाषते—यत्त्विति । एवमनुभाष्य दूषयति—को वेति । सत्यमेषां P. 41-1. प्रामाण्यमनुमन्तव्यम्, किंतु देहात्मज्ञानवत् व्यवहाराविसंवादलक्षणम्, न तत्त्वावेदनलक्षणमित्यर्थः । कः पुनर्विशेषहेतुः ? येन व्यावहारिकमेव प्रामाण्यमनुमन्यते, न तु तत्त्वावेदनलक्षणमित्याशङ्क्य विशेषहेतुमाह—व्यावहारिकेति । व्यावहारिकप्रामाण्योपेतेभ्यः प्रत्यक्षेभ्यः सिद्धादाम्नायादिति व्यवहाराविसंवादस्याम्नायसिद्ध्यनुगुणत्वेनाविरोधादित्यबाध्यत्वे हेतुः, तद्विरोधादिति च तत्त्वदर्शनश्रुत्या बाध्यत्वे । अनेनेदमुक्तं भवति—प्रत्यक्षादिषु तत्त्वदर्शनबाध्यत्वान्नैषां तत्त्वावेदनलक्षणप्रामाण्यमाम्नायेनानुमन्यते ; व्यावहारिकं तु स्वानुगुणत्वादबाध्यम् ; अतोऽनुमन्यत इति विशेषः । नन्वियमाम्नायग्राहिणी प्रत्यक्षादिप्रतिपत्तिरुपायत्वादाम्नायजन्यया तत्त्वप्रतिपत्त्यापेक्षिता । यद्बलेन यत्सिद्धिः तत्ततो बलवत्तरमुचितम् ; तदुक्तम्—"यद्बलेनैव यत्सिद्धिः कथं तद्बलवत्तरम्" इति । ततश्च प्रत्यक्षादिप्रतिपत्तिभ्यः कथमाम्नायजन्यायास्तत्त्वप्रतीतेर्बलीयस्त्वम् ? कथं च तद्बाधकत्वम् ? विरोधे हि बाध्यबाधकभावो भवति ; न चोपायोपेययोः सोऽस्ति, अन्यथोपायोपेयभाव एव न स्यात् ; तदुक्तम्—"न चात्महेतुमेवासौ सिद्धा बाधितुमर्हति" इत्येतत् व्यभिचारदर्शनेन दूषयति—दृष्टं चेति । पूर्वस्याः प्रतिपत्तेरिति पञ्चमी ; परस्या इति षष्ठी । तदुदाहरति—यथेति । वनस्पतिप्रतिपत्तेरिति ; बलवत्त्वमित्यनुपज्यते । ननु हेतुत्वेनापेक्षितायाः पूर्वप्रतिपत्तितः परप्रतिपत्तेर्बलवत्त्वमुदाहर्तव्यम् । न चेह वनस्पतिप्रतिपत्त्या हस्तिप्रतिपत्तयो हेतुत्वेनापेक्षिता इति प्रमाणमस्ति । अतः प्रकृताननुरूपमुदाहरणमित्याशङ्क्य प्रकृततुल्यत्वमुदाहरणे तावत्प्रतिजानीते—अपेक्षिता हीति । हस्तिप्रतिपत्तय इति ; बह्वीनां तासां हेतुत्वम्, नैकस्या इति दर्शयति । यथ

चैतत्तथा वक्ष्यामः । नन्विन्द्रियसंनिकर्षानन्तरभावात् तज्जन्यैव वनस्पतिबुद्धिः, न हस्तिबुद्धिजन्या; ततः कथं तदपेक्षा सेत्युच्यत इत्याशङ्क्याह—
P. 41-7. न तस्या इति; वनस्पतिबुद्धेरित्यर्थः । कुत इत्याह—आपात इति । यदीन्द्रियसंनिकर्षमात्रात् वनस्पतिबुद्धेर्जन्म स्यात्, आपाते प्रथममेव स्यात्; न च भवति; अतो नेन्द्रियसंनिकर्षमात्रात् तस्या जन्म, किंतु हस्तिबुद्धिरपि हेतुत्वेनापेक्षितेति भावः । ननु मा भवतु केवलादिन्द्रियसंनिकर्षात् तस्या जन्म, देशविशेषसहिताच्चु भविष्यति; तथापि किमिति हस्तिबुद्धिर्हेतुत्वेनापेक्ष्यत इत्याशङ्क्याह—न च देशेति । तस्या जन्मेत्यनुवर्तते । कुत इत्याह—तद्देशस्येति । यत्र दूरस्थस्य प्रथममभूतं वनस्पतिज्ञानं पश्चात् समीपमुपसर्पतो भवति तत्र स्यादेवम्; यत्र तु तद्देशस्थस्यैव जायते तत्र न देशविशेषात् तस्या जन्मेत्यर्थः । स एव देशो यस्य पुंसः स तथोक्तः; यत्र देशे वनस्पतिज्ञानमापातोत्पन्नं तं 'तत्' इति परामृशति । यस्माद्धस्तिबुद्धिभ्यः प्राक् केवलात् देशविशेषसहिताच्चेन्द्रियसंयोगात् वनस्पतिबुद्धिर्न भवति, हस्तिबुद्ध्यनन्तरं च भवति, तस्मादन्वयव्यतिरेकाभ्यां हस्तिबुद्धिसहितादिन्द्रियसंयोगात् सा भवतीति निश्चीयत इति सिद्धं हस्तिबुद्धीनामुपायत्वमित्युपसंहरति—तस्मादिति । प्राच्यः पूर्वभावी विपर्यासो भ्रान्तिज्ञानं तत्रानुगता हस्तिनमेव पुनः पुनः गृह्णती मतिसन्ततिः बुद्धिमाला तज्जः संस्कारः स एव सचिवः सहकारी यस्येन्द्रियसंयोगस्य तत्कारिता सा वनस्पतिबुद्धिरित्यर्थः । यदा हि भ्रान्त्या हस्तिनं दृष्ट्वा आश्चर्यादिना प्रणिहितमनसः कस्यचित् तमेव हस्तिनं तेन तेन विशेषेण पुनः पुनः पश्यतो हस्तिविलक्षणविशेषप्रबोधमुखेनानभिसंहितमेव वनस्पतितत्त्वज्ञानमुदेति तदास्ति हस्तिनः पुनः पुनर्दर्शनस्य मतिसंततिनाम्नो वनस्पतितत्त्वज्ञाने निमित्तत्वम्; तथाहि—मिथ्याहस्तिनं सकृत् ज्ञात्वा तमुपेक्ष्य विषयान्तरसंचारिणो न तत्र तत्त्वज्ञानमुदेति । ननु मनःप्रणिधानमेवात्र तत्त्वज्ञाननिमित्तम्; एवं तर्हि न तत्तत्त्वज्ञानमभिसन्धाय कृतम्; अपि तु हस्तिनमेव पुनः पुनर्ज्ञातुम् । नन्वन्यार्थमपि प्रणिहितं मनोऽन्यत् ज्ञापयिष्यति, यथा घटायोन्मीलितं चक्षुः पटम्; न तर्हि घटपटज्ञानवत् युगपदेकत्र हस्तिज्ञानवनस्पतिज्ञाने संभवतः, विरोधात् । अतो मनः प्रणिहितं तत्त्वज्ञानं कुर्वदपि हस्तिज्ञानसंततिपुरः-

सरमेव करोतीति सिद्धं हस्तिज्ञानसंततेरपि तत्त्वज्ञाननिमित्तत्वम् । ननु हस्तिधर्मविलक्षणधर्मज्ञानात् तत्त्वज्ञानं भवति; अतस्तदेव तस्य निमित्तम् । सत्यम्; तदेव तु तेन तेन विशेषेण पुनः पुनर्हस्तिनं निपुणतरमवलोकयतो भवति; न तु सकृत् तं ज्ञात्वोपेक्ष्य विषयान्तरसंचारिण इत्युक्तम् । तेन न विलक्षणधर्मज्ञानं हस्तिज्ञानसंततेरवान्तरव्यापारोऽपि हेतुत्वं व्याहन्ति, सर्वकारकाणामहेतुत्वप्रसङ्गात्; तदुक्तम्—"स्वव्यापारव्यवायो हि सर्वस्मिन्नेव कारके" इति । तस्मात् सर्वमनाकुलम् । अत्रैवोदाहरणान्तरमाह—
एवमिति; एकत्वादिसंख्याबुद्धयः उपायाः यासामिति विग्रहः । विंशत्यादि- P. 41-10
बुद्धीनां च बलवत्त्वमेकत्वादिसंख्याबुद्धीनामवच्छेदकत्वमभिभूय द्रव्यावच्छेदकत्वेन स्वव्यवहारप्रवर्तकत्वात् द्रष्टव्यम् । यच्चावच्छेदकत्वं नाम संख्यायाः स्वरूपं तदभावे महासंख्यायामवान्तरसंख्या स्वरूपविरहात् मिथ्यैव; तदुक्तम्—"पूर्वं पूर्वं मिथ्या" इति ।

एवं स्थिते संप्रति प्रसङ्गात् चोद्यान्तरमपि निरस्यति—एवं चेति । एवमित्यनन्तरोक्तं हस्तिवनस्पत्यादिन्यायं परामृशति । यदेके वर्णयन्ति तदपास्तमिति वक्ष्यमाणेनान्वयः । यद्वर्णयन्ति तदाह—स्वयमेवेति । कथमित्याह—नाभेद इति । कुत इत्याह—भेदोपाया इति; न हि प्रमात्रादिभेदमन्तरेणाभेदस्य प्रतिपत्तिरस्तीत्यर्थः । तत्र को दोष इत्याह—तत्रेति । अद्वैतं स्वप्रतिपत्तये प्रमात्रादिद्वैतमाक्षिपति; न च द्वैताद्वैते संभवतः; अतः परस्परं व्याघात इत्यर्थः । कथं पुनरेतदपास्तमित्याह—यत इति । हेतुमाह—मिथ्येति । अत्र च हस्तिज्ञानान्येवोदाहरणानि । कथमसत्यन्नासत्त्वे भेदस्योपायत्वमिति चेदत आह—व्यावहारिकमिति । एवं प्रत्यक्षादिविरोधे शब्दस्य बलवत्त्वमिति स्थितम् । इतिः समाप्तौ ।

यदपरमुक्तं दृष्टव्यभिचारित्वाच्छब्दस्येति तद्दूषयति—व्यभिचारेति । शब्दस्य स्वयमदुष्टस्यापि दुष्टतरोच्चार्यत्वमेव दोषः, दोषाणां कार्यविपर्ययकारिणां वैचित्र्यादिति भावः । अथादुष्टहेतुजन्यस्य प्रत्यक्षस्याव्यभिचारित्वमुच्यते, तच्छब्दस्यापि समानमित्याह—इतरयोरिति ।

यच्च प्रत्यक्षादिबलवत्त्वेऽनवकाशत्वं कारणमुक्तं तदपि दूषयति—
P. 41–17 तथेति । शाब्दप्रत्यक्षयोः समानमित्यनुवर्तते । समानत्वमाह—यदीति । वेदान्तार्थत्वेन प्रसिद्धोऽर्थस्तस्यावकाशो वाच्यः, नान्यो हिंसानिषेधविधेरिवानवकाशयज्ञियहिंसाविधिबाध्यस्य बाह्यहिंसा । स च मुख्यो वा गौणो वा; न तूभौ, वाक्यभेदप्रसङ्गात् । तद्यदि मुख्यो वेदान्तार्थः प्रसिद्धः, ततो गौणाविवक्षितार्थते न स्त एव; कथमवकाशः? अतोऽनवकाशत्वमाम्नायस्यापि समानमित्यर्थः । अथ सत्येव द्वये जात्याद्यात्मनौपचारिकमेकत्वं वेदान्तानामर्थः स्यात्, अविवक्षितार्थता वा जपोपयोगिनामित्युच्यते, ततो द्वये सति तद्विषयैः प्रत्यक्षादिभिः जात्याद्यात्मनौपचारिकैकत्ववाचिनां जपार्थानां वा वेदान्तानां विरोध एव नास्ति विभिन्नविषयत्वादविषयत्वाद्वा; तत्र बलाबलचिन्तैव नावतरति; विरोधे हि सा भवति । तस्यां च सत्यामेकस्य सावकाशत्वेन दौर्बल्यं तदा भवेत्; कुतस्तदित्याह—अथेति । पक्षद्वयेऽपि दूषणान्तरमाह—कथमिति । तुल्यकक्ष्योऽर्थोऽवकाशो भवति । न च मुख्येन गौणस्य तुल्यकक्ष्यत्वम्, गौणमुख्यन्यायविरोधाच्चेति भावः । तथा वाच्यमर्थं प्रति वाचकत्वेन शब्दस्य शेषभावः अङ्गत्वम् औत्पत्तिकं स्वाभाविकं "दृष्टो हि तस्यार्थः कर्मावबोधनम्" "अविशिष्टस्तु वाक्यार्थः" इति न्यायसिद्धम्; तत् कथमविवक्षितार्थता स्यादित्यर्थः । अथोच्यते यत्र प्रमाणान्तराविरोधः, तत्र मुख्यमर्थमुल्लङ्घ्योपचरितार्थत्वमविवक्षितार्थत्वं वा न स्यात्; इह तु भेदग्राहिप्रत्यक्षादिप्रमाणान्तरैरद्वयाम्नायस्य विरोधात् मुख्यार्थासंभवे किमिति तयोरन्यतरन्न स्यात्; तदेतदाशङ्कयति—प्रमाणान्तरेति । तद्दूषयति—वार्तमिति; वार्तागतमेतत्, असारं वेत्यर्थः । असारत्वमाह—नेति । स्वतः प्रामाण्यस्य स्थितत्वादिति भावः । मुख्यार्थपरतास्वभावत्वं स्वरसम्। प्रमाणान्तरानपेक्षप्रामाण्यस्य स्वरसात्यागे हेतुमाह—तदिति । प्रमाणान्तरापेक्षत्वं प्रमाणान्तरानुगुणतया वृत्तौ हेतुः हि यत इत्यर्थः । व्यतिरेकमाह—निरपेक्षस्येति । प्रमाणान्तरनिरपेक्षस्य तु प्रमाणस्य स्वार्थं हातुमादातुं वा विरुद्धत्वाविरुद्धत्वाभ्यां प्रमाणान्तरानुसरणे को हेतुः? न कश्चिदित्यर्थः। ननु लोके 'अग्निर्माणवकः' इत्यादौ प्रमाणान्तरानुगुणतया शब्दस्य

प्रवृत्तिर्दृष्टा; अतोऽत्रापि तथैव भवितुं युक्तमित्याशङ्क्य तद्वैपम्यमाह—लौकिका इति । लौकिकास्तु शब्दाः प्रमाणान्तरदृष्टेऽर्थे प्रयुज्यन्ते . तेन P. 42-1.
ते प्रमाणान्तरापेक्षमर्थमभिदधतीति हेतोर्युक्ता तेषां प्रमाणान्तरानुसारिणी वृत्तिरित्यर्थः । व्यतिरेकमाह—तुल्ये त्विति । प्रत्यक्षाम्नाययोः प्रमाणान्तरानपेक्षत्वे तुल्ये तद्विपर्ययः किं न भवति? प्रत्यक्षादीन्येवाम्नायानुगुणतया किमिति न नीयन्त इत्यर्थः । विरुद्धाव्यभिचारिहेतुद्वयवदन्योन्यव्याघातादप्रामाण्यमेव चोभयोरपि किमिति न स्यात्? "पौर्वापर्ये पूर्वदौर्बल्यम्" इति न्यायेन रजतज्ञानस्येव शुक्तिज्ञानेन पूर्वस्य प्रत्यक्षादेराम्नायेन बाधः किमिति न स्यादित्यर्थः । अन्त्य एवात्र पक्षः सिद्धान्तोऽभिप्रेतः; पूर्वौ तु सर्वथा प्रत्यक्षाद्यननुगुणतयाम्नायस्य वृत्तिर्न प्राप्नोतीत्येवंपरौ प्रौढिवादितयोक्ताविति मन्तव्यम् । दृष्टान्तमेव द्रढयति—न खल्विति । खलुशब्दः प्रसिद्धिद्योतनार्थः । प्रसिद्धमेव तद्रजतज्ञाने यत्पूर्वविरोधादुत्तरमविषयमन्यविषयं वा न कल्प्यते, किंतु पूर्वस्यैव बाधेति, तथेहापि भवितुमर्हतीति भावः । अविषयमित्याम्नायस्याविवक्षितार्थत्वपक्षसाम्यार्थमुक्तम् । ननु प्रमाणान्तरविरोधेऽपि चेन्मुख्यमर्थं शब्दो न जहाति, कथं तर्हि "आपो वै शान्ताः" इत्यादिषु गुणवादः? न ह्यत्र प्रमाणान्तरविरोधादन्यत् गुणवादे निबन्धनमस्ति; तदेतदाशङ्कयति—कथमिति । सिद्धान्ती त्वाह—यत्रेति । यद्वाक्यं यावत्प्रमाणं तस्य तावतो यत्र श्रौतैरभिधेयभूतैर्मुख्यैरर्थैरन्योन्यमनन्वयात् अर्थो वाक्यार्थीभूतो विषयो न निष्पद्यते, तत्र द्वितीयस्या अपि वृत्तेर्लोके शब्दानां वृत्तिदर्शनात् तया शब्दस्य प्रमाणस्य विषयलाभ आश्रीयते; यथा "वेतसशाखयावकाभिश्चाग्निं विकर्षति" इति वेतसशाखावके विधीयेते; "आपो वै शान्ताः" इति चापः स्तूयन्ते; तत्र विधिस्तुत्योर्भिन्नविषयत्वेन परस्परमनन्वयाद वाक्यार्थासिद्धौ, असत्यपि प्रमाणान्तरविरोधे श्रुतामपां स्तुतिमुल्लङ्घ्याभिजनस्तुत्या अभिजातः स्तुतो भवतीति वेतसशाखावकास्तुतिपरत्वमेवाश्रीयते । एतदुक्तं भवति—न वेदे प्रमाणान्तरविरोधो गौणत्वहेतुः, किंतु मुख्यार्थत्वे प्रमाणविषयसिद्धावनुपपत्तिः । ननु विधिस्तुत्योरेकविषयत्वमन्यत्र प्रतीतम्; अतस्तयोर्भिन्नविषयत्वेऽस्त्येवात्रापि प्रतीतिविरोधः।

सत्यम्; वाक्यार्थानिष्पत्तौ तु स हेतुः, नापां श्रुतशान्ततापरत्वोत्सर्गे; तदुत्सर्गस्तु वाक्यार्थानिष्पत्तिहेतुक एव। ननु "आदित्यो यूपः" इत्यादौ प्रमाणान्तरविरोधादेव गौणत्वम्; विरुध्यते हि प्रमाणान्तरेणानुपलब्ध्या यूपस्यादित्यता। न हि तत्रापि प्रमाणान्तरविरोधो गौणतायां हेतुः, अपि तु प्रमाणार्थानिष्पत्तिरेव। सा हि वेतसशाखादौ दृष्टशक्तिरव्यभिचारिणी च। यूपस्यादित्यतायाः पशुनियोजनवाक्यार्थेऽनन्वयात् प्रमाणार्थानिष्पत्तिरस्त्येव। व्यभिचारी तु प्रमाणान्तरविरोधः, वेतसशाखादावसत्यपि तस्मिन् गौणताश्रयणात्; अव्यभिचारि च कारणमुचितम्। तस्माद्यूपादावपि प्रमाणार्थानिष्पत्तिरेव गौणतानिमित्तमिति स्थितम्। द्वितीयस्या वृत्तेरिति पञ्चमी। वेदान्ते तु तथा नास्तीति न गौणत्वमित्यभिप्रायेण व्यतिरेकमाह—यत्र त्विति। अपावर्तन्ते; स्वरसान्निवर्तन्त इत्यर्थः। अत्रैव प्रागुक्तां युक्तिं स्मारयति—न हीति।

अत्रैव मतान्तरमाशङ्कयति—अथेति। एवमिति; आम्नायस्य गौणत्वमित्यर्थः। उभयानुग्रहं विवृणोति—एवं हीति। आम्नायस्य गौणत्वे जात्याद्यात्मना भावानामभेदः स्वतश्च भेद इति भिन्नविषयत्वेनाविरोधादुभावप्यनुगृहीतौ स्याताम्; नाम्नायेन प्रत्यक्षादेरत्यन्तबाधेत्यर्थः। व्यतिरेकमाह—अन्यथेति। यदि पुनराम्नायो मुख्यार्थः स्यात् तदानीमद्वैतस्य
P. 42-5 सत्यत्वात् द्वैतविषयं प्रत्यक्षाद्यत्यन्तमपबाधितं स्यात्, नोभयानुग्रहः; न चोभयानुग्रहे सत्येकस्यात्यन्तबाधा युक्तेति भावः। तदेतत् दूषयति—नैतदिति। कुत इत्याह—प्रमाणेति; अयमर्थः—प्रमाणसामर्थ्यस्यानुसारेण प्रमेये काचित् कल्पना भवति; यथा—व्रीहियवनियमविधिद्वयसामर्थ्यानुसारेण व्रीहियवादौ प्रमेये विकल्पकल्पना; यथा च—"दर्शपूर्णमासाभ्याम्" इति द्विवचनसामर्थ्यानुसारेण समुच्चयकल्पना; यथा च—उदितानुदितहोमादौ शास्त्रान्तरसामर्थ्यानुसारेण चरणभेदेन व्यवस्थाकल्पना। प्रमाणस्वरूपे तु स्वरसतः स्वभावेनौत्पत्तिक्या शक्त्या या मुख्यार्थसिद्धिस्तां परित्यज्य नोभयानुग्रहाय गौणत्वकल्पनायां किंचित्कारणमस्तीति। उपसंहरति—तस्मादिति। प्रमेय इत्यनुवर्तते। परोक्तं हेतुं निराह—

नेति । इतर आह—ते एवेति । ये एव प्रत्यक्षाद्याम्नायाख्ये परस्पर- P. 42-13.
विरुद्धे प्रमाणे ते एवोभयानुग्रहे प्रमाणम्, नापरं प्रमाणं तदर्थं प्रार्थ्यत इत्यर्थः । एतदेव विवृणोति—यदीति । कुत इत्याह—प्रमाणत्वादिति ; तस्याम्नायादेः स्वीयं यत्प्रमाणत्वं तत एव, न प्रमाणान्तरबलात्, तेनाम्नायादिना द्वैतं प्रत्यक्षादेरर्थः गौणमद्वैतमाम्नायस्यार्थ इत्येवमर्थो व्यवस्थाप्यते यत इत्यर्थः । एतदुक्तं भवति—एवमव्यवस्थाप्यमाने प्रत्यक्षाद्याम्नायौ प्रमाणमेव न स्याताम्, विरुद्धार्थत्वात्; प्रमाणं च तौ । अतः स्वतःप्रामाण्यबलेनैव विषयव्यवस्था; उभयानुग्राह्यत्वे ते एव प्रत्यक्षाम्नायौ प्रमाणे प्रमाणमिति । 'तयोः' 'ताभ्याम्' इति वक्तव्ये सामान्येन न्यायोत्पादनार्थं 'तस्य' 'तेन' इति च सामान्याभिप्रायेणैकवचनं कृतम् । सिद्धान्ती त्वाह—यथेति । प्रमाणत्वेन चेत् तदर्थं व्यवस्थापयति, ततो यथाभूतस्यार्थस्य ततोऽवगम्यमानस्य तत्प्रमाणं तथाभूत एव व्यवस्थाप्यः; एवं तदनुगृहीतं भवति; अन्यथा तथाभूतार्थत्यागे तु अर्थविपर्ययात् बाधितमेव तत्स्यात् । एवं चाद्वयाम्नायस्याद्वयरूपार्थव्यवस्थापने सति प्रत्यक्षादिगोचरस्य द्वयस्यासंभवात् कुत उभयानुग्रहसंभव इति भावः । यथाप्रतीयमानादन्यथा व्यवस्थापने दोषान्तरमाह—अप्रमाणिका चेति । कुत इत्यत आह—तत इति । अप्रतीयमानो ह्यर्थो व्यवस्थाप्यमानो न ततः शब्दात् स्वरसेन प्रतीयते; नाप्यन्यतः, प्रमाणान्तरस्याभावात्; अतोऽप्रमाणिकैव सार्थव्यवस्थेत्यर्थः । अत्रैव दोषमाह—इतरेतरेति । तमेव स्पष्टयति—प्रामाण्यादिति । स्वरससिद्धार्थाश्रयणे तु नैष दोष इत्याह—स्वरसेति । यदा ह्यप्रतीयमानोऽर्थः कल्प्यते, तदा प्रामाण्यबलेन तत्प्रतीतिः कल्प्या; तत्प्रतीत्या च तज्जनकत्वेन प्रामाण्यमिति इतरेतराश्रयः स्यात् । स्वरससिद्धे तु मुख्येऽर्थे गृहीते स्वरससिद्धया तत्प्रतीत्या प्रामाण्यम्, प्रामाण्यात् तत्प्रतीतिः, तस्याः स्वरसत एव सिद्धत्वादित्यर्थः । प्रकृतमुपसंहरति—तस्मादिति ; यस्माद्विरोधे नोभयानुग्रहो युक्तः, तस्मात्पूर्वस्य प्रत्यक्षादेराम्नायेन बाध एव प्रामाणिकः, तथा प्रतीतेः पूर्वोपमर्देन प्रतीतेः, शुक्तिरजतादौ वा तथा प्रतीतेः, नोत्तरस्याम्नायस्योप-

चरितविषयान्तरकल्पना प्रमाणानुसारिणीत्यर्थः । अत्रैव दृष्टान्तमाह—
P. 42-28 न खल्विति ।

यदपि प्रत्यक्षादीनामनवकाशत्वमुक्तम्, तदप्यसिद्धमित्याह—न चेति । कथमनवकाशत्वं नास्तीत्याह—या खल्विति । अनन्यगतित्वेनानवकाशत्वं भवति; अस्ति च प्रत्यक्षादीनां रजतादिविभ्रमवत् भ्रान्तित्वं गतिः; अतो नानवकाशत्वमित्यर्थः । विच्छिन्नमपि निरवकाशत्वं रजतादिविभ्रमप्रसङ्गेन स्मृत्वेदानीं निरस्तमित्यदोषः । रजतादिविभ्रमतुल्यगतित्वमेव तेषामाह—यदीति । तेषामिति; रजतादिविभ्रमाणामित्यर्थः । माणवकः स्वरूपेण सन्नेव गुणयोगमात्रेणाग्निशब्दस्योपचरितो विषयः; रजतादि स्वरूपेणैवोपचरितमित्यवान्तरविशेषमात्रप्रदर्शनार्थमुक्तम्—कल्पित इति; कल्पितो बुद्ध्यारोपित इत्यर्थः । प्रत्यक्षादीनामपि तथाविध एव विषयो भवतीति वाक्यशेषः । अथ तस्य रजतादेरसत्त्वादविषया रजतादिविभ्रमाः, ततः प्रत्यक्षादयोऽपि तथैव भविष्यन्तीत्याह—अथेति । आम्नायस्योपचरितार्थत्वमविवक्षितत्वेनाविद्यमानार्थत्वं वा गतिरुक्ता; सा प्रत्यक्षादेरपि तुल्येति दर्शयितुं रजतादिविभ्रमवत् प्रत्यक्षादेरुपचरितार्थत्वमविद्यमानार्थत्वं चोक्तमिति मन्तव्यम् । प्रकृतमुपसंहरति—तस्मादिति । यथाम्नायस्योपचरितार्थत्वमविवक्षितार्थत्वं वा गतिरिति सावकाशत्वम्, तथा रजतादिविभ्रमवत् प्रत्यक्षादीनामपीति न तैरनवकाशत्वेनाम्नायबाधेति भावः । उभयोरिति; प्रत्यक्षाम्नाययोरित्यर्थः । एवं च सति मतान्तरमपि निराकृतमित्याह—एतेनेति । मतान्तरमुपन्यस्यति—यदाहुरिति । तथाभावः; तथात्वमुपचरितार्थत्वमविवक्षितार्थत्वं वेत्यर्थः । दृष्टानुसारिणी कल्पना युक्तेति पराभिप्रायः । कथं तन्निराकृतमित्याह—प्रत्यक्षादिष्विति । सावकाशत्ववत् दुष्टत्वमपि प्रत्यक्षाम्नाययोरविशिष्टम् । अतो न ततोऽप्याम्नायस्यैवोपचरिताविवक्षितार्थत्वे इति भावः । प्रत्यक्षाभासे तद्दर्शनमिति चेत्; सत्यम्; मानान्तरविरोधादेव तु तदाभासत्वं तत्र कल्पितम्, न तु पूर्वम्; तथा शब्देऽप्यमुख्यार्थत्वमविवक्षितार्थत्वं वेति तुल्यता ।

इदानीं पूर्वोक्तं पक्षान्तरं दूषयितुमनुकीर्तयति---यच्चिनि मुख्यत्वात् P. 43-5 प्रथमभावित्वादनुपजातविरोधित्वेन प्रतिष्ठितविषयैः प्रत्यक्षादिभिर्बाधितविषय आम्नायः; अतो न प्रमाणमित्यर्थः; प्रतिष्ठितो निश्चलीभूतोऽर्थो येषामिति विग्रहः । तत् दूषयति---अत इति; यत एव प्रत्यक्षादीनि पूर्वभावीनि, अत एवाम्नायस्तेषां बाधक इत्यर्थः । अत्र दृष्टान्तमाह---शुक्तिज्ञानवदिति; यथा शुक्तिज्ञानं पूर्वभाविनो रजतज्ञानस्य बाधकं तद्वदित्यर्थः । ननु च मुख्यत्वात् प्रत्यक्षाद्यनुसारेण तदविरोध्याम्नायः; तस्मादाम्नायस्यार्थो न कल्प्यत इत्याशङ्क्याह---न चेति । अत्रापि शुक्तिज्ञानवदेवेति दृष्टान्तः । हेतुमाह---अनपेक्षत्वादिति । अनपेक्षत्वमेव विवृणोति---नेति । प्रत्यक्षाद्यधीनप्रामाण्यश्चेदाम्नायः स्यात्, ततश्च प्रामाण्याय प्रत्यक्षाद्यपेक्षेत; न त्वेतदस्ति, अपौरुषेयतया तस्य स्वतः प्रामाण्यात्; अतो न तदनुसारेणार्थकल्पनामर्हतीत्यर्थः । यदि च प्रत्यक्षादिभिराम्नायस्य संभूयैकप्रमितिकार्यकारिता स्यात्, ततोऽपि कार्यं प्रति सापेक्षता स्यात्; ततश्च विरुद्धार्थयोः संभूयैककार्यकारितासंभवात् पूर्वानुरोधेनोत्तरं नीयेत; न त्वेतदस्तीत्याह---न तैरिति । यदि वा अश्वप्रतिग्रहेष्ट्यादिवाक्यगतपदवदनयोरेकवाक्यता स्यात् ततोऽप्येवं स्यात्, न त्वेतदप्यस्तीत्याह---नाम्नायस्येति । उभयत्रापि हेतुमाह---परस्परेति । यद्वा 'नाम्नायस्य' इत्यसंभूयकारित्वे हेतुः; एकवाक्यत्वमेकतात्पर्यत्वम्; तस्मिन् सति संभूयकारित्वं भवति । न चाम्नायस्य प्रत्यक्षादेश्च तदस्ति, उभयत्र परस्परनिरपेक्षबुद्ध्युत्पादादिति ग्रन्थो योज्यः । किमेवं सति न्याय्यमित्यत आह---तत्रेति । तत्र तस्मिन् परस्परानपेक्षबुद्ध्युत्पादे सति परबलीयस्त्वं न्याय्यम्, रजतशुक्तिज्ञानादौ तथा दृष्टत्वात्; न तु पूर्वानुसारेणोत्तरस्यार्थकल्पनेत्यर्थः । एतदभियुक्तवचनेन द्रढयति---यथोक्तमिति । क्व तर्हि मुख्यबलीयस्त्वमित्यत आह---यत्र त्विति । तुशब्दो विशेषार्थः; यत्र तु वाक्यविशेषे बहूनां पदार्थानामेकवाक्यत्वेन संभूयैकवाक्यार्थज्ञानकारित्वम्, तत्र पूर्वं विरोधिनः पदस्यानुच्चरितत्वादनुपसंजातविरोधितया मुख्ये प्रथमे पदे स्वरसवृत्त्या मुख्यया वृत्त्या स्थिते सति पराण्युत्तराणि पदानि पूर्वपदापेक्षितार्थसमर्पणानुपपत्तेः

प्रथमया मुख्यया वृत्त्या पूर्वपदैकवाक्यतां प्रतिपत्तुमशक्नुवन्ति द्वितीयया
-15 गौण्या वृत्त्या पूर्वपदापेक्षितमर्थं समर्पयन्ति एकवाक्यतासामर्थ्यात् एक-
वाक्यताबलेन, अन्यथा अन्योन्यमनन्वितार्थानां पदानामेकवाक्यतैव न स्यात्—इत्यनेन हेतुना तत्र मुख्यस्य पूर्वस्य बलीयस्त्वमित्यर्थः। यथा—"प्रजापतिस्तपोऽतप्यत । ततस्तपस्तेपानात्त्रयो वेदा अजायन्त" इत्युपक्रम्य "उच्चै ऋचा क्रियते, उच्चैः साम्ना, उपांशु यजुषा" इत्यन्ते श्रूयते । तत्र संशयः—किमृगादिशब्दा यथालक्षितऋगादिजातिवचनाः, किं वा ऋग्वेदादिवचनाः इति; तत्र मुख्यत्वादृगादिजातिवचना इति प्राप्ते सत्युपक्रमे वेदसंकीर्तनात् तस्मिंश्चानुपजातविरोधितया मुख्यार्थे व्यवस्थिते तदपेक्षितमर्थमृगादिशब्दा मुख्यया वृत्त्या समर्पयितुमशक्नुवन्तो द्वितीयया वृत्त्या वेदवचना इति सिद्धान्तितम् ।

यत्तूक्तम्—कर्मविषयः साध्यसाधनेतिकर्तव्यतादिभेदपराः; वेदान्ताश्चाभेदपराः; तेनाम्नायः स्वयमेव परस्परव्याहतो दुर्लभप्रामाण्यः; अतः प्रत्यक्षादिविरोधे सुतरां तस्याप्रामाण्यं सूचितमिति, तदनुभाषते—यच्चिति । एवमनुभाष्य दूषयति—तत्रेति । यत्परः शब्दः, तत्र शब्दः प्रमाणम्, न च कर्मविधयो भेदसद्भावप्रतिपादनपराः; किंतु व्यवहारसिद्धं भेदमुपाश्रित्य 'इदं साध्यमनेन साधनेनेत्थमनयेतिकर्तव्यतया साधयेत्' इत्यंशत्रयविशिष्टपुरुषहितभावार्थविधिप्रधानाः । तेन न ते भेदे प्रमाणमिति तैः सहाभेदप्रमाणानां वेदान्तानां कुतो व्याकुलत्वमिति भावः । अत्र परश्चोदयति—स्यादेतदिति । यद्यपि शब्दो न भेदपरः किंतु भावार्थविधिपरः, तथापि भेदमार्थमाक्षिपति; न ह्यसति भेदे साध्याद्यंशत्रयविभागोऽस्ति । न च तस्मिन्नसति तद्विशिष्टस्य भावार्थस्य विधिरुपपद्यत इत्यर्थः। तत्परिहरति—उच्यत इति । सत्यं हितानुशासनं भेदसत्तामाक्षिपेत् यद्यंशत्रयमन्तरेण तन्न स्यात्; यथा श्येनादिविधिषु "न हिंस्यात" इति प्रतिषेधात् साध्यांशाभावेऽपि भवति, तथा सर्वत्र कर्मविधिष्वंशत्रयाभावेऽपि भविष्यति; अतो न भेदमाक्षिपन्तीति भावः; ननु श्येनादिषु हिंसा साध्या; न च सा खपुष्पवत् नित्यं नास्त्येव, कृतायाः सत्त्वात् ।

न च न प्रीतिकरी, न च न काम्यते; अतः कथं तेषु साध्याभाव इत्याशङ्क्याह—तथा हीति । यो ह्यनतिक्रान्तप्रतिषेधशास्त्रः, तस्य निषि- P. 43-20. द्धत्वेनानर्थोदया हिंसा न प्रीतिकरी न काम्या; न च साध्यांशः; अतस्तं प्रति साध्यांशाभाव इत्यर्थः । अनर्थ उदीयते उद्गच्छत्यस्या इति अनर्थोदया । अथ तीव्रक्रोधाक्रान्तचित्ततया समुद्भूतेन तमसा तिरोहितार्थानर्थविवेकज्ञानस्यात एवानर्थामपि हिंसामर्थत्वेन पश्यतोऽतिक्रान्तप्रतिषेधशास्त्रस्य कस्यचिदेवंभूतस्य पुंसो हिंसा साध्या भवति; इत्थं श्येनादिषु साध्यांशसंभव उच्यते; तथा ज्योतिष्टोमादिविधिष्वप्यनाद्यविद्यावतामविद्याकल्पितास्त्रयोऽप्यंशाः संभवन्तीति तानविद्यासिद्धानेवाश्रित्य तेषामविद्यावतामर्थेन हितानुशासनमुपपद्यत इति न तेनांशत्रयविभागसत्त्वाक्षेपः; तदेतदाह—अथेति । विद्यावतां तर्ह्यविद्याकल्पितांशत्रयासत्त्वात् कथं कर्मविधय इत्याशङ्क्याह– प्रतिबुद्धास्त्विति । साक्षात्कृताद्वयात्मतत्त्वास्त्वंशत्रयमसत् आत्मानं वा अकर्तारं मन्वानाः कर्मविधिभिर्नानुशिष्यन्ते; तेन तान् प्रति किमंशत्रयसत्त्वेनेत्यर्थः । अत्र दृष्टान्तमाह—यथेति । नानुशिष्यन्त इत्यनुवर्तते । क्रोध एवारातिः क्रोधारातिः, स निर्जितो यैस्ते तथोक्ताः । उपसंहरति—तदेवमिति ; तत् तस्मात् एवं पूर्वोक्तेन प्रकारेण व्यवहारतः व्यावहारिकप्रमाणेभ्यः प्रत्यक्षादिभ्यः सिद्धो योंऽशत्रयभेदः स एवाश्रयो येषां कर्मविधीनां तेषु यद्यप्यंशत्रयभेदप्रतीतिरस्ति तथापि तेषां कर्मविधीनां भेदपरत्वाभावात् न तत्र भेदे प्रमाणमित्यर्थः । ननु प्रतीयते चेत् कथं न तत्र प्रामाण्यमित्याशङ्क्य न प्रतीतिमात्रेण प्रामाण्यम्, अपि तु तात्पर्येत इति दर्शयितुं दृष्टान्तमाह वृत्तान्तेष्विति । वपोत्खननादिवृत्तान्तेषु "प्रजापतिर्वपामुदखिदत्" इत्यादीनामर्थवादानां प्रतीतिमात्रेण यथा न प्रामाण्यं तथा कर्मविधीनां नांशत्रयभेद इत्यर्थः । यदा चाम्नायो न भेदे प्रमाणं न च भेदसत्तामाक्षिपति, तथा सति नाम्नायस्य परस्परव्याहतिरिति न तया तस्य दुर्बलत्वमित्यभिप्रायेणाह—तथा चेति । एवमाम्नायपरस्परव्याहतिं परिहृत्य प्रत्यक्षादीनामेव दुर्बलत्वसिद्धये तामापादयति—अपि चेति । कुत इत्याह—बाध्येति । कुत्रेत्याह—रजतेति ।

ऐन्द्रियकमात्रज्ञानाभिप्रायेणात्र परस्परव्याहतिरुक्ता; न तु रजतज्ञानं प्रत्यक्षम्, अपितु तदाभासः। संप्रति भेदाभेदवादिनं प्रति प्रत्यक्षाभि-
4-4. मतयोरन्योन्यव्याहतावुदाहरणान्तरमाह—भेदाभेदेति। सर्वत्र जातिगुणा-दिषु भेदाभेदौ प्रत्यक्षाविष्टौ; तौ च परस्परविरुद्धौ; अतस्तद्विषयत्वेन प्रत्यक्षस्यैव व्याहतत्वात् दुर्बलत्वं युक्तमिति भावः। एवमनुमानादिष्व-प्यूह्यम्। तदेवमाम्नायबलवत्त्वे स्थिते प्रत्यक्षादिविरोधेऽप्याम्नाय एव प्रमाणमिति व्यर्थत्वात् तद्विरोधे परिहारलक्षणं नारम्भणीयमिति प्राप्तम्; तथापि यथारभ्यते तदाह—तदेवमिति। आम्नायः प्रत्यक्षादिविरोधे सत्युपचरितार्थः, शब्दत्वात्, लौकिकशब्दवदिति सामान्यतो दृष्टानुमाना-भासेन भ्रान्तो यो नाम मन्दधीः प्रत्यक्षादिविरोधे आम्नायस्योपचरिता-र्थत्वं मन्यते तत्प्रतिबोधनाय प्रत्यक्षादिविरोधो निरस्यत इति वक्ष्यमाणे-नान्वयः; न तु विवेकिनं प्रति। कथं पुनरनुमानाभासः? उच्यते—लौकिकं वचः प्रत्यक्षाद्यधीनप्रामाण्यमिति तद्विरोधे युक्तमुपचरितार्थत्वम्। आम्नायस्तु निरपेक्षप्रामाण्यः सन् किमिति प्रत्यक्षादिविरोधेऽप्युपचरितो भवति। तेन प्रत्यक्षाद्यधीनत्वे सति प्रत्यक्षादिविरोधः शब्दस्योपचरिता-र्थत्वे निमित्तम्, न केवल इत्यनुमानाभासत्वम्। प्रकारान्तरमाह—यो वेति। सर्वेषामविद्यावतां सर्वदा भावादीदृशमेवेदं निश्चितत्वेन रूढं निरूढत्वेन निबिडम् अत्यन्तं गाढम्, दुरुच्छेदमिति यावत्; तद्भावस्तत्ता तया; 'निरूढिनिबिडतया' इति पाठे तु निरूढ्या निबिडमिति समासः, निरूढिश्च निश्चितत्वेन रूढिरेव। कस्य निरूढनिबिडतयेत्यपेक्षायामाह—भेददर्शनान्धकारस्येति। भेददर्शनमेवान्धकारः, तत्त्वाप्रकाशसाम्यात्; तस्य निरूढिनिबिडतया लोकवचसां च प्रत्यक्षादिभिर्बाधदर्शनात् प्रत्यक्षादीनामेव बलवत्त्वं यो वा मन्यते तत्प्रतिबोधनाय प्रत्यक्षादिविरोधो निरस्यत इत्यर्थः। ननु मन्दधिया भ्रान्तेन च वराकेण प्रत्यक्षादिविरोधदूषितस्याम्नायस्य न काचित् क्षतिः; अतः किमिति तन्निरासाय प्रयत्यत इत्याशङ्क्याह—न हीति। सर्पापेक्षया मन्दविषेण वृश्चिकेन दष्टो यो न म्रियते सोऽपि यथा चिकित्स्यते तथा मन्दधिया भ्रान्तेन च केनचित् प्रत्यक्षादिविरोध-दूषितोऽप्याम्नायाश्चिकित्सनीयः; तस्यापि विरोधाख्यदोषनिरासः कार्य

इत्यर्थः । 'म्रियते' इति पाठे तु मन्दधियोक्तत्वात् तदुक्तो दोषोऽविचिकित्स्य इत्याशङ्क्य मन्दविषेण वृश्चिकेन दष्टो यो देशविशेषे म्रियते स यथा चिकित्स्यते तथाम्नायोऽपि यो मन्दधिया दूषितो म्रियते बहुभिर्मन्दबुद्धिभिर्विप्लावितोऽप्रामाण्यमृत्युमश्नुते सोऽपि चिकित्सनीय इति योज्यम् ।

एवमविरोधलक्षणारम्भं प्रतिष्ठाप्य 'आहुर्विधातृ' इति श्लोकं व्याचष्टे—तत्रेति । तानेव त्रीन् पक्षान् विवृणोति—वस्त्विति । प्रत्यक्षं P. 44-10
किं 'घटोऽयम्' इति वस्तुस्वरूपमात्रं विधत्ते? किं वा 'पटोऽयं न भवति' इति वस्त्वन्तरं व्यवच्छिनत्ति? अथ गृह्णाति व्यवच्छिनत्ति च? यदाप्युभयं करोति तदापि किं युगपत् विधिव्यवच्छेदौ करोति? अथ विधाय व्यवच्छिनत्ति? उत तद्व्यवच्छिद्य विधत्ते? इति । तत्र तेषु पक्षेषु मध्ये अन्यव्यवच्छेदे उभयस्मिन् वा प्रत्यक्षव्यापारे अभ्युपगम्यमाने, भेदः प्रत्यक्षगोचर इति हेतोराम्नायस्य भवति तेन विरोधः । वस्तुस्वरूपविधिमात्रे कस्यचिद्वस्त्वन्तरस्य व्यवच्छेदेन रहिते प्रत्यक्षव्यापारे सति न भेदः प्रत्यक्षस्य गोचरः । कस्मात्पुनर्व्यवच्छेदशून्ये विधिमात्रे प्रत्यक्षव्यापारे भेदः प्रत्यक्षगोचरो न भवतीत्याशङ्क्याह—न हीति । न हि पटमव्यवच्छिन्दत् प्रत्यक्षं घटस्य ततो भेदं गृह्णाति; अतो व्यवच्छेदं विना न भेदस्य सिद्धिः प्रसिद्धिः ज्ञानमित्यर्थः । यदि नामैवं ततः किमित्यत्राह—विधिमात्रेति । वस्तुस्वरूपमात्रग्राहकं च प्रत्यक्षम्, नान्यव्यवच्छेदकम्; अतोऽस्य भेदविषयत्वाभावात् नानेनाभेदाम्नायस्य विरोध इत्यर्थः ।

अत्र परः पृच्छति—कथमिति । कथं विधातृमात्रं प्रत्यक्षम्, न व्यवच्छेदकमित्यर्थः । अत्रोत्तरमाह—उच्यत इति । यदुच्यत इत्युक्तं तदाह—लब्धेति । श्लोकं विवृणोति—न तावदिति । निराकरिष्यमाणविधिपूर्वकव्यवच्छेदपक्षापेक्षया तावच्छब्दः । न तावद्व्यवच्छेदमात्रं प्रत्यक्षव्यापारः, नापि युगपद्व्यवच्छेदविधी, नापि व्यवच्छेदपूर्वं विधानम्; यतः प्रमाणान्तरसिद्धे विषये तत्सिद्धमेव निषिध्यते । निषेधस्वरूपमाह—

14-20. नेदमिह नायमयमिति । 'नेदमिह' इति संसर्गनिषेधः, 'नायमयम्' इति तादात्म्यनिषेध इति भेदेनोपन्यासः । उभयत्राप्युदाहरणमाह—सिद्ध इति । प्रमाणान्तरसिद्धे भूतले तत्सिद्धो घटो निषिध्यत इति 'नेदमिह' इत्यस्योदाहरणम् । गवि सिद्धे सिद्धोऽश्वो निषिध्यत इति 'नायमयम्' इत्यस्योदाहरणम् । कुतः पुनः प्रतिषेधे विषयप्रतिषेध्ययोः प्रसिद्धिरपेक्ष्यत इत्यपेक्षायामाह—नेति । न हि प्रतिषेधो नाम स्वतन्त्रः, किंतु कस्यापि कुत्रचित्; अतो यावत्प्रतिषेध्यप्रतिषेधविषयौ न ज्ञायेते तावत् प्रतिषेध एव न घटते यत इत्यर्थः । अत्र चोदयति—कथं तर्हीति; यदि सिद्धे विषये सिद्धं निषिध्यते, कथं 'प्रधानं नास्ति' 'खपुष्पं नास्ति' इति च निषेध इत्यर्थः । कस्मात्पुनरत्र निषेधो नावकल्पत इत्यत आह—न हीति । देशविशेषे कालविशेषे हि सिद्धे सर्वो निषेधो दृष्टः; न चेह तौ स्तः; तेन विषयस्तावदत्र सिद्धो नास्तीति भावः । कुत इत्याह—आत्यन्तिकत्वादिति; यत्र क्वचित् सतोऽन्यत्र निषेधः, तत्र देशकालविशेषविषयौ भवतः; अयं त्वात्यन्तिकः 'सर्वत्र नास्ति' इति निषेधः, न पुनः 'इह नास्ति' इति देशविशेषे कालविशेषे वा । अतस्तावदत्र विषयो न संभवत इत्यर्थः । न केवलमत्र विषयो नास्ति, प्रतिषेध्योऽपि सिद्धो नास्तीत्याह—नापीति । नापि कुतश्चित् प्रमाणात् प्रधानादेर्घटादिवत् क्वचित् सिद्धिरित्यर्थः । हेतुमाह—अत्यन्तासत्त्वादिति । खपुष्पस्य सर्वजनीनमत्यन्तासत्त्वम् । प्रधानं तु सांख्यानां सत्, न तु तैर्निषेध्यम्; वाद्यन्तरस्य तु निषेध्यम्, तस्य च प्रतिषेध्यमसिद्धम् । अनेनैव च भेदेनोदाहरणद्वयमुक्तम् । तत्रैकीयमतेन परिहारमाह—तत्रेति । यदाहुस्तदाह—खेति । प्रधानप्रतिषेधगतपरिहारापेक्षया तावच्छब्दः । प्रमाणान्तरसिद्धेषु खादिषु तद्विधाः प्रमाणान्तरसिद्धा एव पुष्पादयोऽत्र निषिध्यन्त इति नात्र प्रमाणान्तरसिद्धविषयप्रतिषेध्यासिद्धिरित्यर्थः । तथा 'प्रधानं नास्ति' इत्यत्रापि न विषयप्रतिषेध्ययोरसिद्धिरित्याह—प्रधानमिति । जगतस्तावदुत्पत्तिमत्त्वात् कारणं सिद्धम् ; प्रधानं च सत्त्वरजस्तमोरूपम्; कार्यकारणयोरभेदात् तत्कार्यं सुखदुःखमोहात्मकं सांख्यैरिष्टम् ।

पुनः 'प्रधानं नास्ति' इत्युक्ते सिद्धे जगत्कारणे अन्यत्र सिद्धा सुख-दुःखमोहात्मता निवार्येते । तथा कार्यकारणयोरत्यन्तमभेदादविभक्तकार्यत्वं सत्कार्यत्वं च मृद्घटादौ 'मृदयं घटः' इत्यादिप्रमाणसिद्धं प्रधाननिषेधेन वार्येत इति नात्रापि विषयप्रतिषेध्ययोरसिद्धिरिति भावः; अविभक्तं संभिन्नं कार्यं यस्मात्तत् तथोक्तम्, तस्य भावस्तत्त्वम् । अत्रैव मतान्तर माह—अन्ये त्विति । सादृश्यवासनान्यायाभासवाक्याभासादेः कुतश्चि P. 45-1.
न्निमित्तात् बुद्धौ लब्धरूपाणां बुद्ध्याकाराणां सतां खपुष्पादीनां बहिर्वदव-भासमानानां बहिर्निषेधः क्रियत इत्यन्ये वर्णयन्तीत्यर्थः । इत्थमवर्ण्यमाने तु प्रतिषेध एव न सिध्यतीत्याह—अन्यथेति । अन्यथा एवमवर्ण्यमाने सर्वथा अप्राप्ते खपुष्पादौ दैवनिषिद्धे कः प्रतिषेधः? न कोऽपीत्यर्थः; न ह्यप्राप्तं प्रतिषिध्यते; प्राप्ते च नात्यन्तिको निषेधः स्यादित्यर्थः । तदेवं सिद्धे विषये सिद्धमेव निषिध्यत इति यदुक्तं तदुपपन्नम् । सिद्धं सिद्धे निषिध्यत इत्यत्रैवोपपत्त्यन्तरमाह—अपि चेति । यदि प्रतिषेधे विषय-प्रतिषेध्यौ घटपटौ नापेक्ष्येते ततो 'नास्ति' इत्येवमविशेषेण निषेधः स्यात्; न 'घटे पटो नास्ति' इति । ततश्च सर्वत्र सर्वस्याविशेषेण निषेधात् सर्वशून्यता प्रमाणस्य विषयः स्यात्; न भेदः, भेदिद्वयाभावा दिति भावः । नापेक्षितौ विषयनिषेध्यौ येन स तथोक्तः । -दायत्तो यो निषेधः स कीदृशो भवतीत्यपेक्षायामाह—यस्त्विति । 'इदमतो भिन्नम्' इति हि भेदो गृह्यते; स च तादृशो भेदद्वयस्य प्रमाणतः सिद्धिमपेक्षत इत्यर्थः । ततः किमित्याह—न चेति । सा भेद्ययोः सिद्धिर्विधानात् तत्प्रमाणेन वस्तुस्वरूपग्रहणादृते न घटत इति व्यवच्छेदात् प्राग्विधान मेषितव्यमित्यर्थः । इतश्च प्राग्विधानमेषितव्यमित्याह—विधिपूर्वक इति; सर्ववादिभिस्तथैवाङ्गीकरणादित्यर्थः । इतिर्हेतौ, श्लोकार्थपरिसमाप्तौ वा । लब्धरूपे प्रमाणतः सिद्धस्वरूपे कचित् भूतलादौ किंचित् घटादि तादृगेव प्रमाणतः सिद्धस्वरूपमेव निषिध्यते यतः, अतो विधानमन्तरेण निषेधस्य न संभव इति श्लोकार्थः ।

अस्तु तर्हि विधिपूर्वो व्यवच्छेद इत्यत आह—नापीति । कुत इत्यत आह—यत इति । एकप्रत्यक्षविज्ञानव्यापारभूतयोर्विधिव्यवच्छेदयोः

पौर्वापर्यलक्षणः क्रमो युक्त्या न संगच्छते न युक्तिमान्, ज्ञानस्य क्षणिकत्वादिति भावः । तच्च प्रत्यक्षं विज्ञानं संनिहितजं संनिहिते विषये जायते ; तेन तदन्यामर्शि न जायते; ततः संनिहितात् अन्यत् असंनिहितं परामष्टुं शीलं यस्य तत् तदन्यामर्शि तथाभूतं न जायत
P. 45–11 इत्यर्थः । श्लोकं विवृणोति — न खल्विति । कुत इत्याह --क्षणिकत्वादिति; ज्ञानस्येत्यध्याहार्यम् । कस्मात् पुनः क्षणिकस्य व्यापारयोः क्रमो न युज्यत इत्यत आह — क्रमवतोरिति : यतः क्रमवतोर्व्यापारयोर्मध्ये यः पश्चात्तनो व्यापारः स तस्य ज्ञानस्य व्यापारो न स्यादित्यर्थः । कुत इत्याह —व्यवधानादिति । पश्चात्तनो व्यापारः पूर्वभाविना व्यापारेण व्यवहितो न क्षणिकस्य स्यात्, तस्य तदानीं नष्टत्वादिति भावः । इतश्च न विधिपूर्वो व्यवच्छेद इत्याह अपि चेति । अर्थपरिच्छेदरूपाया बुद्धेर्जन्मैव व्यापारो न काष्ठादीनामिव जन्मातिरेकेण व्यापारान्तरमस्ति । तदुक्तम् — "तेन जन्मैव विषये बुद्धेर्व्यापार इष्यते" इति । तथा "न हि तत्क्षणमप्यास्ते जायते वा प्रमात्मकम्" इति च । अर्थावग्रहरूपाया इति विशेषणमन्तःकरणनिवृत्त्यर्थम् । ततः किमित्याह—सा चेदिति । सा बुद्धिरर्थविधानरूपोदया यदि तदा विधिरेवास्या बुद्धेर्व्यापारो न व्यवच्छेद इति कुतो व्यापारद्वयसंभवः, येन क्रमः स्यादिति भावः ; अर्थविधानरूप उदयो जन्म यस्या इति विग्रहः । चेच्छब्दो 'यदि वेदाः प्रमाणम्' इतिवद्द्रष्टव्यः । ननु किमित्यर्थविधानरूपोदया सा भवति? विधिव्यवच्छेदोभयरूपोदयैव तावत् किं न स्यात्? इत्याशङ्क्याह यौगपद्येति । नोभयरूपोदया सा, यौगपद्यस्यानन्तरमेव निषेधात् । अतो विधानरूपोदयैव सा बुद्धिरिति न ततो व्यवच्छेदः । तस्मान्न क्रमः, द्वयोर्हि क्रमो भवतीति भावः ; ननु द्वे तर्हि बुद्धेः क्रमवती जन्मनी भविष्यतः ; तत्रैकं विधानरूपम्, अपरं व्यवच्छेदरूपमित्यस्ति क्रमसंभव इत्याशङ्क्याह —उत्पन्नाया इति । अस्मिंश्च पक्षे बुद्धेर्जन्मद्वयेन विधिव्यवच्छेदयोरेकस्य विज्ञानस्य कर्मणोर्जन्मरूपयोर्व्यापारयोर्वा क्रमः पौर्वापर्यं युक्त्या न संगच्छते, जातस्य पुनर्जन्मासंभवादिति श्लोकार्धं योज्यम् । श्लोकस्योत्तरार्धं व्याचष्टे—अपि चेति । ततः किमित्याह —न चेति;

प्रत्यक्षमित्यनुवर्तते । किमित्यनवभासमानं व्यवच्छेत्तुं प्रत्यक्षमशक्तमित्यत आह—अनवभासमाने हीति । तत्र प्रत्यक्षे घटादौ व्यवच्छेद्येऽनवभास- P. 15–16 माने 'अत्र भूतले नास्ति घटादि' इति व्यवच्छेद्यविशेषरहितं व्यवच्छेदमात्रं स्यात्, न तु घटादेर्व्यवच्छेद्यविशेषस्य कस्यचिद्व्यवच्छेदः स्यात्; दृश्यते चासौ । अथ व्यवच्छेद्यं विना व्यवच्छेदानुपपत्त्या व्यवच्छेद्यं कल्प्यते, तत्रोद्गृह्यमाणविशेषत्वात् भूतले सर्वस्य प्रतिषेधः स्यात्; न चैतदस्तीत्यर्थः । उपसंहरति—तस्मादिति । ततः किमित्याह—न चेति । अयं च दोषः पूर्वाद्दिष्टेषु चतुर्ष्वपि पक्षेषु समानः । किमर्थं तर्हीहोपन्यस्तः? सर्वार्थ उक्तः सर्वैः संभन्त्स्यत इति । अत्र पुनश्चोदयति—कथमिति । यदि न निषेधपुरःसरो विधिरेकज्ञाने, यदि वा असंनिहितनिषेध्यावभासः प्रत्यक्षे नास्ति, तदा 'शुक्तिकेयम्' इति बाधकं प्रत्यक्षं नोपपद्यत इत्यर्थः । कुत इत्याह—तत्रेति । तत्र बाधके प्रत्यक्षे पूर्वरजतार्थनिषेधपुरःसरोऽन्यस्याः शुक्तेर्विधिरेकज्ञानेऽभ्युपगम्यते । न ह्यनिषिध्य रजतं शुक्तिविधिरवकल्पते । तथा असंनिहितस्य रजतस्य निषेध्यस्यावभासश्चाभ्युपेयते, तदनवभासे तन्निषेधानुपपत्तेः । तस्मात् न पूर्वो निषेधः, न चैकज्ञानव्यापारे क्रमः, न चासंनिहितावभासः प्रत्यक्षे इति योऽयमनन्तरोक्तो नियमः स नास्ति, व्यभिचारात्; यतो बाधके प्रत्यक्षे त्रितयमप्येतदस्तीत्यर्थः । तदेतत् सिद्धान्ती दूषयति—नैतदिति । असारत्वमाह—तत्रापीति । तत्रापि बाधकप्रत्यक्षे 'रजतमिदम्' इति पूर्वज्ञानविहिते रजतादौ प्रतिषेध्ये, तदीयेनैव 'इदम्' इत्यंशेनानिर्धारितविशेषे संनिहितार्थसामान्ये विषये विहिते निषेधो विधिपूर्वक एवेत्यर्थः । एतदुक्तं भवति—अत्रापि विषयप्रतिषेध्यविधिपूर्वक एव प्रतिषेध इति 'न पूर्वो निषेधः' इत्यस्य तावन्न व्यभिचार इति । ननु 'नेदं रजतम्, शुक्तिरियम्' इति निषेधपूर्व एव विधिरवगम्यते; तत्कथमुच्यते 'न निषेधपूर्वको विधिः' इतीत्याशङ्क्याह—शुक्तिकेति । विरोधिनो रजतस्य निषेधः पूर्वो यस्मादिति विग्रहः । तथा सत्यपि च नास्मदभिमतनियमनाश इत्याह—विधीति । 'न पूर्वो निषेधः' इत्यनेन विषयनिषेध्यविधिपूर्वता निषेधस्य नियमेनोच्यते; न च तद्विधिपूर्वत्वाभावो निषेधस्य

निवर्त्यते । यद्यपि शुक्तिविधेर्निषेधपूर्वता, तथापि रजतनिषेधस्य रजते-
दमंशसामान्यविधिपूर्वत्वादव्यभिचार इति भावः । एतच्च परमतेनोक्तम् ।
सिद्धान्ते तु न रजतनिषेधशुक्तिविध्योः क्रमोऽस्ति, 'क्रमः संगच्छते
युक्त्या' इत्यनेन विचारितत्वात्; वक्ष्यति च—'न च तत्रैकज्ञानस्य
क्रमवद्व्यापारता' इति । एवं विधिपूर्वक एव निषेध इत्यस्याव्यभिचारमुक्त्वा
अधुना नैकज्ञानव्यापारे क्रम इत्यस्य बाधकप्रत्यक्षेण यो व्यभिचार उक्तस्तं
P. 15-25. परिहरति—न चेति । तत्रेति बाधकज्ञानं परामृशति । कुत इत्याह—
उभयेति । शुक्तिविधिरजतनिषेधरूपं चित्रमेव बाधकज्ञानं जायते; जन्म
च तस्य व्यापार इत्युक्तम् । न चैकम्, उत्पन्नस्य पुनरनुत्पत्तेः; अनेकत्र
च क्रमो भवति; नैकत्र । तेन न युगपदेव विधिनिषेधौ तत्करोति ।
अतो नैकत्र ज्ञाने क्रमवद्व्यापारेनेत्यर्थः । न च पूर्वसिद्धविषयनिषेध्या-
भावादुभयरूपोत्पत्त्यसंभव इति वाच्यम्, 'इदं रजतम्' इति पूर्वज्ञाने
तयोर्दर्शितत्वादित्याह—पूर्वज्ञानेनेति । यथा चैतत्तथोक्तम् । इदानीं प्रत्यक्षे
नासंनिहितावभास इत्युक्तव्यभिचारार्थं बाधकप्रत्यक्षेणासंनिहितावभास इति
यदुक्तं तत्परिहरति—पूर्वज्ञानेति । 'इदं रजतम्' इति ज्ञानेनावभासिते
व्यवच्छेद्ये रजतव्यवच्छेदस्य प्रवृत्तेर्नासंनिहितरजतावभासप्रसङ्गः प्रत्यक्ष
इत्यर्थः । कथमन्यप्रापितमन्यो निषेधतीति चेत्, यथा षोडशिविधिप्रापितं
तन्निषेधविधिः । एवं तर्हि स्मृतिप्रापितप्रतियोगिव्यवच्छेत्तृत्वात् प्रत्यक्षस्या-
संनिहितार्थावभासित्वेऽपि न दोषः । नैवम्; अभिन्नं चेन् स्मृत्या प्रापितं
न प्रतियोगि; भिन्नं चेत् इतरेतराश्रयम् । ननु प्रत्यक्षप्रापितेऽपि प्रति-
योगिन्येतद्दूषणमस्त्येव । अस्तु; का नो हानिः? किमर्थं तर्हि नोक्तम्?
दूषणान्तरविभवात्; प्रत्यक्षमेव वा प्रापकं व्यवच्छेदकं चेति यो मन्यते
तं प्रत्यसंनिहितानवभासकत्वं दोष उक्त इति । ननु ज्ञानानामन्योन्य-
निरपेक्षाणामुत्पत्तेः कथं पूर्वेणावभासितं व्यवच्छेद्यमनन्तरेण व्यवच्छिद्यत
इत्याशङ्क्याह—पूर्वापेक्षस्येति । स्यादेवं यदि पूर्वापरयोर्ज्ञानयोरत्रानपेक्षता
स्यात्; सैवासिद्धा; बाधकं हि बाध्यमपेक्ष्यैवोत्पद्यते, अन्यथा बाधकत्वा-
योगादिति भावः । पूर्वमपेक्षत इति पूर्वापेक्षि । अत एव तद् द्विरूप-
मुत्पद्यते; अन्यथेतरज्ञानवदेकरूपमेवोदियादित्याह—पूर्वेणेति । द्विरूपं विधि-

निषेधरूपम् । एकरूपं विधिमात्ररूपमित्यर्थः । किंच येन वादिना P. 46-4. सर्वान्यव्यवच्छेदा निराकृताः, तेन रजतादिव्यवच्छेदोऽपि पक्षीकृतः; न च पक्षेणैव व्यभिचारो युक्त इत्याह — अपि चेति । अथ रजतादिव्यवच्छेदो लोके सिद्ध इति तेन व्यभिचार उच्यते, ततो गवाश्वादीनामन्योन्यव्यवच्छेदो यो निराकार्यत्वेन पक्षीकृतः स किं न लोकसिद्धः? अतस्तेनैव व्यभिचारः किं नोच्यते? स चेद्विचार्यमाणो न घटते, तथा रजतादिव्यवच्छेदोऽपीति लोकसिद्धिरकिंचित्करैवेत्यभिप्रायेणाह — सिद्धः स इति ।

मतान्तरमाह — यच्चेति । एकस्य नीलस्य विधिर्नीलैकसत्तादर्शनमेवान्यस्य पीतादेर्व्यवच्छेदः; न तु प्रत्यक्षे व्यापारद्वयमस्ति, येन क्रमो यौगपद्यं वा स्यात् । अतस्तयोरसंभवेऽपि सिद्धं प्रत्यक्षस्य निषेद्धृत्वमिति कथमुच्यते 'न निषेद्धृ' इति? सिद्धं च निषेद्धृत्वेन भेदविषयत्वात् प्रत्यक्षस्याम्नायविरोद्धृत्वमिति भावः । एतदेव विवृणोति — तथा हीति । नीलनिर्विकल्पकदर्शनं हि पीतादिविविक्तनियतनीलाकारमुत्पन्नम्; न पुनः पीताद्यविविक्तनीलाकारम् । अतस्तद्यथैव नीलं रूपं विदधाति, तथैव नीलाकारैकप्रतिनियमात् ततोऽन्यत् व्यवच्छिनत्ति । तेन विधिरेवानीलव्यवच्छेद इति भावः । ननु 'इदं नीलम्' इत्यन्यदेव नीलज्ञानम्; अन्यच्च 'नेदमनीलम्' इति प्रसिद्धम्; अतः कथं नीलज्ञानमेवानीलव्यवच्छेद इत्याशङ्क्याह — तदिति । तस्य निर्विकल्पकदर्शनस्य यत्सामर्थ्यं नियतैकाकारत्वं तेनानादिवासनावशात् प्रतिभाविनौ जनितौ 'इदम्, नेदम्' इति विकल्पौ भावाभावव्यवहारं प्रवर्तयत इत्यर्थः । एतदुक्तं भवति — सत्यं ज्ञानद्वयमिदम्; सविकल्पकं तु तत् । यत्तु निर्विकल्पकं तयोर्मूलभूतं तत्प्रत्यक्षम् । तत्र च वयमेकविधिरेवान्यव्यवच्छेद इति ब्रूम इति । कस्मात्पुनरेवं विकल्प्यत इत्यत आह — न हीति । अन्यसंसर्गोऽस्यास्तीत्यन्यसंसर्गि, अन्यसंसर्गि न भवतीत्यनन्यसंसर्गि; एतच्च 'एकाकारप्रतिनियमात्' इत्यस्य विवरणम्; तथा च वक्ष्यति — 'तत्प्रतिनियमो हि ततोऽन्यस्यासंसर्गः' इति ।

P. 46–11 एवं बौद्धमतमुपन्यस्यातिव्याप्त्यव्याप्तिभ्यां दूषयति—अत्रोच्यत इति। एकस्य विधानमेवान्यस्य गोचरोऽन्यस्य प्रतिषेधो न भवति । कुत इत्याह—मा स्म भूदविशेषेणेति । यद्येकविधेरेव ततोऽन्यस्य प्रतिषेधः, ततो दृश्यादृश्ययोरविशेषेण प्रतिषेधः स्यात्; स मा भूदित्यर्थः । स्मेति पादपूरणार्थम् । एवमतिव्याप्तिदोषमुक्त्वा अव्याप्तिदोषमाह—मा नेति । एकबुद्धिसंनिधिनामेकबुद्धिगोचराणां चित्रे नीलपीतादीनां मिथो भिन्नानां प्रत्येकमेकबुद्ध्यभावान्मा न भूदन्योन्यव्यवच्छेद इत्यर्थः । श्लोकार्थं विवृणोति—नैकेति । कुत इत्याह—तत्प्रतिनियमो हीति । तस्य नीलादेर्नीलादिबुद्धावेव प्रतिनियमो यः, ततो नीलादेरन्यस्य पीतादेस्तत्रासंसर्गोऽननुप्रवेशः । तथा सति चासंसर्गात् पीतादिव्यवच्छेदेऽभ्युपगम्यमाने तस्यासंसर्गस्य दृश्यादृश्ययोरुपलब्धियोग्यानुपलब्धियोग्ययोरविशेषात् तयोरुभयोरपि व्यवच्छेदः स्यात्; न च सोऽस्तीति भावः । अत्रेदानीमिष्ट एव दृश्यादृश्ययोर्व्यवच्छेदः; तेन नेयमनिष्टापत्तिः; अनिष्टापत्तिश्च दोष इति मन्यमानस्तस्य मतमाशङ्कयति—अथेति । उभयोर्व्यवच्छेद इत्यनुवर्तते । एतदुपपादयति—तथा हीति । तथा हि नीलदर्शनं नीलैकाकारतया 'नीलात्मकमेवेदम्' इति निश्चिन्वत् यावन्तो भावा अस्य नीलस्यानात्मानोऽस्वरूपभूता दृश्याश्चादृश्याश्च तान् सर्वानविशेषेणैवापाकरोति व्यवच्छिनत्ती-त्यर्थः। एतदेव द्रढयति—तथा चेति। दृश्याः पीतादयोऽदृश्याः परमाण्वादयो यावन्तो नीलादन्ये, ते सर्वेऽस्य नीलस्यानात्मानो भवेयुः, एकस्यानेकात्मविरोधात् । तेन तान् सर्वानेवातदात्मनस्तदात्मनियमात् दर्शनमपाकरोतीति भावः । यद्यन्येऽन्यस्यात्मानो न भवेयुः कीदृशास्तर्हि भवेयुरित्यपेक्षायामाह—तद्देशेति; तस्य देशकालौ येषां ते तथोक्ताः; अन्ये अन्यस्य देशकाला भवन्ति, न तु तदात्मान इत्यर्थः। अत्र दृष्टान्तमाह—रूपादिवदिति । यथा रूपेण सहैकदेशकाला रसादयः, तद्वदित्यर्थः । अत्र हेतुमाह—अविरोधादिति । रूपस्य हि रसात्मकत्वं विरुध्यते, न त्वेकदेशकालत्वमित्यर्थः । यदि दृश्यादृश्यावविशेषेण दर्शनमपाकरोति, किमर्थं

तदुपलब्धिलक्षणप्राप्तिर्नाम विशेषो व्यवच्छेद्यं प्रत्याश्रीयत इत्याशङ्क्याह—तत्रेति । तत्र तस्मिन्नन्येषां तद्देशकालत्वे सत्युपलब्धिलक्षणप्राप्तिर्नाम यो विशेषः स यस्यैव तद्देशकालस्योपलब्धिलक्षणप्राप्तिरस्ति तस्यैव तद्देशकालस्य व्यवच्छेदो नेतरस्येत्यवधारणार्थः, न पुनरात्मव्यवच्छेदावधारणार्थः; स पुनरनुपलब्धिलक्षणप्राप्तस्यापि भवतीति भावः । अत्र हेतुमाह—संभवतीति । तद्देशकालोऽनात्मा अस्वरूपभूतोऽनुपलभ्यो यो भावः सोऽत एवान्योपलब्धावनुपलभ्यमानोऽपि संभवति; अतो न तस्य व्यवच्छेदः, किंतु उपलब्धियोग्यस्यैवेति युक्तं तत्रोपलब्धिलक्षणप्राप्तेर्विशेषस्याश्रयणमिति भावः । अत्र दृष्टान्तमाह—रूपेति । यथा रूपोपलब्ध्यानुपलभ्यस्तद्देशकालो रूपस्यानात्मा रसो रूपोपलब्धावनुपलभ्यमानोऽपि संभवतीति न रूपप्रतिनियमाद्रूपोपलब्ध्या रसव्यवच्छेदस्तथेत्यर्थः । यस्तु तदात्मा स तेन सह तुल्योपलम्भयोग्यतो न तदुपलब्धावनुपलभ्यमानः संभवति । तेनानुपलब्धिलक्षणप्राप्तोऽपि स व्यवच्छेद्य इति न तदर्थमुपलब्धिलक्षणप्राप्तिर्विशेष आश्रयणीय इत्यभिप्रायेणाह—न तुल्येति । अनुपलभ्यमानः संभवतीत्यनुपज्यते । तुल्या उपलम्भयोग्यता यस्य स तथोक्तः । कस्मान्न संभवतीत्यत आह—नियमेनेति । तुल्योपलम्भयोग्यतश्चेदस्ति ततो येन सह तुल्योपलम्भयोग्यतस्तदुपलब्धौ नियमेनोपलभ्यते, इतरवत् उपलभ्यमानवत्; अन्यथा तुल्योपलम्भयोग्यत एव स न स्यात्, न चेदुपलभ्यते ततो न संभवत्येवेति भावः । P. 46-19

तदेवं तद्देशकालव्यवच्छेदे दृश्यत्वं विशेषः; तदात्मव्यवच्छेदे तु दृश्यमदृश्यं चाविशेषेण दर्शनमपाकरोतीति बौद्धेन स्वमते प्रतिष्ठापिते सिद्धान्तवाद्याह—सत्यमिति । तद्देशकालव्यवच्छेदे दृश्यं व्यवच्छिद्यते नादृश्यमिति, तथा तद्देशकालव्यवच्छेदावधारणाय दृश्यत्वं विशेषः न तदात्मव्यवच्छेद इत्ययं विभाग: सत्यमस्ति; नेदानीं यो दर्शनस्यैकाकारप्रतिनियमः, तस्यान्यव्यवच्छेदे सामर्थ्यं स्यादित्यर्थः । ननु भूतलप्रतिनियमस्य दृश्यघटादिव्यच्छेदे सामर्थ्यमस्ति; अतः कथमुच्यते नेदानीं दर्शनप्रतिनियमस्य सामर्थ्यमितीत्याशङ्क्याह—तथा हीति । रूपं रूपविषये यद्दर्शनं तद्यथा रूपविधिमात्रोपक्षयात् तत्रैव पर्यवसितं यत्र देशे

काले रूपं तत्र न रसं व्यवच्छिनत्ति, तथा भूभागदर्शनप्रतिनियमोऽपि न दृश्यं व्यवच्छिन्द्यादित्यर्थः । दर्शनप्रतिनियमस्य चेदन्यव्यवच्छेदे सामर्थ्यमस्ति, रूपदर्शनस्यापि स्यात् । अथ तत्र रूपविधिमात्र एव प्रमाणवृत्तेः पर्यवसानादन्यव्यवच्छेदपर्यन्तं सामर्थ्यं नास्ति, ततो भूतलेऽपि। दर्शनप्रतिनियमस्य तत्र चात्र च न कश्चिद्विशेषोऽस्तीति भावः । अथ विधिमात्रपर्यवसायिन्यपि प्रमाणव्यापारे स्वाच्छन्द्येनान्यव्यवच्छेद इष्यते,
P. 47-2. ततो दृश्यस्यादृश्यस्य च सर्वस्यैव व्यवच्छेदः स्यादित्याह—व्यवच्छेद इति । उपसंहरति—तस्मादिति । दर्शनप्रतिनियमस्यासामर्थ्यमुपपाद्य 'घटः पटो न भवति' इत्यादौ तदात्मव्यवच्छेदेऽपि योजयन्नाह—तथा चेति । तत्र चेद्धेत्वन्तरमुपास्यमिहापि तत एव व्यवच्छेदः सेत्स्यति, न दर्शनप्रतिनियमादिति भावः । तत इति; दर्शनप्रतिनियमादित्यर्थः । यदि त्वेकविधिरन्यं व्यवच्छिन्द्यादपि, ततः स्वविधेयाभावव्यवच्छेदरूपत्वात् स्वविधेयाभावं व्यवच्छिन्द्यात्; न तु 'नीलं पीतं न भवति' इति नीलात्मनः पीतमात्मान्तरं यत्तस्य सत्तां व्यवच्छिन्द्यादित्याह—काममिति । विधिर्नीलादिदर्शनम्; विधेयो नीलादिविषयः । यद्यपि विधिर्विधेयसत्तामवभासयति न तु विधेयासत्त्वव्यवच्छेदम्, तथापि विधेयमेव व्यवच्छेदमन्तरेण सत्तां नावकल्पत इति नान्तरीयकत्वाद्विधेयासत्त्वव्यवच्छेदरूपत्वमुक्तम्। भावस्याभावाभावरूपत्वाद्वा विधेयमेव विधेयासत्त्वव्यवच्छेदो नान्यो विधेयाकारस्य विधिरिति मन्वानेन तदुक्तमिति द्रष्टव्यम् । अत्र दृष्टान्तमाह—तद्देशेति । यथा नीलदर्शनमनुपलभ्यस्य परमाण्वादेर्नीलस्य देशे काले च न सत्तां व्यवच्छिनत्ति तद्वदित्यर्थः । ननु यदि दर्शनं दृश्यासत्त्वं व्यवच्छिनत्ति, प्राप्तं तर्हि दृश्यस्य जगतः सत्त्वम् । अतः प्रत्यक्षे भेदमगृह्णत्यपि भेदमात्रं न स्यात्; दृश्यं तु जगत् प्रमाणसिद्धत्वात् केन वार्यते? अतो नाद्वैतसिद्धिः । उच्यते—भेदाभावे जगदेकं तत्त्वं स्यात्; तदपि न दृश्यम्, तस्य जडत्वेन स्वतो भेदाभावेन वान्यतोऽसिद्धेः । अतः स्वतः सिद्ध आत्मा, तदेकं तत्त्वमिति सिद्धमात्माद्वैतम्; अभ्युपगमवादमात्रं वा तत् । न हि विधिर्विधेयासत्त्वं व्यवच्छिनत्ति, असत्यपि विधेये स्रक्सर्पादौ विधेर्दर्शनात् । विभ्रमः स इति चेत्, इदं नाम किम्?

यथा चास्य विभ्रमत्वं तथोक्तमाम्नायबलवत्त्वप्रदर्शनप्रदेश इत्युपरम्यते । अथोच्यते - नैकस्य बहव आत्मानः संभवन्ति; अत एकाकारनियमं दर्शनमनेकात्मानं व्यवच्छिनत्तीति, तदाह - नैकस्येति । अत्रोत्तरमाह — P. 47-6. अन्यत इति । एकविधिरेवान्यव्यवच्छेद इति ते पक्षः; स विरोधात् व्यवच्छेदे सति न ते सिध्येदिति भावः । ननु चानात्मव्यवच्छेदेन नः कार्यम्; स चेद्विरोधाद्भवति, भवतु; तावता भेदः सिध्यत्येव; किं नो दर्शननियमव्यवच्छेत्तृत्वग्रहेणेत्याशङ्क्य विरोधादपि न व्यवच्छेद इत्याह— असतीति । अन्योन्यव्यवच्छिन्नानां हि बहुत्वं भवति; व्यवच्छेदश्च विमत्यधिकरणभावापन्नो नाद्यापि सिध्यति । अतोऽसति व्यवच्छेदे कुतो बहुत्वम्? सत्यपि बहुत्वे बहुत्वैकत्वयोरसति व्यवच्छेदे द्वितीयस्य विरोधिनोऽभावात् कुतो विरोधः? अथ व्यवच्छेदात् विरोधो विरोधाच्च व्यवच्छेद इत्युच्यते, तथा सति इतरेतराश्रयत्वं स्यात् । अतो विरोधादपि व्यवच्छेदो नास्तीति भावः । अथवा असति व्यवच्छेदे कुतो बहुत्वं तदभावाच्च कुतो विरोध इति योज्यम्; तदा च वाशब्दश्चार्थे । उपसंहरति— तस्मादिति । इदानीं 'मा न भूत्' इति श्लोकपादं व्याचष्टे—अपि चेति । एकदर्शनभाजामिति; एकेन चित्रज्ञानेन गृह्यमाणानामित्यर्थः । कुत इत्याह—एकेति । नीलादीनामेकत्र चित्रज्ञाने प्रमेयत्वेन संबन्धादेकत्र नीले पीते वा चित्रज्ञानस्यानियमात् तन्नियताकारज्ञानसामर्थ्यान्न भेदसिद्धिरित्यर्थः । तत्र चेदन्यद् भेदे प्रमाणम्, तदेव सर्वत्र स्यादित्यकारणं दर्शनप्रतिनियम इति भावः ।

एवमेकविधिरेवान्यव्यवच्छेद इति मते निरस्ते भावाव्यतिरिक्तभेदवादी चोदयति—नन्विति । प्रकृत्यैवेति; स्वभावेनेत्यर्थः । तद्विधानिति; भिन्नस्वभावानित्यर्थः । ननु व्यावृत्तिर्व्यावृत्तिमतोऽन्या: तेन व्यावृत्तिमद्ग्रहणेऽपि न गृह्यत इत्याशङ्क्याह—न हीति । व्यावृत्तितद्वतोरन्यत्वेऽनवस्था स्यात्; अतो व्यावृत्तिस्वभाव एव भाव इति भावः । किमेवं सति स्यादित्यत्राह— तत्रेति । कुत इत्याह—यदिति । व्यतिरेकमाह—अन्यथेति; यो यत्स्वरूपः स चेत् तेन स्वरूपेण न प्रतीयते, ततः स्वरूपाप्रतीत्या प्रतीत

एव न स्यादित्यर्थः । एवं सामान्येन न्यायं व्युत्पाद्य प्रकृते योजयति—
47-14. व्यावृत्तेति । यथायथमिति; स्वेन स्वेन रूपेणासंकीर्णेन दर्शनेषु निर्भासत इत्यर्थः । सिद्धान्ती त्वत्रापि पूर्वोक्तदोषमतिदिशन्नाह—अत्रापीति । पीतादिभिरसंसृष्टस्य नीलस्य निर्भासनात् पीताद्यसंसृष्टस्वभावत्वे नीलस्याभ्युपगम्यमाने, यथा दृश्यैर्घटादिभिरसंसृष्टं भूतलं निर्भाति तथा परमाण्वादिभिरप्यदृश्यैः; अतस्तयोरुभयोरपि व्यवच्छेदः स्यादित्यर्थः ।

अत्रैव दूषणान्तरमाह—अपि चेति । भेदो वस्तुनो रूपं स्वरूपं वस्त्वव्यतिरिक्तं न भवति; कुतः? वस्तूनां भेदाभावप्रसङ्गात् । अथ व्यतिरिक्तं तदा तेनारूपेण वस्तुनोऽस्वरूपेण स्वरूपेण वस्तुनो भिन्नत्वं न घटत इत्यर्थः । श्लोकं विवृणोति—न व्यावृत्तिरिति । कुत इत्याह—सेति । सा व्यावृत्तिर्यस्य येभ्यस्तदनेकाधिष्ठाना द्वित्वादिवत् प्रतिज्ञायत इत्यर्थः । न केवलं प्रतिज्ञायत एव, प्रतीयतेऽपि तथैवेत्याह—प्रतीयते चेति । ततः किमित्याह—तथा चेति । कुत इत्याह—नैकस्मादिति । यदेकस्मादभिन्नस्वभावं न तद्भिन्नं यथा तदेवैकम्; एका च भेदिप्रतियोगिनोर्व्यावृत्तिः; अतस्तदभेदात् तयोरपि भेदो न स्यादित्यर्थः । अथ स्वोक्तिविरोधदोषभयात् वस्तुभ्यां व्यतिरिक्ता व्यावृत्तिरिष्यते, ततो व्यावृत्तेरवस्तुस्वरूपत्वात् स्वरूपेण भावानां भेदो न स्यात्; अतश्चैकमेव तत्त्वं स्यादित्यभिप्रायेणाह—अथेति । पूर्वार्धस्य व्याख्यान्तरमाह—अपर इति । नीलपीतयोरितरेतरानात्मत्वादभावस्वरूपा भेदः; स चेद्वस्तुनः स्वभावः, तदा वस्तूनामभावात्मनां प्रतिज्ञानात् भेदस्याभावात्मनः प्रतिज्ञानात् वस्तूनामभावः स्यादित्यर्थः । अत्र व्याख्याने तदभाव इति तच्छब्देन वस्तु परामृश्यते । तस्यैव व्याख्यान्तरमाह—अपर इति । तं प्रकारमाह—भेदश्चेदिति । कुत इत्याह—भेदेनेति । भेदो हि द्वैधीभावात्मा; तत्स्वभावत्वे न वस्तुन एकत्वमित्यर्थः । ननु परमाणुभ्यो भिन्नमभिन्नं वा नैकं वस्तु समस्ति; तेन परमाणव एवाधरोत्तरभावेन संहता वस्तु; नच परमाणूनामनेकात्मकत्वादनेकात्मकमेवेष्टम् । अतो भेदस्वभावत्वे वस्तुनो नैकवस्तुस्वभावप्रसङ्गोऽस्माकमनिष्टापत्तिरिति बौद्धमत-

माशङ्क्याह—परमाणुरिति । परमाणुरपि भिन्नत्वात् भेदेन स्वभावभूतेन P. 48-2.
द्विधा कृतो नैकः स्यादित्यर्थः । ततः किमित्याह—तथा चेति । एका-भावे तदभावादेकैकसमुच्चयरूपोऽनेकोऽप्यस्य वस्तुनो नात्मावकल्पत इत्यर्थः। न केवलमेकः, न कोऽपीत्यर्थः । तदेवमेकमनेकं च वस्तु न घटते । तृतीयश्च प्रकारो नास्ति । अतो निःस्वभावत्वात् वस्तुनोऽभावप्रसङ्ग इत्यभिप्रायेणाह—तत्रेति । अरूपेणेति श्लोकार्थस्यान्या व्याख्यारभ्यते—अन्येति । तामाह—व्यतिरेकितेति । योऽयमनन्तरोक्तो भेदो वस्तुनो व्यतिरिक्तोऽव्यतिरिक्तो वेति विकल्पः, तस्मिन् प्रत्यवतिष्ठन्ते केचिदित्यर्थः। प्रत्यवस्थानमाह—वस्त्विति । वस्तुशून्यः प्रत्ययो विकल्पः, तेन विरचितं शरीरं यस्य स तथोक्तः । एतदेव प्रपञ्चयति—तथा हीति । तदिति वस्तूच्यते; तस्य भावस्तत्त्वं वस्तुस्वरूपत्वम्; वस्तुनोऽन्यत्वेनानन्यत्वेन वा निश्चित्य वक्तुमशक्यस्तत्त्वान्यत्वाभ्यामनिर्वचनीयः । ननु यदि भेदो वस्तुनो न भिन्नो नाप्यभिन्नः, नास्त्येव तर्हि शशविषाणवत्; कथं व्यवहारं प्रवर्तयतीत्यत आह—अनादीति । अनादिर्यो भेदविकल्पः, तज्जा वासना उपादानकारणं यस्य विकल्पस्य तेन विरचितं शरीरं यस्य भेदस्य स तथोक्तः । एतदुक्तं भवति—शशविषाणं न प्रतिभाति; भेदस्तु तत्त्वतोऽसन्नपि वासनावशात् प्रतिभातीति व्यवहारहेतुः; न तु भेदो नाम परमार्थतो वस्त्वस्ति, यस्य तत्त्वमन्यत्वं वा विचार्येत इत्यर्थः । अत्रोत्तर-माह—तत्रेति । न विद्यते परमार्थतो भिन्नत्वं द्विचन्द्रस्येव नावकल्पत इत्यर्थः । एतदेव विवृणोति—यदीति । अरूप इत्यस्य विवरणं निःस्वभाव इति । यदि भेदो वस्तुवृत्त्या नास्ति, किंतु कल्पितरूपः, ततः परमार्थतो भेदाभावान्न वस्तुनो भिन्नत्वं परमार्थतः स्यात् । न हि कल्पितेन मिथ्या-भूतेन स्वभावेन द्वित्वेनेव चन्द्रमसः पारमार्थिकी तद्वत्ता युज्यते; किंतु कल्पितैव स्यादिति त्वयापीष्टः । तदेतदस्माभिरुच्यमानं किमिति भवान् नानुमन्यते । वयमप्येतदेव ब्रूमः न भेदो नाम परमार्थतोऽस्ति; किं त्वविद्याविलसितमेतद्भिन्नत्वमित्यर्थः । भावत इति; सद्रूपतया, परमार्थत इति यावत्; भावेभ्यो वान्य इत्यन्यार्थयोगे पञ्चमी । सर्व एवायमर्थोऽस्य श्लोकस्य तन्त्रेण ग्रन्थकृतोऽभिमत इति न व्याख्याविकल्पभ्रमः ।

18-16. पूर्वोक्तमनुभाष्य तत्र किंचिदाशङ्कयति—यदुक्तमिति । भेदात्मत्वे भेदस्वभावत्वे वस्तुनो भेदेनैकत्वस्य विरोधात् एकवस्त्वभावः; तदभावाच्चैकैकसमुच्चयरूपस्येतरस्यानेकात्मकस्यापि वस्तुनोऽभाव इति हेतोरेकत्वानेकत्वयोरनुपपत्तेः तृतीयप्रकाराभावाच्च वस्त्वभाव इति यदुक्तं तत्र पर आहुरित्यर्थः । यदाहुस्तदाह—परापेक्षमिति । घटवस्तु परतः पटात् भिन्नम्, न तु स्वतः; स्वयं त्वेकमेव; अतो भेदेन वस्त्वेकत्वस्याविरोधान्नैकवस्त्वभावदोष इत्यर्थः ।

अत्रोत्तरमाह—तत्रेति । पुरुषस्येयं पौरुषेयी; तामपेक्षां वस्तु यस्मान्नानुवर्तते, नापेक्षानुरूपं वस्त्वित्यर्थः; तस्मात् वस्तुनो भेदस्वभावदोषः पूर्वोक्तयुक्त्या तदवस्थ एवेत्यर्थः । यद्यपेक्षा वस्तुधर्मः स्यात् ततस्तद्वशेन वस्तु भिन्नं व्यवस्थाप्येत, न त्वेतदस्तीत्याह—नापेक्षेति । कुत इत्याह—न खल्विति । खलुशब्दः प्रसिद्धिद्योतनार्थः; स्वहेतुभ्य एव यत्स्वभावं वस्तु तत्स्वभावमुत्पद्यते; अन्यथा तद्वस्त्वेव न स्यात्; अतो न स्वभावव्यवस्थितये तस्य वस्त्वन्तरापेक्षा युज्यत इति प्रसिद्धमेतदित्यर्थः । स्वहेतुभिः प्रापित उदयो जन्म येषां तानि तथोक्तानि । तत्रार्थात्पुरुषस्य यः प्रत्ययः, तस्य धर्मोऽयमपेक्षा नाम; पुरुषो हि भिन्नं प्रतियन् प्रतियोगिनमपेक्ष्य प्रत्येति; तदाह—तत्रेति । ततः किमित्याह—न चेति । कुत इत्याह—स्वहेतुभ्य इति; स्वहेत्वधीना वस्तुस्वभावव्यवस्थितिर्येत इत्यर्थः । पुरुषप्रत्ययानुविधायित्वं तु वस्तूनां यथा यथा वस्तुनि पुरुषः प्रत्येति तथा तथा स्युः; अतः शुक्ती रजततया पुरुषेण प्रतीता रजतमपि स्यात्; अतो न वस्तुस्वरूपं व्यवतिष्ठेत; न चैतदस्ति । अतो न पुरुषप्रत्ययानुरूप्येण वस्तुस्वरूपव्यवस्थेत्याह—अत इति । वस्तुस्वरूपानुरूप्येव तु पुरुषप्रत्ययस्य व्यवस्थोचिता, वस्तुपूर्वकत्वात्तस्येत्याह—व्यवस्थितेति । एवं भिन्नस्वभावश्चेत् घटः स्वहेतुभिस्तत्स्वभाव एव जनित इति न प्रतियोग्यपेक्षां पौरुषेयीमनुवर्तेत इति प्रकृते योज्यम् । किंच यदि पटापेक्षो घटस्य भेदः, ततः पटस्यापि घटापेक्षो भेद इतीतरेतराश्रयः स्यादित्याह—परस्परेति । इममेव श्लोकार्थं पुनरन्यथा व्याचष्टे—

अथवेति । भेदिप्रतियोगिनोरेकश्चेद्भेदस्तदव्यतिरेकी तत एकस्मात् भेदाद- P. 49-1.
व्यतिरेकात् भेदवत्तयोरप्येकत्वात् भेदाभावप्रसङ्ग इति 'न भेदो वस्तुनो रूपम्' इत्यत्र यदुक्तम्, तत्राहुः परे-—स्यादेवं यद्येको भेदोऽनेकाश्रयः स्यात्; स तु नैकः, रूपविरोधात्; भेदो हि प्रतिवस्तु वैविक्त्यमापादयन् प्रतिवस्तु विविक्तस्वरूप एवोचितः; कुतस्तस्यैकत्वम्? यदि चैकः स्यात् तत एकधर्मयोगात् तन्निमित्तमेकत्वं वस्तूनां स्यात्, न नानात्वम् । अथवा भेदैकत्वे तदव्यतिरेकात् तद्वदेव वस्तूनामेकत्वं स्यात् । तस्मात् प्रतिभावं भेदो भिद्यते । घटस्य पटात् पटस्य च घटादन्योन्यं भेद इत्यर्थः । अत्र सिद्धान्ती पृच्छति —कथमिति । यद्येकैकाश्रयोऽन्योऽन्यो भेदः कथं तर्हि भेदस्यानेकाश्रयत्वं प्रसिद्धं सेत्स्यतीत्यर्थः । तत्र पर आहुः— अपेक्षात इति । एकत्र वर्तमानोऽपि द्वितीयमपेक्षत इत्यनेकाश्रयत्वं भेदस्य, न तु नैकत्र वर्तमानत्वादित्यर्थः । एकत्रैव चेद्वर्तते भेदः, कथमन्यमपेक्षते? न हि घटस्थं शौक्ल्यं पटमपेक्षत इत्याशङ्क्याह—तथा हीति । भेदो हि कस्यचित् कुतश्चिद्भवति । अतश्च यतो भवति तं प्रतियोगिनमनपेक्ष्य तस्य स्वरूपं व्यवस्थितम् । तेनैकस्थस्यापि युक्तान्यापेक्षेत्यर्थः । ततः किमित्याह—तथा चेति । तथा च सति यथायथं स्वीयस्वीयभेदेन प्रतिभावं भिन्नेन प्रतियोग्यपेक्षेणात्मभूतेन भावाव्यतिरेकिणा भिन्नाः सर्वे भावाः; तेन प्रतिभावं भेदान्यत्वात् न तदेकत्वेन भेदव्यतिरेकात् भेदवद्भेदिनां भेदाभावदोषप्रसङ्ग इति तात्पर्यार्थः । अत्र दूषणमुच्यते —पौरुषेयीमिति । तद्व्याचष्टे -पुरुषो हीति । पुरुषो ह्येकमर्थं मृत्पिण्डं गृहीत्वा परं चक्राद्यपेक्षते, तावता घटादिकार्यसिद्धेः । भावास्तु स्वहेतुभ्यः केनचिद्रूपेण हीनाश्चेदात्मानं लभेरन्, ततस्तद्रूपलाभायान्यदपेक्षेरन्; तेषां तु स्वहेतुभ्यः प्राप्तसंपूर्णरूपाणां किमर्थान्यापेक्षेत्यर्थः । अपर आहुः- नन्विति । स्वभाव एष भेदस्य, यदेकस्थोऽपि द्वितीयं प्रतियोगिनमपेक्षते; किं कुर्म इत्यर्थः । ननु शौक्ल्यादीनामयं स्वभावो न दृष्ट इत्याशङ्क्याह -नानेति । तत्त्वे; स्वरूप इत्यर्थः । साध्यकोटिनिक्षिप्तो भेदः प्रतियोग्यपेक्षितया सर्वजनसिद्ध इति तमेवोदाहरति— यथेति । अत्र सिद्धान्तवाचाह—न तर्हीति । यदि भेदाख्यो भाव-

स्वभावोऽन्यमपेक्षेत न तर्हि स्वहेतुभ्यः संपूर्णस्वभावा भावा जाताः; किंतु भेदाख्येन स्वभावेन विकला इत्यभ्युपेयम्; अन्यथान्यापेक्षानुपपत्तेः; न चैतदिष्टमित्यर्थः । किंच भावस्वभावो भावहेतुभ्य एव भावसमकालमेव जायते, यथाग्नेरौष्ण्यम्; भेदस्तु भावहेतुभ्यो हेत्वन्तरात् प्रतियोगिनो भावे जाते पश्चाज्जायमानो न भावस्वभावः स्यात्; अतः स्वभावभूतो भेद
49-11. इतीयं प्रतिज्ञा ते हीयेतेत्याह --हेत्वन्तरादिति ।

अत्र पुनः प्रत्यवतिष्ठते--स्यादेतदिति । स्यादेतत् त्वदीयं दूषणं यदि भेदरूपविकलो भावः स्वहेतुभ्यो जायेत; स तु भेदादिभिः सर्वरूपैरविकलः संपूर्ण एव स्वहेतुभ्यो जायते । अयं तु विशेषः—यद्रूपान्तरस्य प्रतियोग्यनपेक्षस्वभावत्वम्; भेदाख्यं तु रूपं प्रतियोगिसापेक्षम्, यतः प्रतियोग्यनपेक्षं कदाचिदपि न दृष्टं भवतीत्यर्थः । इतिहेंत्वर्थः । कुत इत्याह--तस्येति । तस्य भेदाख्यस्य रूपस्य तद्विधत्वात् प्रतियोगिसापेक्षस्वभावत्वादित्यर्थः । अतस्तेन भेदेन तद्विधेनैव स्वभावेनैव सह भावो जायत इति हेतोर्न भेदेन विकलरूपस्य प्रादुर्भावो जन्म, येन त्वदुक्तो दोषः स्यादित्यर्थः । अत्र दूषणमाह--अत्रेति । भवतु तद्विधस्य भेदसहितस्यैव भावस्य प्रादुर्भावः; प्रतियोग्यपेक्षायास्तु अर्थः प्रयोजनं वक्तव्यम्; न च ते तदस्तीति भावः । कुत इत्याह—यस्य हीति । यदायत्तं हि यत्र किंचिद्भवति तत् तदपेक्षम्, अन्यत् तन्निरपेक्षमितीयं सापेक्षनिरपेक्षयोर्व्यवस्था; नान्येत्यर्थः । ततः किमित्याह—तत्रेति । न तावद्भेदस्योत्पत्तिः प्रतियोग्यायत्ता, येनास्योत्पत्त्यर्थं भेदस्तमपेक्षेत इत्यर्थः । कुत इत्याह--स्वेति । स्वहेतुभ्य एवाविकलस्य भेदसहितस्यैव भावस्य प्रागुत्पत्तेरित्यर्थः । अथोदकाहरणाद्यर्थक्रिया घटादेर्भेदस्य प्रतियोग्यायत्तेत्युच्यते, तदपि नेत्याह--नेति । कुत इत्याह—तदिति । पटादिप्रतियोग्यसंनिधानेऽपि घटस्यार्थक्रिया दृश्यते । सा यदि प्रतियोगिसापेक्षा स्यात्, तदसंनिधाने न स्यादिति भावः । भेदप्रतीतिः प्रतियोग्यायत्तेत्याशङ्कयति--प्रतीतिरिति । एतदेव द्रढयति--तथा हीति । यस्य यतो भेदः प्रतीयते तत्प्रतियोगिनमनपेक्ष्य भेदो न प्रतीयते यतः, अतस्तत्प्रतीतिः

प्रतियोग्यायत्तेत्यर्थः । एवमाशङ्क्य दूषयति—नेति । एवं चेत्तर्हि P. 49-21.
भेदाख्यो भावस्वभावो न प्रतियोग्यपेक्षः; किंतु तस्मिन् भेदे पूर्वमवस्थिते भेदाख्यस्य वस्तुनः स्थितेरुत्तरकाला तत्प्रतीतिः प्रतियोगिसापेक्षेत्यापन्नम् । अतो भेद एव प्रतियोगिसापेक्ष इति प्रतिज्ञातं हीयत इति भावः । न च प्रतीतौ सापेक्षायां तत्प्रमेयं वस्तु सापेक्षं स्यादित्यत्र दृष्टान्तमाह—यथेति । व्यवस्थिताश्च ते स्वहेतुभ्यो लब्धात्मानः, अत एवानपेक्षस्वभावाश्चेति विग्रहः । व्यवस्थितौ अनपेक्षः स्वभावो येषामिति वा । नन्वस्तु भेदप्रतीतिरेव सापेक्षा, तदर्थमेव स्वतो निरपेक्षोऽपि भेदः प्रतियोगिनमपेक्षिप्यत इत्याशङ्क्याह—इतरेतरेति । यतो भेदेन प्रतीताद्यस्य भेदः प्रत्येतव्यः, तस्यापि ततस्तथेतीतरेतराश्रयः । अतो भेदस्य प्रतीतिरपि परस्परायत्ता इतरेतरसापेक्षा न घटत इत्यर्थः । ननु वस्तुमात्रादगृहीतभेदाद्भेदः प्रत्येष्यते; अतो नेतरेतराश्रय इत्याशङ्क्याह—न चेति । हेतुमाह—एकस्मिन्निति । यद्येवं स्यात् स्वतोऽपि स्वस्य भेदः प्रतीयेत; न चैवमस्तीति भावः । प्रकृतमुपसंहरति—तस्मादिति ।

अस्यैवान्या व्याख्या; तामाह—नेति । हेतुमाह—आपेक्षिक इति; प्रतियोग्यपेक्षया यतः स भेदः प्रतीयत इत्यर्थः । ततः किमित्याह—स चेति । अपेक्षा हि पुरुषस्य प्रत्ययविशेषः; न च तं वस्त्वनुवर्तते; न च पुरुषप्रत्ययमनु वस्तुव्यवस्थेत्यर्थः । हेतुमाह—व्यवस्थितेति । यथा वस्तु हि पुरुषप्रत्ययो युक्तः; अन्यथा निरालम्बनः स्यादिति भावः । इतिः श्लोकार्थपरिसमाप्तौ ।

ननु ह्यापेक्षिकं न वस्तुनो रूपम्, कथं तर्हि पितृत्वादयो वस्तुनो रूपम्? तेऽपि ह्यापेक्षिका एव; न हि ते पुत्राद्यपेक्षया विना भवन्तीत्यनस्ते यथापेक्षिका अपि वस्तुनो रूपं तथा भेदोऽपीत्यभिप्रायेण पृच्छति—कथमिति । न च खपुष्पवदसन्तः; न च गन्धर्वनगरादिवदसत्या इत्याह—न चेति । असतां व्यवहार एव नास्ति; असत्येन तु विसंवादी; पितृत्वादयस्तु व्यवहारस्य हेतुत्वेन लोके सिद्धा, स चाविसंवादीति नासन्तो नाप्यसत्या इत्यर्थः । अत्रोत्तरमाह—उच्यत इति ।

यदि पितृत्वादयोऽप्यापेक्षिकाः, तेऽपि तर्हि भेदवद्वस्तुनो रूपं मा भूवन्, असत्या एव सन्तु; का नो हानिः? न च तेषामविसंवादिव्यवहारहेतुत्वेन सिद्धत्वाद्भेदाद्विशेषः; भेदोऽप्येवमविसंवादिव्यवहारहेतुत्वेन पितृत्वादिवद्वस्तुवद्वा किं न लोके सिद्धः? अपि तु सिद्ध एव; अतो नायमपि विशेष इत्यर्थः।

P. 50-6. एवं पितृत्वादिभेदयोरविशेषमुक्त्वा संप्रति विशेषमाह—अपि चेति। पित्रादौ विषये पुत्राद्यपेक्षा जननादिना भवति। ह्रस्वदीर्घयोरप्यन्योन्यापेक्षा, एकस्या देशव्याप्तिक्रियाया न्यूनाधिकभावविशेषेण भवति। न च भेदे तादृशोऽपेक्षाहेतुः कश्चिदस्तीति भावः। एतद्व्याचष्टे—व्यवस्थिते इति। व्यवस्थिते औत्पत्तिके अन्योन्यनैरपेक्ष्येण स्थिते, न तु वस्तुस्थित्युत्तरकालमन्यापेक्षाप्रभवे पितृपुत्रयोर्जन्यजनकशक्ती पितृपुत्रयोरभिधेये; यथासंख्यमत्राविवक्षितम्। एतच्च शक्तिः कारकमित्यभिप्रेत्योक्तम्। शक्तिमत्कारकमिति पक्षेऽपि सर्वमूह्यम्। कथं तर्हि तयोरन्योन्यापेक्षित्वमित्याशङ्क्याह—ते त्विति। जन्यजनकयोः कर्तृकर्मकारकशक्ती समानश्वासौ जननाख्यो व्यापारस्तद्विषये सति ता पितृपुत्रशब्दौ आस्कन्दतः विषयीकुरुतः। ते वा शक्ती कर्तृभूते तौ शब्दौ कर्मभूतौ आस्कन्दतः स्ववाचकत्वेन स्वीकुरुत इत्यर्थः। एतदुक्तं भवति—यदैकस्यां जननक्रियायामेकः पुरुषः कर्ता, अपरः कर्म, तदा तौ पितृपुत्रशब्दवाच्यौ भवतः; नान्यथेति। कुतः? स्वभावभेदात्; ईदृश एव तयोः शब्दयोः स्वभावविशेषो येनेदृश एव विषये वर्तेते, नेतरत्रेत्यर्थः। ततः किमित्याह—अत इति। समानत्वं हि क्रियाया द्वयोर्भवति; अतो यस्य क्रिया येन समाना तस्य तत्रापेक्षा भवतीत्यर्थः। उक्तमर्थं प्रकृतोपयोगितया स्पष्टयति—एतदिति। पितृपुत्रशब्दयोरर्थस्तत्र पित्रादौ सापेक्षः, न तु जन्यजनकशक्त्याख्यं वस्तु; तत्तु पूर्वं व्यवस्थितमेवेत्युक्तम्। एतदुक्तं भवति—यदा जन्येन समानजनिक्रियो जनको भवति, तदा पितृशब्दार्थो भवति; नान्यदा। अतश्च येन सा क्रिया समाना तज्जन्यमपत्य जनकः पितृशब्दार्थो जात इति शब्दार्थः सापेक्ष इत्युच्यते। अतः शब्दमात्रं

स्त्वत्र सापेक्षं न वस्त्विति । अपेक्षाहेतुश्च तत्र पित्रादौ साधारणी जनकक्रिया विद्यते, यद्यपि जन्यजनकशक्त्याख्यवस्तुनी व्यवस्थिते अन्योन्यनिरपेक्षे इत्यर्थः । न द्वितीयेन विना साधारण्यं भवतीति भावः । भेदे तु वैषम्यमाह—भावेति । वस्तुतत्त्वगत इति; न शब्दगत इत्यर्थः; तेन P. 50-12. वस्त्वेव तत्र सापेक्षमिति भावः । ह्रस्वादावपि यद्वस्तु यावत्परिमाणं तत् तावत्परिमाणमन्यनिरपेक्षमेव स्वहेतुभ्यो जातम् । शब्दप्रवृत्तिमात्रं तु सापेक्षम्; अपेक्षाहेतुश्चैकजातीयाया देशव्याप्तिक्रियाया न्यूनाधिकभावः; यदपेक्षया यस्य देशव्याप्तिक्रियाधिका तत् ततो दीर्घमित्युच्यते; या यस्योना तद्ध्रस्वमिति । या यावद्देशैकस्य व्याप्तिः, अन्यस्य न तावद्देशा तदूनम्; इतरदधिकमिति न्यूनाधिकविवेकः; तेन न्यूनाधिकयोरन्योन्यापेक्षितादोषो नास्ति ।

यदि जननकार्यविशेषात् पित्रादावपेक्षा इष्यते, वस्तुभेदोऽपि तर्हि कार्यस्यैव भेदादिष्यतामिति परः प्रत्यवतिष्ठते—यदीति । किंच एवं सति यद्यपि प्रत्यक्षं वस्तुविधिमात्रव्यापारं न व्यवच्छिनत्ति न तद्भेदे प्रमाणम्, तथापि कार्यभेदादनुमास्यामहे; अतो न भेदस्याप्रमाणत्वमपीत्याह—किंचेति । विधिमात्रमन्यव्यवच्छेदरहितं व्यापारो यस्येति विग्रहः । विपक्षाद्व्यावृत्तौ हेतुरगमक इति ततो व्यावृत्तिमाह—नैकत्व इति । अन्वयस्त्वद्वैतिनं प्रत्यसिद्धो न च बौद्धैरिष्ट इति नोक्त इत्यदोषः । अत्र हेतुमाह—कारणेति । तद्विवृणोति—तदिति । सिद्धान्ती तु कार्यभेदोऽप्यस्माकमसिद्धः; अतस्तेन न भावभेदानुमानम् । नैकस्यानेके स्वभावाः, तद्भेदे भेदप्रसङ्गादिति भेदात् भेदप्रसाधनमशोभनमित्याह—तदिदमिति ।

यदप्युक्तं कारणैकत्वे कार्यभेदो नावकल्पत इति, तदप्ययुक्तम्, एकत्वेऽपि तद्दर्शनादित्याह—अपि चेति । दाहादिकार्यभेदात् 'दाहकः पाचकः' इति व्यपदेशमात्रं भिद्यते, न तु वस्त्वित्यर्थः । शेषं सुगमम् । अर्थक्रियाकृते भेदे अङ्गीक्रियमाण इत्यन्वयः । नन्वत्रापि रूपादिसमुदायमात्रं वह्निः; न त्ववयव्येको भिन्नोऽभिन्नो वा संभवति; अतो रूपादिगुणभेदादेव कार्यभेद इत्याशङ्कयति— अथेति । सिद्धान्ती तु भवत्वेवम्; तथा-

प्युष्णस्पर्शात्तावदेकस्माद्दाहपाककार्यभेदोऽस्ति; अतो विपक्षादव्यावृत्तिर्हेतोस्तदव-
P. 51-1. स्थैवेत्याह—काममिति। न च पाकदाहयोर्भेदोऽसिद्ध इति वाच्यमित्याह—
तौ चेति। यद्यपि वह्निसंयोगविक्रिया पाकोऽपीति तद्विक्रियात्वसामान्य-
मुभयत्राप्येकमस्ति, तथाप्यवान्तरभेदस्तयोर्लोकप्रसिद्धत्वान्नापलपनीय इत्यर्थः।
न केवलं लोकसिद्धमेकस्मात् कार्यभिन्नत्वम्, अपि तु वादिभिरपि सर्वैरिद-
मिष्टमित्याह—कर्मेति। मुक्तस्येषोर्गतिकर्म पूर्वापरदेशाभ्यां विभागसंयो-
गयोर्वेगाख्यस्य संस्कारस्य हेतुरसमवायिकारणम्; आत्मा चेच्छासुखा-
दीनां हेतुः समवायिकारणमिति कणभुजेष्टम्। तथा सत्त्वादयः प्रत्येकम-
भेदा अविद्यमानभेदांशा अङ्गलाघवार्थप्रकाशादीनां हेतव इति योज्यम्।
क्वचिदभेदादिति पाठः; तत्रायमर्थः—न च ते भिन्ना इति वाच्यम्; कुतः?
प्रत्येकं सत्त्वरजस्तमसामभेदात्। अतश्चैकस्मादपि कार्यभेदोऽस्तीति भावः।
तत्र सत्त्वं लाघवादीनाम्, रजः प्रवृत्तिदुःखानां हेतुरिति कपिलस्येष्टम्।
तथा रूपादयः प्रत्येकं स्वगोचराणां ज्ञानानां हेतव आलम्बनप्रत्ययाः रूपं
रूपक्षणानां रसो रसक्षणानां चोपादानप्रत्यय इति बौद्धमतम्। ननु
नार्थक्रियाभेदमात्रात् भावभेदं ब्रूमः; अपि तु यतो यस्य भेदः, तत्रादृष्ट-
त्वेनासंभावनी यार्थक्रिया, तत इति परश्चोदयति—नन्विति। अत्रैवोदा-
हरणमाह—यथेति। यथा बधिरे सत्यपि चक्षुषि शब्दबुद्धिरदृष्टत्वेना-
संभावनी, ततश्चक्षुषो भिन्नं श्रोत्रं कल्प्यत इत्यर्थः। नन्वेवमन्यत्र कथं
भेदसिद्धिरित्याशङ्क्याह—प्रायेणेति। परस्परासंभवीनि कार्याणि येषां ते
तथोक्ताः; सर्वत्रैव प्रायेणान्यकार्यमन्यत्र न दृश्यते; अतो भेदसिद्धि-
रित्यर्थः। शरशृङ्गयोर्विशरणैककार्ययोर्निवृत्त्यर्थं प्रायग्रहणम्। कथं तर्हि
तयोर्भेद इत्याशङ्क्य विशरणैककार्यत्वेऽपि प्रायेण परस्परासंभवीनि कार्या-
न्तराणि तयोरपि सन्तीति प्रायेणेति पुनर्योज्यम्। सिद्धान्ती त्वाह—
अथेति; अन्यकार्यस्यान्यत्रासंभवः कथं प्रत्येतव्य इत्यर्थः। पर आह—
नन्विति। तद्दूषयति—नेति। अद्वैतिनामेकत्रैव सर्वं कार्यं दृश्यते;
अतो नान्यकार्यस्यान्यत्रादर्शनमस्ति। तत्र सति भेदे अन्यकार्य-
मन्यत्र न दृश्यत इति वाच्यम्। एवं च भेदे सति कार्यादर्शनम्,
अदर्शने सति भेद इतीतरेतराश्रयः स्यात्। अतो न कार्यभेदात् भाव-
भेदानुमानमित्यर्थः। अथ सत्यपि पटे घटकार्यस्यादृष्टस्य पश्चात्तद्धेतो-

र्घटस्य भेदोऽनुमीयते; तयोरभेदे हि पटकार्यवत् घटकार्यमपि पूर्वमेव दृश्येतेति परमतमाशङ्कयति—अथेति । तद्दूषयति—तादिति । एकस्यापि P. 51-10
पुरुषस्य क्रमेणानेकभोजनाद्यर्थक्रियां कुर्वतः पूर्वमदृष्टा क्रिया पश्चाद्दृश्यते; न च तस्य भेद इत्यर्थः । नन्वत्यन्तमभेदे पुरुषस्य तस्य सर्वार्थक्रियासमर्थत्वात् समर्थस्य च क्षेपायोगात् युगपत् सर्वकार्यदर्शनं स्यात्; अतः कस्यचित् कार्यस्य पूर्वमदर्शनं पश्चाच्च दर्शनं पूर्वावस्थातोऽविशेषान्न स्यात्; अतोऽस्ति पूर्वस्मात् कश्चिद्विशेषो यदागमे पूर्वमदृष्टं कार्यं पश्चात् दृश्यते; अतो नैकान्तेन भेदः, नाप्यभेद इत्याशङ्कयति—स्यादिति । अत्रोत्तरमाह—न तर्हीति । यदि विशेषमात्रभेदेऽपि कार्यभेदो घटते, न तर्हि कार्यभेदो वस्त्वभेदं बाधते; किंतु कार्यभेदात् वस्त्वभेदानुपमर्देन विशेषमात्रभेदोऽनुमीयेत, अभिन्नेऽपि वस्तुनि तावतैव कार्यभेदोपपत्तेः । अतो यदुक्तं कार्यभेदाद्वस्तुभेद इति तदेवं सति विघटितमित्यभिप्रायः । ननु विशेषमात्रभेदेऽपि नाद्वैतसिद्धिरित्याशङ्क्याह—तच्चेति । सत्यं विशेषमात्रं भिन्नमिच्छामः; किंतु न तत्सत्यम्; अपि तु काल्पनिकम्; तच्चावस्तुत्वान्न द्वैतमावहतीति भावः । ननु सत्यमेव तत् किं न स्यादित्याशङ्क्याह—वस्त्विति । वस्तुवृत्त्या सतस्तस्य विशेषमात्रस्यायोगादघटमानत्वादित्यर्थः । तत्र हेतुमाह—तत्त्वेति । तद्भावस्तत्त्वम् अभिन्नत्वम्; वस्तुतो विशेषाणां भिन्नत्वाभिन्नत्वयोरसंभवादित्यर्थः । ते चेद्वस्तुनो न भिन्नाः, ततो वस्त्वेव परम्; न ते पृथक् सन्ति । अथ भिन्नाः, न तर्हि वस्तुनः, असंबन्धात् । न हि भिन्नयोरतादात्म्यमर्बुदहैमनयोरव । नापि समवायः; सोऽपि हि समवायिभ्यां भिन्नोऽभिन्नो वा स्यात्; यद्यभिन्नः, न पृथगस्ति; भिन्नश्चेत्, न तयोः स्यात्, असंबन्धात्; तस्यापि ताभ्यां समवायान्तरकल्पने चानवस्था । भिन्नोऽपि समवायस्ताभ्यां स्वत एव संबन्धश्चेत् तावेव तथा स्ताम्; किं तेन? असंबन्धो हि संबन्धमपेक्षते, न संबन्धः, प्रदीप इव प्रदीपान्तरमिति चेन्न; समवायिनोरसौ संबन्धो नात्मनः; तेनात्मनः समवायिभ्यां संबन्धाय समवायान्तरापेक्षा युक्तेति युक्तानवस्था । प्रदीपोपकृतं चक्षुरितरवत्प्रदीपमप्युपलम्भयतीति युक्ता तत्र प्रदीपान्तरानपेक्षेति । किंच संबन्धश्चेत्संबन्धान्तरं नापेक्षते,

संयोगोऽपि नापेक्षेत समवायम् ; नचैवं वैषम्यम् । किंच समवायः स्वसंबन्धिभ्यां समवायेनान्येन संबध्यते, संबन्धत्वात्, संयोगवत् । एवं सोऽप्यन्येनेत्यनवस्था । किंच इहप्रत्ययहेतुः समवायः; न च गोत्वादिष्विह-प्रत्ययोऽस्ति । न हि 'इह गवि गौः' इति प्रत्ययः, अपि तु 'गौरयम्' इति सर्वेषाम् । अतः समवायो नास्तीति न सोऽपि वस्तुविशेषयोः संबन्धः । नापि संयोगः । सोऽपि हि संयोगिभ्यामभिन्नश्चेन्नास्ति; भिन्नश्चेत् केन ताभ्यां संबध्येत? समवायेनेति चेत्, स निरस्तः । न च स्वतन्त्रः संभवति । तस्मात् सोऽपि नास्ति । तेन संयोगोऽपि न वस्तु-विशेषयोः संबन्धः । अतो वस्तुनो भिन्नोऽपि विशेषो न भवतीति सूक्तम् ।

एवं वस्त्वेकत्वेऽपि काल्पनिकविशेषमात्रभेदात् कार्यभेदं स्थिरवादिनः
P. 51-15 प्रत्यापाद्य क्षणिकवादिनं प्रति विशेषेण तमाह—यस्त्विति । तुशब्दो विशेषार्थः । यस्तु क्षणिकत्ववादी तत्त्वमेवाभेदमेव सत्त्वाद्यात्मना विशेषस्य न मन्यते—विशेषा एवात्यन्तविलक्षणाः क्षणिकं वस्तु, न त्वेकजात्यादि स्थायि किंचिदस्तीति मन्वानः—तस्य कारणस्वभावानुवर्ती कार्यस्वभाव इति व्रीहिक्षणानां तत्सामान्यरूपेणासत्यभेदे तेभ्यः कथमेकरूपव्रीह्यङ्कुराख्यकार्यो-त्पादः । अथात्यन्तभिन्नानामपि तेषां कल्पिताज्जातिरूपेणाभेदात् कार्यतुल्य-ताच्यते, एवं तर्हि कारणैकत्वेऽपि कल्पितादेव भेदात् कार्यभेदसिद्धेः कार्यभेदसिद्धये कारणभेदकल्पना गुर्वी वृथैवेत्यर्थः । निरन्वयो विनाशो येषामिति विग्रहः । क्षणिकवादिनां घटनाशे घटत्वस्य घटान्तरे मृदश्च स्वकपालादावन्वयो नास्तीति निरन्वय इत्युच्यते । अथ भिन्नेभ्योऽपि चक्षुर्विषयसमनन्तरप्रत्ययेभ्य एकज्ञानोत्पत्तेर्न कार्याभेदाय कारणाभेदोऽपे-क्ष्यते, तेनात्यन्तभिन्नेभ्योऽपि क्षणेभ्यस्तुल्यरूपं कार्यमुत्पत्स्यत इत्युच्यते, तथा सति कार्यस्वभावस्य कारणस्वभावानुवर्तित्वव्यभिचारात् यथा भिन्ना-दप्येकरूपं कार्यं तथैकस्मादपि कार्यभेदोपपत्तेर्न कार्यभेदासिद्धये कारण-भेदः कल्प्यः; तदेतदाह—अथेति । यदपि भिन्नानामेककार्यत्वे चक्षुरा-द्युदाहृतं तदपि तस्यैवासिद्धम्; तथाहि—चक्षुषो रूपग्रहणनियमे, समन-न्तरज्ञानस्य ज्ञानात्मत्वे, विषयस्य च तदाकारत्वे व्यापार इति वदत

चक्षुरादिकारणव्यापाराणां भिन्नो विषयस्तेनैवोक्तः; तस्मान्न तत्रापि कार्यभेद इत्याह—अपि चेति। कार्यसाम्यस्य कारणाभेदानपेक्षत्वे दोषान्तरमाह— P. 51-21. यदि चेति। तर्हि व्रीह्यङ्कुरान्मृत्प्रच्छन्नस्य व्रीहेरनुमानं न स्यादित्यर्थः। कुत इत्याह—भिन्नेति; यवक्षणादपि व्रीह्यङ्कुरस्योत्पत्तिसंभवादित्यर्थः। एतदेवोपपादयति—हेत्विति। कार्यसाम्ये हेतुसाम्यं चेन्नोपयुज्यते, ततो यथैकस्माद्व्रीहिक्षणादत्यन्तभिन्नाद्व्रीहिक्षणान्तरात् व्रीह्यङ्कुरो भवति तथा यवक्षणादपि स्यात्, अभेदकल्पनां विना तयोरविशेषादिति भावः। तत्रावश्यं कार्यसाम्याय हेत्वभेदकल्पना त्वयाप्यास्थेयेति तुल्यत्वमावयोरित्युक्तं प्रतिष्ठापयति—तत्रेति। अत्र परश्चोदयति—स्यादिति। यदर्थक्रियाकारि, तत् सत्; नेतरच्च शशशृङ्गादि। भेदोऽपि चेदर्थक्रियाहेतुः, न तर्हि कल्पितः; किंतु सन्नेवेत्यर्थः। सिद्धान्ती त्वाह—तुल्यमिति। अभेदोऽपि तव कार्यतुल्यत्वहेतुर्न कल्पितः स्यादित्यर्थः।

अथ मतं नार्थक्रियाभेदमात्राद्वस्तुभेदं ब्रूमः; किंतु विरुद्धार्थक्रियाभेदात्; न ह्यसावेकत्र संभवति; तदाह—योऽपीति। एतदेव प्रपञ्चयति—तथा हीति। तस्योत्तरमाह—तस्यापीति। ननु विरुद्धार्थक्रियाभेदाद्भावभेद उक्तः; न च दाहपाकौ विरुद्धौ; अतः कथमिदमुत्तरमित्यभिप्रायेण पृच्छति—कथमिति। सिद्धान्ती त्वस्योत्तरत्वमुपपादयति—इदमिति। यदि तावदेकत्र जननमरणादीनामसंभवो विरोधशब्दस्यार्थः, सोऽद्वैतिनामस्माकमसिद्धः; अस्माकं हि विरुद्धं च सर्वमेकत्रात्मनि समवेतम्। अथ मिथो व्यवच्छिन्नता विरोधः, जननमरणादयश्च तथेत्युच्यते, ततोऽन्यतो वस्तुभेदसिद्धिः। एकस्यापि वह्नेर्मिथो व्यवच्छिन्नयोर्दाहपाकयोर्दर्शनादित्यर्थः। न च तयोर्मिथो व्यवच्छिन्नत्वमसिद्धम्, नानात्वेन तत्सिद्धेः। अतस्तथाभूताच्चेद्वस्तुभेदः, ततोऽनेकरूपरसादिधर्मकपृथिव्याद्यपि नैकं स्यादित्यर्थः। अथ हर्षः शोकाभावात्मकः, शोकश्च हर्षाभावात्मक इत्ययमनयोर्विरोधः; तत्र तौ चेदेकत्र युगपत् स्याताम्, ततः शोकस्य भावः, तदभावात्मकस्य हर्षस्य भावाच्चाभावः; तथा हर्षस्यापि भावः, हर्षाभावात्मकस्य शोकस्य भावाच्चाभावः; न चैकत्रैकस्यैकदा भावाभावौ संभवतः;

अतस्तयोरीदृशाद्विरोधात् तदाश्रयभूतभावभेदोऽवसीयते ; एवं जननादिभ्योऽपीति चेत् ; तदसत् ; एवं हि परस्पराभावात्मकत्वाद्धर्मावेव भावरूपौ न स्तः ; कुतस्तयोर्विरोधाद्भावभेदावगतिः ? तथा खपुष्पादिषु हर्षशोकयोरभावा-
P. 52-13. दन्योन्याभावात्मकयोस्तयोः प्रसङ्गः । तदेतत्सर्वमाह—अथेति । अथ वध्यघातकभावोऽनयोर्विरोध इत्युच्यते, तदपि न ; यतो जातो घातको वध्यं हन्ति, न च भिन्नाधिकरणे इत्यतो भूत्वैव वध्येन चैकाधिकरणे वध्यं घातको हन्यात्। ततश्चैकाधिकरणयोरेव वध्यघातकभावात् न ततोऽधिकरणभेदावगतिः । अथापि स्यात्, तथाप्येकाधिकरणत्वदर्शनान्नाधिकरणभेदानुमानमव्यभिचारम्, एकाधिकरणयोरपि वध्यघातकयोर्दर्शनादित्याह—अथेति । न विद्यते व्यभिचारोऽस्येति विग्रहः । अथ भावाभावरूपौ धर्मौ विरोधिनौ ; यथा—नित्यत्वानित्यत्वे मूर्तत्वामूर्तत्वे च ; तयोरेकधर्मत्वासंभवाद्धर्मिभेदोऽवसीयत इत्युच्यते, तदपि न ; न हि यो धर्मो यत्र वर्तते स तमवश्यं व्याप्नोति ; न हि रथा रथसंयोगा वा नभो व्याप्नुवन्ति पृथिव्यादींश्च, रथानामवच्छिन्नत्वात् अवच्छिन्नरथाश्रयत्वेन तत्संयोगानामप्यवच्छिन्नत्वात् । यथा रथादयस्तत्संयोगाश्चैवमन्येऽपि येऽवच्छिन्नाः । ये च नित्यानित्यत्वादयो धर्माः, ते नानवच्छिन्नाः । अत एवानन्तात्माख्यमर्थमाश्रयन्तोऽपि न तं व्याप्नुवन्ति । ततश्च तेषां नित्यत्वात्मकभावतदभावौ न विरुध्येते । अतो न भावाभावयोर्विरोधात् तद्धर्मिणो भेदावगतिरिति । तत्सर्वमाह—अथेति । ननु संयोगादेरव्यापित्वादेकत्र व्योम्नि भावाभावौ युक्तौ ; नित्यत्वं त्वात्मनो व्यापि ; ततश्च तदभावस्यानित्यत्वस्य तदेकाश्रयत्वासंभवादात्मनो भिन्नं क्षित्याद्याश्रयः प्रतीयत एव । अत्र ब्रूमः—स्यादेवं यद्यनित्यत्वं नाम धर्मस्तत्त्वतोऽस्ति ; मायामात्रं तु तत् क्षित्यादिरूपेणात्मनि कल्पितम् । न च मायायां विरोधोऽस्ति ; न ह्येकस्य चन्द्रमसो द्वित्वं विरुध्यत इति भावः ।

मतान्तरमाशङ्कयति—यस्त्विति । व्यतिरेकमाह—एकत्व इति । अव्यवस्थामाह—तथा चेति । अन्यथेति ; यदि तिलात् तैलमेव स्यात्, न दधि, यदि चैकस्मिन् नश्यतीतरन्न नश्येत् तदेत्यर्थः । अत्र परवचनं पठति—तदिति । सर्वं सर्वत्रोपयुज्येतेति ; सर्वं पयस्तिलादि सर्वत्रैव

तैलदध्यादिषु हेतुत्वेनोपयुज्यतेत्यर्थः । एवमाशङ्क्य दूषयति—तस्यापीति । P. 53-7.
यदि कार्यनानात्वं व्यवस्था, तया तिलानां पयसश्च भेदं प्रतिजानाति, तदेदमेवोत्तरमित्यन्वयः । ननु क्षीराद् दध्नो जन्म नान्यत इतीयं व्यवस्थोक्ता, न कार्यनानात्वमात्रम्; अतः कोऽयमनुक्तोपालम्भः? सत्यमुक्तम्; किंतु तिलपयसोरन्यत्वे सतीयं व्यवस्था, व्यवस्थया च तयोरन्यत्वसिद्धिरितीतरेतराश्रयग्रस्तत्वादयुक्ता । अतो व्यवस्थां वदता कार्यनानात्वमेव वाच्यमित्यभिप्रेत्येदमुक्तमित्यदोषः । अथ पूर्वोक्तामेव व्यवस्थामाह, तत्रोच्यते—अथेति । व्यवस्था हि भावानामन्यत्वसाधनम् । सिद्धं च साधनं भवति, नासिद्धम् । तद्यदि पयसो दध्नो जन्म नान्यत इति व्यवस्थाया लक्षणं स्यात्, ततो यदन्यत्वं साध्यत्वेनासिद्धं तत् साधनभूताया व्यवस्थाया लक्षणमनुप्रविशेत् । न च तद्युक्तम्, साध्यत्वेनासिद्धस्यान्यत्वस्यानुप्रवेशे तस्या व्यवस्थाया एवासिद्धिप्रसङ्गात् । ततश्चेतरेतराश्रयः स्यादिति भावः । तस्मात् दधिजननशक्तिस्तदभावश्च व्यवस्था । ततस्तिलपयसोर्भेदो गम्यते । न ह्येकत्र विषये दधिन्येकस्य पयसः शक्त्यशक्ती युज्येते । अतः पयसः शक्तिः, तिलानामशक्तिरिति तयोर्भेदसिद्धिरिति वाच्यमित्याह—तस्मादिति; यस्मात्पूर्वोक्ता व्यवस्था दुर्घटा, तस्मादियं वाच्येत्यर्थः । सिद्धान्ती त्वाह—स चेति । अयं च हेतुरनन्तरमेव 'अतो नैकस्य भावाभावविरोधः' इत्यत्रास्माभिर्निरस्तः । अतो नेदमपि व्यवस्थालक्षणमिति भावः । पूर्वोक्तमेव भावाभावयोरेकत्राविरोधं दृष्टान्तेन द्रढयति—यथेति । यथा दीर्घकाला देवदत्तादयः परिमितकालैर्बाल्ययौवनादिभिः संबध्यमानास्तत्काले तद्धर्माणः पश्चादतद्धर्माणो भवन्ति न विरोधस्थानत्वं भजन्ते, तथा परिमितदेशैः रथतत्संयोगादिभिरिव विपुलदेशाः पृथिव्यादयः, अनन्ताश्चात्मादयोऽनित्यत्वादिभिः संबध्यमाना न विरोधपदभाज इत्यर्थः । अत्राशङ्कयति—कथमिति । धर्मस्य धर्मिणोऽव्यतिरेकात्तस्याप्यनन्तत्वमुचितमिति भावः । अत एवाव्यतिरेकपक्षानभ्युपगमेन तावदुत्तरमाह—व्यतिरेक इति । यद्यनन्ताद्व्यतिरिक्तो धर्मः स्यात्, सोऽपि तद्वदेवानन्तः स्यात् । व्यतिरेके तु तस्य मिथ्यात्वे वा अनन्तस्याप्यन्तवद्धर्मासंभावना नास्तीत्यर्थः । अव्यतिरेकपक्षेऽपि सा नास्तीत्याह—

P. 53-16. अव्यतिरेकेऽपीति । दीर्घकालादव्यतिरिक्ता धर्मास्तद्वदेव दीर्घकाला न, पुनर्मितकाला भवन्ति; अतस्तथैवानन्तस्याप्यन्तवान् धर्मो भविष्यतीत्यर्थः ।

यस्तु क्षणिकवादी दीर्घकालमर्थं न प्रतिजानाति तं प्रति दृष्टान्तासिद्धौ तेन दृष्टान्तेन नैकत्र भावाभावयोः समावेशः सिध्यतीत्याशङ्क्य तं प्रत्येकत्र भावाभावयोः समावेशं दर्शयितुं पूर्वोक्तमेव श्लोकार्धं पुनर्योजयति—यस्त्विति । तद्विवृणोति—एक इति । एको वह्निक्षणः किंचिदेव तृणतण्डुलादि दहति पचति च, न जलादि; तथा च तृणादीन् प्रति दाहकः पाचकश्च, जलादिषु न तथा, न च भिद्यते; तस्मादेकत्रापि शक्त्यशक्त्यादिलक्षणभावाभावधर्मदर्शनान्न ततो भावभेदावगतिरित्यर्थः । अस्मिन् पक्षे क्वचित् दाहपाकयोर्भावः क्वचिदभाव इत्ययं विभागो व्याख्येयः । ननु विषयभेदादत्राविरोधो युक्तः; शक्त्यशक्ती त्वेकविषयेणैकस्य विरुद्धे इत्याशङ्क्य तदेव श्लोकार्धं पुनरन्यथा योजयति—तथेति । एकोऽपि वह्निक्षण एकस्मिन्नेव दाह्ये पाक्ये च किंचित् दाहं पाकं च करोति; तेन दाहकः पाचकश्च; ततोऽन्यन्न करोतीत्यदाहकोऽपाचकश्चेति 'न च भिद्यते' इत्यनुवर्तते । अयमेव च दाहपाकविभागो योज्यः । एवं क्षणवादिनमेव प्रति साशङ्कमेकत्र समावेशं दर्शयितुमुदाहरणान्तरमाह—तथेति । बौद्धा अभिमन्यन्ते—बीजमशक्तं चेत् क्षित्यादिसंयोगेऽपि नाङ्कुरं जनयेत् सिकतावत्; शक्तं चेन्न क्षित्याद्यपेक्षेत; क्षित्याद्याहितविशेषं जनयतीति चेत्, न तर्हि स्वतः शक्तम्; अशक्तं चाहितविशेषमपि न जनयति, दुष्टबीजवत् । अपि च विशेषे सति भावादसति च बीजे सत्यप्यभावात् स हेतुः स्यात्, न बीजम् । न च स भिन्नोऽभिन्नो भिन्नाभिन्नो वा संभवति । तस्मात्सदृशक्षणपरंपराप्राप्ताः क्षितिबीजादिक्षणाः प्रत्येकं शक्ता अप्येकमेवाङ्कुरं कुर्वन्ति, न प्रतिस्वमनेकान् । ननु कृतस्य करणाभावात् यदेकेन कृतं तस्यान्येन करणं न स्यात्; स्यादेवं यदि क्रमः स्यात्; सह क्रियायां तु कृत इत्येष नास्ति । यस्यापि सामग्री जनिका तस्यापि सा एकमेवाङ्कुरं जनयति, नाङ्कुरान्तराणि । तथाच सत्येकस्यापि जनकत्वमजनकत्वं च

'न च भिद्यते' इत्यत्राप्यनुवर्तते । इतिरुदाहरणसमाप्तौ । जनकत्व- P. 53-21.
मजनकत्वमिति; जननशक्तिरशक्तिश्चेत्यर्थः । नन्वेकत्रैकस्य शक्त्यशक्ती विरुध्यमाने तिलपयसोर्भेदं गमयत इत्युक्तम् । तत्रैव व्यभिचारो वाच्यः । न चेह तथा; तथाहि—बीजानामेकत्रैवाङ्कुरे शक्तिः; न च तत्राशक्तिः, अपि त्वन्यत्र; अतो वैषम्यान्न बीजादिर्व्यभिचार इत्याशङ्कयति—अथेति। अन्यत्राशक्तिस्तु भिन्नविषयत्वादेवाविरुद्धेति भावः । सिद्धान्ती तु वाक्छलेन साम्यमाह—अन्यमिति । भवत्वेकत्रैव शक्तिः; तथाप्यतीतमप्येकमनागतं च; अतश्चैकत्रैव शक्तिरेकत्रैवाशक्तिरिति शक्त्यशक्त्योः समानविषयत्वात्साम्यमेवेत्यर्थः । अथ कार्यगम्यत्वाच्छक्तेरनन्तरोत्पन्न एवाङ्कुरे तेषां शक्तिः, नातीतानागतयोरिति न च तत्रैवाशक्तिः, तिलपयसोस्त्वेकत्रैव दध्नि शक्तिरशक्तिश्च; ततश्च वैषम्याद्बीजादिभिर्न व्यभिचार इति पुनराशङ्कयति—अथेति । तत्रोत्तरमाह—अभेदेऽपीति । एतदुक्तं भवति—यत्तावद्दधि पयसो जातं तदभेदात् तिलेभ्योऽपि जातमेव; अतश्च यथा पयसस्तत्र शक्तिरेव नाशक्तिरिति न शक्त्यशक्त्योर्विरोधः, तथा तिलानामपि; अतो न ततस्तयोर्भेदावगतिः । अथ च दध्नि चेत्तिलानां शक्तिः, दध्यन्तरमपि जनयेत्; न च तथा; अतोऽशक्तिरप्यस्तीति शक्त्यशक्त्योर्विरोध इत्युच्यते, तन्न; पयोज एव हि दध्नि तिलानां शक्तिर्न दध्यन्तरे, बीजादीनामिवातीतानागतयोः; अतश्च यत्र शक्तिस्तत्राशक्तिरेव नास्ति; कया विरोधः स्यात्? या त्वन्यत्राशक्तिः, सा विभिन्नविषयत्वादविरोधिनीति न शक्त्यशक्त्योर्विरोध इति । एकत्र चेच्छक्तिरन्यत्रापि तुल्यजातीये स्यात्; अतस्तदपि तिला जनयेयुरिति चेत् तन्नेत्याह—न हीति ।

मतान्तरमाशङ्कयति—अथेति । विनियोगभेदमाह—दध्नि हीति । तद्दूषयति—तदपीति । अनैकान्तिकत्वमाह—एकत्वेऽपीति । तदेव प्रपञ्चयति—तदेवेति । एकमपि वस्तु सहकारिसहितं कार्ये विनियुज्यते न केवलम्; अतश्चैकत्रापि विनियोगाविनियोगसत्त्वेनानैकान्तिकत्वात् न वस्तुभेदावगतिहेतुत्वमित्यर्थः । अथ सहकारिसंनिधानोपाधिभेदात् भिन्नमेव वस्तु केवलात्; अतो नानैकान्तिकत्वमित्याशङ्कयति—अथेति । सिद्धान्ती

P. 54-8. त्वाह—औपाधिक इति। यदि सहकारिसंनिधानोपाधिभेदाद्भेदः, औपाधिकस्तर्हि; यश्चौपाधिकः स प्रतीयते परम्, न वस्तु संस्पृशति, बिम्बप्रतिबिम्बयोरिव; अतोऽपरमार्थः; अपरमार्थश्च भावानां भेदोऽस्माभिरभ्युपेयते। अतोऽस्मत्पक्षमेवाश्रितोऽसीति भावः। क्षणिकवादिनस्तु केवलात् पयःक्षणात् सहकारिसहितः पयःक्षणोऽत्यन्तभिन्नः; तथा सिकतापीति सापि दध्नि विनियुज्येत। अथादृष्टशक्तित्वात् सिकता दध्नि न विनियुज्यते, ततो नवोऽपि पयःक्षणः पूर्वमसत्त्वान्न दृष्टशक्तिरिति न विनियुज्येत। न चैकजातिमुखेन स दृष्टशक्तिरिति वाच्यम्, जातेस्तैरनभ्युपगमादिति भावः। अथानादिवासनाकल्पितैकजातिमुखेन दृष्टशक्तेः पयःक्षणात् नवस्याभेदात्तस्मिन् दृष्टशक्तावयमपि दृष्टशक्तिरित्यस्य विनियोगसिद्धिः, न सिकताया विजातीयक्षणाया इत्युच्यते, ततः परस्याप्यभेदवादिनोऽविद्याकल्पिताद्भेदात् पयःसिकतयोर्विनियोगाविनियोगौ सेत्स्यत इति विनियोगाविनियोगव्यवस्थया भावभेदकल्पना व्यर्थैवेति भावः। एवं भेदाभेदवादिनं प्रत्याह — योऽपीति। यथा भेदाभेदौ विरुद्धौ धर्मावेकत्र भवतः, तथा जनकत्वाद्यपीति न ततस्तिलपयसोर्भेदसिद्धिरित्यर्थः। जनकत्वाजनकत्वाभ्यामित्युपलक्षणम्; शक्त्यशक्त्यादयोऽपि सर्वे द्रष्टव्याः।

इदानीं सर्वं पूर्वोक्तमर्थमुपजीव्य स्वपक्षमुपसंहरति—तदिति; तस्मादित्यर्थः। सहः; क्षम इत्यर्थः। श्लोकार्थं विवृणोति—एकत्रेति। 'अर्थक्रियाकृते भेदे' इत्यत आरभ्य यावदुक्तं तत्सर्वम् 'एवम्' इत्युपजीवितम्। तदेव 'एकत्र' इत्यादिना 'संभवात्' इत्यन्तेन सुखस्मरणायानुकीर्तितम्। 'व्यवस्थायाश्च' इत्यत्र 'अनैकान्तिकत्वात्, असिद्धत्वाद्वा' इत्यनुवर्तनीयम्। इममेव स्वपक्षं श्रुत्या द्रढयति—तदेतदिति। श्रुतिं विवृणोति—एतदिति। "यद्भूतम्" इत्यत्र 'यदेकोऽपि' इत्यनुवर्तते। "अतो ज्यायान्" इत्याशङ्कितोत्तरं योजयितुमाशङ्कां तावदाह—पूर्वेति। "सहस्र—" इत्यादौ पूर्वस्मिन् ऋग्द्वये निर्दिष्टानां विरुद्धत्वेनाभिमतानां धर्मकार्यव्यवहाराणामेकोऽपि सन् कथमाश्रय इत्यर्थः। तत्रैकस्य सहस्रशीर्षत्वमदृष्टत्वाद्विरुद्धम्। सर्वभूमिव्यापिनस्तु दशाङ्गुलत्वमन्याय्यम्।

अत्रोत्तरमाह—अत इति । 'अतः' इतीदमा संनिहितमुच्यते । तच्च P. 55-5. प्रत्यक्षतः, शब्दतो वा । तत्र प्रत्यक्षमाश्रित्य 'अतः प्रत्यक्षाभिमतात्' इत्युक्तम् । शब्दमाश्रित्य च 'पुरुष एवेदमिति सर्वशब्दनिर्दिष्टात्, उतामृतत्वस्येत्यनेन वा निर्दिष्टात्' इत्युक्तमिति विवेक्तव्यम् । कथमनेन देवादिप्रपञ्चस्य निर्देशः? उच्यते—मर्त्यस्य देवादेरमृतत्वस्येशान इत्यर्थात् देवादिप्रपञ्चस्य निर्देशः । प्रतीकनिर्देशो वायम्—"यदन्नेनातिरोहति" इत्यनेन देवादिप्रपञ्चस्य निर्देशः; यद्धि यस्यादनीयं तत्तस्यान्नम्; देवानां चामृताद्यन्नमिति । ततश्च यदन्नेनातिरोहति प्रादुर्भवति च तस्य चेशान इति देवादिप्रपञ्चनिर्देशः । भेदेनेति; इत्थंभूतलक्षणे तृतीया; इत्थंभूतादित्यर्थः । सर्वं चेदं प्रपञ्चादित्यस्य विशेषणम् । वृद्धतर इति; सर्वथातिशयितोऽनन्त इति यावत् । अनेन ज्यायानिति "वृद्धस्य च" इत्यनेन ज्यादेश इति दर्शयति । तदेवमनन्तेऽस्मिन्नेकस्मिन्नपि पुरुषे परिच्छिन्नानां विरुद्धानामपि नित्यानित्यत्वादीनां समावेशो न न युज्यते । अतोऽनन्ततो भावभेदावगतिरित्यभिप्रायेणाह—तेनेति । एतदेवानन्तत्वं श्रुतिः प्रकारान्तरेण दर्शयतीत्याह—तदेवेति । तां व्याचष्टे—कृत्स्नोऽपीति । विश्वा इति; "शेश्छन्दसि बहुलम्" इति शेर्लोपः । पादः चतुर्थो भागः; कनीयान् अल्प इत्यर्थः । भाग इवेति; निर्भागस्य तत्त्वतो भागाभावादवच्छिन्नप्रपञ्चोपाधिकल्पितः स इति दर्शयितुमिवशब्दः । कथं प्रपञ्चावच्छिन्नस्य भागस्याल्पत्वं पुरुषस्य च ज्यायस्त्वमित्यपेक्षायामुत्तरमृक्पादं योजयति—तथा हीति । पादा भागाः; त्रयः पादा अस्येति विग्रहः; रूपमन्यपदार्थः । त्रित्वेन च पादानामेकस्मात् पादाद्वैपुल्यतोऽनन्तत्वमभिप्रेतम् । अथवा अमृतत्वमविनाशित्वम्; तच्चाजत्वादिधर्मोपलक्षणार्थम् । अजस्यैव हि तत्, न जन्मवतः । तदयमर्थः—अपरिमितम्, अत एवानन्तम्, मरणादयो मृतधर्माः यस्य प्रपञ्चस्य तेन शून्यम्, अस्य पुरुषस्य रूपं दिवि प्रद्योतावस्थायां विशुद्धचैतन्यावस्थायां प्रमोदावस्थायां नित्यनिरतिशयानन्दावस्थायां सूर्यमण्डले वा स्वर्गस्थाने वा वर्तत इति । एतदुक्तं भवति—प्रपञ्चस्यावच्छिन्नत्वात् सप्रपञ्चं ब्रह्मरूपमल्पम्, अप्रपञ्चं त्वपरिमितम्; अतोऽस्य विरुद्धाविरुद्धधर्मकार्य-

व्यवहाराश्रयत्वमुचितमिति । नन्वनन्तं सर्वत्र वर्तते ; तत्कथं सूर्यमण्डले
P. 55-12 द्युस्थाने वेत्युक्तमित्याशङ्क्याह— तत्र हीति । तद्विवृणोति—तद्धीति ।
उपलब्धिः उपासनाज्ञानमभिप्रेतम् ।

'एकस्यैव' इत्यादिश्लोकमन्यथा व्याचष्टे—अपर इति । कल्पः अर्थः । घटनाकार्यभेदात् पूर्वोक्तया वा व्यवस्थया कल्पितेऽपि त्वया कारणयोस्तिलपयसोर्भेदे, त्वां पृच्छामः—तिलकार्यात् तैलात् कार्यान्तरं दधि किमिति पयसो भवति? द्वाभ्यां संभूयैकमेव कार्यं किमिति न क्रियते? अथापि तिलपयसी पृथक् कार्यं कुरुतः, तथाप्येकजातीयं किं न कुरुतः? तदा च कार्यान्तरशब्दो भिन्नजातीये द्रष्टव्यः । किमिति चोभयमुभाभ्यां न क्रियते? सोऽयं संकरः । पयसस्तैलं तिलेभ्यो दधीति विपरीता वा व्यवस्था किं न स्यात्? पयसः सकाशात् तिलसिकतयो-र्भेदाविशेषेऽपि किमिति वा तिलेभ्यस्तैलम्, न सिकताभ्यः? इति । किंच दृष्टत्वादपि भिन्नानामेककार्यत्वमेकजातीयकार्यत्वं वा युक्तम् ; दृष्टं हि चक्षुरादीनामेककार्यत्वम्, एकजातीयशरादिकार्यत्वं च शरशृङ्गादीनाम् । तिलपयसोर्भेदेऽपि किमिति तिलेभ्यस्तैलम्, पयसो दधि, न तु विपर्ययः? इति विपरीतव्यवस्थाविवरणमात्रम् । अथ मतम्—अचिन्त्येभ्यो भाव-सामर्थ्येभ्यः कार्यभेदः कार्यव्यवस्था ; सत्यां च तस्यां न विपर्ययः सेत्स्यतीति ; ततो वरमेकस्यैव सोऽस्तु सामर्थ्यातिशयः, यदेकस्मादप्यनेकं व्यवस्थितमविपरीतं च कार्यं भवतीति; एककारणमात्रेण एकस्य वा सामर्थ्यातिशयमात्रेण कार्यभेदादिसिद्धेरप्रमाणिका भावानां गुर्वी भेद-कल्पनेत्यर्थः । अचिन्त्येभ्य इत्यस्य विवरणम्—अचिन्त्यानीति । 'कस्माद्भवन्ति, कथं भवन्ति' इत्येवमुपपत्तितश्चिन्तयितुं न शक्यन्ते, किं तु कार्यदर्शनैस्तत्सामर्थ्यानां व्यवस्थोन्नीयते । कार्यं तु तिलपयसोर्भिन्नं व्यवस्थितमविपरीतं च दृश्यते । अतस्तथैव तानि व्यवस्थितानीति भावः । एतच्चाविद्यात्मिकां शक्तिमभिप्रेत्योक्तम् । न तत्त्वतो भिन्ना अभिन्ना भिन्ना-भिन्ना वा शक्तिरस्ति ।

एकस्मादप्यनेकं कार्यं दृष्टम् ; यथा—वह्नेर्दाहपाकावित्युक्तम् ; तत्र चोदयति —स्यादिति । तत्परिहरति—तत्रेति । शक्तीनां भेदेऽपि

वह्नेरेकत्वादिति भावः । नन्वेकस्मादपि वह्नेः कार्यभेदः शक्तिभेदनिबन्धनः; न चाभेदवादिनां शक्तिभेदोऽस्ति । नैवम् ; अस्माकमपि मायात्मक-शक्तिभेदस्येष्टत्वादित्यदोषः । अथ सत्यपि वह्नौ मन्त्राद्युपहतायां शक्तौ कार्यादर्शनाच्छक्तीनामेव कारकत्वमभिप्रेतम् ; ताश्च भिन्नाः; तेन कारण-भेदादेव तत्र कार्यभेद इत्याशङ्कयति—अथेति । अत्रोच्यते—यथेति । P. 56-1.
रूपमिति; अत्र 'अभिन्नम्' इत्यनुवर्तते । श्लोकार्थं विवृणोति—एकस्येति । एकस्य वह्नेरनेकदाहादिकार्यसंबन्धविरोधात् शक्तिभेदः कल्प्यत इत्यर्थः । शेषं सुगमम् । किंच एकस्माद्वह्नेरनेकाः शक्तयश्चेदव्यतिरिक्ताः, ततो वह्नि-रेकोऽनेकश्चेष्टव्यः । तत्र वह्नेरेकत्वं तद्गतेनैवानेकत्वेन चेन्न विरुध्यते, नतरां कार्यगतेन । अतश्चैकस्मादपि कार्यानेकत्वसंभवात् न कार्यानेकत्वेन कारणभेदसिद्धिरित्यभिप्रायेण सोपहासमाह—अपि चेति । अथैकस्माद्वह्ने-र्व्यतिरिक्ताः शक्तयः, कथं तस्य तदाश्रयत्वमिति वाच्यम् । तेन सह तासां संश्लेषस्तदाश्रयत्वमिति चेत्, स किं तादात्म्यलक्षणः? उत नैरन्तर्यम्? न तावत्तादात्म्यलक्षणः, भिन्नानां तदयोगात् । तादात्म्ये हि तयोरेकत्वमेव स्यात्, न भेदः । नैरन्तर्ये च संश्लेष आश्रयत्वे, दाह-शक्तिकवह्निसंनिकृष्टस्य काष्ठस्यापि तन्नैरन्तर्यमस्तीति तदाश्रयत्वप्रसङ्गः । न हि यद्द्रव्यस्य संनिकृष्टं तत्तच्छक्तेरसंनिकृष्टं भवति; न हि चक्षुर्द्रव्यस्य संनिकृष्टं तद्रूपस्यासंनिकृष्टं भवति; अन्यथा रूपोपलब्धिरेव न स्यात् । एवं च विभूनां सर्वैः शक्तिमद्भिरर्थैः संनिकर्षात् सर्वशक्तित्वप्रसङ्गः । तस्मात् शक्तीनां कंचिदुपकारं कुर्वतो वह्नेरनेकशक्त्याश्रयत्वं वाच्यम् । स च शक्तीनां भेदात् प्रतिशक्ति भिन्नः । तदेवमेकस्माद्यथानेकोपकार-सिद्धिः, तथानेककार्यसिद्धिरपि स्यादिति न कार्यभेदात् कारणभेदसिद्धि-रिति । तदेतत्सर्वमाह—अथेति ।

इदानीं प्रकरणार्थं संकलय्योक्त्वा मतान्तरमवतारयति दूषयितुम्—एवमिति । यदेव कार्यभेदादिविपक्षव्यावृत्तिमुखेन बौद्धानामनुमानमुक्तं तदेवान्येषामन्यथानुपपद्यमानमर्थापत्तिरिति मत्वोक्तम्—अर्थापत्त्या वेति । अन्योन्याभावो हि भेदः; न च सोऽक्षगोचरः, भावमात्रग्रहणयोग्यत्वा-दिन्द्रियाणाम् । न च लिङ्गगम्यः, प्रमाणान्तरागोचरे संबन्धग्रहणाभावे

लिङ्गिनि, तेन सह कस्यचिल्लिङ्गस्यादृष्टसंगतित्वात् । अर्थापत्तिरपि पयसो दध्नो जन्म नान्यत इति व्यवस्थाहेतुका; सा चेतरेतराश्रयत्वदोषग्रस्तत्वान्नान्योन्याभावरूपे भेदे प्रमाणम् । तस्मात् भावोपलम्भहेतुभ्यश्चक्षुरादिभ्यः प्रमाणान्तरं प्रमाणानुत्पादलक्षणं, विधायकाद्वा भावज्ञानात् प्रमाणान्तरं व्यवच्छेदकत्वेन 'नास्ति' इति ज्ञानमन्योन्याभावायाश्रयितव्यम्; तदधीना हि भावानामन्योन्यमसंकीर्णतेति ये मन्यन्ते तान् प्रत्युच्यते—

P. 57-3. अन्योन्येति । प्रमान्तरेति; प्रमाशब्दः करणसाधनो भावसाधनो वा; तथाच दर्शितम्—'सदुपलम्भहेतुभ्यः' इत्यादिना; विषयप्रतिषेध्ययोर्भेदाद्विना 'अस्मिन् भूतले नेदं घटादि' 'नायं घटः पटः' इति चोभयविधा निषेधधीर्न भवतीत्यर्थः । नन्वन्योन्याभावो भेद इति परेणोक्तम्; स च तादात्म्याभावो नाधाराधेयाभावः; तत्र 'नायमयम्' इतिमात्रं वाच्यम्, न 'नास्मिन्निदम्' इति । सत्यम्; न व्यर्थम्; दृष्टान्तार्थं हि तत् । श्लोकं व्याचष्टे—नेति । खलुशब्दः प्रसिद्धिद्योतनार्थः । कुत इत्याह—नानपेक्षितेति । न हि यत्र यो निषिध्यते तावनपेक्ष्य 'नेदमिह' 'नायमयम्' इति निषेधो भवति; भवन् वा 'न' इत्येतावन्मात्रं स्यात्; ततश्चागृह्यमाणविशेषत्वात् सर्वशून्यतामापादयति; न भावविशेषयोरन्योन्याभावरूपं भेदमिति 'अपि चानपेक्षितविषयनिषेध्यव्यवच्छेदे शून्यता प्रमाणार्थः' इत्यत्रोक्तम् । एतच्च परेषामपि संमतमिति गृहीत्वा इत्यादिना दर्शितम् । तदेवं विषयनिषेध्यप्रतीतौ सिद्धायां यदि सा तयोरनवगतभेदयोर्वस्तुमात्रत्वेन स्यात्, तदा 'इदं निषेध्यम्, विषयस्त्वयम्' इति विभागाभावान्निषेध एव न स्यात् । वस्तुमात्रं ह्यनवगतभेदं यदि विषयः, निषेध्यं न स्यात् । अथ निषेध्यः, ततो विषयो न स्यात् । विषयाभावे च 'घटो नास्ति' इति घटस्यात्यन्तिको निषेधः स्यात्, नान्यत्र सिद्धस्य देशविशेषे; न क्वचित्सिद्धस्यात्यन्तिको निषेधो युज्यते; न चात्यन्तमसिद्धस्य, अप्रसक्तेः; एतच्च 'अन्यथा दैवनिषिद्धं कः प्रतिषेधोऽप्राप्तरूपे?' इत्यादिनोक्तम् । व्यवच्छेदावधिः व्यवच्छिद्यते अस्मिन्निति विषयोऽभिप्रेतः । अथ न वस्तुमात्रस्य विषयनिषेध्यत्वे, किंतु वस्तुविशेषयोरेव ययोः कयोश्चिदित्युच्यते, ततः सर्वस्य सर्वत्र निषेधः स्यात्, विशेषा-

नवधारणात् । तस्मात् भिन्नस्वभावेन विशिष्टौ च विषयनिषेध्यौ प्रतिपद्य परेण निषेधः प्रतिपत्तव्यः; एवं हि स संभवेत्; अन्यथा विषयनिषेध्ययोर्विभागाप्रतिपत्तौ न संभवेत् । विशिष्टयोश्च तयोः प्रतीतौ क्वचिदेव निषिध्यत इति नियमः स्यात् । अन्यथा सर्वः सर्वत्र निषिध्येतेत्युक्तम् । किंच प्रतियोगी निषेध्यः; न चानवगतभेदः स भवति; अन्यथा स्वस्य स्वयं स स्यात् । यद्वा अनवगतभेदः सामान्यमात्रेणावगतः प्रतियोगी भवति । ततः स्थाणावविशेषेण प्रतीते पुरुषोऽप्यूर्ध्वतासामान्येन प्रतीतः प्रतियोगी स्यात्; अतस्तस्याभावप्रतीतिः स्यात् । न चैवम् । अतश्च भिन्नौ निषेध्यविशेषौ बुद्धौ स्वीकृत्याभावः प्रतिपत्तव्य इति सिद्धम् । तथाच लोकेऽपि तत्प्रतीतिस्तथैव प्रत्यात्ममुपलक्ष्यते । तथाच सति विषयनिषेध्ययोर्भेदज्ञाने सत्यभावप्रतीतिः, तस्यां च सत्यां तयोरन्योन्याभावात्मकभेदप्रतीतिरितीतरेतराश्रयत्वं स्यादित्यर्थः ।

इदानीमितरेतराश्रयत्वमुच्छ्लोकमाह—अपिचेति । नानुपलब्धिमात्रात् P. 57-20
वस्त्वभावज्ञानम्, सुषुप्तेऽपि प्रसङ्गात्; किंतु उपलब्धिसाधनसाकल्ये सत्यनुपलब्ध्या । न हि सुषुप्तेऽनुपलब्धिलक्षणः स्वरूपविशेषः कश्चिदस्ति, यस्य सामर्थ्यातिशयात् चक्षुरादेरिव रूपादेरभावस्य बोधकः; किंतु प्रमाणसामग्रीवैकल्येन तत्रानुपलब्धिः । अवैकल्ये तु प्रमेयाभावमन्तरेण तदसंभवान्नान्तरीयकत्वेन सा वस्त्वभावं गमयति । एवं च धूमादिवत् ज्ञाता सा गमिकेत्यापन्नम् । सा च द्विविधेष्टा—प्रतियोग्युपलब्धिरूपेणात्मनोऽपरिणामो वा, ततोऽन्यस्य वा विषयस्य ज्ञानम्; तदुक्तम्—"सात्मनोऽपरिणामो वा विज्ञानं वान्यवस्तुनि" इति । तत्र यद्यन्यवस्तुज्ञानमनुपलब्धिः, ततो नासिद्धे वस्तुभेदे सा सिध्यति । अतस्तज्ज्ञानाय वस्तुभेदो ज्ञातव्यः । न च वाच्यम्—निषेध्यज्ञानादन्यत् ज्ञानमनुपलब्धिः; अतो ज्ञानभेदोऽत्र गम्यते, न वस्तुभेदः; तत्कथमुच्यते 'नासिद्धे वस्तुभेद' इति ? । यतो ज्ञेयानुमेयं तज्ज्ञानम्, अतो भेदोऽपि तस्य ज्ञेयभेदानुमेय इत्यर्थः । ज्ञेयवस्तुभेदो विज्ञातव्यः; ततस्तु भेदं विनान्यत्वासिद्धेः भेदे ज्ञातेऽनुपलब्धिज्ञानम्, तस्यां च ज्ञातायामन्योन्याभावात्मकभेदज्ञानमितीतरेतराश्रयत्वं स्यात् । अथात्मनोऽपरिणामोऽनुपलब्धिः, सापि नात्मनः

सर्वविज्ञानशून्यतारूपा स्तिमितावस्था, सर्वाप्रतिपत्तौ कस्यचिन्नियतस्य पटादेरभावात् । तस्मात् घटादिभ्यो भिन्ने पटादौ ज्ञानपरिणामे सत्येव तद्भिन्ने घटादौ ज्ञानापरिणामोऽभावज्ञानहेतुरिति वाच्यम्; न चैषोऽनुपलब्धेर्विशेषो घटपटयोर्भेदज्ञानात् प्राक् सिध्यति । ततश्च पूर्ववदितरेतराश्रयत्वम् ।

ननु प्रत्यक्षेणैव भेदो गृह्यते; तथाहि—निर्विकल्पकप्रत्यक्षस्य सामान्यमात्रविषयतामपाकुर्वता वार्त्तिककृता "तदयुक्तम्" इत्याद्युक्तम् । ननु "वस्त्वसंकरसिद्धिश्च तत्प्रामाण्यमुपाश्रिता" इत्यपि तेनोक्तम्; बाढम्; संयोगसमवायात्मकासंकराभिप्रायं तु तत्—इति ये त्वाहुः, ते प्रागेव 'आहुर्विधातृ प्रत्यक्षम्' इत्यत्र निरस्ताः ।

येऽपि काणादा एवमाहुः—भूतलादिवस्तुग्रहणप्रतियोगिस्मरणरूपयेतिकर्तव्यतयाऽनुगृहीतादक्षात् संयुक्तविशेषणसंनिकर्षेण लब्धं जन्म येन तत् प्रत्यक्षान्तरमभावग्राहकम् । न च वाच्यम्—अक्षजं तच्चेद्विषयज्ञानवत् प्रथममेव स्यात्, न पश्चात्; प्रतियोगिस्मरणव्यवहिते चाक्षव्यापारे जातं कथं तदक्षजम्? इति; यतो यथा शब्दस्मरणापेक्षित्वात् सविकल्पकं निर्विकल्पकात् पश्चाद्भावि, यथा च शब्दस्मरणव्यवधानेऽपि तदनुगृहीतादक्षादुत्पत्तेर्नानक्षजम्, तथा 'नास्ति' इत्यपि ज्ञानं प्रतियोगिस्मरणापेक्षित्वात् पश्चाद्भावि, प्रतियोगिस्मृतिव्यवधानेऽपि च तदनुगृहीतादक्षा-
P. 68–14 दुत्पत्तेश्चाक्षजमिति, तान् प्रतीदमेव वक्तव्यम्—अन्योन्यसंश्रयात् इति । प्रमाणान्तरम्; प्रत्यक्षान्तरमित्यर्थः । प्रत्यक्षेणापि विषयनिषेध्यौ भेदेन गृहीत्वा तयोरन्योन्याभावो ग्रहीतव्यः; ततश्चाभावगम्य इव प्रत्यक्षगम्येऽप्यभावे तुल्यमितरेतराश्रयत्वमित्यर्थः ।

इतश्चान्यत्रान्याभावज्ञानासंभव इत्याह—किंचेति । मीयमानमेकं सन्मात्ररूपं येषां भावानामिति विग्रहः । तद्विवृणोति—अपिचेति । यथाप्रमाणं हि प्रमेयव्यवस्था; तच्च घटपटौ सन्मात्ररूपतया प्रमिणोति, न विशेषरूपतया; अतः सन्मात्रस्वभावावेव तौ, न भिन्नस्वभावौ; ततश्च न तयोरितरेतराश्रयत्वम्; अतश्चेतरत्वेनाभिमते घटे नेतरस्य पटस्य

प्रमानुत्पादोऽनुपलब्धिः, द्वयोः सन्मात्रैकरूपत्वात्; एकोपलब्धौ चेतरस्यापि तेन रूपेणोपलब्धत्वात्; अतो नेतरत्रेतराभावज्ञानं संभवतीत्यर्थः । अत्र सत्तापह्नववादी चोदयति—नन्विति । एकरूपप्रत्यभिज्ञानात् P 58-22 गोव्यक्तिषु गोत्वमुपेयते । न च यथैकां गां दृष्टवतो गवान्तरे तदस्ति, तथा सर्षपं दृष्टवतो मेरौ । तस्मान्न सत्तासामान्यमस्ति । कथं तर्हि अत्यन्तभिन्नेष्वनन्तेष्वेकमालम्बनं विना 'सत् सत्' इति शब्दप्रत्यययोरनुवृत्तिः? पाचकादिवदुपाधियोगेन भविष्यति । कः पुनरुपाधिः? प्रमाणविषयता । यो हि प्रमाणविषयः, तं लोकः 'सन्' इत्याचष्टे, नातद्विषयं खपुष्पादीत्यर्थः । तद्दूषयति—नैतदिति । न खलु द्वयोरन्योन्यप्रतिषेधमन्तरेण भेदप्रतीतिः; न केवलो विधिसमकालो विधितः पश्चाद्वा प्रतिषेधाख्यः प्रमाणव्यापारः संभवति । न च वस्तुविधिरेवान्यप्रतिषेध इति 'लब्धरूपे क्वचित्' इत्यादौ वर्णितम् । अतो न भेदः प्रमाणस्य विषयः । तद्वद्यभिन्नमपि रूपं न गृह्येत, निर्विषयमेव प्रमाणं स्यात् । अतोऽशेषभावगतमभिन्नमेकं रूपमेष्टव्यम् । तच्च नः सत्ता । सैव च प्रमाणस्य विषयः; न भेदाः । तेन भेदा एव प्रमाणविषयतया शब्दवाच्या इत्यपि प्रत्युक्तम् । यत्तु मेरुसर्षपयोः 'सत्' इति प्रत्यभिज्ञानं नास्तीत्युक्तम्, तदसिद्धम्; अस्त्येव हि सद्रूपतया तत्रापि प्रत्यभिज्ञानम् । अथ सत्यपि सद्रूपानुगमे वैलक्षण्यान्नेत्युच्यते, तर्हि यादृशमेकस्यां गवि व्यक्तं न तादृशमेकां गां दृष्टवतो गवान्तरे, व्यक्तिभेदादिति तत्रापि न स्यात् । अथास्ति तत्र तावत् सत्यपि व्यक्तिभेदे 'स एवायम्' इति पूर्वापरानुसंधानम्, न तु सतः सर्षपस्य सदन्तरे मेरौ; सत्तावादिनः 'सोऽयम्' इति पूर्वापरानुसंधानादेकत्वम्, नाभिन्नरूपसंवित्तेः; तेन मेरुसर्षपयोः सत्यभिन्नरूपसंविदनुगमेऽपि 'सोऽयम्' इत्यनुसंधानाभावान्नैकत्वमिति; तदिदमयुक्तम्; अनुसंधानं विनाप्यभिन्नरूपसंवित्तित एव प्रथममेकव्यक्तिदर्शने तदेकत्वनिश्चयात् । अनुसंधानं हि देशकालभेदेन पुनर्दर्शने भवति; न च प्रथमदर्शने सोऽस्ति । तस्माद्भिन्नरूपसंवित्तित एवानेकत्वैकत्वनिश्चय इति सिद्धम्; तथा महिषीमण्डलाद्व्यावृत्तात् 'गौः' इत्यभिन्नरूपान्निर्विकल्पकप्रत्ययात्प्रथमादेव गोमण्डले गोव्यक्तीनां देशभेदे-

P. 59-14. प्येकगोत्वनिश्चयस्येष्टत्वात् ; तदुक्तम्—"निर्विकल्पक—" इत्यादि । न ह्यत्राप्यनुसंधानमस्ति; तद्धि दृष्टस्य कालभेदेन पुनर्दर्शने भवति; गोमण्डले च व्यक्तीनां देशभेदेऽपि न कालभेदः । तस्मादत्राप्यभिन्नरूपसंवित्तित एवाभेदाध्यवसायः । अपि च यद्यनुसंधानादेकत्वम् , ततो यथा माणिक्कं दृष्ट्वा मणिकान्तरेऽनुसंधानं न तथा शरावं दृष्ट्वा; तत्र मृज्जातिरपि न स्यात् । अथ मणिकमिव शरावमपि दृष्ट्वा अस्त्येव मणिकान्तरेऽनुसंधानम् ; अयं तु विशेषः—यन्मणिकयोर्मणिकावयवसामान्यानां भूयस्त्वादुत्कटम् , मणिकशरावयोस्तु मृत्सामान्यमात्रानुगमादनुत्कटम् ; अतोऽस्ति मृज्जातिरिति ; एवं तर्हि यथा मणिकशरावयोरनुत्कटमनुसंधानं ततश्च मृज्जातिसिद्धिः, तथैव सर्षपं दृष्ट्वा मेरावपि सर्षपत्वरूपेणाननुसंधानेऽपि सद्रूपेणानुत्कटमनुसंधानमस्ति; अतः सज्जातिरपि सिद्धा । अतः सूक्तम्—'मीयमानैकरूपेषु' इति ।

एतदेव परमतेनाक्षिप्य समाधत्ते—भेदेति । भिद्यते इति भेदो विशेषरूपं व्यावृत्तम् ; अभेदस्तद्विरुद्धमनुवृत्तं सामान्यरूपम् ; तदुभयावभासिनी 'सन्' इति 'घटः' इति द्वे विज्ञाने स्तः । 'सन्' इति सर्वत्रानुवृत्तम् , 'घटः' इति च पटादिभ्यो व्यावृत्तम् । तथा 'गौः शावलेयः' इत्याद्यपि द्रष्टव्यम् । यदि तु द्वे विज्ञाने नेष्येते ततो द्विरूपो व्यवहारो न स्यात् । अस्ति चासौ; तथाहि—वत्सो मातरमन्विच्छन् सामान्यबुद्ध्या गोगणमभिधावति, विशेषबुद्ध्या च स्वमातरम् । अतस्ततोऽनुवृत्तव्यावृत्ताकारे द्वे ज्ञाने । ज्ञानाधीना चार्थव्यवस्था । अन्यथा ह्यभेदोऽपि तव न स्यात्; सोऽपि ज्ञानबलेनैव त्वयाभ्युपेयते । तस्माद् द्विरूपमेव जगत् , नैकरूपमिति चेत्; तन्न; न हि ज्ञानमात्रादर्थतत्त्वव्यवस्था, अलातचक्रादिज्ञानेष्वभावात् । तस्माज्जातमपि ज्ञानं युक्त्या विरुध्यते, न वा; अत एव प्रमाणोत्पन्नं न वेति परीक्ष्यम् ; न ज्ञानमित्येवास्थेयम् । यद्वा युक्त्या विरुध्यते न वेति युक्तिविरोधाविरोधे परीक्षा; प्रमाणोत्थमिति च प्रमाणसामर्थ्यासामर्थ्यपरीक्षेति विशेषः । ननु कथं प्रत्यक्षं युक्त्या बाध्यते ? सत्यम् , न बाध्येत यदि तत् प्रत्यक्षं स्यात्; प्रत्यक्षाभासरूपं तु तदिति 'आहुर्विधातृ प्रत्यक्षम्'

इत्यादावेवावेदितम् । अतश्च स्वप्नदृश्यालातचक्रादिज्ञानवत् जाग्रद्दृश्यालातचक्रादिज्ञानं यथा सदपि न तत्त्वानुगमनिमित्तं तथा भेदज्ञानमपि । ननु 'न भेदः केवलः, न विधिसहितः, न विधेः पश्चात् प्रमाणस्य व्यापारः' इत्युक्तन्यायेन प्रमाणादन्यतोऽपि भेदज्ञानस्योदयो न भवतीत्युच्यते; को वान्यथाह? वयमपि भेदमपह्नुवाना भेदज्ञानानुदयमेव ब्रूमः; न हि परमार्थतो भेदावगमोऽस्ति; यदि स स्यात्, ततो निर्विषयस्य ज्ञानस्यासंभवात् कथमस्माभिर्भेदोऽपह्नूयेत? अपह्नवे च प्रागुक्तहेतुभिः कथं भेदावगमः? न ह्यवगम्यं विनावगमो घटते, सकर्मकत्वादवगतेः। ननु यदि भेदतदवगमौ न स्तः, तर्हि यदिदं जगद्भिन्नं भाति तत्किमुच्यते? अविद्या । तामेव पर्यायान्तरेण व्यनक्ति—विभ्रम इति; अज्ञानमविद्या, तदुपादानो वा P. 60-7.
विभ्रम इत्यर्थः । स चानिर्वचनीयः; तथाहि—यथावभासं वेद्यसद्भावे न विभ्रमः, किंतु सम्यग्ज्ञानं स्यात् । असति च खपुष्पवदवगमोऽनुपपन्नः । तस्माद्विभ्रमः सदसत्त्वाभ्यां निश्चित्य लोके नोच्यते । अतोऽनिर्वचनीय एवासौ, इत्थंभूतस्यैव सर्वप्रवादेषु सिद्धत्वात् । एतच्च 'सर्वप्रवादिभिश्चेत्थमियमास्थेया' इत्यत्रोक्तम् । उक्तमप्यनिर्वचनीयत्वप्रसङ्गात् पुनरुक्तम् । अथवा तत्रार्थविभ्रमस्यानिर्वचनीयत्वमुक्तम्; इह तु ज्ञानविभ्रमस्येति विशेषः । तदा च ज्ञेयं विना ज्ञानं नास्ति, तत् किमिदं यत्सर्वस्य भेदज्ञानमवभासते? इति प्रश्नो योज्यः । वेद्यसद्भावे इति चाविवक्षितकर्मनिर्देशः । अवभाससद्भावे; ज्ञानसद्भाव इत्यर्थः । तदेवं ज्ञानद्वये सत्यपि किं तद्युक्त्या विरुध्यते नवेति परीक्ष्यम् । तत्र च भेदज्ञानं न प्रमाणसामर्थ्यार्थ्यमिति 'आहुर्विधातृ' इत्यत्र 'क्रमः संगच्छते' इत्यत्र च युक्त्या विरुध्यत इत्यावेदितमस्माभिः । अतो न भेदः परमार्थत इति भावः ।

किंतु इतोपि तत् ज्ञानद्वयं परीक्ष्यमित्याह—अपिचेति । तां कल्पनामाह—ज्ञानभेदादिति । अनुवृत्तव्यावृत्तज्ञानभेदात् यथाज्ञानं च वस्तुव्यवस्थितेः सामान्यव्यक्तिविभागेन वस्तुद्वयमाहुः काणादाः, ये जातिव्यक्त्योरत्यन्तभिन्नयोः समवायरूपं संसर्गमाहुः । यद्वा ज्ञानद्वयस्य 'सन् घटः' इति सामानाधिकरण्येनोपपत्तेः, अत्यन्तभेदे च तदसंभवात् सामान्य-

विशेषात्मकमेकं वस्तु; यथाहुरनेकान्तवादिनो भाट्टाः, ये जातिव्यक्त्योरे-कान्तेन न भेदो नाप्यभेद इत्याहुः । यद्वा व्यक्तय एव वस्तूनि; न सामान्यं वस्तु । जातिरूपेणाभेदः । स च भिन्नाभिन्नजात्यसंभावात् सर्वपुंसां स्वाभाविकत्वात् व्यक्तिगतात्यन्तिकभेदनिश्चयासामर्थ्यादनादिवास-नावशात् व्यक्त्युपादानो व्यक्तिविषय एव कल्पनाज्ञानगोचरः । न चेदमदृष्टम्; दृष्टा हि भिन्नेषु तरुषु 'वनम्' इत्यभेदकल्पनेति बौद्धाः । एकमद्वयं वा तत्त्वम् । तस्य देशकालाद्यनवच्छिन्नस्य अत एवानन्तस्य तेन रूपेणाविद्यया निश्चेतुमशक्तेरविद्यायाश्चानादित्वात् अनादयोऽनपेक्षिता-गन्तुककरणादिदोषाश्चाभेदोपादानास्तत्प्रभवत्वात् तद्विषयाश्च तत्रैवोत्पत्ते-र्भेदकल्पनाः । नेदमदृष्टम्; दृष्टा हि तरङ्गभेदादभिन्ने चन्द्रमसि भेद-कल्पनेति स्वमतम् । तदेवं वादिविप्रतिपत्तेः संशये नापरीक्ष्य तत्त्वनिश्चय इति सत्यप्यनुवृत्तव्यावृत्ताकारे ज्ञानद्वये परीक्षा कार्येत्यर्थः । तत्र परी-
P. 60-19. क्षायां प्राप्तायामाह—न तावदिति । न तावत्सामान्यविशेषाख्यमत्यन्त-भिन्नं वस्तुद्वयम्, ऐकात्म्येन जातिव्यक्त्योरभेदेन 'सन् घटः' इति ज्ञानस्यानुपपत्तेः । न ह्यत्यन्तभिन्नयोर्घटपटयोरिव सामानाधिकरण्यं दृष्टम् । समवायाख्यसंबन्धकृतं तदैकात्म्यज्ञानमिति चेत्; तन्न; तत्रापि तयो रूप-भेदस्यापरिच्युतेरनपायात् सैव भिन्नरूपयोरैकात्म्यज्ञानानुपपत्तिरित्यर्थः । एतद्व्याचष्टे—नेति । न तावदनुवृत्तव्यावृत्तप्रख्ययोर्भेदात् नीलपीतवद-त्यन्तभिन्नौ सामान्यविशेषौ द्वे वस्तुनी इति योज्यम् । अत्र हेतुमाह—समानेति । संबन्धस्याप्रतिभासनादिति; यत्र भिन्नयोर्विशेषणविशेष्यभावः, तत्र मतुबर्थः संबन्धोऽवभाति; यथा—'दण्डी' इति । न तथेह 'सत्तावान् घटः' इति तत्संबन्धस्य प्रतिभासनमस्ति; किंतु 'सन् घटः' इत्यैकात्म्यस्येत्यर्थः । यदि नाम समानाधिकरणत्वेनेमे प्रख्ये भवतः, तथापि किमित्यत आह—न चेति । सामान्यविशेषौ द्वे चेद्वस्तुनी भिन्ने स्याताम्, ततस्तयोः संबन्धे सत्यपि 'सन् घटः' इति सामानाधिकरण्यं न स्यात्, यतः संबन्धेन सामान्यविशेषद्वयं विशेषणविशेष्यद्वयग्राहिणा बुद्धिद्वयेन एकया वा विशेषणविशिष्टविशेष्यग्राहिण्या बुद्ध्या 'दण्डी पुरुषः' इतिवत् विशेषणविशेष्यभावेन गृह्येत, न पुनरैकात्म्येन । इह च 'सन्

घटः' इत्यैकात्म्येन प्रतीतिः सर्वजनसंवेद्या । किंच विप्रतिपत्तेश्च सामान्यविशेषयोर्भेदेन प्रतीतिः स्यात्; ततः प्रतीतिसिद्धत्वात्तयोर्भेदे सांख्या न विप्रतिपद्येरन्; विप्रतिपद्यन्ते च; तस्मादितोऽपि तयोरैकात्म्येन प्रतीतिः । अपि च तयोर्भेदेन प्रतीतौ सामान्यप्रत्यक्षे सति विशेषप्रत्यक्षाभिमानो न स्यात्; अपितु धूमदृष्टाविवाग्नावविनाभावात् परोक्षाभिमानः स्यात्; न चैवम्; अतोऽपि तयोरैकात्म्येन प्रतीतिः । सा च तयोः संबन्धे सत्यपि न स्यात्; किंतु दण्डिवद्विशेषणविशेष्यभावेन स्यादित्युक्तम् । अत्र चोदयति—स्यादिति । यदि संयोगादैकात्म्यप्रतीतिं P. 61-2. ब्रूमः, ततो दण्डिवत् स्यात्; वयं तु समवायाद्ब्रूम इत्यर्थः । तस्य को विशेष इत्यत्राह—स हीति । स हि भिन्नयोरपि वस्तुनोर्नैरन्तर्यरूपत्वात्तयोर्भेदं तिरोधायाभेदं बोधयतीत्यर्थः । तद्दूषयति—तन्नेति । हेतुमाह—समवायेऽपीति । समवायोऽपि संबन्धत्वाद्भिन्नयोर्भवति, नैकस्य । यदि तु तयोर्भेदो न भायात्, ततो भिन्नाश्रयत्वात्संबन्धोऽपि न भायात् । अतः समवायेऽपि संबन्धे तयोर्भेदेन भाव्यम्, तेन समवायिनोः स्वरूपभेदस्य ताभ्यामनपायात् । तथाच नैकात्म्येन बुद्धिर्युज्यते । अस्ति च सा । अतस्तद्विरुद्धः प्रख्याभेदः सामान्यविशेषवस्तुनोर्भेदं व्यवस्थापयितुं नालमित्यर्थः । एवं प्रख्याभेदसामानाधिकरण्यप्रत्यययोर्भेदमाश्रित्य पूर्वस्य परेण विरुद्धत्वमुक्तम् । यदा त्वेकैव प्रख्या द्वे वस्तुनी समानाधिकरणत्वेन बोधयति, तदाह—स्वयमिति । स्वयं वा व्याहतत्वात् प्रख्याभेदो न वस्तुभेदव्यवस्थायै भवति । व्याहतत्वे हेतुमाह—एकेति । सामान्येन प्रख्याभेदस्य सामानाधिकरण्येनोत्पत्तेरित्यर्थः । एतदुक्तं भवति—यद्यनुवृत्तव्यावृत्तप्रख्या घटे पटप्रख्येव वैयधिकरण्येन स्यात्, ततो न स्वयं व्याहता स्यात्; यदा तु सामान्यविशेषौ न भेदेन दर्शयति, तदा विरुद्धभेदाभेदोपदर्शित्वात् स्वयमेव व्याहतेति ।

अत्र चोदयति—नन्विति । अत्रोत्तरमाह—भेदेति । तस्यार्थः—अथ सामान्यविशेषयोरत्यन्तभेदेऽपि भेदतिरोधानसामर्थ्यं समवायस्याभ्युपगम्यते, एवं तर्हि एकस्यैवात्मनस्तत्सामर्थ्यं किं नाभ्युपेयते? यतः सामर्थ्यविशेषात् नानारूपेण तदवभासत इति । वृत्तिर्निगदव्याख्याता ।

P. 61-16. न ह्यस्ति विशेष इत्युक्तम्; तत्र चोदयति—नन्विति । अग्न्ययोगुडादिषु संसर्गस्य भिन्नयोरग्निलोहगुडकयोर्भेदतिरोधानसामर्थ्यं दृष्टम्; तथाहि—'अग्निरयम्' इति लोहगुडकं प्रतियन्ति । तेन दृष्टत्वात्तत्राभ्युपेयते; नैकस्य नानावभाससामर्थ्यम्, अदर्शनादिति परोक्तविशेषमाशङ्क्य सिद्धान्ती पुनरविशेषमाह—दृष्ट इति । भिन्नयोर्भेदतिरोधानसामर्थ्यं नाम धर्मः संसर्गस्य दृष्ट इत्यस्ति विशेष इति यद्युच्येत, तत्रोच्यते—नायं विशेषः; एकमपि हि चित्रं रूपमेका च बुद्धिर्नानावभासते यत इत्यर्थः । तद्विवृणोति—दृष्टमिति । न च वाच्यं चित्रं नाम पटस्य रूपान्तरं नास्त्येव, तन्तूनामेव तु नीलपीतादिरूपाणि समाहितानि परस्परमिलितानि चित्रमित्युच्यत इति; यतो नीलादिरूपाणां तन्तुषु समवेतत्वात् पटस्तर्हि नीरूपः स्यात् । नीरूपत्वे च रूपलक्षणस्य विषयसंस्कारातिशयविशेषस्याभावाद्वायुवदचाक्षुषः स्यात् । स्वयमरूपस्यापि पटस्य रूपिषु तन्तुषु समवायादेकत्वादिसंख्यागत्यादिकर्मणोरिव चाक्षुषत्वं स्यादिति चेत्; तन्न; यस्मादेवमुक्तं वैशेषिकतन्त्रे—'महति द्रव्ये त्र्यणुकादौ विषये या उपलब्धिश्चाक्षुषी सा अनेकद्रव्यसमवायात् रूपाच्च' इति । तत्र परमाणोः रूपवतोऽपि चाक्षुषत्वनिवृत्त्यर्थमनेकद्रव्यसमवायादित्युक्तम् । अनेकत्वं चात्र बहुत्वमभिप्रेतम्; तेन द्व्यणुकस्याप्यचाक्षुषत्वमुक्तं भवति । अनेकद्रव्यसमवेतस्यापि वायोश्चाक्षुषत्वनिवृत्त्यर्थं रूपादित्युक्तम् । यद्वा अनेकद्रव्यसमवायादिति महत्त्वोपलक्षणम्; तेन महत्त्वादित्यर्थः । तत्र महत्त्वेन परमाणुद्व्यणुकयोर्निवृत्तिः, रूपादित्यनेन च वाय्वादेरिति । एतदुक्तं भवति—गुणकर्मादेर्नीरूपस्यापि द्रव्यसमवायाच्चाक्षुषत्वम्, न द्रव्यस्य; तस्य तु रूपादेव चाक्षुषत्वम् । अतः पटस्य चित्ररूपानभ्युपगमे तस्याचाक्षुषत्वप्रसङ्ग इति । किंच स्वयमरूपस्याप्यस्ति चेच्चाक्षुषत्वम्, ततो घटादेरपि रूपिस्वावयवसमवायेन चाक्षुषत्वोपगमेः स्वयमरूपत्वं स्यात् । अथ द्रव्यस्यारूपस्य चाक्षुषत्वं नेष्टमिति घटादेर्नारूपत्वप्रसङ्गः, ततश्चित्रेऽपि पटे तथैव स्यादिति सोऽपि नारूपः । अतोऽस्ति चित्रं रूपम् । तच्चैकमपि नीलादिप्रभेदेनावभासत इत्येकस्य नानावभासः । तथा नगरबुद्धेस्त्रैलोक्यबुद्धेश्च भेदाभावेऽपि सत एकत्वेऽपि गृहप्रासादादिभेदेन नानाव-

भासित्वं दृष्टम् । परतन्त्रेऽप्येतत्सिद्धमिति दर्शयितुं विषयाकार इत्याद्युक्तम् । न च वाच्यं बुद्धेराकारा नानावभासन्ते, न बुद्धिः; अतो नैकं नानावभासत इति; यस्मादेकबुद्धितत्त्वाव्यतिरेकात्परस्परमपि तेषां तत्त्वतो भेदो नास्ति, अपि तु भ्रान्तिः । किमुत बुद्धेः सकाशात् । तस्माद्बुद्धिरेव नानावभासत इति । बुद्ध्यव्यतिरेकश्च परेषां स्वतन्त्रे सिद्धः ।

अथ मतम्—येषु नीलपीतादयो गुणाः समवेताः, तेष्वेव पटावयवी; तत्र चित्रगुणस्य समवायो यः, स एव नीलादिभिः सह चित्रगुणस्येत्येकार्थसमवेतसमवायलक्षणः संसर्गः । तत एव नीलादिगतं नानात्वं चित्रे प्रतिभाति । तेनैषोऽपि संसर्गस्य महिमा । अतस्तन्महिम्नैव जातिव्यक्ती भिन्ने अप्यभिन्ने प्रतिभास्यत इति चेत्तत्राह—न चेति । संबन्ध- P. 62-7.
पूर्वकः संबन्धः संसर्गो न भवति; कुतः? व्यवधानादित्यर्थः । ननु व्यवधानेऽपि संसर्गो भवति; यथा—द्रव्यसंयुक्तस्य चक्षुषो रूपेणेत्यत आह—संश्लेषो हीति । संश्लेषो हि संसर्गः; तस्माच्च परस्यायोगोलकस्य परस्याग्ने रूपेणावभासो भवति; न यतः कुतश्चित् संबन्धात् । स च संश्लेषोऽत्यन्तमव्यवधाने युज्यते; नैकव्यवधानेऽपि । तन्तुगतस्य नीलादिरूपस्य पटगतस्य चित्ररूपस्य च तन्तुपटद्वयेन व्यवधानात्सुतरां संश्लेषो न युज्यत इत्यर्थः ।

व्यर्था चेयं सामान्यविशेषयोरत्यन्तभेदकल्पनेत्याह—किंचेत्ति । 'गां शुक्लामानय' इति जातिगुणोपाधौ व्यवहारे व्यवहाराङ्गभूता सर्वा धीर्न यथार्था यदा, तदा सामान्यविशेषयोर्भावयोर्भेदकल्पना व्यर्थेत्यर्थः । तद्व्याचष्टे—यस्येति । यस्य सामान्यविशेषयोरत्यन्तभेदवादिनः 'शुक्लो गौः' इत्याद्या बुद्धयो व्यवहाराङ्गभूता द्रव्येषु गुणजात्युपधानेन तदनुरञ्जनेन तद्भावापत्त्या तदभेदेन भवन्ति, तस्य ता बुद्धयो न यथावस्तु; अन्यथावस्तु; बुद्धयश्चाभेदेन; अतो न यथावस्तु ता इत्यर्थः । कुतः? जातिगुणाभ्यां द्रव्यस्यार्थान्तरत्वात् भेदात्; भिन्नं बुद्धय इत्यर्थः । तुल्यन्यायत्वाद्गुणोपन्यासः, व्यावृत्तबुद्धिप्रदर्शनार्थो वा । ततः किमित्याह—तथा चेति; तथा सति भिन्नवस्तुनिबन्धनो व्यवहारो न स्यादित्यर्थः । कुत इत्याह—

62–16 बुद्ध्येति । ज्ञातं हि व्यवहाराङ्गं भवति, नाज्ञातम् । अज्ञातं च भिन्नं वस्तु; ततो न व्यवहाराङ्गमित्यर्थः । तथाभावादिति; व्यवहाराङ्गत्वादित्यर्थः । तथापि किमित्याह—एवं चेति । सत्यपि जातिगुणाभ्यां द्रव्याणां भेदे, बुद्धिमात्रपरिगतेन जातिगुणाभ्यामभिन्नेनैवार्थेन 'गौः' इत्यनुवृत्तः 'शुक्लः' इति व्यावृत्तो व्यवहारो दृश्यते; अतो वस्तुभेदस्य व्यवहारानुपयोगादभेदस्यैव च तदुपयोगात् व्यर्थो वस्तुभेदाभ्युपगम इत्यर्थः । इतश्च व्यर्थः—यतो व्यावहारिकबुद्धीनां यथार्थत्वाय वस्तुभेदः कल्प्यते; तस्मिन् कल्पितेऽपि 'शुक्लः' इत्यादिव्यावहारिकबुद्धीनां जातिगुणोपाधित्वात् तदभेदेनोत्पत्तेर्नायथार्थत्वपरिहारः; अतो व्यथा वस्तुभेदकल्पनेत्यर्थः ।

परस्तु वस्तुभेदकल्पनायाः सार्थत्वमाह—स्यादिति । स्थाणौ पुरुषबुद्धिः शुक्तौ रजतबुद्धिरूर्ध्वतारूपसामान्यहेतुका दृष्टा । तस्मात् 'गौः शुक्लः' इत्यभेदबुद्धेरयथार्थाया अपि हेतुना भाव्यम् । यदि च द्वे वस्तुनी स्यातां ततस्ते सामानाधिकरण्यतया प्रतिभातः । नासति वस्तुभेदे अनुवृत्तव्यावृत्तरूपग्राहि व्यावहारिकमयथार्थमभेदज्ञानं स्यात्; हेत्वभावात्; अतो वस्तुभेदकल्पनाया व्यवहारानङ्गत्वेऽपि व्यवहाराङ्गभूता यथार्थसामानाधिकरण्यबुद्धिबीजत्वान्न व्यर्थत्वमित्यर्थः । तद्दूषयति—उच्यत इति । निर्बीजा चेन्न भ्रान्तिः, अविद्याबीजा भविष्यति; अलं वस्तुभेदकल्पनयेत्यर्थः ।

एवं संसर्गवादिनो मतं दूषयित्वा अनेकान्तवादिनो मतं दूषयितुमवतारयति—अस्त्विति । सामान्यविशेषात्मकमेकं वस्त्वस्त्वित्यर्थः । अस्य मतस्य पूर्वस्मादत्यन्तभेदपक्षाच्चद्गतदोषाभावेन विशेषमाह—एवमिति । सामान्यविशेषयोरत्यन्तभेदे 'गौरयम्, शुक्लोऽयम्' इत्यैकात्म्यप्रख्या नावकल्पत इत्युक्तम्; तत्तावदिह नास्ति, वस्तुनः सामान्यविशेषात्मकत्वेनाभेदप्रतिपत्त्युपपत्तेः । यदपि समवायाख्यसंबन्धरूपस्यार्थस्य भेदान्तर्धानसामर्थ्यं कल्पितम्, तच्च संबन्धवस्तुनो भेदविषयत्वात् विपरीतभिन्नयोरहेतुत्वाद्वा वस्तुविपरीतम्; तदपि न भवति एकस्याध्यासत्वेन वस्तुनः स्वयमेवाभेदात् । तथा वस्तुनो द्व्यात्मकत्वे

'गौः शुक्लः' इत्यादिव्यवहारो वस्तुनिबन्धनो भवति; तेन 'व्यवहारे परोपाधौ' इति व्यावहारिकज्ञानानां यदयथार्थत्वमुक्तं तदपि न भवति। तस्मात्साधुरयं पक्ष इत्यस्तु स एव। विरोधमाशङ्कयति—स्यादिति। P. 63-7. विरोधमाह—एकमिति। एकं तद्विपरीतमनेकमित्यर्थः। प्रकारान्तरेण विरोधात् द्वयोरेकत्वस्य दुरवगमत्वमाह—अपि चेति। तत्परिहरति—नेति। यत् प्रमाणेन प्रतीयते तदविरुद्धम्, यथा रसवति रूपम्; ततोऽन्यद्विरुद्धम्, यथोष्णे शैत्यम्। तस्माद्यद्यथा प्रमाणेन प्रमीयते तत्तथैव युक्तम्। तत्र प्रमाणमनादृत्य चेद्विरोधोऽभिधीयते, ततो विरोधाविरोधव्यवस्था निर्हेतुकैव स्यात्। तस्माद्यत् प्रमाणेन प्रमीयते तदविरुद्धम्; प्रमीयते चैकं द्व्यात्मकम्; तथा ह्यनुवृत्तिव्यावृत्तिरूपेण बुद्धिभेदात् द्व्यात्मकत्वम्, सामानाधिकरण्येन चावगमादेकत्वमित्यर्थः। तदेवमनेकान्तवादिमतमवतार्य दूषयति—तदिदमिति। हेतुमाह—यत इति। द्व्यात्मकवस्तुज्ञानमप्रमाणम्, विप्रतिषिद्धार्थत्वात्, संशयज्ञानवदित्यर्थः। स्वरूपविपर्ययोऽत्र विप्रतिषेधः, न सहानवस्थानम्; स चास्त्येकत्वानेकत्वयोरिति न हेत्वसिद्धिराशङ्क्या। यदि त्वेकस्य द्व्यात्मकत्वज्ञानं विप्रतिषिद्धार्थमपि प्रमाणं स्यात्, ततस्तुल्यत्वात् संशयज्ञानमपि प्रमाणं स्यात्; ततश्च संशय्यमानोऽप्यर्थो द्व्यात्मा स्यात्; न त्वेतदिष्टमित्यभिप्रायेणाह—अन्यथेति। अत्र हेतुमाह—द्व्यात्मेति। यथा 'गौरयम्' इति ज्ञानमनुवृत्तव्यावृत्ताकारम्, तथा संशयज्ञानमपि स्थाणुपुरुषद्व्यात्मकाकारम्; यथा च तत्र सामान्यविशेषयोः सामानाधिकरण्यम्, तथा संशयेऽपि तदाकारयोः स्थाणुपुरुषयोः। अतो द्व्यात्मकवस्तुतुल्यत्वात् संशयविषयोऽपि द्व्यात्मा स्यादित्यर्थः।

अत्रातुल्यत्वमाशङ्कयति—अथेति। यथा सामान्यविशेषवत्यर्थे 'गौश्चायं शाबलेयश्चायम्' इति समुच्चयप्रतीतिः, न तथा संशय इत्यर्थः। अत्रोत्तरमाह—मा भूदिति। पर आह—सोऽपीति। न ह्येकमेव वस्तु पक्षे स्थाणुः पक्षे पुरुष इत्युपपद्यते, तस्य व्यवस्थितैकरूपस्य स्वहेतुत उत्पत्तेः; तदुक्तम्—"न हि वस्तु विकल्प्यते" इति। सिद्धान्ती तु यदि वस्तुनो विकल्पोऽनुपपन्न इति नेष्यते, एकस्यापि तर्हि द्व्यात्मता

विरोधादनुपपन्नेति सापि न स्यादित्यर्थः । अत्रापि स्वरूपविपर्ययो विरोधः, न सहानवस्थानम्, तस्य साध्यत्वात् । तदेवं सति यद्भवति
P. 63-20. तदाह—तत्रेति । ऐकाधिकरण्यादित्यस्यानन्तरम् 'अप्रमाणम्' इत्यनुवर्तनीयम् ।

ननु संशयज्ञानं न विरोधादप्रमाणम्; अपि तु स्थाणुपुरुषयोरन्यतरनिर्णयज्ञानेन बाधनात् । तच्च सामान्यविशेषप्रतीतेर्नास्ति । अतः सत्यपि विरोधे बाधकाभावात् सा प्रमाणमेव । अतः संशयवद्विप्रतिषेधात् सामान्यविशेषज्ञानमप्रमाणमित्युक्तमयुक्तमित्यभिप्रायेण चोदयति—स्यादिति । सिद्धान्ती त्वाह—यत्रेति । यदि संशयस्य निर्णयेन बाधनान्न प्रामाण्यम्, एवं तर्हि यत्र पाशुपतनिखातपृथिवीमध्योपलक्षणकीलकनिर्देशात् 'मध्यम्, अमध्यं वा' इति संशयस्तत्रैकस्य विकल्प्यमानद्व्यात्मतैव स्यात्; न चैवमिष्टम् । अतो विरोधादेवाप्रामाण्यम् । एवं चेत् ततोऽसत्यपि बाधने सामान्यविशेषप्रतीतेः संशयवद्विरोधादप्रामाण्यमिति सूक्तमित्यर्थः । एवं विरुद्धात्मत्वेन सामान्यविशेषज्ञानस्य संशयवदप्रामाण्यमुक्तम् । इदानीमेकत्वानेकत्वज्ञानयोर्विरुद्धार्थयोरेकेनैकनिराकृतौ न द्व्यात्मता; परस्परनिराकृतौ तु संशयतुल्यत्वमित्याह—अपि चेति । रजतज्ञानस्य शुक्तिज्ञानेन बाधायामेकस्य रजतज्ञानस्य शुक्तिज्ञानेन बलीयसा निराकरणात् बाधनादप्रामाण्यं यथा, तथा एकत्वानेकत्वज्ञानयोर्विरोधेऽपि द्वयोरेकस्य वा ज्ञानस्याप्रामाण्यम् । कुतः? विरुद्धयोरेकानेकत्वरूपयोर्ग्रहणे विरुद्धरूपग्राहिणोर्ज्ञानयोरन्योन्यनिराकरणात् । तत्र यद्येकं बलवत् ततो रजतादिज्ञानवदेकस्य निराकरणे परस्मात् शुक्तिज्ञानादिव निश्चयः; तत्रैकमेव वा वस्तु स्यात्, द्व्यात्मकं वा; न त्वेकं द्व्यात्मकं च । विरुद्धाव्यभिचारिहेतुद्वयवत् तुल्यबलयोः परस्परनिराकृतौ तु बाधायामेकत्वद्व्यात्मकत्वयोर्निश्चयाभावादापन्नं संशयतुल्यत्वं सामान्यविशेषप्रतिपत्तेः । तस्मादेकान्तेन नैकं नाप्यनेकं वस्तु, किंतु एकं द्व्यात्मकं चेत्येतद्ग्राहि ज्ञानं सुनिश्चितमिति स्वपक्षवर्णनमात्रमिदम्; न भूतं तथेत्यर्थः ।

इतश्च नैकं द्व्यात्मकमित्याह—अपि चेति । श्लोकं व्याचष्टे—अवश्यमित्यादि । अवश्यमिह जातिव्यक्त्यादिपदार्थानां भेदाभेदव्यवस्थां

कुर्वतानेन सामान्यविशेषयोः प्रत्येकं भेदाभेदयोर्लक्षणं तावदवश्यं वाच्यम् । प्रत्येकं च तयो रूपविरोधाविरोधात्रन्योन्याभावतद्विपर्ययरूपौ भेदाभेदलक्षणे; यतो रूपविरोधादन्योन्याभावरूपाद्विशेषाणामन्योन्यभेदः, तद्विपर्ययाच्च तेषु भिन्नेषु सामान्यमभिन्नम् । तत्रैतादृशि भेदाभेदलक्षणे यदि सामान्यविशेषयोरपि विरोधोऽन्योन्याभावरूपः, ततो विशेषाणामिव नान्योन्यमेकत्वम् । अथ सामान्यविशेषबुद्ध्योः सामानाधिकरण्येनोत्पत्तिः, अतो न तौ विरुद्धस्वभावावित्यविरोधेन तयोरेकत्वमुच्यते; ततो रूपविरोधस्य भेदलक्षणस्याभावादसति भेदे भेदाधिष्ठानद्वित्वाभावाद्यथा सामान्यभागो विशेषभागश्चानिर्भक्तः प्रत्येकमवान्तरविभागरहितो न द्विरूपः, तथा सामान्यविशेषयोरपि रूपविरोधाभावादसति भेदे भेदाधिष्ठानद्वित्वाभावात् नैकं द्व्यात्मकम् । सामानाधिकरण्यबुद्धेरिति रूपविरोधाभावे हेतुः । P. 64-16. यदीत्यादिना चायमेवार्थः संक्षिप्य स्पष्टीकृत इति ।

अथ मतम्---यदि रूपविरोधादन्योन्याभावलक्षणान्नानात्वं तद्विपर्ययाच्चैकत्वं स्यात्, ततः सामान्यविशेषयो रूपविरोधाभावादन्यतरांशवत् द्वित्वं न स्यात्; न चैवम्; किंतु यत्र द्विरूपा बुद्धिस्तत्र नानात्वम्, यत्र चैकरूपा तत्रैकत्वम् । अतश्च सामान्यविशेषयोः 'गौरयम्' इति सामानाधिकरण्येन प्रतीतेरसत्यप्यन्योन्याभावलक्षणविरोधेऽद्विरूपबुद्धिवेद्यत्वादेकत्वम्; अतो वस्तुनो द्विरूपबुद्धिवेद्यत्वात् द्व्यात्मतेति; तत्रोच्यते--ऐकात्म्येति । ऐकात्म्यबुद्धिरेकरूपा बुद्धिः; ततः सामान्यभागे विशेषभागे चेदेकत्वम्, एवं तर्ह्यसावेकरूपा बुद्धिर्वस्तुनि द्विरूपे नास्ति चेत् ततः कुत एकत्वम्? अथास्ति, तत एकरूपबुद्धिबोध्यत्वादंशवदेकत्वं स्यात्; द्व्यात्मता कथमित्यर्थः । वृत्तिर्व्यक्तार्था ।

अथ मतम्---बुद्धिरूपभेदः परस्परानात्मत्वं च द्वयमपि भेदलक्षणम् । तत्र गवाश्वादीनां द्वयमप्यस्तीति भिन्नत्वमेव । सामान्यविशेषयोस्तु सत्यपि बुद्धिरूपभेदे सामानाधिकरण्यबुद्ध्या परस्परात्मत्वेन प्रतीतेः परस्परानात्मत्वं नास्तीति न भेदः । अतो नैकत्वविघात इति; तदपि न; यतो यदि सामान्यविशेषयोः परस्परात्मत्वेन प्रतीतेः परस्परानात्मता नास्ति, एवमपि

तयोः समुच्चितेन भेदलक्षणेन विरहादंशवत् द्व्यात्मता न स्यादित्युक्तं 'द्व्यात्मता कथम्' इत्यत्र ।

P. 65-9 अथ मतम्—बुद्धिरूपाभेदः परस्परात्मप्रतिपत्तिश्च द्वे प्रत्येकमभेदलक्षणे; तदुभयाभावश्च समुच्चितो भेदलक्षणमिति । ततः सामान्यांशस्य विशेषांशस्य च बुद्धिरूपाभेदादभेदलक्षणात् प्रत्येकमेकत्वम् । उभयोस्तु सामान्यविशेषयोः परस्परात्मत्वप्रतिपत्तेरभेदलक्षणादन्योन्यमेकत्वम् । विशेषाणां पुनरभेदलक्षणद्वयाभावात् भेद एव । ततश्च सामान्यविशेषयोः स्वरूपतो द्वित्वेऽपि पूर्वोक्ताभेदलक्षणादेकत्वमपीति सिद्धं द्व्यात्मकमेकं वस्त्विति । तदयुक्तम्; यस्मादेवमपि परस्परात्मत्वप्रतिपत्तावभेदलक्षणे सति अत एव चोभयाभावरूपे भेदलक्षणे चाविद्यमाने, सामान्यविशेषयोर्द्व्यात्मता न स्यात् । किंच नैकस्याभेदस्य बुद्धिरूपाभेदपरस्परात्मत्वप्रतीतिसंज्ञके द्वे लक्षणे युक्ते । कुतः? यस्माल्लक्षणाभेदः सर्वत्र लक्ष्येष्वभेदं व्यवस्थापयति; यथा—अनुमानलक्षणाभेदः सर्वानुमानानामनुमानत्वाभेदम्; लक्षणभेदश्च तद्भेदं व्यवस्थापयति यथानुमानार्थापत्त्योः । तत्र लक्षणभेदादभेदस्य लक्ष्यस्य नानात्वं युक्तम्; तथा सत्यप्यभेदस्य लक्ष्यस्य यदि तत्त्वमाभिन्नत्वम्, तदा लक्षणभेदाभेदयोरतन्त्रत्वात् तदभेदे नानात्वमपि स्यात्; ततो लक्षणं व्यर्थमेव स्यात् । इतिः समाप्तौ ।

इतश्च सामान्यविशेषयोरेकत्वमयुक्तमित्याह—अपि चेति । यदि तयोरभेदः स्यात्, तत एकबुद्ध्यैवेतरस्य गृहीतत्वात् तयोरन्यतरस्मिन् गृहीते परग्राहिणो बुद्ध्यन्तरस्य विलक्षणविषयस्य व्यर्थत्वमापतेत्; यथा—सामान्यांशे विशेषांशे वा स्वबुद्ध्या गृहीते तद्ग्रहणाय बुद्ध्यन्तरस्य । अथ भिन्नाभिन्नत्वान्नानात्वमपि तयोरस्तीति नैकग्रहणेऽपरस्य ग्रहणमिति बुद्ध्यन्तरस्यार्थवत्तोच्यते, तत एकत्वमस्तीति व्यर्थता किं न स्यादित्यर्थः । भेदेष्विति; विशेषेष्वित्यर्थः । यथा सामान्यविशेषभागयोरिति; यथा सामान्यांशे विशेषांशे वा स्वबुद्ध्या गृहीते न तद्ग्रहणाय विलक्षणं बुद्ध्यन्तरमर्थ्यते तथा सामान्ये गृहीते विशेषग्रहणाय न बुद्ध्यन्तरमर्थ्येत, तयोरभेदात् । एवं विशेषेऽपि गृहीते न सामान्य इत्यर्थः । इदानीमभेदादेकया बुद्ध्योभयोर्ग्रहणमेव युक्तम्, न नानात्वादग्रहण-

मित्याह—औत्सर्गिक इति । बीजाभावेऽङ्कुरस्य प्रागभावः सिद्धो हेतु- P. 66-2.
निरपेक्षोऽनादित्वात् । तस्याङ्कुरप्रागभावस्य बीजभावेऽङ्कुरभावोऽपवादः ; तेन हि व्यावर्त्यत इत्यर्थः । एवं सामान्येनोक्त्वा प्रकृते योजयति—तत्रेति । तत्र सामान्यविशेषयोरभेदेऽधिगमहेतोः सद्भावादेकयैव बुद्ध्या तयोरधिगमस्य फलस्यापवादभूतस्य भावो युक्तः, नौत्सर्गिकस्योभयाधिगमाख्यफलाभावस्य । एकत्वे हि तयोर्य एकाधिगमहेतुः, अस्ति स एवेतरस्यापीति नैकत्वेऽन्यतराधिगमहेतुर्नास्तीति शक्यं वक्तुम् । अत उभयाधिगमाभावमौत्सर्गिकमपोह्योभयाधिगमेनापवादभूतेन भाव्यमित्यर्थः । अथ भेदोऽप्यस्तीत्येकत्वाभावादन्यतराधिगमस्य फलस्य हेतुर्नास्ति, तेन हेत्वभावादौत्सर्गिक उभयाधिगमफलाभाव इत्युच्यते ; तथाप्यस्ति तावदुभयाधिगमहेतुः, तयोरेकत्वादेकस्यापि विद्यमानत्वादित्यर्थः । ततः किमित्यत आह—तत्रेति । उभयाधिगमहेतोरेकत्वे सति भावादुभयाधिगमफलस्य भाव इत्यर्थः । कुत इत्याह—तस्येति ; तस्य हेतुभावस्य कारणत्वादित्यर्थः । ननु तयोर्भेदादन्यतराधिगमहेतोरभावोऽप्यस्तीति ततः किमिति यथोक्तफलभावो न स्यादित्याशङ्क्याह—न त्विति । न तु हेत्वभावः फलप्रागभावस्य कारणम्, अभावयोर्हेतुफलभावादर्शनादिति भावः । कथं तर्ह्यसौ स्यादित्यत आह—स्वभावेति । स्वभावसिद्धो हि फलप्रागभाव औत्सर्गिकः ; नासौ हेतुमपेक्षत इत्यर्थः । तस्यापवादमाह—तस्येति । ततः किमित्यत आह—स चेति । स च सामान्यविशेषयोरेकत्वाद्धेतुरुभयोरधिगमायास्ति । तेनैकबुद्ध्येतरस्यापि बुद्धत्वात् तयोरभेदे बुद्ध्यन्तरवैयर्थ्यं सिद्धमित्यर्थः । यद्यपि तयोर्भेदे हेतुर्नास्ति, तथाप्यभेदे तावदस्तीति तावच्छब्दः । ननु भेदो नास्त्यपि ; अतो हेत्वभावात् फलाभावः किं न स्यादित्यत आह—असत्त्वमिति । अभावस्याकारणत्वादित्यर्थः । इतिः समाप्तौ ।

द्व्यात्मकमेकं वस्त्विति पक्षे दूषणान्तरमाह—अपि चेति । न सामान्यमात्रं द्व्यात्मकस्य वस्तुनः आत्मा स्वरूपम् ; न विशेषमात्रम्, वस्तुद्वयप्रसङ्गात् ; किंतु चित्रः शबलः सामान्यविशेषोभयरूपः स वस्तुन

आत्मा स्वरूपम् । तस्य च तादृशवस्त्वन्तरेऽनन्वयादनुगमाभावात् द्व्यात्मकमेकं वस्त्विति शब्दान्तरेणात्यन्तभेदवाद एवाश्रित इत्यर्थः । शब्दान्तरादिति ल्यब्लोपे हेतौ वा पञ्चमीति व्याख्यातम् ।

P. 66-16. ननु सामान्यांशस्य व्यक्त्यन्तरेऽनुवृत्तेर्नात्यन्तभेदवादप्रसङ्ग इत्याशङ्क्याह—अनुगन्तुरिति । व्यक्तिष्वनुगन्तुः सामान्यमात्रस्य द्व्यात्मवस्तुपक्षे न वस्तुस्वभावत्वम्; अतश्चावस्त्वेतत् कल्पितरूपमिति न तदनुगमे वस्तुनोऽनुगम इति भेदप्रसङ्ग इत्यर्थः । अत्र चोदयति—स्यादिति । यद्यपि न वस्तु; वस्त्वंशत्वं तु न सामान्यस्य वार्यते, अन्यथा द्व्यात्मतैव न स्यात्; अतो न तत्कल्पनाविषयमिति न भेदवादप्रसङ्ग इति भावः । यदि तु तन्नेष्यते ततो निर्बीजविकल्पनापि न स्यादित्याह—अन्यथेति । सिद्धान्ती त्वाह—क इति । भेदप्रसङ्ग इति । सामान्यविशेषौ द्वे वस्तुनी स्यातामित्यर्थः । नाप्यंशो वस्तुनोऽन्यत् स्वयं वस्त्वित्याह—नापीति । अथ न वस्त्वेवांशः, नापि वस्तुनोऽन्यः, स्वयं वस्त्वित्युच्यते, ततः परिशेषात् कल्पनाविषय एव स्यात्; तत्त्वान्यत्वाभ्यां वस्तुनो भिन्नाभिन्नत्वादनिर्वाच्यो यत इत्यर्थः ।

अत्र परश्चोदयति—नन्विति । नांशः अंशिनोऽत्यन्तभिन्नो नाप्यभिन्न इत्यर्थः । अत्र हेतुमाह—उभयथेति । भेदेऽप्यंशो न भवति, यथा घटस्य न पटः; नाभेदेऽपि, यथा घटस्य घटः । अतो नांशः अंशिनो भिन्नो नाप्यभिन्न इत्यर्थः । ननु तत्त्वातत्त्वाभ्यामनिर्वाच्यत्वादवस्तु तर्हीत्याशङ्क्याह—नापीति । अत एवेति; अंशत्वादेव; न ह्यवस्तुनः अंशत्वं दृष्टम्; न हि खपुष्पाद्यवस्तु कस्यचिदंशो भवतीत्यर्थः । ततः किमित्यत आह—तत्रेति । तस्य तदव्यतिरेकादित्यभेदाभिप्रायम् । तद्दूषयति—नैतदिति । यदि सामान्यांशस्य विशेषान्तरेऽनुगमाद्वस्तुनोऽनुगम उच्यते, ततो विशेषांशाननुगमादननुगमः कस्मान्न स्यादित्यर्थः । ननु सामान्यांशेन वस्तुनोऽनुगमोऽप्यस्तीति नात्यन्तभेदवादप्रसङ्ग इत्याशङ्क्य वस्तुनोऽननुगममाह—अपि चेति । वस्तुनः सामान्यविशेषद्वयरूपत्वादेकस्य विशेषांशस्य व्यक्त्यन्तरेष्वभावे वस्तुनस्तेष्वभावात् सामान्यानुगमेऽपि न

वस्तुनोऽनुगम इत्यर्थः । एतदेव साधयति—तथा हीति । समाहारः P. 67-2.
समुच्चयः । शेषं सुगमम् ।

एवं विशेषांशानुगमाद्भेदवादप्रसङ्गमापाद्य अधुना सामान्यांशानुगमाभ्युपगमे सत्यभेदवादं प्रसञ्जयति—यदि वेति । सामान्यांशानुगमात्तस्य वस्त्वव्यतिरेकाद्वस्त्वनुगमेऽभ्युपगम्यमाने सति, अद्वैतवादः प्रसज्येत; तथा हि—गौस्तावत् स्वयं गौः, सोऽश्वस्य द्रव्यत्वादिसामान्यांशानुगमाद् अश्ववस्तुनोऽप्यनुगमादश्वोऽपि स्यात्; ततश्च गौर्गौरश्वः; एवमश्वोऽप्यश्वो गौश्च; ततश्च गोर्गोत्वमश्वत्वं च, अश्वस्याप्यश्वत्वं गोत्वं चेति सोऽयं तद्भावोऽन्यभावः, ताभ्यां गवाश्वयोरभेदः । एवमन्येषामपि भावानाम् । अतो वचनव्यक्त्यन्तरेणाद्वैतमेवोक्तमित्यर्थः । तद्भावान्यभावाभ्यामिति 'तदतत्त्वतः' इत्यस्य विवरणम् । एतावता च तदतद्भ्यां प्रत्येकं त्वस्य संबन्धः, पञ्चम्यन्तात्तसिलित्युक्तम् । तच्चातच्च तदतदी, तदतदोर्भावस्तदतत्त्वम्, तत इति व्युत्पत्तिः । ननु सत्यमद्वैतम्; किंतु भावान्यभावाभ्यामभेद इति त्वयैवोक्तम्; अतश्च गौरश्वस्याभावश्चेत् ततो द्वैतमप्यस्ति; तेन द्वैताद्वैतात्मकं सर्वम्; तच्चेष्टमेवास्माकमित्यभिप्रायेण चोदयति—सत्यमिति । सिद्धान्ती त्वाह—नैतदिति । लोकसिद्धमन्यत्वमभिप्रेत्य परप्रतिपादनार्थमन्याभाव इत्यस्माभिरुक्तम् । तत्त्वतस्तु गवाश्वयोरन्योन्यमभेदे कुतोऽन्यत्वम्? यतो द्वैतमपि स्यादित्यर्थः । ननु गवाश्वयोरभेदे 'गौश्चाश्वश्च' इति भेदेनाभिधानं न स्यात्; अतो भेदोऽप्यस्तीत्याशङ्क्याह—गौश्चेति । अभिधानभेदोऽपि लोकसिद्ध एव परप्रतिपादनार्थमुक्तः; न तु गवाश्वयोः प्रत्येकं गवाश्वत्वेन तस्य कारणमस्तीत्यर्थः । ननु यद्यपि सामान्यांशानुगमादभेदः, तथापि विशेषांशस्य व्यावृत्तेर्भेदोऽप्यस्ति; अतो द्वैताद्वैतात्मकं जगत् स्यात्; तच्चेष्टमेवास्माकमिति चोदयति—नन्विति । सिद्धान्ती तु दूषयितुमिदं विकल्पयति—अथेति । उभयरूपं वस्तु; अतोऽस्य विशेषव्यावृत्तितो व्यावृत्तत्वान् विशेषान्तरेऽनुगमो नास्ति; तदुदाहरति—अश्ववस्तु गोवस्तु न भवतीति । अथास्ति वस्तुनो वस्त्वन्तरेऽनुगमः, तमुदाहरति—अश्वोऽपि गौर्भवतीति । तत्राद्ये

67-19. पक्षे दोषमाह— तत्रेति । तत्र तयोः पक्षयोर्मध्ये वस्तुनो वस्त्वन्तराननुगमपक्षे तावत् वस्तुनो वस्त्वन्तरेऽननुगमादनुगच्छतः सामान्यांशस्य केवलस्य स्वयमवस्तुत्वात् प्रागुक्तन्यायेन कल्पनागोचरत्वात् भेदवादप्रसङ्ग इत्युक्तं 'तस्यानन्वयतः' इत्यत्र । अथ विशेषव्यावृत्तौ सत्यामपि तद्वस्तु वस्त्वन्तरेऽनुगतम्, तदुदाहरति —भवतीति । तत्र गवाश्वयोरभेद एव, कुतोऽन्यत्वसिद्धिरित्यर्थः । यदि मतम्—द्रव्यत्वादिरूपेणाश्वो गोवस्तु; अननुगतं च विशेषरूपेण, अतो नात्यन्तभेदस्याभेदस्य वा प्रसङ्ग इति; 'भवति चाश्वो गौः' इत्यश्वस्य गोरूपत्वं वदता द्रव्यत्वादिनानुगतत्वमुक्तम्; 'गौर्गौरेव' इति गोर्गौरूपेणाश्वेऽननुगतत्वमुक्तम् । कथं पुनर्गोर्गौरूपेणाश्वाद्व्यावृत्तत्वमित्यत आह—भवत्येवेति । यद्यश्वस्य गोभावे गोर्विशिष्टं स्वं गोरूपं न भवेत्, ततोऽश्वान्न व्यावर्तेत; यतस्तु भवत्येव, न भवति तत्र गवि गोवस्तुनस्तस्य स्वरूपाभाव इति यावत्, तदा तस्य स्वरूपेण व्यावृत्तत्वादन्यत्वसिद्धिरिति । 'यदि मतम्' इत्यादिना परमतमाशङ्क्य विकल्प्य दूषयति—अथेति । अथेत्याक्षेपे; यद्गोवस्तु स्वरूपेणाश्वाद्व्यावृत्तं तत्कथं किंप्रकारमिति परेण वक्तव्यम् । किं यद्गौर्भवत्येवाश्वरूपेण? न भवत्यपि? एतदुक्तं भवति—किं गौरसाधारणगोरूप एव, उताश्वरूपोऽपि? यदि गौर्गोरूप एव, ततोऽश्वोऽप्यश्वरूप एवेति भेदवादः। अथ गौरश्वरूपोऽपि ततो गौर्गवाश्वरूपोऽपि, अश्वोऽपि गवाश्वरूप इत्यभेदवादः। नन्वेवमभेदे सत्यपि विशेषान्तरेणाश्वादन्यत् गोवस्तु व्यवस्थापयिष्यामः; अतश्च भेदोऽप्यस्तीत्याशङ्क्य प्रकृतं भेदाभेदवादप्रसङ्गं संक्षेपेणोपपादयति — सर्वथेति ।

एवं सामान्यविशेषात्मकमेकं वस्त्विति मतं दूषयित्वा द्रव्यपर्यायात्मकमेकं वस्त्विति मतेऽपि तद्दूषणमतिदिशति—द्रव्येति । श्लोकं व्याचष्टे—येऽपीति । मृदो घटादयः, सुवर्णस्य रुचकादयो विशेषाः । पर्यायेण जायमानाः पर्याया उच्यन्ते । अपायिन इत्यवस्थितमृदादिद्रव्याद्भेदमाह । अव्यतिरेका इत्यभेदम्; नास्ति व्यतिरेको येषां ते तथोक्ताः; भिन्नाभिन्ना इत्युक्तं भवति । एतदेवोपपादयति—न चेति । यदि रुचकादयः

सुवर्णद्रव्यमेव स्युः; ततस्तेषां नाशे सुवर्णमपि नश्येत्। अतो रुचकनाशे वर्धमाने नावतिष्ठेत; न चैवम्, तत्रापि प्रत्यभिज्ञानात्। न च द्रव्याद्भिद्यते; भेदेनानुपलब्धेः, द्रव्यस्यैव रुचकादिरूपेणोपलब्धेः। तदेवं द्रव्यपर्याययोर्भिन्नाभिन्नत्वात् तदुभयात्मकमेकं वस्तु, न द्रव्यमात्रं पर्यायमात्रं वा। द्रव्यमात्रे हि वस्तुनि रुचकादेरभावात् तदुत्पादे तद्विनाशे च तदर्थिनो हर्षशोकौ न स्याताम्। पर्यायमात्रे च वस्तुनि तदुत्पादे विनाशे च हेम्नोऽप्युत्पत्तिविनाशान्मध्यस्थता न स्यात्। द्व्यात्मके तु वस्तुनि हर्षादिकमप्यवकल्पते। तस्मात् द्व्यात्मकमेकं वस्त्विति ये मन्यन्ते—द्रव्यपर्यायार्थकाः द्रव्यपर्यायरूपोऽर्थो वस्तु येषां ते, तेषामपि नीतिरनेनैवात्यन्तभेदाभेदवादप्रसङ्गनिराकरणप्रकारेण निराकृता। एतदेव प्रपञ्चयति—तथाहीति। अवस्थितं हि द्रव्यमुच्यते; तद्यदि रुचक- P. 68-17.
वर्धमानकवस्तुनोर्हेमांशेनाभेदादभेद उच्यते, तत एकमेव वस्तु; तच्च अनित्यमवस्थितमिति द्रव्यमात्रं जगदित्येषा नीतिः स्यात्। अथ हेमरुचकाद्युभयरूपत्वात् वस्तुनो रुचकस्य वर्धमानकाद्व्यावृत्त्या वस्त्वपि व्यावृत्तम्, यत्तु हेमांशमात्रं वर्धमानकेऽप्यनुवृत्तं न तदनुवृत्त्या वस्तुनोऽनुवृत्तिः, तस्य केवलस्य स्वयमवस्तुत्वात् इत्युच्यते; ततः पर्यायमात्रं जगदितीयं नीतिः स्यात्, यतः परस्परव्यावृत्ताः पर्याया उच्यन्ते, न तु द्रव्यम्; यतोऽवस्थितं द्रव्यमुच्यते; न च पर्यायमात्रे किंचिद्वस्त्ववस्थितमस्ति, तेषामुत्पत्तिविनाशसंबन्धात्। या तु हेमांशमात्रस्य रुचकनाशेऽपि वर्धमानकेऽवस्थानकल्पना, सा कल्पनैव; यतो द्रव्यपर्यायरूपं चित्रं वस्तु; हेमांशमात्रस्य च न तथात्वमित्यर्थः।

अत्रैव दूषणान्तरमाह—अपि चेति। द्रव्यात् पर्यायाणां भेदे द्रव्यस्य स्थितत्वात् पर्याययोश्च नाशोत्पादात् तदर्थिनां मध्यस्थताशोकहर्षव्यवस्था घटेत। अभेदे तु तदेव तिष्ठति तदेव जायते तदेव विनश्यतीति स्थितिजन्मनाशानामेकत्रैव समवायः स्यात्; ततश्च द्रव्यार्थिनो द्रव्यस्य स्थितत्वात् मध्यस्थता स्यात्; न स्याच्च, रुचकवर्धमानकनाशोत्पादयोस्तदभेदात् द्रव्यस्यापि नाशात् उत्पादे च स्थितद्रव्याभावात्; अत एव हर्षशोकौ च स्याताम्; यदि तु द्रव्यमवतिष्ठत एव ततो मध्यस्थतैव

स्यात्; यदा त्वभेदादुत्पद्यते नश्यति च, तदा शोकादित्रितयमपि स्यादिति दुर्घटमापद्यते । तथा वर्धमानकनाशेऽपि तदर्थिनः शोकादित्रितयं स्यात्; तथा रुचकोत्पादेऽपि तदर्थिनस्त्रितयं स्यात् । अथ द्रव्यात् पर्यायाणां मिथश्च भेदोऽप्यस्ति; अतो न पूर्वोक्ताशङ्काद्यनवस्थादोष इत्युच्यते; ततो भेदाभेदवादिनामभेदोऽप्यस्तीति प्रागुक्तो दोषः किं न स्यात्? अथ सत्यमस्त्यभेदः, किंतु नासावत्यन्तम्; तेन तदाश्रयः शोकादिसंकरदोषो न भवति; ततो भेदोऽपि नात्यन्तमिति तदाश्रया शोकादिव्यवस्था न
. 69-13 स्यादित्याह—अथेति । किंच स विशेष उच्यते, योऽन्यत्र नास्ति; अनेकान्तवादिनश्च यदि क्वचिदैकान्तिकं स्यात् तत आत्यन्तिकत्वं विशेषेणाभेदं प्रत्युच्येत; न च तस्य सर्वत्रानेकान्तमिच्छतः किंचिदेकान्ततः; अतः सर्वस्यैव नात्यन्तिकत्वम्, यदभेदं प्रति विशेषेण शोकाद्यसंकरायोच्यत इत्याह—न चेति । ननु सार्वत्रिकेऽप्यनेकान्तवादे नात्रापि संकरदोष इत्याशङ्क्यानेकान्तवादमेव दूषयति—तथा चेति । तथा चेति दूषणोपन्यासोपक्रमे । सर्वभावानां सर्वप्रकारेषु यद्यनेकान्तस्ततः प्रवृत्तिनिवृत्तिरहितं जगत् स्यादित्याह । हीशब्दः कष्टार्थः । असावतथैवेति; अभिमतस्यासाधनमित्यर्थः ।

श्लोकमन्यथा व्याचष्टे—अथवेति । सर्वत्रानेकान्तवादिनो मम हर्षाद्यप्यस्ति, नास्ति च । अतः प्रीतिमध्यस्थताशोकाः स्युर्न स्युरिति यत् दुर्घटत्वमुक्तं तदिष्टमेव; एवं न मम दुर्घटमित्याशङ्क्योच्यते—नैकान्त इति । शेषं सुगमम् ।

एवं सामान्यविशेषौ द्वे वस्तुनी द्व्यात्मकं चैकं वस्त्विवति पक्षद्वये दूषिते, भेदाः सत्याः तदुत्था अभेदकल्पना विपर्ययो वेति पक्षद्वयेऽवशिष्टेऽन्यतरनिर्णयार्थमाह—तत्रेति; तयोः पक्षयोरित्यर्थः । श्लोकार्थ उच्यते—भेदो हि प्रतियोगिनमपेक्षते; अतो भेदग्रहणपुरःसरो भेदो ग्राह्यो ग्रहीतुं शक्यो न भवति, अन्योन्याश्रयत्वात् । न चागृहीतस्य तस्याभेदकल्पनोपादानत्वम्; न हि भेदनागृहीतौ शावलेयबाहुलेयौ 'गौर्गौः' इत्यभेदकल्पनां प्रसुवाते । तस्मादगृहीतो भेदो नाभेदकल्पनाहेतुरिति । अभेदज्ञानं तु नाभेदमपेक्षते; नापि भेदम्, स्वरूपहान·

प्रसङ्गात् । अतः शक्यज्ञानत्वात् स्वरूपमात्रेण ज्ञातः स भेदकल्पनोपादानं भवितुमर्हतीति । दृष्टं चैकस्य भेदकल्पनोपादानत्वमित्याह—यथेति । P. 70-16. यथैकोऽवयवी अवयवकल्पनाहेतुरित्यर्थः । नन्ववयवेभ्यो भिन्नस्यावयविनोऽसंभवादवयवोपादानैवावयविकल्पना, न त्ववयव्युपादानावयवकल्पना ; अतो भेदोपादानैवात्राप्यभेदकल्पनेत्याशङ्क्याह—न तत्रेति । भेदशब्दोऽत्र भिद्यमानानवयवानाह ; अभेदशब्दश्चाभिद्यमानमवयविनम् । हेतुमाह—भेदा हीति । यथा घटावयवी काल्पनिकोऽसत्यः, तद्वत् कम्बुग्रीवादयोऽपि स्वावयवापेक्षयावयवित्वादसत्याः स्युः । अतो भेदः परमाणुष्वेव निरवयवेष्ववतिष्ठते । अत एव परमार्थतो भिन्नाः स्युरिति यावत् । न च त एवाभेदकल्पनोपादानम्, अतीन्द्रियत्वेनागृहीतानां कल्पनोपादानत्वासंभवादित्यर्थः । नैकज्ञानं चोत्पद्यते भेदमपेक्षते इत्युक्तम् ; तत्र चोदयति—नन्विति । अनुसंधानं प्रत्यभिज्ञाप्रत्ययः ; स च देशकालभेदे 'सोऽयम्' इति पूर्वापरानुसंधानात्मको भवति, नान्यथा देशकालभेदमन्तरेण । पूर्वापरभावाभावात् किं परं केन पूर्वेण सहाभेदेनाऽनुसंधीयेत । तस्मादभेदज्ञानमपि देशकालभेदसापेक्षमिति भेदतुल्यदोषमित्यर्थः । तत्रोत्तरमाह—प्रत्युक्तमिति ; नेदानीमभिन्नदेशकालोऽर्थ एकः स्यादित्यत्र प्रत्युक्तमित्यर्थः । तदुक्तमेव स्मारयति—नेति । एकार्थाभावे चाऽनुसंधानमिति व्यर्थं स्यादित्याह—असतीति । एकस्य ह्यर्थस्य देशादिभेदादाशङ्कितभेदस्याभेदमापादयदनुसंधानमर्थवत् स्यात् ; एकाभावे तु तदनर्थकमेव स्यादित्यर्थः ।

अपि च सर्वजनसिद्धत्वादप्यभेदोपदानो भेदो युक्तः, न तु विपर्यय इत्याह—अपि चेति । सविकल्पकात् प्रथमभाविनिर्विकल्पकज्ञानेन वस्तुमात्रमभिन्नमेकमालोच्यते भेदादिसमस्तविकल्परहितं गृह्यते ; ततः पश्चात् 'गौः शुक्लः' इत्यादिभेदविकल्पो भवतीति सर्वजनसिद्धम् । अतश्चाभेदोपादानैव भेदकल्पना युक्तेत्यर्थः । द्वितीयार्धमाशङ्कोत्तरत्वेन व्याचष्टे—स्यादिति । विशिष्टरूपोपग्राहीति ; भिन्नरूपोपग्राहीत्यर्थः ; यथा विकल्पबुद्धाविति वैधर्म्यदृष्टान्तः । यस्त्वित्यादि ; अस्यार्थः—न ब्रूमः प्रत्यक्षेऽ-

वभासते भेदो नोपलक्ष्यते चेति, येन विरोधः स्यात्; अपितु सर्वेभ्यो घटस्वरूपादन्येभ्यः पटादिभ्यो व्यावृत्तं घटं स्पष्टमेवावभासयति प्रत्यक्षम्; अतो न विरोध इति यो ब्रूते, तस्य 'आहुर्विधातृ' इत्यादिनैवोक्तमुत्तरमित्यर्थः ।

किंच यदि सामान्यविशेषौ भिन्ने द्वे वस्तुनी न संभवत इत्युक्तम्, न चैकं द्व्यात्मकम्, तदा अन्यतरस्य मिथ्यात्वे कल्प्ये भेदज्ञानस्यैव
71-8. मिथ्यात्वमुचितं नाभेदज्ञानस्येत्याह—किंचेति । 'इदं रजतम्' इत्यादिभ्रान्तिषु 'इदम्' इत्यनवगतविशेषवस्तुमात्रावलम्बि ज्ञानं प्रतिष्ठितमव्यभिचारि; अतः पश्चात् बाधदशायामपि 'शुक्तिशकलमिदम्' इतीदमंशस्य प्रतिभानात्; भेदेषु तु विशेषेषु रजतादिज्ञानस्याप्रतिष्ठितत्वं व्यभिचारित्वं दृष्टम्; दृष्टव्यभिचारित्वस्यैव च व्यभिचारकल्पना लघ्वी, तस्य व्यभिचारयोग्यतायाः क्लृप्तत्वात्; इतरत्र वस्तुमात्रांशे तु सा कल्प्यत्वात् गुर्वी; तस्मादिहापि भेदज्ञानमेव मिथ्या, नाभेदज्ञानमिति भावः । 'इन्द्रियधियामपि' इत्युक्तम्; तस्य व्यावर्त्यं वक्तुं पूर्वपक्षोपक्रममात्रं करोति—स्यादिति । अनुविधायित्वादपीत्यपिशब्दो द्रष्टव्यः; अत्र द्विचन्द्राद्युदाहरणम् ।

किंच व्यावृत्ताः सर्वभावा इति वदता व्यावृत्तशब्देऽन्योन्याभावस्य प्रवृत्तिनिमित्तत्वात् अन्योन्याभावस्वभावास्तद्विशेषणा वेति वाच्यम्; न च तदुभयमपि संभवतीत्याह—अन्योन्येति । तत्र तस्मिन्नन्योन्याभावे उपाधौ विशेषणेऽभ्युपगम्यमाने तथा भेदरूपेण प्रतीयन्तां भावाः, न स्वरूपतो भिन्नाः स्युरित्यर्थः । अन्योन्येत्याद्युक्तम्; तत्कुत इत्याशङ्क्याह—एकस्मिन्निति । यद्येकं भावरूपमितरनिरपेक्षं स्यात् ततोऽपरं भावरूपं व्यवतिष्ठेत; यदा तु सर्वमेवाभावरूपं तदैकमस्मिन्नसत्यपरं तदभावरूपं न स्यात्; तस्मिंश्चासति तन्न स्यादितीतरेतराश्रयं स्यादित्यर्थः । अतदात्मनश्च तथात्वप्रतीतावुपहितो मणिरुदाहार्यः । अत्र चोदयति—नन्विति । अर्थसिद्धिरिति; स्वरूपमेवान्योन्याभावः, नान्योऽस्तीत्यर्थः । सिद्धान्ती त्वाह—न चेति ।

किंचान्यत्वान्मुखसंनिधौ मुखान्तराण्युत्पद्यन्ते, नान्यथा। तेन मुखमपि कारणम्। कारणानुरूपं च कार्यमुचितम्। तत्र तत्समानपरिमाणान्येव तानि युक्तानि; न चैतत्, कृपाणादावल्पतराणामुपलब्धेः। अविद्यान्यत्वे तु तेषामल्पतानुपपत्तिरदोषः। एतच्चोपलक्षणम्; अन्येऽपि दोषाः प्रागुक्ता एव। तदयं प्रयोगः—विश्वभेदोऽयमभेदोपादान इति साध्यो धर्मः, भेदत्वात्, मणिकृपाणादिष्विव मुखभेद इति। परोऽपीदानीमनुमानबलेनैव प्रत्यवतिष्ठते—स्यादिति। तदिदमनुमानम्--अभेदो धर्मी, भेदोपादान P. 72-6. इति साध्यो धर्मः, भेदत्वात्, यथा 'वनम्' इत्यभेदस्तरुभेदोपादान इति। तद्दूषयति—नेति। यदि यावानभेदः स सर्वो भेदोपादानत्वान्मिथ्या, ततः परमाणुरप्येको न स्यात्; तदभेदोऽपि भेदोपादान एव स्यात्; तथा तदंशतदंशोऽपीत्यनवस्था स्यात्; ततश्च न किंचिदेकं स्यात्। अतश्चैकैकपरमाणुसमुच्चयरूपस्तदभेदो नास्त्येव; कुतो 'वनम्' इत्यभेद-कल्पना स्यात्? अथ दूरमपि गत्वा किंचिदेकं तत्त्वमभेदोपादानत्व-रहितमिष्यते, ततस्तेनैव हेतुरनेकान्त इत्यर्थः। तदभावत इति; एकैक-परमाणुसमुच्चयरूपस्य स्थूलस्य वृक्षादिरूपस्य भेदस्याभावत इत्यर्थः।

भेदस्य मिथ्यात्वे अनुमानान्तरमाह—अपि चेति। भेदो धर्मी, मृषेति साध्यो धर्मः, 'इदम्' इति 'तत्' इति 'अर्थः' इति 'वस्तु' इति 'सत्' इति च प्रत्येकमभेदेनानुगतत्वात्; यो य एवं स मृषा, यथा चन्द्रमसस्तरङ्गभेदाद्यो भेदः स प्रत्येकं 'चन्द्रः' इत्यभेदानुविद्धो मृषेत्यर्थः। तरुभेदो 'वनम्' इत्यभेदानुविद्धोऽपि न मृषा; अतस्तेन व्यभिचारो मा भूदिति प्रत्येकमित्युक्तम्।

किंच कल्पनालाघवादप्यभेदोपादाना भेदकल्पनोचिता, न तु विपर्यय इत्याह—अपि चेति। न तु भिन्नानाम्; महिमेत्यनुषज्य कल्प्य इत्यध्याहार्यम्। ननु त्वयैकस्य नानावभाससामर्थ्यं कल्प्यम्, न मया; अतो ममैव लाघवमित्याशङ्क्य आवयोः सामर्थ्यकल्पना तुल्या, तथापि त्वया बहूनां बहूनि सामर्थ्यानि कल्प्यानि, मया त्वेकस्यैव सामर्थ्यातिशय इति

2-25. स्वपक्षे कल्पनालाघवमुपपादयितुमुपक्रमते—इदमिति । भेदवादिनोऽत्यन्तभिन्नासु व्यक्तिषु कथं 'गौर्गौः' इत्यभेदावभासः? न हि निर्निमित्तं ज्ञानं भवति । न च भेद एवाभेदज्ञानस्य स्वरूपेण निमित्तम्; 'गामानय' इत्युक्ते च यां व्यक्तिमानयति पुनरुक्ते तत्सामान्यमेवानयति, न यां कांचिदश्वादिव्यक्तिमपि; सोऽयमत्यन्तभेदे कथमनुवृत्तावभासो व्यवहारश्च? अथ गोव्यक्तीनां सादृश्यादनुवृत्तावभासव्यवहारः, तदयुक्तम्; यतः सादृश्यमप्यवयवसामान्यान्वयेन भवति, न चात्यन्तभेदवादिनः सोऽस्ति । अथ गोव्यक्तीनामन्योन्यव्यावृत्तिर्न गृह्यते, गृह्यतेऽश्वादिव्यक्तिभ्यः; तेन गोव्यक्तिषु भिन्नास्वप्यनुवृत्तावभासव्यवहारः, तदविशेषेऽपि नाश्वादिव्यक्तिषु संभवति; भवति च सत्या अपि गोव्यक्तीनां व्यावृत्तेरग्रहणं गुञ्जाप्रवालरागयोरिव सूक्ष्मत्वेनेत्युच्यते; तदसत्; यतस्तव व्यावृत्तिर्नाम भावानां स्वभाव एव, न ततो भिन्ना; तत्र तस्या अग्रहणे तत्स्वभावानामप्यग्रहणं स्यात्; अन्यथा तत्स्वभावतैव न स्यादिति भावः ।

अथ निर्विकल्पकत्वेन प्रत्यक्षमनिश्चयात्मकम्; सविकल्पकं तु निश्चयात्मकम्; तच्चाप्रत्यक्षम् । अतो निश्चयप्रत्यक्षयोः स्वरूपभेदः । तेन गोव्यक्तिषु प्रत्यक्षासु तत्स्वभावभूतान्योन्यव्यावृत्तिरपि यद्यपि प्रत्यक्षा, तथापि तन्निश्चयाभावादनुवृत्तावभासव्यवहारौ भवत इति चेत्; तदसत्; यतो व्यावृत्तेरनिश्चये गोसामान्यनिबन्धन एव व्यवहारः स्यात्, न विशेषान्तरव्यावृत्तः; स च दृश्यते; तथाहि—'कालाक्षीमानय' इत्युक्ते गवान्तरव्यावृत्तामेव गामानयति; न च तद्व्यावृत्तेरनिश्चये युज्यते । तस्मान्नैषोऽपि पक्षः साधुः । अथैका गोव्यक्तिर्यामर्थक्रियां दोहनादिलक्षणां करोति तामेवापरा; ततश्च यथैका अश्वादिभ्योऽतत्कारिभ्यो व्यावृत्ता तथा परापीत्यतत्कारिव्यावृत्तेस्तुल्यत्वात् गोव्यक्तिष्वत्यन्तभिन्नास्वप्येकरूपावभासव्यवहारो भवतीति चेत्; तदपि न शोभनम्; यतो यैकस्या गोव्यक्तेरर्थक्रिया न सैवापरस्याः; नापि तज्जातीया, तैर्जातेरनिष्टत्वात् । अतो गोव्यक्तीनां नैकार्थक्रियाकारित्वम् । अतश्च यथैकस्या गोव्यक्तेरतदर्थक्रियाकारिणो व्यावृत्तिः, एवं गोव्यक्त्यन्तरादपि, तस्यापि तत इति कथमतत्कारिव्यावृत्तिस्तुल्या? किंच व्यावृत्तिर्वस्तुनः स्वभावश्चेत्,

वस्तूनां भेदे कथं सा तुल्या? अथास्वभावः, तदा तादात्म्यादिसंबन्धाभावात् कथं सा वस्तूनां स्यात्? ततश्च ततोऽप्येकमेव तत्त्वं स्यात्, न भेदः। अथानादिवासनानिबन्धनो भिन्नास्वपि व्यक्तिष्वेकरूपावभासः; ततश्च तदनुरूपो व्यवहारः, न तु व्यक्तिगतः कश्चिद्विशेषोऽपेक्ष्यत इत्युच्यते; तदप्ययुक्तम्; व्यक्तिगतविशेषानाश्रयणे हि गोव्यक्तिष्वेव 'गौः' इत्येकरूपावभासो भवति, नाश्वव्यक्तिष्वित्ययं नियमो न स्यात्; अस्ति च। तस्मान्न वासनामात्रनिबन्धनोऽयमभेदावभासः। न च वासनानां भेदात् काचिदेव वासना कासुचिदेव व्यक्तिष्वभेदावभासं करोति, न सर्वास्विति वाच्यम्; सा हि पूर्वानुभवजदृढसंस्कारानुवेधरूपत्वात् पूर्वानुभूतास्वेव व्यक्तिष्वभेदावभासं कुर्यात्, न भिन्नासु। सादृश्यात्तत्रापि करोतीति चेत्; न, तस्य निरस्तत्वात्। ततः काश्चिद्व्यक्तयः कस्यचिदभेदावभासस्य प्रकृत्यैव समर्थाः, न सर्वाः सर्वस्येति तासां सामर्थ्यातिशयाः कल्प्याः। भिन्नानां व्यक्तीनां भेदावभासहेतव एव सामर्थ्यातिशया युक्ताः; इमे त्वभेदावभासस्य हेतव इति स्वभावविपरीता इत्युच्यन्ते। P. 73-11.
तत्र तेषामनन्तानि वस्तूनि, अनन्ताश्च सामर्थ्यातिशयाः कल्प्या इति कल्पनागौरवम्। मम त्वेकं तत्त्वं कल्प्यमिति कल्पनालाघवम्। तस्मादेकस्यैवास्तु महिमा यन्नानेवावभासते; न तु भिन्नानाम्, यदभेदेन भासन्त इत्यर्थः। यथावस्तु व्यवहारो युक्तः; तत्राभिन्ने तत्त्वे घटपटादिभेदव्यवहारस्ते कथमिति चेदत आह—भेदेति। यथावभासं हि व्यवहारः, न यथावस्तु, रज्जुसर्पावभासे पलायनदर्शनात्। अवभासते च भेदः। अतोऽवभासानुरूपा भेदव्यवहाराः सेत्स्यन्ति; यथा—भेदवादिनां भिन्नासु व्यक्तिषु 'गौः' इत्यभेदव्यवहारः। न केवलं तेषाम्; अपितु जातिव्यक्त्योरत्यन्तभिन्नयोः समवायाख्यसंसर्गवादिनामपि; कणभुजां जातेर्व्यक्तिभ्योऽर्थान्तरत्वात् 'गोत्ववतीं व्यक्तिमानय' इति यथावस्तु भेदावभासेन न व्यवहारः; किंतु 'गामानय' इत्यभेदावभासेनैव विशेषेषु सामान्यव्यवहारः। तथा येऽपि व्यक्तिभ्यो जातिमनर्थान्तरभूतां वदन्ति भाट्टाः, तेषामपि द्व्यात्मकं वस्तु। न च तस्य तादृशस्य शबलस्य वस्त्वन्तरेऽनुगमोऽस्ति। यस्य त्वस्ति सामान्यांशमात्रस्य, तदेकमवस्त्वेव। ततश्च

योऽयं 'गौर्गौः' इत्यनुगतरूपो व्यवहारः, स यथावभासमेव न यथावस्त्विति 'तस्यानन्वयतः' इत्यत्र दर्शितम् । इतिः तर्ककाण्डीयन्यायोक्तिसमाप्तौ ।

. 73-20, अनन्तरोक्तमर्थं श्लोकेन संगृह्णाति—यथेति । बाह्याः; बाह्यार्थवादिनो वेदान्तविवेकबाह्या वादिनः । इतिः तर्ककाण्डग्रन्थसमाप्तौ ।

इति श्रीब्रह्मसिद्धिव्याख्याने तर्ककाण्डव्याख्यानं
शङ्खपाणिना कृतम् ॥

---

ओम्

# ब्रह्मसिद्धिव्याख्या शङ्खपाणिकृता ।

---

## नियोगकाण्डः

इदानीं काण्डान्तरमारभते—एवमिति । वृत्तवर्तिष्यमाणसंकीर्तनं काण्डयोः संगतिप्रदर्शनार्थम् । स्थिते ह्युपचरितार्थत्वनिरासेनोपानिषदां मुख्यार्थत्वे, कोऽसौ मुख्योऽर्थः? स्वरूपं कार्यं वा इति चिन्तावतरति, नान्यथा । कार्य एवार्थे वेदस्य प्रामाण्यमिति; सामान्यद्वारेण वेदान्त- P. 74-3.
गतानामुपनिषदामपि कार्येऽर्थे प्रामाण्यमित्यभिप्रायः । प्रतिज्ञातमर्थमृषिजुष्टत्वेन प्रसाधयति—एवमिति । तद्व्याचष्टे—चोदनेति । मन्त्रार्थवादोपनिषदां चोदनैकवाक्यत्वेन [अ]पृथग्वेदत्वाच्चोदनात्मक एव कृत्स्नो वेदः; तेन तदर्थ एव वेदार्थः, नापरः कश्चिदस्तीति । नन्वनेन चोदनाप्रमाणको वेदार्थ इति यावदित्युक्तम्; ततः किमित्यत आह—चोदना चेति । चोदना हि प्रवर्तकं वचनम्; न च सा वायुवत् प्रवर्तयति; किंतु प्रवृत्तिहेतुभूतमर्थमवगमयन्ती । प्रवृत्तिहेतुः स्वकार्यम्; तथाहि—इष्टसाधनमपि 'ममेदं कार्यम्' इत्यप्रतिपद्य न कश्चित् प्रवर्तते । तस्मात् कार्येऽर्थे वेदः प्रमाणमित्यर्थः । ननु भवत्वेवमन्यत्र; वेदान्तेषु तु कः कार्यविधिः, यत्र तेषां प्रामाण्यम्—इत्याशङ्क्याह—वेदान्तानामिति । 'आत्मा प्रतिपत्तव्यः' इति प्रतिपत्तिकर्तव्यताप्रमाणम्; तत्सेविनां प्रतिपत्तिकर्तव्यतायां प्रतिपत्तव्यत्वेनानुगतमन्वितं यत् सिद्धरूपमात्मतत्त्वं तद्विषयप्रतिपत्तिकर्तव्यतामुखेनाववोधकत्वम्, न तु स्वतन्त्राणाम् । अतस्तेऽपि कार्यनिष्ठा एवेत्यर्थः । एतदुक्तं भवति—आत्मप्रतिपत्तिकर्तव्यताविध्यपेक्षितप्रतिपत्तव्यात्मस्वरूपसमर्पकत्वेन वेदान्तानां प्रामाण्यमिति । एतदेव भाष्योक्त्या द्रढयति—तथा चेति । यदि कार्येऽर्थे वेदः प्रमाणं कथं तर्हि मन्त्रार्थाः सोपनिषत्काः सिद्धमर्थमाहुरित्याशङ्क्य "चोदना हि" इत्याद्युक्तम् । अयमर्थः—मन्त्रादीनां विध्येकवाक्यत्वादेकैवेयं तावती चोदना । सा च कार्ये

गमयन्ती तत्परतया भूतादिकमर्थमेकदेशेन ब्रूते, न स्वनिष्ठत्वेन । तेनो-पनिषदोऽपि प्रतिपत्तिकर्तव्यतापरा एव, न सिद्धार्थपरा इति ये मन्यन्ते
74-10. तान् प्रत्युच्यते—तिस्र इति ।

शब्दात् वेदान्ताख्यात् यदात्मज्ञानं तत् 'आत्मा प्रतिपत्तव्यः' इति विधिना न विधीयते; यस्मादधीतवेदस्य शब्दसामर्थ्यादेव कर्मावबोधवत् तदात्मज्ञानं भवति; अतः किं तत्र विधिनेति भावः । ननु प्रमाणान्तरजं ज्ञानमुपेक्ष्य किमिति शाब्दमेव ज्ञानं न विधेयमत्रोक्तमित्याशङ्क्योक्तम्—ब्रह्मणो हीति । शेषं सुगमम् ।

कर्मावबोधवदिति दृष्टान्तितम्; तत्र विध्यनपेक्षामाह—स्वर्गेति । "स्वर्गकामो यजेत" इत्यस्मिन् शाब्दे वाक्यार्थबोधे नान्यो विधिरपेक्ष्यते, तद्विधिवाक्यार्थबोधेऽपि विध्यन्तरापेक्षायामनवस्थाप्रसङ्गात् । न च योऽयं 'यजेत' इति विधिः स एवापेक्ष्यते, तस्य कर्मणि व्यवस्थितेः; कर्म हि तेन विधीयते, न तु तद्बोध इत्यर्थः ।

अत्र चोदयति—नन्विति । यथा स्वर्गकामादिवाक्यानामध्ययने "स्वाध्यायोऽध्येतव्यः" इति विधिरपेक्ष्यते, स्वाध्यायाध्ययनविध्यध्ययने तु न विध्यन्तरमपेक्ष्यत इति नानवस्था; तथैषामर्थबोधेऽपि विध्यपेक्षास्तु; तद्विध्यर्थबोधे तु न विध्यन्तरमपेक्षिष्यते; अतो नानवस्था भवतीत्यर्थः । न च वेदार्थज्ञानप्रवृत्तौ विधिर्नास्तीत्याह—अस्ति चेति । तद्दूषयति—विषम इति । वैषम्यमाह—अप्रवृत्तोऽपीति । यद्यध्ययनविधिः स्वय-मधीतो वाक्यान्तराण्यध्यापयति, ततस्तदध्ययनमप्यध्ययनविध्यन्तराधीनमित्य-नवस्था स्यात् । यतस्तु स्वयमप्रवृत्तोऽप्यध्ययनविध्यध्ययने पुरुषः पुरुषा-न्तराधीतादध्ययनविधेस्तस्यान्येषां च वाक्यानामध्ययने प्रवर्तते, तेन तत्रा-नवस्था न भवतीत्यर्थः । नन्वन्येनाधीतादध्ययनविधेरन्यस्य कथं प्रवृत्तिः? अधीतं हि वाक्यं प्रवर्तयति, नानधीतम्, अगृहीतस्य प्रवर्तकत्वायोगा-दित्यत आह—शाखेति । नाध्ययनं प्रवृत्तौ तन्त्रम्, अपितु ग्रहणम्; तच्च श्रवणमात्रादपि भवत्येव; यथा स्वयमनधीतादपि शाखान्तरोक्तादङ्ग-वाक्यात् तदध्यायिभ्यः श्रुतात् तदङ्गोपसंहारः प्रयोगेषु क्रियत इत्यर्थः ।

ननु पुरुषान्तराणामपि कथमध्ययनविधिवाक्याध्ययनमित्याशङ्क्याह—यथेति । P. 75-15
एवं स्वर्गकामादिवाक्याध्ययने नानवस्थादोष इत्युक्तम् । तदर्थबोधे तु "वेदः कृत्स्नोऽधिगन्तव्यः" इति विध्यन्तरापेक्षा संभवति । यतस्तदप्यनवबुद्धार्थं न स्वर्गकामादिवाक्यार्थज्ञाने प्रवर्तयितुमलम्, अतस्तदर्थोऽपि विध्यपेक्षः । न च स एव स्वार्थबोधे प्रवर्तयति, अनवबुद्धार्थस्य प्रवर्तकत्वायोगात्; तदर्थबोधात् प्रवृत्तिः, प्रवृत्तस्य च तदर्थबोध इति इतरेतराश्रयं हि स्यात् । अतश्च "वेदः कृत्स्नोऽधिगन्तव्यः" इत्यस्यार्थबोधे विध्यन्तरमपेक्ष्यम्, तत्राप्येवमित्यनवस्था स्यादिति सूक्तम्—'विषम उपन्यासः' इति । यच्चोक्तम्—'अस्ति विधिः' इति, तदप्ययुक्तम्; यतोऽपूर्वार्थप्रापको विधिर्भवति ; अयं त्वध्ययनविधेर्दृष्टार्थत्वेन न्यायप्राप्तानुवादक इत्याह—न चेति । अभ्युपगम्यास्य विधित्वं वेदार्थबोधे 'आत्मा प्रतिपत्तव्यः' इति पृथग्विध्यनपेक्षामाह—अथेति ।

ननु स्वाध्यायाध्ययनविध्याक्षिप्तं चेत् वेदार्थज्ञानं "वेदः कृत्स्नोऽधिगन्तव्यः" इत्यनेनोच्यते, ततोऽध्ययनविधिप्राप्तानुवाद एवायं स्यात्; कथं विध्युपगमः? उच्यते—विध्याक्षिप्तमपि विधीयते; यागविध्याक्षिप्तमिव व्रीह्यादि । विलम्बी ह्यर्थाक्षेपः, शीघ्रभाविनी श्रुतिः; सा अर्थाक्षेपव्यापारात् प्रागप्राप्तमेव विधत्ते । फलं त्वन्यनिवृत्तिः; अर्थाक्षेपे ह्यन्यदप्याक्षिप्येतेति न दोषः । कर्मविधिवाक्यवदित्युक्तम्; तद्विवृण्वन् तत्र पुनः श्लोकं योजयति—यथेति । विधौ सत्यपि चेद्विध्यन्तरमपेक्ष्यते ततस्तत्राप्येवमित्यनवस्थानात् स्वर्गकामादिवाक्येषु "वेदः कृत्स्नोऽधिगन्तव्यः" इति सामान्यविधिनार्थबोधे प्रवृत्तिसिद्धेस्तदर्थं यथा नान्यो विधिरपेक्ष्यते—न च स्वर्गकामादिवाक्यगतः, तस्य कर्मविषयत्वात्—एवं वेदान्तेष्वपि वाक्यसामर्थ्यादेव तदर्थबोधोत्पत्तेः 'आत्मा प्रतिपत्तव्यः' इति विधिर्नापेक्षितव्य इत्यर्थः । ननु कर्मविधिवदत्रापि सामान्यविधिसिद्धत्वमेव वाच्यम्; तत्किमिदमुक्तम्—'वाक्यसामर्थ्यात्' इति? उच्यते—वेदान्तेषु 'आत्मा प्रतिपत्तव्यः' इति विशेषविधिवादी सामान्यविधेस्तदन्यविषयतेति मन्यते; अतस्तदभिप्रायेण सामान्यविधिसिद्धार्थता नास्तीति 'वाक्यसामर्थ्यात्' इत्युक्तम् । सामान्यविधिशेषत्वेऽपि चोपनिषदां सिद्धार्थता न स्यादिति तच्छेषत्वमप्यनिच्छतेदमुक्तमित्यदोषः ।

76-3. इतश्च शब्दात् यदात्मविज्ञानं तन्न विधीयत इत्याह—इतश्चेति। विधेयावगमादुत्तरकालीना या प्रवृत्तिः, सैव विधेः फलम्, न तु शब्दप्रभवो यो विधेयबोधः स इत्यर्थः। कुतः? अन्योन्यसंश्रयात्— शब्दार्थबोधे सति प्रवृत्तिः, प्रवृत्तस्य च शब्दार्थबोध इत्यात्माश्रयता। यस्तु तत्त्वावबोधपराद्वेदान्तवाक्यात् तत्त्वावबोधः, स न शब्दार्थबोधात् परः उत्तरकालीनः; किंतु स एवात्मा। अतो न 'आत्मा प्रतिपत्तव्यः' इति विधेः फलमित्यर्थः।

इतश्च शब्दज्ञानमविधेयमित्याह—अपिचेति। किंच शब्दाज्जातेऽर्थबोधे न पुरुषः 'आत्मा प्रतिपत्तव्यः' इति विधिना प्रवर्त्यः। साध्ये हि प्रवर्त्यते, न सिद्धे। अथ शब्दोऽर्थस्यानवबोधक एव, तेन तज्ज्ञाने प्रवर्त्यः, तत्रापि शब्दार्थबोधस्यासंभवात् सुतरां न प्रवर्तनीयः। न ह्यसंगते विषये कश्चित्प्रवर्त्यते। शब्दाज्जातेऽप्यर्थबोधे तन्निश्चये प्रवर्त्यत इति चेत्, अत आह—शब्देनेति। न निश्चयेऽपि प्रवर्त्यः; सोऽपि हि शब्दजन्यो वा स्यात्, प्रमाणान्तरजन्यो वा; न तावच्छब्दादर्थे तत्त्वावबोधे तस्मादेव यो निश्चयः, तत्र प्रवर्त्यः; स हि शब्देन प्रथममेव कृतः; किं तत्र विधिना? अथ शब्दादवबुद्धे तत्त्वे अन्यस्मात्प्रमाणान्तराद्यो निश्चयस्तत्र विधिना प्रवर्त्यः, ततोऽन्यस्य प्रमाणान्तरस्य वाञ्छनमपेक्षा स्यात्। अतश्च शब्दस्तत्र निश्चयहेतुर्न स्यात्। न चैतदिष्टमित्यर्थः।

इदानीं विकल्पान्तरं करोति—अथेति। उपप्लवोऽवगम इत्यर्थः। भूतार्थवैयर्थ्यमतात्पर्ये हेतुः; अतात्पर्यस्यापि दर्शनादिति सांशयिकत्वे।

तद्दूषयति—तद्वार्तमिति; तदसारम्। कुतः? यतो लोकवेदयोः शब्दानामर्थपरत्वम् "अविशिष्टस्तु वाक्यार्थः" इति न्यायेनौत्सर्गिकम्। निमित्तान्तरात्तु शब्दस्वरूपप्रधानत्वम्; अत एवाविवक्षितार्थत्वं तदपवादः; यथा—'गवित्ययमाह' इति 'इति'शब्दात्, यथा जपमन्त्रेषु जपस्योच्चारणात्मकस्योच्चार्यमाणशब्दस्वरूपनिष्ठत्वम्। न च वेदान्तेषु तन्निमित्तान्तरमस्तीति भावः।

इतश्च वेदान्तानां विवक्षितार्थत्वाय 'आत्मा प्रतिपत्तव्यः' इति विधिर्नापेक्ष्यत इत्याह—दृष्टेति । कर्मविधिवाक्याध्ययने स्वाध्यायविधेर्या दृष्टार्थता, सात्र वेदान्ताध्ययने न भिद्यते, न विशिष्यते, समानेति यावत्। अतः स्वाध्यायविधेर्दृष्टार्थत्वेनैव कर्मवाक्यवद्वेदान्तानामप्यविवक्षितार्थता निवृत्तैव; किं प्रतिपत्तिविधिना तदर्थेनेति भावः । इतरथा यदि तु वेदान्ताध्ययने दृष्टार्थता न स्यात् , ततः 'आत्मा प्रतिपत्तव्यः' इति विध्यर्थेन सह विध्यर्थः कृत्स्नो वेदान्तार्थोऽविवक्षितः स्यादित्यर्थः । फलान्तरकल्पनेति ; विश्वजिन्न्यायेन स्वर्गो रात्रिसत्रन्यायेन दधिमधुकुल्यादिं वा फलान्तरमुक्तम् ; तथा वेदान्तानामविवक्षितार्थानामध्ययनात्फलान्तरकल्पना, तत्राप्यात्मावबोधस्य कर्मावबोधवद्दृष्टत्वादित्यन्वयः । ननु कर्मवाक्यानां प्रवृत्तिनिवृत्त्युपयोगेनार्थवत्त्वाद्युक्तं विवक्षितार्थत्वम् ; न तु वेदान्तोत्थायाः सिद्धार्थप्रतिपत्तेः, प्रवृत्तिनिवृत्त्यनुपयोगेन वैयर्थ्यात् । अतः स्वाध्यायविधिदृष्टार्थता तु भिद्यत इत्याशङ्क्याह—न चेति । किंच प्रतिपत्तिविधावपि वैयर्थ्यस्य तुल्यत्वमेव । तच्च प्रतिपत्तिविधौ तुल्यमित्यत्र वक्ष्यत इत्याह—प्रतिपत्तीति। 'भवेत्' इत्यादिश्लोकार्धं व्याचष्टे—अवश्यमिति । अवश्यं चैतदेवं विज्ञेयं यत् स्वाध्यायविधेर्दृष्टार्थतयैव वेदान्तानामपि विवक्षितार्थता । अन्यथा 'आत्मा प्रतिपत्तव्यः' इति विधायकेन सह कृत्स्नस्य वेदान्तस्याविवक्षितार्थता स्यात् । कुतः? यतः प्रतिपत्तिविधायकशब्दनिबन्धनमितरेषां वेदान्तानां विवक्षितार्थत्वम् । विधायकस्य तु न विवक्षितार्थत्वस्य निबन्धनं हेतुरस्ति । अतो विधायकस्याविवक्षितार्थत्वान्न तद्बलेनेतरेषां वेदान्तानां विवक्षितार्थत्वमिति सह विधायकेन सर्वे वेदान्ता अविवक्षितार्थाः स्युः । अथ विधायकः शब्दः प्रकृत्या शब्दस्यार्थपरत्वस्वभावत्वेन दृष्टार्थत्वेन च विवक्षितार्थ इत्युच्यते, तत इतरेऽपि वेदान्तास्तथैव विवक्षितार्था भविष्यन्तीति किं विधायकेनेत्यर्थः ।

अथापुरुषार्थसाधने विधिः प्रवर्तयितुं नालमिति विध्यधीनं पुरुषार्थत्वम् ; अतः शब्दोत्थस्यात्मज्ञानस्य पुरुषार्थत्वसिद्ध्यर्थम् 'आत्मा प्रतिपत्तव्यः' इति विधिरिष्यते, तदपि नेत्याह—ज्ञानस्येति ।

P. 77-24 अशोभनत्वमाह—ज्ञेयेति । ज्ञानस्य ज्ञेयप्राप्तिर्दृष्टं फलम् । न दृष्टफले विधिः, दृष्टस्यान्वयव्यतिरेकसिद्धत्वेन विध्यनपेक्षत्वात् । मोक्षो ज्ञानस्यादृष्टं फलम्, तदर्थो विधिर्भविष्यतीति चेत्; तन्न; न हि स साध्यः; कुतः? तत्त्वच्युतेः, मोक्षत्वहानात् । आत्यन्तिकी हि संसारनिवृत्तिर्मोक्ष उच्यते; तस्य कार्यत्वे घटादिवद्विनाशात् पुनः संसारः स्यात् । अतो मोक्षस्यात्यन्तिकसंसारनिवृत्तिलक्षणं मोक्षत्वं हीयेत । ननु घटादिनाशवत्कार्योऽपि मोक्षो न नङ्क्ष्यति; नैवम्, भावस्य कार्यस्य नाशेनाविनाभावात्; भावश्च मोक्षः, निरतिशयानन्दैश्वर्यलक्षणत्वात् । ननु आत्यन्तिकी संसारनिवृत्तिर्मोक्ष इत्युच्यत इत्युक्त्वा, कथमाह भावरूपो मोक्ष इति? उच्यते—मोक्षे सा भवतीत्युपचारात् सैव मोक्ष इत्युक्तमित्यविरोधः; मोक्षे वा सा श्रुत्यादिभिरुच्यत इत्यर्थः । नन्वागामिदेहेन्द्रियबुद्धिसंयोगाभावो मोक्षः; स च कार्योऽप्यभावत्वात् घटाभाववन्न नङ्क्ष्यति । नैवम्; प्रागभावो हि सः; न चासौ कार्यः, अनादित्वात् घटादिप्रागभाववत् । ननु बन्धहेतुध्वंसो मोक्षः; स च घटध्वंसवत् कार्योऽपि नानित्यः । सत्यम्; किंतु असौ विद्याया न पृथक् । अतो न तत्कार्यम् । यस्मादविद्योत्थो बन्धः, विद्यैव च तद्विरोधिनी तदभावः, न पृथक्; पृथक्च कार्यं भवति ।

अथवेति 'तत्त्वच्युतेः' इत्यस्यापरा व्याख्या । आत्मनः स्वरूपस्थितिलक्षणो मोक्षः श्रुत्योक्तः; स चेत्कार्यः स्यात्, एवंलक्षणान्मोक्षत्वाच्च्यवेत; न हि कार्यं नित्यस्यात्मनः स्वरूपं भवतीति भावः । कार्यत्वे मोक्षस्यानित्यत्वात् पुनरावृत्तिः स्यात् । अपुनरावृत्तिश्रुतिविरुद्धत्वात् 'यत् कार्यं तदनित्यम्' इत्यनुमानमप्रमाणम्; तेन कार्यत्वेऽपि मोक्षस्य नित्यत्वात् यदुक्तं कार्यत्वे विनाशात् तस्य पुनः संसार इति तदयुक्तमित्यनुभाषते—यत्त्विति । तद्दूषयति—दृष्टेति । दृष्टा सर्वकार्याणामनित्यत्वाद्विनाशिता; मोक्षस्य कार्यत्वेऽप्यपुनरावृत्तिश्रुतिबलान्नित्यत्वमाश्रीयेत, यदि श्रुतेरन्या गतिर्न स्यात्; अस्ति तु सेत्यर्थः । तामन्यां गतिमाह—यदा त्विति । अनवयवेनेति; निःशेषत इति यावत् । अविद्या पुनरावृत्तिहेतुः; तस्यां विद्यया निःशेषतो गतायां हेत्वभावादेव

पुनरावृत्त्यभावोऽपीत्यर्थः । तमर्थवादेनानुवदत्येषा 'न च पुनरावर्तते' इति वर्तमानश्रुतिः । अतो न तत्प्रामाण्यादनन्तमोक्षफलत्वं प्रतिपत्तिविधे रित्यर्थः । अर्थवादत्वमेवास्याः श्रुतेर्द्रढयति—तथाहीति । वर्तमानाप- P. 78-19
देशो हि प्रारब्धापरिसमाप्तमाह, नागामि साध्यमिति भावः । यदि च स्वर्गकामादिवत् कामोपबन्धः स्यात्, ततोऽपि साध्यं काम्यते न नित्यमित्यपुनरावृत्तेः साध्यता गम्येत; न तु सोऽप्यत्रास्ति । तस्मादर्थवादोऽपुनरावृत्तिश्रुतिरित्यर्थः । नन्वर्थवादादपि फलकल्पना दृष्टा; यथा—रात्रिसत्रादौ प्रतिष्ठादेरित्यत आह—अर्थवादादिति । सत्यम्; अनिर्ज्ञातपारार्थ्येषु सा । निर्ज्ञातपारार्थ्येषु तु "द्रव्यसंस्कारकर्मसु फलश्रुतिः परार्थत्वादर्थवादः स्यात्" इति न्यायः पठितः । निर्ज्ञातपारार्थ्यं च ज्ञानं ज्ञेयतत्त्वावभासेन दृष्टेनार्थेन निराकाङ्क्षम् । अतोऽत्र न सा युक्तेत्यर्थः । ननु ज्ञेयस्यात्मनस्तत्त्वावभासोऽपि स्वयमपुरुषार्थः; अतोऽस्त्येव पुरुषार्थाकाङ्क्षा; तत् कथं नैराकाङ्क्ष्यमित्यत आह—पुरुषार्थेति ।

मतान्तरमाशङ्कयति—अन्य इति । विधेर्विना कार्यशून्यं भूतार्थं यद्वचः, तत् भूतस्यार्थस्य प्रमाणान्तरगतत्वादनुवादकं स्यात्; अनुवादश्च प्रमाणान्तरगोचरे भवति; अतस्तदनुवादकं वचः प्रमाणान्तरापेक्षं सत् अनपेक्षत्वलक्षणप्रामाण्यमतिवर्तते, न प्रमाणं स्यात् । विध्यर्थे तु कार्ये प्रमाणान्तराविषये यत् प्रतिष्ठितं पर्यवसितं वचः तत् प्रमाणान्तरानपेक्षं सत् प्रमाणत्वं लभते; यथा अग्निहोत्रादिकर्मवाक्यम् । अतश्च यद्यप्यात्मतत्त्वावबोधात् परा उत्तरकालीना प्रवृत्तिर्विधिफलमत्र नास्ति, तथापि वेदान्तानां प्रामाण्यार्थं प्रतिविधिराश्रयितव्य इत्यर्थः । शेषं स्पष्टम् ।

अत्रोच्यते—प्रमाणेति । प्रमाणान्तरेण यातः प्राप्तोऽर्थो यस्य वचसः तत्तथोक्तम्, तद्भावस्तत्ता; तथा भूतः सिद्धोऽर्थो यस्य वचसः तद्भूतार्थम्, तद्भावस्तत्ता । प्रमाणान्तरप्राप्तार्थता प्रमाणान्तरज्ञातत्वेन ज्ञापित्वं किमनुवादता? उत भूतार्थतामात्रम्? तत्र प्रमाणान्तरलब्धार्थता चेदनुवादताभिप्रेता, ततो यदपौरुषेयं वेदान्तवचः प्रमाणान्तरज्ञातत्वेन न बोधकं,

न तदनुवादकम्; अतो नापेक्षम्; अतो नाप्रमाणम्। पौरुषेयं हि प्रमाणान्तरलब्धार्थकमिति भावः।

. 79-22 अथ भूतार्थतामात्रमनुवादता, तत्राह—सापेक्षताया इति। स्मृतौ दर्शनादिति; स्मृतौ प्रमाणान्तरसंस्पर्शस्य प्रमाणान्तरापेक्षाहेतुत्वेन दर्शनादित्यर्थः। एतदेवाह—सा हीति। सा हि स्मृतिः 'स घटः' इति पूर्वाधिगतमेव घटं 'सः' इति सर्वनाम्ना पूर्वाधिगतपरामर्शिनोल्लिखन्त्यधिगमान्तरसंसृष्टार्था जायत इति हेतोस्तस्याधिगमान्तरमपेक्षत इत्यर्थः। अधिगमान्तरेण संभिन्नः संसृष्टोऽर्थो विषयो यस्या इति विग्रहः।

अपौरुषेये सिद्धार्थेऽपि वचसि सापेक्षत्वहेतुर्नास्तीत्युक्तम्; तत्र पर आह—स्यादिति। प्रत्यक्षादिप्रमाणान्तरं सिद्धविषयम्। अतो वैदिकस्यापि सिद्धार्थस्य वचसो विषये प्रमाणान्तरस्य संभवात् तदपेक्षा युक्तेत्यर्थः। सिद्धार्थे प्रमाणान्तरसंभवेऽपि किमिति तदपेक्षत इत्यत आह—तथाहीति। प्रमाणान्तरसंवादापेक्षायां च नैरपेक्ष्यलक्षणं वेदान्तानां प्रामाण्यं न स्यादिति भावः। यदा तु प्रमाणान्तरागोचरे कार्यरूपे प्रतिपत्तिविध्यर्थे पर्यवस्यन्ति वेदान्ताः, तदा तत्रासंभवति प्रमाणान्तरे न कुतश्चित्प्रमाणान्तराद्विसंवादाशङ्केति न संवादाय प्रमाणान्तरमपेक्षणीयम्; अतो नैरपेक्ष्यलक्षणं प्रामाण्यं सिध्यति। प्रमाणान्तरविषये हि तत्संवादविसंवादौ स्याताम्, नान्यत्रेति भावः।

अत्रोच्यते—न चेति। शब्दविषये प्रमाणान्तरस्य संभवमात्रेण प्रमाणान्तरापेक्षा शब्दे न युज्यते। कुतः? यतस्तदा तयोः प्रमाणान्तरशब्दयोः, शब्द एव सापेक्षो न प्रमाणान्तरमित्यत्र विशेषो न गम्येतेत्यर्थः। शब्दः प्रमाणान्तरसापेक्षो लोके दृष्टः, न प्रमाणान्तरमित्यस्ति विशेषः; तस्माच्छब्दस्यैव सापेक्षता, न प्रमाणान्तरस्य अदृष्टत्वात् इति यद्युच्येत, ततः कार्येऽपि प्रमाणान्तरागोचरे शब्दस्य प्रामाण्यं लोके न दृष्टमिति तत्रापि वृद्धवाक्यवत् सुतरां शब्दस्य प्रामाण्यं न स्यात्। तदिदं सर्वमाह—यदीति। ततरामित्युक्तमतिशयार्थमाह—प्रमाणान्तरेति। प्रमाणान्तरविषये हि तत्संभवादपि तावच्छब्दस्याप्तवाक्यवत् प्रामाण्यं

स्यात्। प्रमाणान्तरागोचरे तु कार्ये प्रमाणान्तरासंभवात् बुद्धवाक्यवत् तत्प्रामाण्यं दुर्लभम्। अथ पौरुषेयत्वकारिता लोकवचसां प्रमाणान्तराधिगतविषयता, न शब्दसामर्थ्यकारिता; शब्दस्य तु स्वतः प्रमाणान्तरगोचर एवार्थे सामर्थ्यम्; तेन प्रमाणान्तरागोचरेऽपि कार्ये प्रामाण्यं न दुर्लभमित्युच्यते, तन्न; यदि शब्दः प्रमाणान्तरानपेक्षसामर्थ्यस्तर्हि तुल्यसामर्थ्यत्वान्न शब्द एव तद्विषये प्रमाणान्तरसंभवे प्रमाणान्तरसापेक्षः स्यात्, अपितु प्रमाणान्तरमपि तद्विषये शब्दसापेक्षं स्यात्। किमतः? यद्येवमिदमतो भवति प्रमाणान्तरस्य शब्दसापेक्षत्वेनाप्रामाण्यम्; अप्रामाण्ये च सति तत्संवादविसंवादानुपयोगान्न शब्दस्य तदपेक्षा युज्यते। प्रमाणसापेक्षं न प्रमाणं भवति! शब्दस्तु न प्रमाणम्। अतो न तदपेक्षया प्रमाणान्तरमप्रमाणम्; अपितु प्रमाणमेव, अनपेक्षत्वादिति चेत्, तत्रोच्यते—शब्दस्यैवाप्रामाण्यं कुत इति। पर आह—प्रमाणान्तरापेक्षत्वादिति। सिद्धान्ती त्वाह—प्रमाणान्तरस्यापि प्रामाण्यं शब्दानपेक्षत्वात्; तदनपेक्षत्वं च शब्दस्याप्रामाण्यात्। अतः शब्दाप्रामाण्ये तदनपेक्षत्वात् प्रमाणान्तरस्य प्रामाण्यम्; तत्प्रामाण्ये च तदपेक्षत्वात् शब्दस्याप्रामाण्यमितीतरेतराश्रयं स्यात्। शब्दस्याप्रामाण्यात् प्रमाणान्तरस्याऽनपेक्षत्वं प्रसाधयति—प्रमाणे हीति। यदि शब्दः प्रमाणं स्यात् ततः प्रमाणान्तरस्य विषये शब्दे संभवति प्रमाणान्तरमपि शब्दसापेक्षं स्यात्, तत्संभव इव शब्दः। तस्माच्छब्दस्याप्रामाण्यात् प्रमाणान्तरस्यानपेक्षत्वमिति युक्तमितरेतराश्रयत्वम्। न च प्रमाणान्तरसंभवे शब्दः सापेक्षः, न तु शब्दसंभवे तदिति विशेषोऽस्तीत्यर्थः। यदि च सिद्धार्थे शब्दे प्रमाणान्तरसंभवमात्रेण तत्सापेक्षत्वं स्यात्, एवं सति प्रत्यक्षानुमानयोरपि स्पर्शनकम्पादिलिङ्गयोरेकत्र वाय्वावन्योन्यगोचरे प्रवृत्तेः परस्परसापेक्षत्वमविशेषं शब्द इव प्रसज्यते। ततश्च तयोरप्यप्रामाण्यं स्यात्। तथेन्द्रियान्तरविषये यदीन्द्रियं प्रवर्तते तदपि सापेक्षं स्यात्। तदुक्तम्—प्रत्यक्षानुमानयोरित्यादिना। सत्तेति; रूपादीनां पञ्चानां सत्तागुणत्वे पञ्चेन्द्रियग्राह्यं; द्रव्यं तु घटादि त्वक्चक्षुर्ग्राह्यमिति विवेकः। अथ शब्दस्यैव प्रमाणान्तरसंभवे सापेक्षत्वम्, न प्रत्यक्षानुमयोरित्युच्यते, ततो P. 80-22.

विशेषहेतुर्वाच्यः ; न च सोऽस्ति । अथ शब्दः प्रमाणान्तराधिगतविषयो लोके दृष्टः ; अतोऽस्माद्विशेषाच्छब्द एव प्रमाणान्तरसंभवे सापेक्षः, न प्रत्यक्षानुमे इति चेत्, उक्तमत्रोत्तरम् 'प्रमाणान्तरस्याविषये तर्हि नतराम्'
81-11. इत्यत्र । उक्तमर्थं प्रपञ्चयति—यदीति । यदि पौरुषेयापौरुषेयशब्दमात्रधर्मोऽयं प्रमाणान्तराधिगतार्थत्वं नाम, ततः प्रमाणान्तरसंभवादेव बुद्धादिवाक्यवदप्रामाण्यं शब्दस्य स्यात्; प्रमाणान्तरसंभव एव त्वाप्तवाक्यवत् प्रामाण्यं स्यात् । अतश्च वेदान्तानां सिद्धार्थत्वे प्रमाणान्तरसंभवादप्रामाण्यम्, कार्यार्थत्वे तु प्रमाणान्तरासंभवात्प्रामाण्यमित्युक्तमयुक्तमिति भावः । अथ पौरुषेयशब्दधर्मः स्यात्, ततोऽपौरुषेयस्य वेदान्तशब्दस्य प्रमाणान्तराधिगतार्थत्वं नास्तीति तस्य सिद्धार्थत्वेन संभवत्प्रमाणान्तरविषयस्यापि न सापेक्षत्वम् । अतो नाप्रामाण्यम् । संभवत् प्रमाणान्तरं यत्र तत् संभवत्प्रमाणान्तरम्, तदेव विषयो यस्येति समासः । पौरुषेयत्वनिमित्तं हि सापेक्षत्वम् । अपौरुषेयशब्दे सत्यपि संभवत्प्रमाणान्तरविषयत्वे निमित्तनिवृत्तौ निवर्तते, न तु शब्दत्वसामान्यात् प्रसज्यत इति भावः । किंच यद्यन्यत्र दृष्टमन्यत्रापि केनचित् सामान्येन स्यात्, ततः स्वरेण पुत्रानुगानं विशेषतः प्रत्यक्षाधिगतविषयं दृष्टमित्यनुमानत्वसामान्यात् सामान्यतो दृष्टस्यापि देशान्तरप्राप्त्या सूर्ये गत्यनुमानस्य प्रत्यक्षाधिगतविषयता स्यात् । षड्जादिविवेकविषयं च प्रत्यक्षं गानशास्त्रपूर्वं दृष्टमिति घटादिप्रत्यक्षमपि तथा स्यात् । न चैवम् । अतो यथा तत्रान्यत्र दृष्टमन्यत्र न भवति, एवं पौरुषेये सापेक्षत्वं दृष्टमपि नापौरुषेयस्य भूतार्थस्यापि भवितुमर्हति । यदि पौरुषेये यद्दृष्टं तदपौरुषेयेऽपि स्यात्, ततः पौरुषेयं प्रमाणान्तराधिगतार्थं प्रमाणं दृष्टमित्यपौरुषेये प्रमाणान्तरासंभवान् प्रामाण्यं न स्यादित्युक्तं नतरामित्यर्थः ।

'मानान्तरस्याविषये विध्यर्थे तु प्रतिष्ठितम् । अनपेक्षत्वं प्रमाणत्वमश्नुते' इत्युक्तम्; तत्र दूषणमाह---अग्निचेति । यदि नियोगनिष्ठत्वे तत्र प्रमाणान्तरासंभवादनपेक्षत्वेन शब्दस्य प्रामाण्यं भवतीत्युच्यते, तदौषधपानसिकताभक्षणनियोगयोः प्रमाणान्तरासंभवात्तदनपेक्षत्वेन तद्वाक्ययोः प्रामाण्यं स्यात्; न चैतदिष्टम्, एकत्रानुवादकत्वात् अपरत्र च निर्मूलत्वेनाप्रामाण्यादित्यर्थः । अत्र लौकिकवैदिकनियोगवाक्ययोः पराभिप्रेतं

विशेषमाशङ्कयति—नरेति । तद्विवृतम्—अथेत्यादिना । साध्यसाधनभाव P. 81–22
इति विनियोगविवरणम्; स च ज्वरनाशौषधपानयोः स्वर्गसिकताभक्षणयोश्च द्रष्टव्यः । यो वेति; विनियोगस्यार्थान्तरकथनम् । तत्र नियोज्यो ज्वरवियोगकामः, विषयः पानम्, नियोगस्तु 'पिबेत्' इति लिङर्थः । एतदुक्तं भवति—यदि नामेदं नियोगेऽनपेक्षं वचः, तथापि विनियोगे सापेक्षत्वादप्रमाणम् । वेदे तु विनियोगेऽपि न सापेक्षत्वमित्यनपेक्षत्वात् प्रामाण्यमिति ।

एवं परेण लोकवेदनियोगवाक्ययोर्विशेष उक्ते, सिद्धान्ती प्रत्याह—नृबुद्धीति । हन्तेति तर्ह्यर्थे । यथा त्वमात्थ, इत्थमेवं तर्हि पुरुषबुद्धिपूर्वैव वचसः प्रमाणान्तरव्यपेक्षाया निबन्धनं कारणम्, तद्भावे लोके सापेक्षत्वात् तदभावे वेदे निरपेक्षत्वात्; न तद्विषये प्रमाणान्तरसंभवः कारणम्, यतः प्रमाणान्तराभावेऽपि लौकिकनियोगवाक्ये सापेक्षता दृश्यत इत्यर्थः ।

पुनरत्रैव विशेषान्तरमाशङ्कयति—अथेति । तत् तस्मात् वेदे न प्रमाणान्तरव्यपेक्षा, लोके तु तद्व्यपेक्षेति योज्यम् । यद्वचो यत्र पर्यवसितं तस्य प्रमाणान्तरगोचरत्वागोचरत्वाभ्यां तत् सापेक्षमनपेक्षं च युक्तम्, नान्यत्रेति भावः । सिद्धान्ती त्वाह—नेति । यथेति वैधर्म्यदृष्टान्तः ।

न शब्दमात्रकृतोऽयं विभाग इत्युक्तम्; तत्राशङ्कयति—अथेति । प्रमाणान्तरादर्थं ज्ञात्वा तत्र पुरुषो वचः प्रयुङ्क्ते । तेन तत् पौरुषेयं वचस्तन्निष्ठं प्रमाणान्तरगोचरविनियोगनिष्ठम् । इतरत्तु अपौरुषेयम् अन्यथा नियोगनिष्ठत्वेन स्थितमित्यर्थः । एतदुक्तं भवति—शब्दसामर्थ्येन नियोगनिष्ठतैवौत्सर्गिकी । पौरुषेये तु विनियोगनिष्ठता तदपवादः, न तु शब्दसामर्थ्यकृत एवायं विभाग इति । वैदिकं त्विति; वैदिकं तु शब्दसामर्थ्येन नियोगप्रधानम्, नियोगस्य कार्यत्वादित्यर्थः ।

अत्रोच्यते—मानान्तरेति । संभवि अन्यत् प्रमाणं यत्र स संभव्यन्यप्रमाणकः । तदयमर्थः—हन्त तर्हि मानान्तरसापेक्षत्वात् अस्य पुरुषवचसः संभव्यन्यप्रमाणको विनियोगो विषयः; न पुनः अस्मात् संभव्यन्यप्रमाण-

83-10. कत्वात् अस्य पुरुषवचसो मानान्तरे व्यपेक्षेति । तद्विधस्येति; संभवत्प्रमाणान्तरस्य विनियोगस्येत्यर्थः ।

उक्तमर्थं सोपपत्तिकमुपसंहरति—तस्मादिति । मानान्तरात् अर्थं गत्वा ज्ञात्वा परस्य श्रोतुरर्थप्रतिपत्तये पुरुषो वचः प्रयुङ्क्ते । तेन तद्विरि पुरुषवचसि प्रमाणान्तरसंभवात् पुरुषवचसः प्रमाणान्तरसंभेदो भवति । अतो न प्रमाणान्तरसंभवात्पुरुषवचसः प्रमाणान्तरव्यपेक्षेत्यर्थः । प्रमाणान्तरसापेक्षत्वेन पुरुषवचसः संभवत्प्रमाणान्तरो विनियोगो विषयो जातः, न तु संभवत्प्रमाणान्तरविषयत्वेनास्य मानान्तरव्यपेक्षेत्युक्तं भवति । तत्रेति; पुरुषवचसीत्यर्थः । अपेक्षाफलमाह—यत्रेति । संभवत्यस्येत्यस्यासंभवदुपलम्भबुद्धादिवाक्यमदृष्टविषयं व्यतिरेकः, न चानुपलभ्य इत्यस्य च संभवदुपलब्धिकमपि दृष्टविषयमनाप्तवाक्यं व्यतिरेक इति विवेकः ।

स्वोक्तमर्थमाचार्यसंमत्या द्रढयति—अपौरुषेयेति । तेन यत एव पौरुषेयापौरुषेयत्वनिबन्धने सापेक्षत्वानपेक्षत्वे, तेनैव हेतुनेत्यर्थः । अनपेक्षव्यपेक्षत्वयोर्निमित्ते इति षष्ठीसमासः । यतः पौरुषेयत्वनिबन्धनं सापेक्षत्वम्, अतो पुरुषबुद्धिजं यद्वेदान्तवाक्यं तद्भूतार्थमपि सत् न सापेक्षम्; अतो नाप्रमाणम् । अतस्तस्यानपेक्षत्वेन प्रामाण्यसिद्ध्यर्थं कार्यपरत्वकल्पना व्यर्थेति भावः । कथमौत्पत्तिकत्वेनानपेक्षत्वमित्युक्तमत आह—औत्पत्तिके हीति; नित्ये हि शब्दार्थसंबन्धे सति अपौरुषेयत्वात् प्रमाणानपेक्षत्वं भवतीत्यर्थः । ननु सत्संप्रयोगसूत्रेण प्रमाणान्तरासंभवोऽप्युक्तः; ततोऽसंभवोऽनपेक्षत्वे हेतुरिति सिद्धार्थत्वे प्रमाणान्तरसंभवात् सापेक्षत्वेनाप्रामाण्यं मा भूदिति तदसंभवाय कार्यार्थत्वं वेदान्तानामवश्यमाश्रयणीयमित्यभिप्रायेण चोदयति—नन्विति । सिद्धान्ती तु सत्यमुक्तं प्रमाणान्तरासंभवः; किंतु प्रमाणान्तरे सति चोदनैवेत्यवधारणं न स्यात्; अतस्तदर्थं स उक्तः; न त्वनपेक्षत्वेन चोदनाप्रामाण्यार्थमित्याह—सत्यमिति ।

यदि प्रमाणान्तरसंभवेऽपि चोदनाप्रामाण्यं स्यात्, ततः किं निराकरणेन? तेन सापेक्षत्वेन चोदनाप्रामाण्यव्याघातो मा भूदिति प्रमाणान्तरनिराकरणं कृतम्; अतो युक्तं सिद्धार्थानां च वेदान्तानां संभव-

त्प्रमाणान्तरार्थत्वेन सापेक्षत्वादप्रामाण्यं स्यादिति प्रमाणान्तरासंभवाय कार्यपरत्वमाश्रयितव्यमित्यभिप्रायेण परः पृच्छति—अथेति । सिद्धान्ती तु P. 84-8. प्रमाणान्तरसंभवात् सापेक्षत्वं मा भूदिति नेदं तन्निराकरणस्य प्रयोजनम्; अपितु धर्मतत्त्वज्ञानम्; सापेक्षत्वमपौरुषेयत्वादेव दूरनिरस्तावकाश-मित्यभिप्रायेणाह—धर्मेति । कुत इत्यत आह—प्रमाणेति । प्रमाणान्तर-संभवे हि बुद्धादिप्रत्यक्षगोचरश्चैत्यवन्दनादिरपि धर्मः स्यात्; तत्राग्नि-होत्रादिरेव धर्मतत्त्वमवधारितं न स्यादित्यर्थः । किं तेनावधारितेनेति चेत्, अत आह—तदिति । अयं यत्न इति; प्रमाणान्तरानिराकरणयत्न इत्यर्थः। अथ चोदनाप्रामाण्यार्थ एव स किं न स्यादित्यत आह—चोदनेति । चोदनाप्रामाण्यमपि धर्मतत्त्वनिर्णयार्थमेवान्विष्यते । अतः स एव प्रधानम्, न चोदनाप्रामाण्यम् । न च प्रधानार्थत्वे संभवत्यप्रधानार्थतोचितेति भावः। अथवा प्रमाणान्तरसंभवे विरुद्धार्थमपि कदाचित्स्यात्; यथा अग्नीषोमीय-हिंसादेरधर्मत्वे विहारप्रवेशादेश्च धर्मत्वे बुद्धप्रत्यक्षम्; तत्र च दुर्बलत्वे चोदनायास्तेन बाधा स्यात्, तुल्यबलत्वे च संशयः संभवेत्; तेन बाधसंशयोत्थाप्रामाण्यनिवृत्तये प्रमाणान्तरासंभवः प्रतिपाद्यते सत्संप्रयोग-सूत्रेण; न तु प्रमाणान्तरसंभवे सापेक्षतानिबन्धनाप्रामाण्यनिवृत्त्यर्थ-मित्याह—अथवेति । ननु यदि विरोधिप्रमाणान्तरे संभवति शब्दो न प्रमाणं स्यात्; तत्प्रामाण्याय तर्हि विरोधिनः प्रमाणान्तरस्याभावोऽपेक्ष-णीयः; अतश्च सापेक्षत्वं तदवस्थम् । भूतार्थेषु च वेदान्तेषु येषु प्रमाणान्तरसंभवान्न तदभावः, तेषां प्रामाण्यं न स्यादित्यभिप्रायेण चोद-यति—नन्विति । सिद्धान्ती तु काममपेक्ष्यतां विरोधिप्रमाणान्तराभावः, तत्रापि न तावच्छब्दस्य सापेक्षत्वम्; प्रमाणान्तरापेक्षत्वं हि सापेक्षत्वम्; न च प्रमाणान्तराभावः प्रमाणान्तरम्, अनवबोधकत्वादित्याह—काममिति। यदि च भूतार्थेषु विरोधिप्रमाणान्तरसंभवमात्रेणाप्रामाण्यं स्यात्, ततः प्रत्यक्षादावपि भूतार्थे तत्स्यादित्याह—विरोधीति । किंच विरोधिप्रमाणान्तर संभवादप्रामाण्यं कार्यनिष्ठत्वेऽपि वेदान्तानामपरिहार्यमित्याह—अपिचेति । कुत इत्याह—कर्तव्येति । कार्यनिष्ठत्वेऽपि वेदान्तानां प्रतिपत्तिकर्तव्यता-पेक्षितप्रतिपत्तव्यात्मस्वरूपभूतार्थप्रतिपत्तेरिष्टत्वात्, तत्र च प्रमाणान्तरविरोध-

संभावना यतोऽस्तीत्यर्थः । एवं तावत् 'न तु तदभावोऽपेक्षणीयः' इति परोक्तं दूषितम् । अधुना पराभिप्रायमनुभाष्य तत्र पूर्वोक्तं दोषमनुकीर्त्य तमुपजीव्य 'भूतार्थमपि' इत्युपसंहारपरं श्लोकार्थं योजयति—
. 84-19 भूतार्थस्येति । तेनेति; परेणेत्यर्थः । किलशब्दोऽरुचिद्योतनार्थः । कार्यनिष्ठत्वे तु स्वतन्त्रेणेत्यत्र 'अर्थं प्रतिपादयति' इत्यनुषज्यते । तत्र गोचरत्वात् इत्यन्तेन पराभिप्रायानुभाषणम् । 'उक्तेन' इत्यादिना 'न च संभवमात्रं सापेक्षत्वम्' इत्यन्तेनोक्तदोषानुकीर्तनम् । भूतार्थमपीत्यादिना चोपसंहार इति विवेकः ।

इदानीं वेदान्तानामविधिशेषत्वे क्रियां विना पदार्थसंसर्ग एव न स्यादिति परोक्तं दोषमाशङ्कयति— अथेति । क्रियया विना पदार्था न संसर्गभाजो भवन्ति; तस्मात् 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिपदार्थानां तव संसर्गो न स्यादिति भावः । तद्दूषयति—किमिति । क्रियां विना चेन्न संसर्गः, अस्तु तर्हि क्रिया; किमायातं विधेः? येन तदनुप्रवेशो वेदान्तानां वर्ण्यत इत्यर्थः । ननु साप्यश्रूयमाणा वेदान्तेषु दुर्लभेत्यत आह—सापीति । सापि क्रिया अस्त्यादिरूपा क्व न सुलभा? अपितु सर्वत्रैव सुलभा; यत्रान्यत् क्रियापदं न श्रूयते, तत्र "अस्तिर्भवन्तीपरः प्रयोक्तव्यः" इति न्यायेनास्तिक्रिया सुलभैवेत्यर्थः । 'अस्तिः' इति धातुना तदर्थं लक्षयति; "यजातस्तु द्रव्यदेवताक्रियम्" इतिवत् । आदिशब्देन यथासंभवमन्याः क्रिया गृह्यन्ते; यथा 'द्वारं द्वारम्' इत्यत्र 'अपाव्रियतां, संव्रियताम्' इति । वेदान्तेष्वस्तिक्रियैव विवक्षिता । एतद्विवृणोति— यदीत्यादि । आख्यातपदार्थः क्रिया, तां विना न प्रातिपदिकार्थानां संसर्गः; यतः क्रियाप्रातिपदिकार्थानामन्योन्यमरुणैकहायनीन्यायेन संश्लेषहेतुः कृतः । प्रातिपदिकार्थानामन्योन्यसंसर्गाभावे क्रियायाः साकाङ्क्षत्वात्; क्रिया हि साध्या, प्रातिपदिकार्थश्च सिद्धः; साध्यं च सिद्धमपेक्षते; तच्च विशिष्टं पदार्थान्तरसंसर्गेण विशिष्टं भवति, एकहायनीवारुणिम्ना । तेनान्योन्यं नान्यार्था क्रिया संसर्गमाकाङ्क्षते; आकाङ्क्षाहेतुकश्च पदार्थानां संसर्गः । तेन क्रिया तेषां संसर्गहेतुः । अतस्तया विना न भूतार्थसंसर्गसिद्धिरित्यर्थः । अतः को दोष इत्यत आह—अत

इति । न शब्दगोचर इति; न पदार्थ इत्यर्थः । अविदितसंगतित्वे P. 85-3.
ब्रह्मणो वाच्यस्य प्रमाणान्तरेणावगमो हेतुः । तत्र सिद्धान्त्याह—एवमिति । पदार्थसिद्धिरिति; ब्रह्मपदार्थोऽभिप्रेतः । कश्चिदर्थ इत्यर्थशब्दः प्रयोजनार्थः । सा चास्त्यादिक्रियेत्यन्वयः । अत्र हेतुमाह—अस्तिरित्यनेन । यत्रान्यत्क्रियापदं न दृश्यत इति न्यायो दर्शितः । इतिहेतौ; अस्मात्न्यायादित्यर्थः । भवन्ती वर्तमानार्था विभक्तिः । तदेवमस्तिक्रियालाभे तन्निबन्धन एव वेदान्तेषु पदार्थसंसर्गे न दोष इत्याह—तत्रेति; अस्तिक्रियालाभे सतीत्यर्थः । नन्वस्त्यर्थनिष्ठं चेद्वाक्यम्, कथं स्वरूपप्रतिपत्तिपरम्? न ह्येकं वाक्यमुभयपरं युज्यते, वाक्यभेदप्रसङ्गात् । अतोऽस्त्यर्थनिष्ठत्वे वेदान्तानां न ततः सत्यानन्तादिरूपस्य विशिष्टस्य ब्रह्मवस्तुनः सिद्धिरित्याशङ्क्याह—सत्ताया इति । 'देवदत्तः पचति' इति कर्ता क्रियाशेषः; क्रियैव तु साध्यतया प्रधानम् । सत्यज्ञानानन्तरूपं ब्रह्मास्तीति तु ब्रह्मप्रधान एवास्त्यर्थः, न पाकवत्प्रधानतया प्रतीयते । नन्वत्र द्वितीया नास्ति; कथं कारकप्रधानेत्यत आह—प्रकृत्यैवेति । स्वभाव एष सत्तायाः सत्प्रधानता । किंच 'ब्रह्मास्ति' इति सत्ताविशिष्टं ब्रह्म प्रतीयते; अतो विशेष्यत्वादपि स्वतस्तस्य प्रधानतेत्यर्थः ।

अत्र सत्तासामान्यापह्नववादिन आहुः—प्रमाणावगम्यतैव सत्ता, न ततोऽन्येति; तदाह—अत्रेति । तत्र हेतुमाह—तथाहीति । विपर्यय इति; प्रमाणानवगम्य इत्यर्थः । नन्वयं सदसद्विभागहेतुः किं न स्यादित्यत आह—न खल्विति । ननु किमित्यन्यो हेतुर्न लक्ष्यते? यावतार्थक्रियाभावाभावावेव हेतू भविष्यतः; तथाहि—यदर्थक्रियाकारि तत्सत्, अन्यत्तु नृशृङ्गाद्यसदित्युच्यत इत्याशङ्कयति—अर्थेति । तद्दूषयति—नेति । अर्थक्रियाभावाभावावप्यर्थक्रियाग्राहिणः प्रमाणस्य भावाभावाभ्याम्, नान्यतः । एवं चेद्वस्तुसदसत्त्वमपि ताभ्यामेवास्तु; किमर्थक्रियाभावाभावाभ्याम्? इति भावः । ननु अर्थक्रियाभावाभावावप्यर्थक्रियाभावाभावनिबन्धनौ भविष्यतः; न प्रमाणभावाभावनिबन्धनावित्याशङ्क्याह—तथाहीति । तद्विपर्ययादिति; प्रमाणाभावादित्यर्थः । एवं प्रमाणविषयतां सत्तां प्रसाध्य प्रकृते योजयति—तथाचेति । तथाच वेदान्तानामस्त्यर्थनिष्ठत्वे प्रमाणान्तरसापेक्षत्वेना-

प्रामाण्यप्रसङ्गात् प्रामाण्याय तेषां कार्यनिष्ठत्वमेष्टव्यमिति भावः । तद्दूष-
85-18 यति—अत्रेति । इतिशब्दो बुद्धिशब्दौ निर्दिशति ; तेनायमर्थः—
'अस्ति' इति बुद्धेः शब्दस्य च मानावगम्यत्वं न च विषयो मतम् ;
न मानावगम्यता सत्तेत्यर्थः । 'अस्ति' इत्यविवक्षितकालनिर्देशः, अत
एव अभूत्, अस्ति, भविष्यतीति बुद्धिः । जाते हि माने मानविषयता,
न पूर्वमेव ; अतश्च न मानविषयत्वम् 'अस्ति' इति बुद्धेर्विषयः । ततो
धूमादिभ्यो वह्न्यादौ जाते माने पश्चात् 'अस्ति' इति बुद्धिः स्यात् ।
सा तु स्वयमेव 'अस्ति' इति जायते । अतो मानविषयत्वादन्या
वस्तुस्वभावभूता सत्तास्तीति भावः । 'अस्ति'बुद्धावेव दूषणोपपत्तौ
भूतभविष्यदर्थबुद्ध्युपन्यासो वक्ष्यमाणदूषणार्थः । अथ माने जाते पश्चात्
'अस्ति'बुद्धिर्भवतीत्युच्यते, तत्राह—भिद्येतेति । प्रमाणादुत्तरकाले
'अस्ति' इति बुद्धिर्भवतीति न त्रिधा भूतभविष्यद्वर्तमानविषयत्वेन भिद्येत,
अपि तु वर्तमानविषयैव स्यात् । यद्यपि वस्तु त्रिकालम्, तथापि
प्रमाणसंबन्धस्त्रिष्वपि वर्तमान एवेत्यर्थः । वाशब्दः पक्षान्तरविकल्पार्थः ।
नास्तीति बुद्धेरिति ; 'अस्ति' इति बुद्धेः तत्प्रमाणावगम्यत्वं न विषय
इति योज्यम् । पूरविशेषादिति ; सेतुनिमित्तपूरनिवृत्त्यर्थं विशेषग्रहणम् ।
मेघोदयविशेषादिति च विरोधिवायुसंयुक्तमेघनिवृत्त्यर्थम् । वैयात्यादिति ;
धाष्टर्यादित्यर्थः ।

अथ स्वात्मसंबन्धितया या प्रमाणविषयता, सैव धूमादिलिङ्गत्रयजेन
प्रमाणेन गृह्यते ; अतोऽस्त्यर्थबुद्धेः प्रमाणविषयाया अपि नोत्तरकालता, न
च भिते स्यादित्युच्यते ; तथापि त्रिकालेष्वर्थेषु तत्प्रमाणावगम्यतया वर्त-
मानत्वादस्त्यर्थबुद्धिर्न त्रिधा भिद्येत । किंच इत्थं सति स्वविषयतयैवा
स्त्यर्थः प्रमाणेन गृह्यत इत्यस्त्यर्थनिष्ठेऽपि वचसि प्रमाणान्तरापेक्षा न
स्यात् । अतो यदुक्तम्—तथा चास्त्यर्थनिष्ठं वाक्यं प्रमाणान्तरापेक्ष-
मिति, तदयुक्तमिति । तदेतत् सर्वमाह—अथेति ।

अथ स्वविषयता लिङ्गेन प्रमाणेन न गृह्यते, किंतु प्रमाणान्तर-
विषयता ; किं तत् प्रमाणान्तरमिति चेत्, प्रत्यक्षमिति ब्रूमः । तच्च
त्रिकालम् ; तथाहि—भूते भूतं कस्यचित्प्रत्यक्षम्, अनागते अनागतम्

वर्तमाने वर्तमानम् । अतः प्रत्यक्षस्य त्रैकाल्यात् तद्विषयतापि त्रिकालेति 'अभूत्, अस्ति, भविष्यति' इति त्रिधा भेदोपपत्तिः । प्रमाणान्तरापेक्षत्वाच्चास्त्यर्थनिष्ठत्वे वेदान्तानामप्रामाण्यप्रसङ्गात् कार्यनिष्ठत्वमेष्टव्यमिति चेत्; उच्यते— तदसारम् । एवं हि सति नित्यानुमेये परमाणावप्रत्यक्षे प्रमाणान्तरविषयता नास्तीति स्थूलदर्शनेन परमाणुर्नानुमीयेत । तथा मन्त्रलिङ्गानुमेया विनियोजिका श्रुतिरप्यत्रोदाहार्या । किंचैवं सति न केवलं वेदान्तानामेव सापेक्षत्वादप्रामाण्यम्, अपितु लिङ्गस्यापि धूमादेः स्यात्; अतोऽनुमानमपि प्रमाणं न स्यात्; तदेतदाह —अन्येति । अत्राशङ्कयति— P. 86-13.
तत्सिद्धेरिति । तत एव धूमादेर्लिङ्गात् तत्सिद्धेः प्रमाणान्तरस्य सिद्धेः प्रसिद्धेः ज्ञानात् लिङ्गस्य नैरपेक्ष्यं यदीत्यर्थः; संवादकप्रमाणान्तरानपेक्षां हि नैरपेक्ष्यं व्याहरन्ति । इह तु प्रमाणान्तरं न संवादायापेक्ष्यते, अपितु प्रमीयते । तत्प्रमितौ च लिङ्गं निरपेक्षमेव । तद्द्वारेण चाप्तवाक्यवदर्थसिद्धिः । अतः प्रामाण्यं लिङ्गस्येत्यभिप्रायः । चेच्छब्दः पादपूरणार्थः । यद्वा तत एव चेत्तत्सिद्धिः, तथा सति न नैरपेक्ष्यं यदीति योज्यम् । अत्रोत्तरमाह— नेति । इत्थं यन्नैरपेक्ष्यं तदस्त्यर्थनिष्ठेऽपि वेदे राजदण्डैर्लगुडैर्वापि न निवार्यते । वेदान्तेष्वप्येतत् समानम् । तेषामपि हि प्रमाणान्तरस्य ततः सिद्धेः तत्प्रमितिद्वारेण चार्थसिद्धेः प्रामाण्यमप्रतिहतमित्यर्थः ।

तत्र परो वेदान्तलिङ्गयोर्वैषम्यमाह —तत्संभव इति । लैङ्गिके नदीपूरधूमादिलिङ्गगम्ये वृष्ट्याद्यावर्थे तत्संभवः प्रमाणान्तरस्य संभवः । तेन तत्र तत्प्रमितिद्वारेणार्थसिद्धेर्युक्तं प्रामाण्यम्; न त्वत्र वेदान्तैकवेद्यब्रह्मणीति यत्, तदसमञ्जसम्; कुतः? ब्रह्मण्यपि साक्षात्करणाभ्युपगमात् साक्षात्कारि ज्ञानमस्ति । अतस्तत्प्रमितिद्वारेणार्थसिद्धौ वेदान्तानामपि प्रामाण्यमप्रतिहतमिति भावः । एवमिति; प्रमाणान्तरप्रमितिसिद्धेस्तत्प्रमितिद्वारेण चार्थद्वारेण वा तत्प्रमेयसिद्धेरित्यर्थः । अर्थे तस्येति; तस्य लिङ्गस्यार्थे विषये प्रमाणान्तरस्य प्रत्यक्षस्य संभवादित्यर्थः । बुद्धादिवाक्यानामतीन्द्रियार्थोपदेशिनामिति व्यवहितेनान्वयः । 'एवमयं पुरुषो वेद' इति पौरुषेयवाक्यत्वेनौचित्यप्राप्तमनुमितम्, न च बुद्धवाक्येषु ज्ञाननिष्ठास्ति, अतीन्द्रियेऽर्थे ज्ञानस्यासंभवात् । अतो ज्ञाननिष्ठानामिति ज्ञानस्यासंभवादिति चानयोर्न

विरोधः । ननु ब्रह्म साक्षाच्चेत् भाति, कथं तर्हि 'आम्नायतः प्रसिद्धिं
87-12 च' इत्यत्राम्नायैकप्रमाणकं तदुच्यत इत्याशङ्क्याह—अविद्यावतामिति ।
यद्यप्यविद्यावतामपि आत्मा साक्षाद्भाति, तथापि न ब्रह्मरूपेण; अपि त्वहंकारानुबद्धेन जैवरूपेण । विद्यावतां तु निर्मुक्ताहंकारादिग्रन्थिः साक्षाद्भातीति विशेषः । ननु प्रमाणविषयता सत्ता; नित्यात्मप्रकाशाविर्भावः प्रमाणम् । न हि तत्प्रत्यक्षम्, अनिन्द्रियजत्वात्; अनुमानादि तु दूरनिरस्तावकाशम् । न च ब्रह्मणस्तद्विषयता; भिन्नयोर्हि विषयविषयिभावो भवति; न च ब्रह्मतत्प्रकाशयोर्भेदोऽस्ति, द्वैतप्रसङ्गात् । उच्यते—प्रमाणविषयतां सत्तामिच्छतापि प्रमाणफलमनुभवः संदिष्टः । न स प्रमाणविषयः, स्वयंप्रकाशत्वाभ्युपगमात् । अतस्तस्य सत्ता न स्यात् । न चैवमिष्टम् । अतः प्रतिभासमानतामात्रं प्रमाणविषयता परस्येष्टा, न तु विषयविषयिभावः । तादृशी च सा ब्रह्मण्यप्यस्तीति सिद्धान्ती मन्यते । यत्तु नेदं प्रत्यक्षम्, अनिन्द्रियजत्वादियुक्तम्; तत्र ब्रूमः—न 'इन्द्रियजं प्रत्यक्षम्' इति प्रत्यक्षलक्षणम्; अपितु साक्षात्प्रतीतिः; अन्यथा अनुभवोऽप्रत्यक्षः स्यात् । सा च ब्रह्मण्यप्यस्तीति न दोषः । यत्त्विन्द्रियजं सूत्रकृतोक्तम्, तद्बहिर्विषये साक्षात्प्रतीतिरितीन्द्रियजा । तेन धर्मादौ बुद्धादेर्भावनाबलजा न युज्यते । अतो धर्मे चोदनैव प्रमाणमिति दर्शयितुमिति सर्वमनाकुलम् । यत्तूक्तम्—प्रमाणान्तरसंबन्धस्य त्रैकाल्यात् 'अभूत्, अस्ति, भविष्यति' इति त्रैविध्यमिति, तदप्ययुक्तमित्याह—अपिचेति । यदि मीयमानता सत्ता, ततः प्रमाणान्तरमपि मीयमानत्वात् सदेव; सत् वर्तमानम्; अतस्तस्यैव त्रैकाल्यमसिद्धमिति समुदायार्थः ।

इदानीं दूषणान्तराभिधित्सया विकल्पयति—अपिचेति । प्रमाणसंबन्ध इति श्लोकस्थयोगविवरणम् । तद्विपर्ययोऽसत्तेति; वर्तमानप्रमाणासंबन्धोऽसत्तेत्यर्थः । अनाश्रितकालविशेषामित्यत्र 'प्रमाणसंबन्धः सत्ता, तद्विपर्ययोऽसत्ता' इत्यनुषञ्जनीयम् । तदा च प्रमाणमात्रायोगो विपर्ययोऽभिमतः । तत्राद्ये तावत् पक्षे दोषमाह—तत्रेति । मते इति; सत्तासत्ते समुच्चित्य द्विवचनम् । पूर्वप्रमितं हि स्मर्यते; अतोऽस्य वर्तमानप्रमाण-

संबन्धः स्वयमप्रमाणमिति भावः । अत्र चोदयति—नन्विति । P. 88-1.
सिद्धान्त्याह— सत्यमिति । नास्तीति स्यादिति ; स्मृतौ वर्तमानप्रमाणयोगाभावादित्याशयः ।

द्वितीये पक्षे दोषमाह—प्रमाणेति । अनाश्रितकालविशेषप्रमाणयोग मात्रं चेत् सत्ता स्यात्, ततो भूतेनापि प्रमाणयोगेन भूतोऽपि घटः संप्रति सन् स्यात् । ततश्च नष्टोऽप्यनष्ट इव मधुधारणादिकार्यं कुर्यात् ; न चैवम् । अतो न प्रमाणयोगमात्रं सत्ता । नष्टानष्टत्वेन तयोर्विशेषात्, नानष्टवन्नष्टस्य कार्यकरत्वप्रसङ्ग इति चेत्, तन्न ; यदि प्रमाणयोगायोगौ विहाय नष्टानष्टत्वाभ्यां विशेषं ब्रूषे, स एव तर्हि नष्टानष्टत्वलक्षणो विशेषः 'अविनष्टं सत्, नष्टमसत्' इति सदसद्व्यवहारहेतुरस्तु ; यथा तव 'अनष्टात्कार्यं, न नष्टात्' इति कार्यव्यवस्थायाम्, न तु प्रमाणयोग इत्यर्थः । एतदेव लोकतो द्रढयति—तदिति ; नष्टानष्टत्वाख्यं विशेषं तदा परामृशति, एषेति च सदसद्व्यवहारव्यवस्थाम् । उपचरतीति ; उपदिशति जानाति वा, चरेर्गत्यर्थस्य ज्ञानार्थत्वात् । किंच प्रमाणयोगमात्रं चेत् सत्ता, तदा पूर्वप्रमितमपि संप्रति सदेवेति नेदानीं तस्य सदसत्त्वयोः पुनर्जिज्ञासा स्यात्, अस्ति च सा । अतोऽपि न प्रमाणयोगमात्रं सत्तेत्यर्थः ।

इदानीं पक्षान्तरमाशङ्क्य दूषयति—अथेति । अथ प्रमाणयोग्यत्वमर्थधर्मः सत्ता ; तच्च नष्टादर्थाच्च्युतम् ; धर्मिनाशे नष्टमिति यावत् ; अतो न नष्टस्य प्रमाणयोग्यत्वमिति तस्य सत्त्वप्रसङ्गः । स्मर्यमाणे च क्वचिदेव प्रचलितं धर्मिनाशेन नष्टम्, न सर्वत्र । अतो न सर्वस्य सत्त्वप्रसङ्ग इत्युच्यते, तदप्यसुन्दरमित्यर्थः । तत्र 'नष्टाच्च तच्च्युतम्' इत्यनेन नष्टस्य सत्त्वप्रसङ्गः, प्रमिते जिज्ञासानुपपत्तिश्च प्रत्युक्तौ । 'स्मर्यमाणे' इत्यनेन च वर्तमानप्रमाणयोगसत्तापक्षे सर्वस्मर्यमाणासत्त्वप्रसङ्गः प्रत्युक्त इति विवेक्तव्यम् । असुन्दरत्वमाह—अभ्युपगतेति । अभ्युपगतहानमाह—तथाहीति । प्रमाणसदसद्भावोपाधिः सदसद्व्यवहारः, न तु वस्तुधर्मोऽर्थात्मिका सत्तास्तीति परस्याभ्युपगमः ; स प्रमाणयोग्यतामर्थगतामर्थात्मिकां सत्तामिच्छता परित्यक्त इत्यर्थः । अर्थस्वभाव इति ; अर्थात्मिका, न

प्रमाणयोगात्मिका; अर्थस्य वा स्वभाव इत्यर्थः । किंच एवं सति
88-20 वेदान्तानामस्त्यर्थनिष्ठसापेक्षत्वदोषोऽपि नास्तीति वक्तुमुपक्रमते—प्रमाणेति ।
'प्रमाणयोग्यः' इति भावप्रधानो निर्देशः, योग्यतेत्यर्थः । धर्मधर्मिणोरभेद-
विवक्षया चेदमुक्तम् । यद्वा प्रमाणयोग्यतारूपोऽप्यर्थस्वभावः प्रमेयत्वात्
प्रमाणयोग्य इत्यर्थः । ननु प्रमाणयोग्यता सत्तेत्याख्यायते; अतस्त-
न्निष्ठत्वेऽपि वेदान्तानां प्रमाणान्तरसंस्पर्शात् सापेक्षता तदवस्थैवेत्यभिप्रायेणा-
शङ्क्याह—तस्य त्विति । तस्य त्वर्थस्वभावस्य कथनोपाय एव यत्
प्रमाणसंबन्धो नाम; योग्यता तु प्रमाणाद्बहिरर्थात्मिका, न तु प्रमाण
योगात्मिका; अतो न तस्यां प्रमाणसंस्पर्शोऽस्तीत्यर्थः । एतदुक्तं भवति—
योग्यता सदर्थ इत्युक्ते या काचित् योग्यता मा प्रतीयतामिति तद्विशेष-
प्रतिपत्तये प्रमाणयोग्यतेत्याख्यायते; न तु प्रमाणं योग्यताशरीरान्तर्भूतम्,
येन योग्यतायां सदर्थे प्रमाणमुपाधिः स्यादिति । यद्विशेषप्रतिपत्त्यै यत्
संकीर्त्यते तदेव तच्छब्दप्रवृत्तावुपाधिर्भवतीत्यत्र दृष्टान्तमाह—यथेति ।
नीलज्ञानमुपाधिर्यस्येति विग्रहः । परोक्तदोषाभावमिदानीमाह—तथा चेति ।
स इत्यर्थस्वभाव उच्यते ।

अत्र परश्चोदयति—स्यादिति । सिद्धान्ती त्वाह—मा भूदिति ।
मा भूदेका सत्ता, नास्माकमेतत् साध्यं यदेका सत्तेत्यर्थः । किं नाम
साध्यमित्यत आह—सर्वथेति । एका भवतु सत्ता, अनेका वा; सर्वथा
अर्थात्मिकां सत्तामस्तिशब्दोऽभिधत्ते, न 'सन् प्रमाणयोगनिमित्तः'
इति एतन्न साध्यमिति पूर्वेणान्वयः । किमिति पुनः प्रमाणयोगनिमित्तत्वा-
भावमात्रं साध्यते, न सत्तैकत्वमित्यत आह—प्रमाणेति । प्रमाण-
योगनिमित्तत्वे सन्शब्दस्य, अस्त्यर्थनिष्ठेषु वेदान्तवाक्येषु प्रमाण-
संस्पर्शोऽर्थः स्यात्; तथा सति च तेषां सापेक्षता स्यादिति प्रमाणयोग-
निमित्तः सन्शब्दो भवतीत्येतन्न साध्यम् । अनेकता तु सत्ताया न
कंचिद्दोषमावहतीति नैकता साध्येत्यर्थः । एतच्चाभ्युपगमवादेनोक्तम् ।
परमार्थतस्तु, यद्येका सत्ता नेष्यते तदानन्तैर्भावैः संबन्धग्रहणासंभवात्
अनन्तशक्तिकल्पनाप्रसङ्गाच्च न तेषु 'सत्' इत्येकः शब्दः प्रवर्तेत;
तस्मादेका सत्तैष्टव्येत्यर्थः । ननु भिन्नेष्वप्यभिन्नशब्दप्रवृत्तिर्दृष्टा; यथा—

गोव्यक्तिषु गोशब्दस्य दण्डिषु दण्डशब्दस्य विभीतकादिषु चाक्षशब्दस्येत्याशङ्क्य, सत्यं दृष्टा, किंतु त्रिभिः प्रकारैः; इह तु सत्तामेकां विना तेषामेकोऽपि प्रकारो नास्तीति हृदि कृत्वा तत्प्रकारत्रयं तावदुपन्यस्यति — तथाहीति । भिन्नं विभीतकत्वादिजातित्रयं निमित्तं प्रवृत्तौ यस्येति विग्रहः । P. 89-6.
तत्र स्वबुद्ध्या रज्यते येन विशेष्यं तद्धि विशेषणम्; उपलक्षणं तु चिह्नमात्रम्; तच्चातीतमपि भवति । न च प्रमाणयोग्येष्वरितशब्दप्रवृत्तावेषामन्यतमः प्रकारोऽस्तीति दर्शयितुं साधारणशब्दं तावन्निरस्यति —न तावदिति । अनन्ताश्च ते अर्थाश्चभावा इति विग्रहः । हेतुमाह — संबन्धेति । संबन्धिनो गृहीत्वा हि संबन्धो ग्राह्यः; न चानन्ता ग्रहीतुं शक्याः संबन्धिनः । अतस्तैस्तच्छब्दस्य संबन्धग्रहणासामर्थ्यमित्यर्थः । अक्षादिषु तु साधारणशब्दत्वं युक्तमित्याह—परिमितेति । विभीतकत्वादिजातिविषयाः, तदुपलक्षिता वाक्षादिशब्दाः । तेन तत्र परिमितजातित्रयेण तद्द्वारेण वा अनन्ताभिरपि तद्व्यक्तिभिः संबन्धग्रहणसंभव इति भावः । ननु ममापि द्रव्यत्वादिजातित्रयोपलक्षितानामनन्तानामप्यर्थानां सच्छब्दः साधारणो भविष्यति, किं सत्तयेति चोदयति —द्रव्यादिति । एतच्च त्रिपदार्थसांकरी सत्तेति दृष्टचोक्तम् । तद्दूषयति — तत्रेति । कथमित्याह — न किलेति । न हि सर्षपं दृष्टवतो मेरौ 'तदेवेदम्' इति परामर्शोऽस्तीति सत्तापह्नवे या युक्तिः, सा द्रव्यत्वाद्यपह्नवेऽपि तुल्या यत इत्यर्थः । किंच जात्यादिष्वपि सच्छब्दोऽस्ति, स द्रव्यत्वादिनिमित्तत्वे न स्यादित्याह — अपिचेति । नन्वौपचारिकस्तेषु सच्छब्द इत्याह—न तेष्विति । हेतुमाह —प्रत्यय इति । यत्र हि प्रत्ययवैलक्षण्यं तत्रान्यशब्दोऽन्यत्रोपचरितः स्यात्; यथा अग्निशब्दो माणवके । जात्यादिषु 'सत्' इति प्रत्ययस्यावैलक्षण्यम्; अतो नोपचार इत्यर्थः । तदुक्तम् —"जात्यादिष्वपि सद्बुद्धेः सत्ता तज्जातिषु स्थिता" इति । किंच शौर्यादिसामान्यात् सिंहादिशब्दानामुपचारो दृष्टः; न च द्रव्यादित्रयस्य जात्यादित्रये किंचिदेकं सामान्यमस्ति; अतो नोपचार इत्याह —न चेति । अथास्ति सामान्यमेकम्, ततः सिद्धमस्मदिष्टमित्याह —सतीति । तुल्यत्वादिति । द्रव्यादिषु च 'सत्' इति प्रत्ययाविशेषादित्यर्थः ।

89-15 प्रकारान्तरेण सच्छब्दस्य साधारणतामाशङ्कयति—अथेति । कणभुगादिप्रवक्तॄणां प्रवादेषु प्रवचनेषु सर्वे पदार्थाः परिमितैः कैश्चित् षड्भिः पञ्चभिर्वा धर्मैः षट्पञ्चादिप्रभेदेन संगृहीताः । ततश्च षट्पञ्चादिपरिमितधर्मोपलक्षणानामनन्तानामप्यर्थानां 'सन्' इति साधारणशब्दो भविष्यति, यथा विभीतकत्वादिजातित्रयोपलक्षणानामनन्तानां व्यक्तीनामक्षशब्द इत्यर्थः । तत्र गुणवत्त्वं द्रव्याश्रयत्वं निर्गुणत्वं संयोगविभागयोरनपेक्षकारणत्वम् अनुवृत्तबुद्धिहेतुत्वम् अत्यन्तव्यावृत्तबुद्धिहेतुत्वम् इहप्रत्ययहेतुत्वमित्येतैर्धर्मैर्द्रव्यादिषट्पदार्थाः कणभुक्प्रवादे संगृहीताः । एवमन्येष्वपि प्रवादेषु वाच्यम् । तद्दूषयति—तदेति । अयुक्तत्वमाह—संग्रह इति । न हि 'षड् गावः' इत्येकेन गोत्वेन विना षड् गोव्यक्तयः संग्रहीतुं शक्याः । तत्र सत्तानभ्युपगमाद्यदि सच्छब्दतायां संग्रहः क्रियते—षट्प्रभेदः सच्छब्दार्थ इति, तत सच्छब्दार्थस्य षट्संख्यत्वमुक्तं स्यात्, न तु पदार्थान्तरत्वम् । तत् कृत्स्नं जगन्न संगृहीतं स्यात्; यथा 'नवविधो गोशब्दार्थः' इत्युक्ते गोशब्दार्थस्य नवविधत्वमुक्तम्, न पुनर्गोशब्दार्थादन्ये न सन्तीति । तन्नैतावत्प्रभेदा एव जगत्यर्थाः, नान्ये इत्येवमर्थतत्त्वावगतिः प्रवादेभ्यो न स्यादिति कृत्स्नजगत्संग्रहाय प्रवृत्ताः प्रवादास्तदभावे व्यर्थाः स्युरित्यर्थः । पर आह—नन्विति । सच्छब्दस्य साधारणत्वाभावस्तव साध्यः, न प्रवादानामर्थवत्ता । अतो यदि नाम तेऽप्यर्थाः, तथापि तदुपदर्शितैः परिमितैर्धर्मैः सच्छब्दसाधारणत्वोपपत्तेर्न तवाभिमतसाध्यसिद्धिरिति भावः । सिद्धान्तान्तरदूषणाख्यं निग्रहस्थानं चेदम् । सिद्धान्ती त्वाह—नेति । साम्यमाह—किंत्विति । प्रवादिनः प्रवक्तारः कणादादयः । हेतुमाह—यत इति । यथा 'षड् गावः' इति नैकमुपसंग्राहकं गोत्वं विना षट्संख्यानिवेशः, तथा पञ्च षडित्यादिपदार्थसंग्रहेऽपि नैकं सामान्यं विना पञ्चषडादिसंख्यानिवेशः । तस्मादेकं किंचित्सामान्यं प्रवादिनः प्रतिपद्यन्ते; तच्च सत्तेत्यर्थः । बौद्धानां विज्ञानवादिनां रूपविज्ञानवेदनासंज्ञासंस्काराख्याः पञ्च पदार्थाः; कणभुजो द्रव्यादयः षट्; आदिशब्देन सांख्याद्युक्तपञ्चविंशत्यादयो द्रष्टव्याः ।

ननु यद्येकमुपसंग्राहकं विना न संख्यानिवेशः, तर्हि प्रमाणयोग्यताया अर्थक्रियासामर्थ्ये चैकस्मिन्नुपसंग्रहोऽस्तु, किं सत्तयेत्याशङ्कयति—अथेति ।

एवमाशङ्क्य दूषयति—ताभ्यामिति । यदि च जगद्वर्त्येकप्रमाणयोग्यत्व- P. 89-25.
मर्थक्रियासामर्थ्यं वोपसंग्राहकमिष्यते, ततो वरं ताभ्यामेव सच्छब्दार्थ उपलक्ष्यताम्, यत् प्रमाणयोग्यमर्थक्रियासमर्थं वा तत् सच्छब्दार्थ इति; ते एव सच्छब्दप्रवृत्तौ निमित्तमिति यावत् । ततश्च परिमितधर्मोपन्यासो व्यर्थः । एवं च सच्छब्दस्य साधारणतापि न स्यादित्याह—तत्रेति । यो भिन्ननिमित्तो भिन्नेष्वर्थेष्वेकः शब्दः स साधारणः, यथा अक्षादिः । एके एव तु जगद्वर्तिनी प्रमाणयोग्यत्वार्थक्रियासामर्थ्ये निमित्ते इति सच्छब्दस्य सामान्यशब्दतैव स्यात्, न साधारणता । अथ ते प्रत्यर्थं भिन्ने, न तर्हि उपसंग्राहके; यत एकमुपसंग्राहकमिति भावः । सच्छब्दस्य साधारणशब्दतायां दोषान्तरमाह—भिन्नेति । यथा 'अक्षमानय' इत्युक्ते विभीतकत्वादिजातीनां निमित्तभूतानां भेदात् केन निमित्तेनायं प्रवृत्त इति संदेहो भवति, तथा 'सन् घटः' इत्यत्रापि स्यात्, न सत्ताख्यविशेषप्रतीतिः; न च सोऽस्ति, 'शुक्लः पटः' इतिवत् 'सन् घटः' इत्यत्र प्रतिपत्तुर्नैराकाङ्क्ष्यादित्यर्थः । ननु सत्तायामपि द्रव्यं गुणः कर्म वेति, तथा रूपमर्थः सन् विज्ञानं वेति संशयादस्त्येवाक्षादितुल्यत्वमित्याशङ्क्याह—यास्त्विति । सत्यमस्त्ययं संशयः, किंतु वादिनां, न तु लौकिकानाम्; अतो लौकिकाः सच्छब्दप्रवृत्तावभिन्नमेव निमित्तं प्रतिपद्यन्त इत्यवगच्छाम इत्यर्थः । किंच साधारणशब्दात् शब्दोत्थः 'कोऽस्यार्थः' इति संशयो भवति; यथा अक्षादेः । जातिशब्दार्थमसंशयं प्रतीत्य 'किंस्वरूपोऽयम्' इत्यर्थोत्थस्तद्विशेषसंशयः; यथा गोशब्दाद्गोत्वं प्रतीत्य व्यक्तेर्भिन्नमभिन्नं वेति वादिनाम् । सच्छब्दस्य तु 'कोऽस्यार्थः' इति न संशयः; किंतु सत्ताख्यमर्थं प्रतीत्य पश्चात् 'द्रव्यं गुणः कर्म वा' इति तदन्तरविशेषे । तस्मान्नैष साधारणशब्द इति । तदाह—अर्थाच्चेति । नात्रशब्दात् संशयः; किंतु अर्थोत्थ इति । अत्र हेतुं पृच्छति—कुत इति । उत्तरमाह—विशेष इति । 'द्रव्यं गुणः कर्म वा' इति सत्तायां ये विशेषा वादिविप्रतिपत्तिविषयाः, तत्प्रतीतिं विनापि 'सन् घटः' इति घटसत्ताप्रतीतिमात्रेणैव प्रतिपत्तेर्नैराकाङ्क्ष्यात् नात्र शब्दात् संशय इत्यर्थः । नन्वर्थोत्थेऽपि संशये तद्विशेषाकाङ्क्षास्त्येव; अथ कथं नैराकाङ्क्ष्यमित्यत आह—

. 90-6. यत्रेति । अन्यथेति; यदि तत्रापि साधनविशेषाकाङ्क्षा स्यात् , ततस्तद्विशेषाकाङ्क्षायामनवस्था स्यात्; अतो दूरमपि गत्वा यस्य कस्यचिदुपादानान्नैराकाङ्क्ष्येण भवितव्यम्; तद्वरमादावेव तदस्तीति भावः । क्व तर्हि साकाङ्क्षत्वमित्यत आह—यत्र त्विति । यत्र तु 'अक्षमानय' इत्यक्षशब्दादनेकार्थात् 'कोऽस्यार्थः' इति संशयो भवति, तत्रार्थस्यैवानवधारणादप्रवृत्तिरिति भवत्यर्थविशेषाकाङ्क्षा । सच्छब्दात्तु 'कोऽस्यार्थः' इत्याकाङ्क्षा नास्त्येव; अपितु 'किंस्वभावोऽस्यार्थः' इति वैषम्यमिति भावः । उपसंहरति—तदिति; तस्मादित्यर्थः । एवमिति अनन्तरोक्तं युक्तिप्रकारं निर्दिशति । सच्छब्द इत्यध्याहार्यम् ।

इदानीं विशेषणपक्षं दूषयति—विशेषणमिति । ननु प्रमाणं प्रमातृधर्मः कथमर्थस्य विशेषणम्? अभ्युपगमवादोऽयमित्यदोषः । दूषणान्तरमाह—अपिचेति । प्रमाणफलादनुभवादनीतमेव प्रमातृव्यापाररूपमनुमीयते; तत्र कुतः प्रमाणविशिष्टतार्थस्येत्यर्थः । अत्र हेतुमाह—नेति । अतीतत्वेनासंनिहितं प्रमाणाख्यं विशेषणं यस्य स तथोक्तः । 'सन् घटः' इत्यनुभवसमये प्रमाणस्यातीतत्वान्न तद्विशिष्टः 'घटः सन्' इति भायादित्यर्थः । दूषणान्तरमाह—न चेति । चिरनिखाता निधयो येष्विति बहुव्रीहिः । अयं च प्रमाणाभावनिश्चये हेतुः । व्यधिकरणे वा सप्तमी । 'सन्ति' इत्यत्र 'निधयः' इति प्रथमान्तं कृत्वा योज्यम् । उपसंहरति—तस्मादिति । सदर्थ इति; सच्छब्दस्यार्थ इत्यर्थः ।

इदानीमुपलक्षणमपि प्रमाणं न युक्तमित्याह—नापीति । हेतुमाह—प्रमितेति । यतः प्रमितनष्टे सच्छब्दो लोके न प्रयुज्यते, यतश्च 'अस्ति, नास्ति' इति स्मर्यमाणे संदेहोऽस्तीत्यर्थः । नन्वतीतत्वादेव प्रमाणसंबन्धस्य प्रमितनष्टे सच्छब्दाप्रयोगसंदेहावुपपत्स्येते इत्याह—वृत्तेति । अतीतमप्युपलक्षणं शब्दप्रवृत्तौ नष्टम् । ततश्चातीतस्यापि प्रमाणस्योपलक्षणत्वात् सत्त्वमेव स्यात्, नासत्त्वम् । स्मर्यमाणे च सत्त्वनिश्चय एव स्यात्, न संशय इत्यर्थः । वृत्तः प्रमाणसंबन्धो यस्येति बहुव्रीहिः । ननु मा भवतु प्रमाणमेकमुपलक्षणं वा, प्रमाणयोग्यत्वमेव तद्भविष्यति; तथापि सत्ता न

सिध्यति । कथं च विशेषणमप्येकं प्रमाणमित्युक्तम्? तद्धि प्रतिप्रमेयं भिन्नमुच्यते; न प्रमाणयोग्यत्वं नाम कश्चिदस्ति । अतः पारिशेष्यात् प्रमाणमेव विशेषणमुपलक्षणं वास्थेयमिति मन्यते । प्रमाणयोग्यतां विना कथमर्थस्य प्रमेयत्वमिति चेत्; न, प्रमाणसामर्थ्यादेवातीतानागतवदुपपत्तेः। न ह्यतीतानागतयोरसतोः प्रमाणयोग्यत्वमस्ति, असति धर्मिणि धर्मानुपपत्तेः। अतश्च प्रमाणयोग्यत्वमेव विशेषणमस्तु, किं सत्तयेत्युक्तम् । किंच सत्तापह्नवन्यायेन प्रमाणयोग्यत्वमप्येकं तैर्नेष्टम्, तेषामानन्त्येन एकशब्दप्रवृत्तावनिमित्तत्वात् । यदपि प्रतिप्रमेयं प्रमाणं भिन्नं न त्वेकमित्युक्तम्, तदपि पाचकादिवदुपपत्तेरयुक्तमित्युक्तम् ।

इदानीमर्थक्रियायाः सच्छब्दप्रवृत्तौ विशेषणत्वोपलक्षणत्वे निरस्यति— योऽपीति । यदर्थक्रियावत् तत् सत् । तत्राङ्कुरजन्मनः प्राक् बीजं P. 90-19.
'सत्' इति नोच्येत । अथ बीजप्रत्यक्षे बीजमपि जनकम्, अन्यथेन्द्रियसामर्थ्याविशेषान्न तन्नियतार्थं स्यात्; अतोऽपि स्वविषयप्रमाणजननमेवार्थक्रिया; ततो बीजं 'सत्' इति व्यपदेक्ष्यत इति चेत्, तन्न; एवं हि प्रमाणजननाख्यामर्थक्रियां विज्ञाय पश्चात् 'अस्ति' इति बुद्धिः स्यात्, न प्रमाणादेव; न चैवम्; विज्ञायमानमेव बीजम् 'अस्ति' इति ज्ञायत इत्यर्थः । अथ निर्विकल्पं प्रत्यक्षं प्रमाणम् । 'अस्ति'बुद्धिस्तु शब्दानुवेधात् सविकल्पिका । निर्विकल्पपूर्वकं च सविकल्पकम् । अतः प्रमाणोत्तरकाल एव 'अस्ति' बुद्धिः, न प्रमाणादेवेत्युच्यते; एवं तर्हि लिङ्गाद्धूमादेरग्न्यादौ 'अस्ति' बुद्धिर्न स्यादित्यर्थः । अनुमानं सविकल्पकमेवेष्यते; न तत्र पृष्ठभाविनिर्विकल्पकमस्ति, यज्जननेनार्थक्रियया पश्चात् 'अस्ति' इति बुद्धिः सविकल्पिका स्यादिति भावः । अथोच्यते—यद्यप्यनुमाने निर्विकल्पकं नेष्यते, तस्य सत्ता चास्तिबुद्ध्या न गृह्यते; तथापि कार्येण कारणमनुमेयम् । अतश्च 'अस्येदं कार्यम्' इति निर्ज्ञातधूमादिकार्यसंबन्धमेवाग्न्यादिलिङ्गेन धूमादिना अनु पश्चाद्गम्यते । धूमादिकार्यवत्तालक्षणैव सत्ता धूमादिकार्यवत्तया गम्यत इत्युक्तं भवतीत्यत्राह—तथाहीति । कार्यवत्ता सत्ता । सा चेदग्न्यादेर्ज्ञातैव, किं परमधिकमनुमीयते? कार्यवत्त्वैव च कार्यवत्तावगम्यत इत्यशोभनम्, एकस्य साध्यसाधनत्वविरोधादिति भावः । एतेनाज्ञातैव कार्यवत्ता कार्यवत्तयानुमास्यत इत्यपि प्रत्युक्तम्;

ज्ञातं हि साधनम्, अज्ञातं हि साध्यम् । न चैकमेव ज्ञातमज्ञातं च भवति । ननु तवापि 'अस्येदं व्याप्यम्' इति ज्ञातसंबन्धमेव लिङ्गेन गम्यत इति दोषोऽस्त्येव; उच्यते—मम सामान्ययोः संबन्धः, विशेषतश्च प्रमेति नैष दोषः । बौद्धानां तु न सामान्यमस्तीति विशेषः । शिंशपात्वाद्वृक्षत्वानुमाने निर्ज्ञातकार्यसंबन्धताप्यस्तीत्यूह्यम् । किंच क्षणिक-वादिनां कार्यक्षणकाले कारणक्षणमसत्; अतोऽस्य न कार्यविशिष्टता;
90-24. अतश्च न कारणस्य सत्ता स्यादित्यभिप्रायेणाह—कार्येति । अथोपलक्षणं कार्यवत्ता सच्छब्दप्रवृत्ताविस्युच्यते, तदपि न, पूर्वोक्तदोषादित्याह—अथेति । उपसंहरति—तस्मादिति । यथा नीलादिशब्दानामर्थोऽर्थात्मको यस्य कार्यं यस्य वा प्रमाणं स नीलशब्दार्थ इति कार्यप्रमाणलक्ष्यो न भवति, कार्यप्रमाणयोरपि तत्त्वं कार्यप्रमाणाभ्यां लक्ष्यं तयोरपि तदनन्तराभ्यामित्यनवस्थानात्; अपितु कार्यप्रमाणसंबन्धनिरपेक्षस्वहेतुभ्यः स्वरूपेण व्यवस्थिता यथाप्रमाणमवसीयते—प्रमाणमवबोधकमात्रमिति यावत्—तथा सच्छब्दोऽपीत्यर्थः । यदुक्तमनवस्थानादिति, तद्विवृण्वन् स्वार्थस्य कार्यप्रमाणलक्ष्यत्वाभावं द्रढयति—कार्येति । तस्येति; व्यवहाराविभाग-स्येत्यर्थः । एवं दृढीकृत्य स्वपक्षं पुनरुपसंहरति—तस्मादिति ।

एवं प्रमाणयोग्यता सच्छब्दार्थः नैका सत्तेति पक्षे दूषिते, परावृत्य प्रमाणयोग्यत्वसत्तापक्षे पुनः प्रतीकारमाशङ्कयति—अथेति । यदि प्रमाण-योग्यत्वमर्थस्वभावः सत्ता स्यात्, ततोऽस्त्यर्थनिष्ठेष्वपि वेदान्तेषु प्रमाणा-न्तरानपेक्षत्वात् अस्त्यर्थनिष्ठं सापेक्षमिति पराभिमतं प्रकृतं हीयेत; यदि तु प्रमाणहेतुसंभवस्तद्योग्यता तदा हेतौ सत्यवश्यं प्रमाणेन भाव्यम्; अत-स्तत्सापेक्षत्वान्न प्रकृतहानमिति भावः । न चैवं नृशृङ्गादीनां सत्त्वप्रसङ्ग इत्याह—न चेति । एतावता च प्रमाणहेतुभावाच्च सद्व्यवहार इत्युक्तम् । नदीपूराख्यप्रमाणहेतुसद्भावे वृष्टेरतीताया अपि सत्त्वं स्यादिति यद्यप्यत्र दूषणमस्ति, तथाप्यस्य पूर्वमुक्तत्वादुत्तरविषयत्वाच्च दूषणान्तरमाह—तदिति ।

भूमौ निखातमिति भूभागतिरोहितत्वादिन्द्रियसंनिकर्षस्य प्रत्यक्षहेतो-रभावमाह; निर्लिङ्गमिति अनुमानहेतोर्लिङ्गस्य; अवेद्यानुपपन्नकमिति

अर्थापत्तिहेतोरन्यथानुपपन्नस्य; न वेद्यमनुपपन्नं यत्रेति विग्रहः; तथा नष्टद्रष्टृकमिति आप्तागमहेतोराप्तस्य । उपमानस्य च सादृश्यविषयत्वा- P. 91-10.
त्तद्धेतुर्निधिस्वरूपप्रतीतौ दूरापेत एव । तदेवं सर्वप्रमाणयोग्यतामतिक्रामति निधिद्रव्यम्; न च तदसत्, अपितु संशयितम् । त्वत्पक्षे चासत् स्यात्, न संशयितमित्यर्थः । अथ न प्रमाणहेतुसद्भावः सत्ता; अपितु अर्थगत एव कश्चित्स्वभावविशेषः प्रमाणं प्रति योग्यः सत्तोच्यते, तदपि न, प्रकृतहानादित्युक्तम् । श्लोकमन्यथा व्याचष्टे—अथवेति । प्रमाणविशिष्टं सदित्युच्यते । अतः प्रमाणसदसद्भावसंशये प्रमाणविशिष्टाभिधायिसच्छ-ब्दानुविद्धः 'सद्वा, असद्वा' इति संशयो युज्यते । निधौ तु सर्व-प्रमाणाभावनिश्चयादसत्त्वनिश्चयः स्यात्, न संशय इत्यर्थः ।

इतश्च न प्रमाणयोग्यता सत्ता, यतोऽसतोऽप्यभावस्य सास्ति; अतः सापि न स्यादित्यभिप्रायेणाह—अपिचेति । अभावप्रमेयत्वे केचिद्विप्रति-पन्नाः; तदर्थं तन्मेयत्वमुपपादयति—तथाहीति । चकारो दूषणसमुच्चयार्थः; अप्यर्थो वा—न सदेव, परमसदपि । यथा येन प्रमाणाविषयत्वेन सर्वशक्तिविरहितत्वेन वाभावं परो व्यवस्थापयति, तथा तेन रूपेण प्रमेयम् । कुतः? यतस्तथा तेन रूपेणामितं चेत्, कस्मात्तथा तद्रूपः? न पुनरन्यथा अन्यस्वरूप इत्यर्थः । एतदेव विवृणोति—न चेति । एक-पक्षानुराग इति; तथाभावातथाभावयोर्मध्ये प्रमाणं विना एकपक्षानुरागो न युज्यत इत्यर्थः ।

अभावस्य प्रमेयत्वे हेत्वन्तरमाह—अपिचेति । अभावश्चेन्न प्रमेयः, ततः कण्टकाभावममित्वा अपरिच्छिद्य भूतलादौ चरणं न्यस्यते कथम्? न कण्टकाभावपरिच्छेदाच्चरणन्यासः, अपितु कण्टकादन्यस्य भूतलादेः परिच्छेदादिति चेदत आह—नान्येति । नान्यस्य भूतलादेर्ज्ञानाच्चरण-न्यासः, तस्य कण्टकस्य भावेऽप्यन्यस्य भूतलादेर्ग्रहणे चरणन्यासप्रसङ्गात् । भूतलग्रहणात्पुरस्तादप्यन्यस्य कस्यचिद्ग्रहणसंभवात् तत्र चरणन्यासप्रसङ्गश्च । अथ नान्यग्रहात्, किंतु कण्टकसंविच्यभावतश्चरणन्यास इत्युच्यते; ततः सूक्ष्मकण्टकादेरापातेऽग्रहणात् पदन्यासः स्यात्, न तु तज्जिज्ञासा । अतः कण्टकादिसंविच्यभावतोऽपि न पादन्यासः । तस्मादभावपरिच्छेदादेव स

92-14 इत्यर्थः । प्रयत्नादिति; निश्चयार्थात् प्रयत्नादित्यर्थः । 'जिज्ञासापूर्वकात्' इत्यादेः 'युज्यते' इत्यन्तस्य अपरिच्छेदपक्षे सूक्ष्मजिज्ञासा निष्फला, अभावे तु परिच्छेद्ये सफलेति तात्पर्यार्थः । न च कण्टकापरिच्छेद एव जिज्ञास्यः, तस्य परिच्छेदात् प्राक् स्वतः सिद्धत्वेन जिज्ञासावैफल्यात् । किंच प्रमेयं जिज्ञास्यम्; अपरिच्छेदश्च परिच्छेदाभावः; न चाभावस्ते प्रमेयः; अतश्च न जिज्ञास्यत इत्यर्थः ।

अथ मतम्—न कण्ठकाद्यपरिच्छेदमात्रात् पदन्यासप्रवृत्तिः, अपितु कण्टकाद्युपलम्भहेतुषु चक्षुरादिषु सत्सु प्रमाणविषयस्य प्रमाणविषयतां गन्तुं योग्यस्य सूक्ष्मस्य सतोऽपरिच्छेदादिति, तत्राह—तदसदिति । तदसत्; यतोऽत्रापरिच्छेदे प्रमाणस्य न कश्चिदुपयोगो दृश्यते, तेनादृष्टार्थत्वमेव स्यादिति भावः । कुत्र नाभैतदुपयुज्यत इत्याह— असदिति। हिशब्दस्तुशब्दार्थे; अभावबोधे तु प्रमाणविषयत्वमुपयुज्यते । कथम्? अनन्यहेतुत्वेन । कण्टकाद्यपरिच्छेदात्तदभावबोधः । अपरिच्छेदश्च द्विधा भवति—प्रमाणहेतुवैकल्यहेतुकः, कण्टकाद्यर्थाभावहेतुको वा । तत्र यः प्रमाणहेतुवैकल्यहेतुकोऽपरिच्छेदः स न सत्ताभावनिश्चयहेतुः, अर्थभावेऽपि तत्संभवात् । यस्तु प्रमाणहेतुष्वविकलेषु सत्स्वपरिच्छेदः, सोऽर्थाभावनिश्चयहेतुरित्येवमुपलम्भहेतुषु सत्सु प्रमाणविषयत्वमभावबोध उपयुज्यत इत्यर्थः ।

अन्यग्रहणाच्चेत् पादन्यासः, कण्टकादेर्भावेऽपि भूतलग्रहणे स्यादित्युक्तम्; तत्र परमतमाशङ्कयति—अथेति । अथ यत्र भूभागादौ पादन्यासप्रवृत्तिः, तत्र भूभागादौ केवलसंवित्तितः सा । अतः सा कण्टकादिसद्भावे कैवल्याभावान्न भवतीत्युच्यते, तत्राह—जिज्ञासेतेति । तत्रेदं निरूप्यम्—किमिदं कैवल्यं भूतलज्ञानस्य भूतलैकावभासित्वलक्षणम्? उत ज्ञानविषयस्य भूतलस्य? यदापि विषयस्य, तदा किं स्वरूपेण तस्य कैवल्यम्? उत विशेषणयोगेन? तत्र यद्याद्यः पक्षः, तदा यत्र कण्टकादौ सूक्ष्मत्वादभाति भूतलैकविषयं ज्ञानं भवति, तत्र संवितेः कैवल्यात् पादन्यासः स्यात्; प्रवर्तेतैव तदर्थं वा पुरुषः । न च भूतलादिविषयरूपमेव स्वरूपेण केवलमिष्टम्, कण्टकादिमिश्रेऽपि भूतले तत्स्वरूपमनपेतमिति पादन्यासप्रसङ्गात् । अथ विशेषणयोगेन, ततः कैवल्यविशिष्टस्य भूतला-

दन्यस्य कण्टकादेरभावादन्यद्विशेषणं न भवतीति कण्टकाभावपरिच्छेदादेव पादन्यास इति प्राप्तमभावस्य प्रमेयत्वमित्यर्थः । एकविषयप्रतिनियम इति; P. 93 9. एतत् ज्ञानकैवल्यविवरणम् । विषयान्तरासंसर्ग इति च प्रतिनियमविवरणम्; भूतलैकविषयत्वमित्यर्थः ।

इतश्चाभावः प्रमेय इत्याह—अपिचेति । किं क्षुण्णमिति; कोऽपराध इत्यर्थः । श्लोके धीग्रहणमुपलक्षणम्; शब्दोऽपि द्रष्टव्यः । धीशब्दविषय एव व्यवहारविषयः; अतस्तन्निरूपणेनैव निरूपित इति वृत्तौ पृथङ् नोक्तः । अथवा व्यवह्रियतेऽनेनेति व्यवहृतिः शब्दः । श्लोकं विवृणोति—अपिचेति । यस्याभावो न प्रमेयः, तेन 'नास्ति' इति बुद्धिशब्दयोर्विषयो वाच्यः—किमालम्बनावेताविति । तत्र न तावद्भूतलवस्तु स्वरूपेणानयोर्विषयः, कण्टकादिमिश्रेऽपि भूतले 'नास्ति' इति बुद्धिशब्दयोः प्रसङ्गात् । नापि केवलभूतलवस्तु तयोर्विषयः; तदा हि कण्टकाद्यभावविषयः स्यात्, अभावादन्यस्य कैवल्याख्यस्य विशेषणस्यासंभवादित्युक्तम्—'नान्याभावाद्विशेषणम्' इति । पर आह—यन्नास्ति निरूपाख्यं, तदेव गम्यत इति विप्रतिपिद्धम् । अतो 'नास्ति' इति नाभावः प्रतीयते, किंतु 'नास्ति' इति 'न प्रतीयते' इत्ययमस्यार्थ इति; तत्रोच्यते—प्रतीत्यभावस्तर्हि 'नास्ति' इति धीशब्दयोर्विषयः स्यात्; तथा सति च प्रमेयाभावेन किमपराद्धम्? येन तमतिलङ्घ्य प्रमाणाभावोऽनयोर्विषय उच्यत इत्यर्थः ।

परमतमाशङ्कयति—अथेति । कण्टकादेः अग्रहे अज्ञाने असद्ग्रहभ्रान्तिः अभावग्रहणभ्रान्तिः, तथा कण्टकव्यवहाराभावे चाभावव्यवहारभ्रमः, न पुनः अभावग्रहणाभावव्यवहारौ स्त इत्यर्थः । दृष्टश्चादर्शने दर्शनभ्रम इत्याह—अदृष्टाविति; यथा आलोकादृष्टौ 'तमः पश्यामि' इति तमोदृष्टिविभ्रम इत्यर्थः । नैव स्तां 'नास्ति' इति बुद्धिव्यवहाराविति परेणोक्ते, कथमिति सिद्धान्तिनाक्षिप्ते, उच्यत इति पुनः परेण प्रत्युक्तमिति ग्रन्थो योज्यः । ननु तमोवस्त्वेव दृश्यमस्ति, न पुनरालोकाभावमात्रमिति दृष्टान्तासिद्धिमाशङ्क्याह—न हीति । यदि तमो दृश्यमस्ति, ततो रूपवत्त्वाच्चाक्षुषं स्यात्; अतोऽन्धेन न दृश्येत; अस्ति च तस्यापि तद्दृष्टिः । अतो भ्रम एवेत्यभिप्रायः । तद्दूषयति—नैतदिति ।

94-10 कुत इत्याह—इत्थमिति । भावादर्शने अभावदर्शनमिति यथा त्वमात्थ, इत्थं सुषुप्तिमदमूर्छावस्थासु त्रैलोक्यदर्शनाभावात् तदभावदर्शन-भ्रमः स्यात्; न चैवमस्ति । ननु सुषुप्तस्योपरतकरणग्रामस्य कथं भ्रमः? सत्यम्, अन्यथाख्यातिः करणजन्या; न त्वख्यातिः । अख्यातिवादी च भवानित्यभिप्रायेणेदमुक्तम् । ननु विवेकाख्यातिरपि स्मर्यमाणगृह्यमाणयो-र्भवति; न च सुषुप्तस्य तौ स्तः; अतः कथमख्यातिरूपोऽयं विभ्रमः? उच्यते—भावाभावदर्शनभ्रमे तौ न स्त इत्यनन्तरं वक्ष्यामः । तदेवं तावपि विना चेदभावदर्शनमत्र भ्रमः, ततः सुषुप्तस्यापि त्रैलोक्यादर्शनेन तदभाव-दर्शनभ्रमः स्यादिति मन्वानेन 'इत्थं भवेत् सुषुप्त्यादौ' इत्यतिप्रसङ्गा-पादनं कृतमित्यदोषः । यः कश्चिदपि न परिच्छिनत्ति, न तस्य भ्रमो युज्यते; तथाहि—यत्र रजतमारोप्यते तमारोपविषयं शुक्तिकाम् आरोप्यं च रजतमजानानो न रजतभ्रमवान् भवति । ततः किमित्यत आह—नाभावेति । व्यवहारो व्यवहृत्; अभावेन हि सा विशिष्टा व्यवहृत्, अभावव्यवहार इत्यर्थः; तदभावश्च न धीपदे न बुद्धिविषयावित्यर्थः । एतदुक्तं भवति—भावव्यवहाराभावे अभावव्यवहारभ्रमस्त्वयेष्यते । तत्र भावव्यवहाराभावः शुक्तिकावदारोपविषयः, अभावव्यवहारश्च रजतवदारोप्यः। न चाभावप्रमेयमिच्छतस्तौ ज्ञातौ । अतो भ्रमो न घटत इति । 'नाभाव-भिन्ना व्यवहृत्' इत्युपलक्षणम्; अभावबुद्धिरपि पूर्वश्लोकनिर्दिष्टा वक्तव्या। अत एवाह—न च बुद्ध्यभाव इति । अन्यथेति; आरोपविषयारोप्याज्ञाने तु यदि द्वयोरज्ञानं ततोऽप्रतिपत्तिः; अथारोपविषयमात्रस्य, ततो रजत-स्मृतिः; अथारोप्यस्य, ततोऽनवधारितविशेषपुरोवर्तिद्रव्यसामान्यप्रतीति-रित्यर्थः । अत्र चोभयाज्ञानादप्रतिपत्तिरेव स्यादित्यभिप्रेतम्; स्मृतिसामान्य-प्रतिपत्ती तु प्रसङ्गादुक्ते । न च बुद्ध्यभाव इत्यादिना आरोपविषयाज्ञान-मुक्तम् । नाभावबुद्धिरित्यादिना चारोप्याज्ञानमिति विवेकः । अभावबुद्धिः अभावव्यवहार इत्यभावो विशेषणम्; बुद्ध्यभावः व्यवहाराभाव इत्यत्र तु विशेष्यः । तेन विशेषणस्येत्युपलक्षणम्, विशेष्यस्यापि द्रष्टव्यम् । 'अदृष्टौ ध्वान्तदृष्टिवत्' इति दृष्टान्तश्च साध्यविकल इत्याह—तम इति। तत्र भूच्छायामिति पौराणिकीं दृष्टिमाश्रित्योक्तम्; तदुक्तं पुराणे

"भूतगुणश्रुतेः" इति । अत्र भूतगुणत्वं भूपारतन्त्र्यमात्रमुक्तम्, न तु छाया गुणः, द्रव्यात् पृथगुपलब्धेः; अपि तु द्रव्यान्तरम्; गुणवती हि सा; गुणवच्च द्रव्यम् । गुणश्च महदल्पत्वाख्यं परिमाणम् । चला च सा। अतः क्रियावत्त्वादपि तत् द्रव्यम्; तदुक्तम्—"महदल्पं चलाचलम्" इति । सा द्रव्यं किंचिन्निमित्तीकृत्य सूक्ष्मैश्चावयवैर्दृष्टैरारभ्यते, काष्ठमिवाश्रित्य ज्वाला तेजोऽवयवैः । अत एव द्रव्यानुगता ज्वाला । सा च द्रव्यम्; प्रभावत्त्वाच्च । सूक्ष्मास्तित्वे च स्थूलमेव लिङ्गम्, यथा पृथिव्यादौ । यथा वायुररूपः स्पर्शवान्, तथा छाया रूपवत्यस्पर्शा, वैचित्र्याद्भावस्य । अतो भावस्वरूपा सा । अत एव चाक्षुषेति । यस्य तु मतम्—आलोकाभावे भावात् तद्भावे चाभावात् आलोकाभाव एव छायास्तु, किं कल्पनागौरवेण? महता च तरुणा महति भूभागे आलोकेऽपनीते महती, अल्पेन चाल्पा । चला तावत् द्रव्येण; यत्र यत्रालोकोऽपनीयते, तत्र तत्र चलन्तीव लक्ष्यते । न तु सा महती अल्पा चला चेति न ततो द्रव्यसिद्धिरिति—तन्मतेनालोकाभावमेव वेत्युक्तम् । नन्वेवमन्धस्य छायामालोकाभावं चापश्यतः कथं तमोदृष्टिः? उच्यते—अदृष्टरजतस्येव शुक्तावदृष्टत्वाचस्यालोकादर्शनेऽप्रमेयेऽपि सदृशवस्तुमात्रप्रतिभानात्मिका भ्रान्तिरुपपद्यते । यत्पुनः 'आरोपविषयारोप्ये नाजानन् रजतभ्रमी' इत्युक्तम्, तद्विशिष्टरजतादिवस्तुभ्रमाभिप्रायमित्यविरोधः ।

इदानीं प्रमाणयोग्यतां सत्तामभ्युपगम्य, अस्त्यर्थनिष्ठत्वेऽपि वेदान्तानां न सापेक्षतादोष इत्याह—<u>अस्त्विति</u> । भवतु वा प्रमाणयोग्यता सत्ता; P. 95-1.
सैवास्त्यर्थनिष्ठा वेदान्तानां प्रमेयास्तु; तथा तस्मिन् मानयोग्यत्वे प्रमिते, तद्योग्यस्य वस्तुनो ब्रह्मणः सत्त्वं वेदान्तार्थो भवति । योग्यताप्रमामुखेन ब्रह्मस्वरूपे वेदान्तानां प्रामाण्यसिद्धिर्ब्रह्मस्वरूपसिद्धिश्च भवतीत्युक्तं भवति। न चैवं प्रमाणान्तरसापेक्षता दोषः, कुतः? प्रमाणान्तरसंभेदाभावात् । यत्र हि प्रमाणान्तरस्पर्शेन प्रमाणान्तराधीना अर्थसिद्धिः, तत्र सापेक्षत्वं दोषहेतुः । अत्र तु 'प्रमाणयोग्योऽयम्' इत्येतावन्मात्रमवगम्यते, न तु प्रमाणान्तरेण संभेदः संस्पर्शः; न प्रमाणान्तराधीना अर्थसिद्धिरिति यावत् । अतो न सापेक्षता; तथाहि—येऽपि प्रमाणग्राह्यतां प्रमाणसंबन्धं सत्तामाहुर्न ततोऽन्याम्, तेऽपि अन्तरा अर्थविभिन्नतां प्रमाणान्तर-

संभेदं नेच्छन्ति ; यथोक्तम्—'प्रमाणस्य प्रमेयकोटिप्रविष्टत्वान्नेच्छन्ति' इति ; तैरपि न प्रमाणान्तरसंस्पर्शेन प्रमाणान्तरमन्वेष्यम्, किमुत येऽर्थ-
95-5. स्वाभावतामर्थस्थां योग्यतां सत्तामाहुस्तैरित्यर्थः । तत्प्रमेयमिति ; तस्याः सत्ताया अविनाभावेन प्रमेयमित्यर्थः । अत्र परश्चोदयति—कथमिति । यदा अस्त्यर्थनिष्ठं वेदान्तवचः प्रमाणयोग्यतामात्रे निवृत्तव्यापारं विशिष्टस्यानन्दादिरूपयोग्यताविशिष्टस्य योग्यस्य ब्रह्मणः सत्त्वं न बोधयति, तदा विशिष्टार्थसत्त्वसिद्धये यत्प्रमाणयोग्योऽसावर्थस्तत्प्रमाणं कथं नापेक्ष्यम्? अपितु अपेक्ष्यमेवेत्यर्थः । सिद्धान्ती तु पृच्छति—किमर्थमिति । पर आह—विशिष्टेति । अस्त्यर्थनिष्ठं वचो योग्यतामात्रं प्रतिपाद्योपरतव्यापारं न विशिष्टार्थसत्त्वमवगमयति ; अतस्तदर्थं प्रमाणान्तरमन्वेष्यमित्यर्थः । पुनः सिद्धान्ती पृच्छति—किमिति । किं पुनर्विशिष्टस्यार्थस्य सत्त्वम्, यस्यास्त्यर्थनिष्ठेन वचसानवगमितस्यावगमाय प्रमाणान्तरमन्वेष्यमित्यर्थः । पर आह—प्रमाणेति । सिद्धान्त्याह—अधिगतमिति । यदि प्रमाणयोग्यत्वं विशिष्टार्थसत्त्वम्, एवं तर्हि अस्त्यर्थनिष्ठत्वाद्वचसोऽधिगतमेव तत् ; यतः प्रमाणयोग्यतैवास्त्यर्थ इत्यर्थः । यद्यपि योग्यताविनाभावेन योग्यस्य सिद्धिरित्युक्तत्वान्न तदर्थं प्रमाणान्तरमपेक्ष्यमित्युत्तरमस्ति, तथाप्युत्तरविभवादुत्तरान्तरमुक्तम् ।

प्रमाणान्तरसंभेदाभावादस्त्यर्थनिष्ठानां वेदान्तानामप्रामाण्यदोषाभाव उक्तः ; अधुना तु प्रमाणान्तरसंभेदाभ्युपगमेऽपि न दोष इत्याह—प्रमाणान्तरेति । नोशब्दो निषेधार्थः । प्रमाणान्तरेण भिन्नः संसृष्टोऽर्थो यस्य वचसस्तदपि नाप्रमाणम्, अपितु प्रमाणमेव, यथा—आप्तवाक्यम् । ननु प्रमाणान्तरभिन्नार्थं चेत्, ततः सापेक्षम् ; यच्च प्रमाणम्, तत्कथं सापेक्षमित्याशङ्क्याह—निरपेक्षमिति । यच्छब्दात्प्रतीपिपितम्, 'इदं वस्तु मया प्रमितम्' इति, इहास्मिन्नर्थे वक्त्रभिप्रायरूपे श्रोत्रा प्रमाणान्तरेणाप्रतीते शब्दादेवान्यनिरपेक्षादवगम्यमाने निरपेक्षं तद्वच इत्यर्थः ; तथाहि—पौरुषेयाद्वचनात् 'एवमयं पुरुषो वेद' इति प्रतीतिः, न तु 'एवमर्थः' इति । 'प्रमितं मया' इति वक्तुर्वाक्येन स्वप्रमाणप्रकाशनमुक्तम् ; श्रोता तु 'प्रमितमनेन' इति बुध्यते । क्व नाम तत्सापेक्षमित्यत आह—

अर्थेति । अर्थमात्रे तद्वचः सापेक्षम् । अत्र हेतुमाह—अन्येति ; वक्तृ- P. 95-18.
प्रमाणद्वारेणार्थं बोधयति, न तु तन्निरपेक्षमित्यर्थः । अन्यत् वक्तृप्रमाणं स्वसिद्धयेऽपेक्षत इत्यन्यापेक्षः, स चासावर्थश्चेत्यन्यापेक्षार्थः, तस्य बोधनादन्यापेक्षार्थबोधनादिति । तदेवं वक्तुरुपलब्धिप्रमाणान्तरानिरपेक्षमेव तद्वचो बोधयतीति तन्निरपेक्षत्वात्प्रामाण्यमश्नुते, तद्द्वारेण चार्थ इति स्थितम् । नन्वर्थे तत्सापेक्षमित्युक्तम् ; अतः कथं तत्र प्रामाण्यमुच्यते ? अबाधितार्थत्वात् अर्थे तदविसंवादमात्राभिप्रायेणार्थे तत्प्रमाणमित्युक्तमित्यदोषः । ननु यदि सापेक्षमप्यबाधितार्थं वचः प्रमाणं भवति, तर्हि चैत्यवन्दनादिपुरुषवचः कथमबाधितार्थमपि तत्सापेक्षत्वदोषादप्रमाणमुच्यत इत्याशङ्क्याह—अबाधितमिति । यद्यपि तत्र नार्थे बाधः, तथापि मूलभूते वक्तृप्रमाणे तदपबाध्यते, तथाहि—न तद्वचः प्रत्यक्षादिमूलम्, धर्मस्य तदगोचरत्वात् । न च बुद्धस्य मन्वादेरिव वेदसंयोगोऽस्ति । तदेवं प्रमाणांशे तद्बाध्यते ; तदभावाच्चार्थेऽपि । तदुक्तम् "पुरुषाशक्तितस्तत्र सापवादत्वसंभवः" इति ; पुरुषस्य धर्मं द्रष्टुमशक्तितः तत्र बुद्धवचनादौ अपवादः अप्रामाण्यं तस्य संभव इत्यर्थः । तेन वक्तुः प्रमाणेऽर्थे च न तत्प्रमाणतामेति । एवमनाप्तवाक्येऽपि यथासंभवं योज्यम् । आप्तवाक्ये तु तद्वैपरीत्येन प्रामाण्यमाह—आप्तेति । प्रमाणांश इति, अर्थे तु सापेक्षमित्युक्तं भवति । एवमाप्तवाक्येषु प्रमाणान्तरसंस्पर्शेऽपि प्रामाण्यमुपपाद्य वेदान्तानामपि प्रमाणान्तरसंस्पर्शे सत्यपि तथैव प्रामाण्यमित्याह—मयेति । यत एवमाप्तवाक्ये, ततस्तद्वदेव वेदान्ता अपि मानान्तरं स्वप्रकाशाख्यं प्रलीनज्ञानज्ञेयविभागम् 'इदं ज्ञानम्, इदं ज्ञेयम्' इति विभागरहितम्, अत एव अलौकिकं लौकिकात्प्रत्यक्षादेर्ज्ञानज्ञेयविभागोपेतादन्यत् प्रवेदयन्तु । तत्सिद्धिद्वारेण चाप्तवाक्यवदर्थस्य ब्रह्मतत्त्वस्य सिद्धिः । एवं प्रमाणान्तरसंभेदेऽपि वेदान्तानामाप्तवाक्यवत् न प्रामाण्यव्याहतिरित्याशयः । तत्किं वेदपौरुषेयवचसोरविशेष एव ? न ; पौरुषेये हि वचसि 'मयेदं प्रमितम्' इति वक्तृवाक्यप्रयोगेण प्रतिपादितं प्रमाणं श्रोता बुध्यते ; वेदे तु वक्तुरभावात् 'मया' इति संस्पर्शरहितं प्रमाणान्तरमात्रमवबुध्यते । तदिदमुक्तम्—'मया' इति संभेदरहितम् इति ।

P. 96-22 एवमभ्युपगमवादं समाप्य प्रकृतमुपसंहरति—एवमिति । गेयता इत्युपलक्षणम्, मानयोग्यताद्यपि द्रष्टव्यम् । अत्र परः प्रत्यवतिष्ठते—नन्विति । अन्येति; सामान्यरूपेत्यर्थः । तत्र हेतुमाह—न हीति । पूर्वं व्यक्त्यन्तरे दृष्टस्य पुनर्व्यक्त्यन्तरे परामर्शः पूर्वावमर्शः । दृष्टं सत् सर्षपादि येन तस्य, सदन्तरे मेरौ न तथेत्यर्थः । न च 'सत्' इत्येकशब्दप्रवृत्त्यन्यथानुपपत्त्या एका जातिः कल्प्या, दण्ड्यादिवदन्यथाप्युपपत्तेरित्याह—एकेति । पूर्वनिरस्तमपि दण्ड्यादितुल्यत्वं सत्तासद्भावप्रमाणाभावावष्टम्भेन पुनरुपन्यस्तम् । वरमेवम्, न त्वप्रतीयमानसत्ताकल्पनेति भावः ।

अत्रोत्तरमाह—अत्रेति । नुशब्दः संबोधने । योऽयं सामान्यकल्पनाहेतुस्त्वयोक्तः पूर्वावमर्शः, स कः? पर आह—पूर्वेति । पूर्वमेकस्यां व्यक्तौ बुद्धेः रूपमाकारः, तस्य व्यक्त्यन्तरे योऽन्वयोऽनुगमोऽनुवृत्तिः—यथा प्रतिव्यक्ति 'गौर्गौः' इति बुद्धौ गोत्वरूपस्य—पूर्वावमर्श इत्युक्तम्, तत्र दोषमाह—सदन्तरेति । दृष्टसतः पुंसः सदन्तरे सोऽस्त्येव बहूनां रूपाणामननुगमेऽपि कयाचित् खलु मात्रया किंचिन्मात्ररूपेण; अन्यथा यथा सद्भ्योऽसन्निरुपाख्यमत्यन्तविलक्षणं भाति, तथा सन्तोऽपि मिथोऽत्यन्तविलक्षणाः प्रकाशेरन्; न चैवम् । खल्विति प्रसिद्धिसूचनार्थम्। अथ सर्वात्मना तत्र धियः पूर्वरूपान्वयो नास्तीत्युच्यते, तत्राह—सर्वेति । सर्वात्मना तु धियः पूर्वरूपान्वयः खण्डमुण्डादिव्यक्तिष्वपि नास्त्येव; तत्र गोत्वाद्यपि सामान्यं न स्यादिति भावः । यदि तु तासु सर्वात्मना रूपान्वयः स्यात्, ततस्तासामैक्यमेव स्यात् । अतश्च गोत्वादिसामान्याभावापत्तिः स्यात्; न ह्येकस्यां व्यक्तौ व्योम्नीव सामान्यमिष्यते, नानाव्यक्त्याश्रयत्वात्तस्य । खण्डमुण्डयोरिति व्यक्तिवैलक्षण्योपन्यासः सर्वात्मना रूपान्वयाभावदर्शनार्थः । खण्डमुण्डयोर्यादृश उद्भूतरूपान्वयो न तादृशः सत्सदन्तरयोरिति चेत्, न तर्ह्यवान्तरभेदमात्रेण सत्सदन्तरयोः संवेद्यरूपान्वयस्यापह्नवो युक्तः; अन्यथा देवदत्तस्य पुनर्दर्शने यादृशो बुद्धेरुद्भूतरूपान्वयः, न तादृशः खण्डादिव्यक्तिष्विति गोत्वमप्यपह्नूयेत । वेद्यग्रहणमपह्नवे संविद्विरोधप्रदर्शनार्थम् । किंच न केवलमेकव्यक्तौ यादृशः, तादृशः खण्डादिव्यक्तिषु बुद्धिरूपान्वयो भवति; अपितु मृत्सामान्य-

गोचरोऽपि मणिमल्लकादौ सर्वत्र समानो बुद्धिरूपान्वयः; तथाहि—मणिकेषु परस्परं यादृशो रूपान्वयः प्रोद्भूतः, न तादृशो दृष्टमल्लकस्य मणिके; न च तावतावान्तरभेदमात्रेण मृज्जातिहीनं मणिमल्लकादि, तस्य मृज्जात्यात्मना किंचित्तुल्यतयावभासनादित्यर्थः।

अथ 'सोऽयम्' इति पूर्वापरानुसंधानं पूर्वावमर्शः, अत्रोच्यते—पूर्वेति। खण्डमुण्डवदिति वैधर्म्यदृष्टान्तः। अथ यद्यपि दृष्टमणिकस्य मल्लके 'सोऽयम्' इत्यनुसंधानं न भवति, तथापि विमृशतः 'तज्जातीयमिदम्' इति पश्चाद्भवति; तेन तत्र मृज्जातिरिष्यते; ततो दृष्टसतः सदन्तरेऽपि तत्समानमिति सत्तापि किं नेष्यते? तदेतदाह—विमृशत इति। P. 98-5.

ननु यदि मणिकेषु मणिकत्ववत् मणिकमल्लकयोरपि मृज्जातिरस्ति; ततस्तुल्ये सामान्ययोगे मणिकेषु 'सोऽयम्' इत्यनुसंधानं द्राक्, न मणिमल्लकयोरित्यत्र को हेतुरिति पृष्टे उत्तरमुच्यते—सामान्येति। तत्त्वमिति; 'सोऽयम्' इत्यभेदः प्रकाशत इत्यर्थः। मणिकेषु परस्परं मृत्त्वं मणिकत्वमवयवसामान्यानि च भूयांस्यनुवृत्तानि; मल्लके तु मृत्त्वमात्रमित्यतो मणिकेषु पूर्वावमर्शो द्राक्, न मणिकमल्लकयोरित्यर्थः।

'एकशब्दप्रवृत्तिश्च दण्ड्यादिवद्दुपेयताम्' इत्युक्तम्; तद्दूषयति—प्रमाणमिति। प्रमितिकार्यानुमेयप्रमाणेनासंयोज्य प्रथमं पूर्वमेवास्तिधीर्यतो जायते, अतो न प्रमाणसंयोजननिमित्ता; तन्निमित्तत्वे हि प्रमाणे जाते तत्संयोज्य पश्चाज्जायेत, न पूर्वमेव; न हि दण्डसंयोजनात्प्रागेव 'दण्डी' इति भवति। अतो न दण्ड्यादिसमानतेत्यर्थः। न चास्तिबुद्धिरेव प्रमाणम्, अस्तिबुद्धेरेकस्या निमित्तनैमित्तिकत्वविरोधात्, स्वसंबन्धस्य च स्वयमज्ञानात् प्रागुक्तसमस्तदोषप्रसङ्गाच्चेति भावः। अत्र परो दुष्टाभिप्रायः पृच्छति—यदीति। यदि न प्रमाणयोगोऽस्त्यर्थः, प्रमाणयोगत्रैकाल्येनार्थस्य कथं त्रैकाल्यम् 'अभूत्, अस्ति, भविष्यति' इति? अतः प्रमाणयोग एवास्त्यर्थ इति तद्दुष्टोऽभिप्रायः। अत्रोत्तरमाह—तदिति। कालभेदेनोपाधिना कल्पितभेदोऽस्त्यर्थः त्रैकाल्येन भाति व्यपदिश्यते च। तेन प्रमाणकालेनोपाधिना कल्पितो भेदो यस्यास्त्यर्थस्य स तथोक्तः। अत्र दृष्टान्तमाह—देवदत्तेति। यथा देवदत्तसत्ता देशविशेषोपाधिकल्पित-

भेदा तत्रैव नान्यत्रेति देशभेदेन व्यवतिष्ठते, तथा कालभेदोपाधिकल्पित-भेदा कालभेदेनेत्यर्थः । एतदुक्तं भवति—सत्ता हि जातिः; जातिश्च व्यक्तिदेशा प्रतीयते; तेन यत्र देशे काले वा प्रमाणेन व्यक्तिः प्रतीयते, तत्र भाति व्यपदिश्यते चेति त्रैकाल्योपपत्तिः ।

एवं तावत् क्रियया विना न संसर्गः पदार्थानामित्यभ्युपगम्य पूर्व-
99-10. मुक्तम्; अधुना तु तदप्यसिद्धमित्याह—संबन्धेति । राजपुरुषयोर्द्रुम-फलयोश्च संबन्धमात्रेऽवसितम्, अत एवाक्रियमस्त्यादिक्रियारहितं वच आहुरित्यन्वयः । शेषं सुगमम् ।

इदानीं यदि नाम क्रियारहितं वाक्यं नास्ति, अस्तिक्रियायां चास्तेः प्रमाणयोगनिमित्तत्वात् वेदान्तानां प्रमाणान्तरसापेक्षतादोषो भवति, तथापि जनिक्रियां कल्पयिष्यामः; जनिश्च न प्रमाणयोगनिमित्ता; अतो न सापेक्षतादोषः, ब्रह्मस्वरूपं च सेत्स्यतीत्याह—जनीति । ईदृशाच्चेतन-दिव्यामूर्तादिरूपात् कारणादिदं जगत् जायत इति जनिक्रियावसाना-ज्जनिक्रियानिष्ठादपि वाक्याद्विशिष्टं चेतनादिरूपं कारणं शक्यबोध-मित्यन्वयः । श्रुत्युपपन्नश्चायमर्थ इत्याह—तथा चेति । आकाशादेवेति; ब्रह्मण इत्यर्थः । व्युच्चरन्ति; उद्गच्छन्तीत्यर्थः । अपियन्ति; विलीयन्त इत्यर्थः ।

इदानीं किमायातं विधेरित्युक्तमसहमानो वेदान्तेषु पदार्थसंसर्गार्थी विधिराश्रयितव्य इति परः प्रत्यवतिष्ठते—नन्विति । प्रमान्तराधीनः संसर्गो येषां ते तथोक्ताः । विध्यधीन आत्मसंश्लेषो येषामिति विग्रहः । पुरुषोक्तेषु यथा प्रमाणान्तराधीनः पदार्थसंसर्गः, तथा दर्शयति—पदाना-मिति । 'घटेन कूपाज्जलमाहर' इति पदानां रचना समभिव्याहारः परस्परान्वितानां सहोच्चारणं वक्तुर्विशिष्टार्थविवक्षां परिपूरयेत् परिपूर्णां प्रतिपादयेत् । न हि 'आहर' इत्येकपदात् सा पूर्णा प्रतीयते । यतो विवक्षा प्रमाणान्तरगम्येऽर्थे व्यवस्थिता, तेन तत्र प्रमाणान्तराधीन एव पदार्थसंसर्गः; तथाहि—यत्र प्रमाणान्तरविरोधः, तत्रासंसर्गः, यथा—जरद्गवादिवाक्ये । वेदे तु प्रमाणान्तराभावात् विधिरूपो योऽर्थो नियोगः, तत्सिद्धये । पदार्थसंसर्गविशिष्टार्थविषयो हि विधिः; न च पदार्थसंसर्ग-

मन्तरेण विशिष्टविषयसिद्धिः । अतो वेद विध्यायत्त एव पदार्थसंसर्ग इति विधिराश्रयितव्यः । ननु 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यत्र विना विधिना विशिष्टार्थावगतिरित्यत आह—तदभावे त्विति । संसर्गनिमित्तस्य P.101-11
विधेरभावे तु 'सत्यं ज्ञानम्' इत्यादौ पदार्थसंगतेरभावात् विशिष्टार्थावगतिर्या, सा भ्रान्तिसमानरूपेत्यर्थः । विवक्षितार्थनिष्पत्तय इति; विवक्षितो यो यावान्विशिष्टः सकारककलापो जलाहरणादिरर्थः, स तावान् कथं नाम संपूर्णः संपाद्यतामित्यर्थः । नैकपदसाध्येति; नैकपदप्रतिपाद्यो नैकेन पदेन प्रतिपाद्यः संपूर्णार्थः । सिद्धान्ती तु बहुप्रकारं विकल्प्य दूषयति—अत्रेति । यदि प्रमाणान्तरेण श्रोत्रा संसर्गस्यावगमात् प्रमाणान्तराधीनः स उच्यते; तदसत्, अपूर्वस्यापि प्रमाणान्तरानाधिगतस्यापि तस्य संसर्गस्य श्रोत्रा प्रतीतेः । 'अग्निरुष्णः' इत्यादिभ्योऽधिगतोऽपि गम्यत इति तदपेक्षया अपिशब्दः । अन्यथेति; प्रमाणान्तराधिगत एव गमकत्व इत्यर्थः । अनधिगतमित्यादिना श्रोतुरनधिगतार्थप्रतीतिमेव द्रढयति । ननु 'प्रमाणान्तरगम्येऽर्थे विवक्षा च व्यवस्थिता' इति पूर्वं विशिष्यैवोक्तत्वात् कोऽयमनुक्तोपालम्भः? उच्यते—अस्मिन्दूषिते तत्र मा संक्रमिष्यतीति तद्दूषणपुरःसरमेवायं दूषित इत्यदोषः । अथोच्यते—प्रमाणान्तरेण संसर्गश्चेत् प्रमीयेत, ततः स्याद्वचनवैयर्थ्यम्; न त्वेवम्; किंतु संसर्गयोग्यतामात्रं प्रमाणान्तरेण प्रमीयते क्रियाकारकैः; तानि च तया संसर्गयोग्यानीति; तेन लोके प्रमाणान्तराधीनसंसर्ग इति । तदयुक्तम्; वेदेऽपि हि संसर्गयोग्यता प्रमाणान्तराधीनैव; तथाहि—'अरुणयैकहायन्या सोमं क्रीणाति' इत्यरुणिम्नः करणकारकत्वात् क्रियया संसर्गयोग्यता । तथा साध्यविषयो नियोगः; भावार्थश्च साध्यः; अतः स एव योग्यत्वान्नियोगविषयः, न द्रव्यगुणौ सिद्धत्वेनायोग्यत्वादिति प्रमाणान्तरावगतयोग्यतासामर्थ्येनैव व्यवस्थाप्यत इति वेदेऽपि प्रमाणाधीन एव संसर्गः स्यात्, न विध्यधीन इति भावः । एवमिमं पक्षं दूषयित्वा अधुना पूर्वपक्षोपन्यस्तं पक्षं दूषयितुमनुभाषते—अथेति । तद्दूषयति—एवमिति । 'घटेन कूपाज्जलमाहर' इति विशिष्टार्थविवक्षा 'आहर' इत्येकस्मात् पदान्न प्रतीयते; ततो हि आहरणक्रिया प्रतीयते; सा च किं केन कुतश्चेत्य-

ज्ञानात् व्यवहारानुपयोगेन निष्प्रयोजना । तस्मात् विशिष्टार्थविवक्षा-प्रमितिर्नासंसृष्टेषु पदार्थेषु भवति। सा पदार्थानां संसर्गप्रयुक्तेति चेत्,
.101-21 उच्यते—एवं तर्हि विवक्षाप्रयुक्तत्वात् तन्निबन्धन एव पदार्थसंसर्गः, न प्रमाणान्तरनिबन्धनः । न हि प्रमाणान्तरं तस्यावबोधकं प्रयोजकं वा । यत्तु प्रमाणान्तरसिद्धे विवक्षातः प्रमाणान्तराधीनो लोके संसर्ग इत्युक्तम्; तत्रोऽच्यते—भवतु प्रमाणान्तरसिद्धे विवक्षा, न तु प्रमाणान्तरस्य संसर्गं प्रत्युपयोगः, विनापि प्रमाणान्तरमनाप्तवाक्येऽपि पदार्थसंसर्गप्रतीतेः । यत्तु प्रमाणान्तराधीनः संसर्ग इत्यत्र कारणमुक्तम्—प्रमाणान्तरविरोधे जर-द्गवादिवाक्ये न संसर्ग इति, तत्रोच्यते—कामं भवतु तद्विरोधान्न संसर्गः; तथापि तु न ततः संसर्गः, विप्रलम्भकवाक्येऽपि तत्प्रतीतेरेव । न च यद्विरोधे यन्न भवति तत् तदधीनं स्यात्; न ह्यातपविरोधे न छायेति सा तदधीना । किंच प्रमाणान्तरविरोधे नासंसर्ग इत्यप्यसिद्धम्, यतोऽ-नाप्तवाक्ये तद्विरोधे नासंसर्गः, अपितु संसर्गः प्रतीयते । अयं त्वाप्त-वाक्यादस्य विशेषः—यदत्र प्रतीतेऽपि प्रमाणान्तरेण बाध्यते, न तु प्रतीयत एव । यदि त्वनाप्तवाक्ये संसर्गप्रतीतिरेव न जाता बाध्यते, ततोऽनृतं नाम वचो नानर्थकाद्भिद्येत; अतश्च 'अनृतम्, अनर्थकम्, सत्यम्' इति वाक्यत्रैविध्यं लोकसिद्धं बाध्येत । अथ प्रमाणान्तरेणोप-लभ्यार्थं विवक्षित्वा पुरुषः परस्मै वाक्येन प्रतिपादयति । तेन प्रमा-णान्तरोपलब्धिरेव विशिष्टाप्तवचसो विषयः । विशिष्टार्थविषयतया च सा विशिष्टा; न स्वतः, निराकारत्वात् । विशिष्टश्चार्थः पदार्थसंसर्गसाध्यः; नैकपदसाध्यः, तस्य सामान्यमात्रविषयत्वात् । अतः सा विशिष्टा नासंसृष्टेषु पदार्थेषु वाक्यादवगम्यत इति तत्संसर्गमाक्षिपति । वेदे तु प्रमाणान्तरोपलब्धेः पदार्थसंसर्गप्रयोजिकाया अभावान्न संसर्गसिद्धिरिति तत्प्रसिद्धये विधिराश्रयितव्य इत्युच्यते; तत्र ब्रूमः—मा भूद्वेदे प्रमा-णान्तरोपलब्धिः, तथापि तत्र विधिर्नाश्रयितव्यः । किं तर्हि तत्र पदार्थ-संसर्गप्रयोजकम्? सत्यज्ञानानन्तब्रह्मरूपो विशिष्टोऽर्थ एव । यदि पुंवचसः प्रमाणान्तरोपलब्धिरर्थ इति सा तत्र स्वप्रतिपत्तये पदार्थसंसर्गं प्रयुङ्क्ते ततो वेदान्तानामानन्दादिरूपं विशिष्टं ब्रह्मार्थ इति तदेव स्वप्रतिपत्तये वेदान्तेषु पदार्थसंसर्गं प्रयोक्ष्यते; किं विधिनेति भावः । अथ

लोकावगम्यं शब्दसामर्थ्यम्; लोके च प्रमाणान्तरोपलब्धिः पदार्थसंसर्गस्य P.102-10
प्रयोजिका दृष्टा; अतो वेदान्तेषु तदभावान्न विशिष्टोऽर्थः पदार्थसंसर्गस्य प्रयोजकः, तेन विधिराश्रीयत इत्युच्यते; ततो वेदान्तेषु विधिमत्त्वेऽपि प्रमाणान्तरोपलब्धेः प्रयोजिकाया अभावात् विधेरपि चालौकिकत्वात् संसर्गो न स्यात्। अतो वृथा तेषु विधिमत्त्वकल्पनाक्लेश इत्याशयः। अथ शब्दानां पदार्थमात्रपरत्वे विशिष्टार्थप्रत्ययानुपपत्त्या पदार्थमात्रेण च व्यवहाराभावात् तदर्थशब्दप्रयोगानुपपत्त्या च यार्थापत्तिस्तया संसर्गमात्रपरत्वं शब्दप्रयोगस्य गम्यते; न तु प्रमाणान्तरोपलब्धिप्रयुक्तसंसर्गविशेषपरत्वम्, विनापि तत् संसर्गमात्रपरत्वेनापि प्रयोगप्रत्यययोरुपपत्तेः। अतो विनापि प्रमाणान्तरोपलब्ध्या विधिमत्त्वे स्यादेव संसर्ग इत्युच्यते; तन्न, लोके प्रमाणान्तरोपलब्धेरप्रयोजकत्वात्, विनापि तया शब्दानां संसर्गमात्रपरत्वसामर्थ्येनैव वेदान्तेषु विशिष्टार्थावगतिसिद्धेः। अतः किं विधिना? अथ न लोके प्रमाणान्तरोपलब्धिप्रयुक्तः संसर्गः, किंतु शब्दानां संसर्गपरत्वकृत एव; सत्यता संसर्गस्य प्रमाणान्तराधीना; तथाहि—यत्रापि श्रोतुः स्वप्रमाणं नास्ति, तत्रापि वक्तृप्रमाणं विना बुद्धादिवाक्येष्वसत्यत्वात् वक्तृप्रमाणान्तरमुखेन संसर्गः सत्यतां लभते; तेन प्रमाणान्तराप्रयुक्तोऽपि प्रमाणान्तराधीनसत्यत्व इति प्रमाणान्तराधीनो लोके संसर्ग उच्यत इति चेत्; भवत्वेवं लोके; वेदे त्वपौरुषेयत्वादेव वक्तृप्रमाणसंस्पर्शाभावात् स्वातन्त्र्येणार्थनिश्चयात् न सत्यत्वार्थमपि प्रमाणान्तरस्यापेक्षा; शब्दादेव संसर्गस्य सत्यतावगमात् शब्दनिबन्धन एव सः। एवं च सति न संसर्गज्ञानार्थं न च तत्सत्यतार्थं वेदान्तेषु विधिरुपास्यत इति तात्पर्यार्थः।

इदानीं भवतु लोके यथा तथा वा; वेदे तु संसर्गस्य विध्यधीनत्वं यदुक्तं तत्कथमिति पर्यनुयुज्यते—कथमिति। वेदे पदार्थसंसर्गस्य विध्यधीनत्वं कथम्? न हि संसर्गसामान्यस्य तद्विशेषस्य वा बोधको विधिः। अथ विशिष्टविषयो विधिर्नैकपदार्थविषयः; न च संसर्गमन्तरेण विशिष्टविषयसिद्धिः; अतः संसर्गं विना निर्विषयो विधिर्वृथा स्यात्; तेन संसर्गमाक्षिपतीति यदुच्यते, तन्न; यतो विधिपदादन्येन पदेनोदिते उक्तेऽप्यर्थे तुल्यमिदं वृथात्वम्; यतोऽन्योऽपि पदार्थो विशिष्टार्थावगत्या

P.102-20 स्वसिद्धये प्रयुज्यते । अत्राक्षिप्यते—विशिष्टा स्वार्थावगतिः कथं नाम भवत्विति; एतदर्थं पदेन पदार्थसंसर्गः प्रतिपाद्यत इति यावत् । न च पदार्थसंसर्गं विना विशिष्टार्थसिद्धिः । तां च विना नापूर्वार्थप्रतीतिः । पदार्थमात्रस्य संबन्धज्ञानसमये पूर्वमवगतत्वात् पदानि संसर्गयुक्तार्थाभिधानद्वारेण संसर्गस्य प्रमाणम् । न पदैः स्वार्थमात्रनिष्ठतया स्वार्थाः प्रत्याय्यन्ते; किंतु विशिष्टार्थप्रतिपत्तये, तथा व्यवहारोपपत्तेः । एवं च सति प्रतिपदार्थं संसर्गाकाङ्क्षा । अतोऽन्योऽपि पदार्थः संसर्गं विनानर्थकः सन् संसर्गमाक्षेप्तुमलमिति को विधेर्विशेषः? एवं च विधिना विना वेदान्तेषु सत्यज्ञानादिपदार्था एव संसर्गार्थाः प्रयोक्ष्यन्ते, किं विधिनेति भावः। लोके बुद्धिपूर्वप्रयुक्तानामानर्थक्यमयुक्तम्; अतः संसर्गार्थता युक्ता; वेदे पुनरबुद्धिपूर्वे पदार्थानामर्थवत्त्वे प्रमाणाभावान्न तथा । पदार्थः संसर्गमनाक्षिपन् यद्यनर्थको भवति, भवतु; न तु संसर्गमाक्षेप्तुमलम् । अतः संसर्गाय तत्र विधिरुपास्यत इति चेत्, तन्न; अस्ति हि वेदेऽप्यध्ययनविधिरर्थवत्त्वे प्रमाणम् । यच्चोक्तं लोके बुद्धिपूर्वप्रयुक्तानामानर्थक्यं मा भूदिति संसर्गावेदकत्वमिति, तदसारम्; यतो नैषां प्रमाणभावं ब्रूपे, ततो विधिः कस्माद्धेतोः नैवं नानर्थः, तस्यापि वैदिकत्वात् पदार्थान्तरवदर्थवत्त्वे प्रमाणाभावाविशेषात् । अतः सोऽपि न संसर्गं प्रयुञ्जीतेत्याशयः। यदि च संसर्गं विना बुद्धिपूर्वप्रयुक्तानामानर्थक्यम्, भवतु; तथापि पदार्थानां संसर्गप्रयुक्तस्वार्थाभिधानसामर्थ्यं विना निष्प्रमाणकः संसर्गः प्रतिपत्तुमशक्यः । अप्रमाणप्रतिपत्तौ हि अप्रमाणकत्वाविशेषात् यस्य कस्यचित्संसर्गस्य प्रतिपत्तिः प्रसज्येत, न विशिष्टस्य । तस्मादवश्यमेवमभ्युपगन्तव्यम्—यत्संसर्गप्रयुक्तस्वार्थावबोधसामर्थ्यं पदार्थानां व्यवहारादम्यत इति । एवं चेत् ततो वेदान्तेऽपि सत्यानन्तज्ञानादिपदार्थानां संसर्गाक्षेपकत्वं समानमिति किं तदर्थं विधिनेत्यर्थः ।

अथ विधिपदादपरमन्यत्पदं प्रमाणान्तरसिद्धेऽर्थे प्रयोगि; न तु विधायकः शब्दस्तथा, विधेः प्रमाणान्तरागोचरत्वात् । अतस्तदर्थो विधायकार्थो विधिः विधायकाच्छब्दान्मीयमानो यस्मादनन्यगम्यः प्रमाणान्तरागोचरः, तस्मात् प्रमाणान्तरावशीकृतोऽपूर्वमपि संसृष्टरूपं विषयं

संसर्गपुरःसरमाक्षिपेत् । इतरस्तु प्रमाणान्तरसिद्धः पदार्थः, यथा प्रमाणान्तरसिद्धस्तथैवानुवादभागनूद्यमानः प्रमाणान्तराङ्कुशवशीकृतो नापूर्वविषयं समाक्षिपेत् । अतो वेदान्तेष्वश्रूयमाणोऽपि पदार्थसंसर्गार्थं विधिराश्रयितव्य इति चेत्, तदयुक्तम्; एवं प्रमाणान्तरागोचरेण विधिना तच्छब्दस्य P. 103 3. संबन्धज्ञानं निह्नूयेत । निह्नवे चाव्युत्पन्नस्याज्ञातसंबन्धस्यापि विधायकाच्छब्दात् प्रवृत्तिः स्यात् । न चैवम् । किंच एवं सति पदं संबन्धज्ञानापेक्षित्वरूपं स्वधर्मं व्युत्क्रामेत् अतिक्रामेत्, वाक्यधर्मं च तन्निरपेक्ष्यलक्षणमाश्रयेत्। अन्यथा संबन्धज्ञानानिह्नवे तु अज्ञाने संबन्धिनि विधौ तच्छब्दस्य संबन्धज्ञानाशक्तेर्विधेरन्यसिद्धता प्रमाणान्तरसिद्धतापद्येत । तथा सति च पदार्थान्तरेभ्योऽनुवादसाम्येन विधेर्न कश्चिद्विशेषः । अतश्च यथा पदार्थान्तरमनूद्यमानत्वान्नापूर्वसंसर्गमाक्षेप्तुमलम्, तथा विधिरपीत्यर्थः ।

प्रमाणान्तरागोचरे नियोगे संबन्धज्ञानासंभव इत्युक्तम्; तत्र परमतमाशङ्कयति—शब्दादिति । न प्रमाणान्तरात्प्रमिते विध्यर्थे संबन्धज्ञानम्, अपितु विधायकाच्छब्दादेव प्रमिते तच्छब्देन सह वाच्यवाचकसंबन्धग्रहं योऽपि मन्यते तस्यैवम् इत्यनागतेनान्वयः । नन्वेवं शब्दाज्ज्ञाते विध्यर्थे संबन्धज्ञानम्। संबन्धज्ञाने च सति शब्दाज्ज्ञानमित्यन्योन्याश्रयः स्यादित्याशङ्कयाह—नान्योन्येति । न चान्योन्याश्रयरूपम् अवद्यं दोषः । कुतः? यतो न बालस्य स्वयं प्रमिते विध्यर्थे संगतिग्रहः। कथं नाम? तदाह—परेणेति । परेण प्रयोज्यवृद्धेन शब्दादवगते विध्यर्थे बालेन च तस्य प्रयोज्यस्य 'गामानय' इत्युक्ते या प्रवृत्तिः, तया 'नूनमस्मादनेन प्रवृत्तिहेतुभूतोऽर्थः प्रतिपन्नः' इत्येवं सूचिते तत्र विध्यर्थे सुकरः संगतिग्रहः संबन्धज्ञानमित्यर्थः ।

तत्र दूषणमाह—तस्येति । यो मन्यते तस्यैवं प्रयोज्यप्रवृत्त्या तदीयविशिष्टप्रत्ययेऽनुमेये तस्य च विषयतया विशेषणत्वेन वा पदार्थान्तरवद्विध्यर्थस्यानुमेयत्वे कथं स विध्यर्थः शब्दैकगोचरः? अथ तस्यानुमानस्य शब्दपूर्वकत्वात् शब्दैकगोचरो विध्यर्थ उच्यते, ततोऽनुमानैकगोचरः कस्मान्न भवति? यतः शब्दजोऽपि विध्यर्थबोधोऽनुमानपुरःसरः; तथाहि—

प्रयोज्योऽपि संबन्धग्रहणसमये प्रयोज्यान्तरप्रवृत्त्यनुमितमेव विध्यर्थं संप्रति शब्दात् प्रबुध्यते; प्रयोज्यान्तरमप्यन्यस्मात् प्रयोज्यवृद्धादिति बीजाङ्कुरवत् शब्दानुमानयोर्मध्ये प्रथममित्येकस्येदंप्रथमता न लभ्यते । तेनादौ शब्द-
P.104-16 पूर्वकत्वात् शब्दैकगोचर इति न वाच्यम् । किंतु सर्वस्यैव प्रयोज्यस्य बोद्धुरनुमानं शब्दात् पुरः स्थितं पूर्वभावि; यतः सोऽपि संबन्धज्ञानसमये प्रमितमेव विध्यर्थं शब्दात् बुध्यते । पदार्थान्तरस्येव स शब्दः श्रुतस्य विध्यर्थस्य विधायकः शब्दोऽनुवादकः । अतः सोऽपि पदार्थान्तरवदेव नापूर्वसंसर्गमाक्षेप्तुमलम्, न च शब्दैकगोचर इति भावः । अनुमानात्तु बुध्यमानो बालः शब्दाद्बुद्ध्वा विध्यर्थं न बुध्यते, तेनानुमेय एव । ननु शब्दाद्बुद्धमेव बालोऽनुमिनोति; बाढम्; किंतु प्रयोज्येन । न च प्रति-पन्नान्तरे प्रयोज्ये यः शाब्दबोधः, सोऽन्यस्य बालस्यानुमानिकं ज्ञानमनु-वादीकरोति । तेनानुमेयत्वमेव विध्यर्थस्य युक्तम्, न शब्दैकगोचरत्व-मित्याशङ्कयति । किंच प्रयोज्यप्रवृत्त्या प्रवृत्तिहेतुसामान्यमात्रे व्युत्पत्तिर्भूता; अतस्तदेव शब्दार्थः स्यात् । अथ सामान्येन व्यवहाराभावात् तस्मिन्विशेषः कल्प्यते, तथापि लौकिकादेव श्रेयःसाधनत्वात् सिद्धेर्नालौकिको नियोगः कल्पयितुं शक्यत इत्यर्थः । वैदिकीषु प्रवृत्तिषु लौकिकस्य प्रमाणान्तर-गोचरस्य प्रवृत्तिहेतोरसंभवात् अलौकिकः प्रवृत्तिहेतुः कल्प्यत इति चेत्, नैतत्; यतः 'य एव लौकिकाः' इति न्यायेन लोकावगतसामर्थ्यः शब्दो वेदे बोधकः । तत्र लौकिकीषु प्रवृत्तिषु लौकिक एव प्रवृत्तिहेतु-र्विदितसंगतिर्नालौकिक इति स एव वेदे प्रतिपत्तव्यः । असंभवे वा वेदे प्रवृत्तिहेतोर्ज्ञानस्य मिथ्यात्वमेव युक्तम्, न तु तस्मादलौकिककल्पना वा। अव्यभिचारी शब्दार्थः; प्रवृत्तिहेतुविशेषश्च बहुविधत्वेन व्यभिचारादशब्दार्थः; तेन प्रवृत्तिहेतुः सामान्यमेव लोके वेदे च शब्दार्थः । यत्तु वेदे विशे-षान्तरमलौकिकं प्रतीयते, तल्लौकिकानां प्रमाणान्तरगोचराणामप्रमाणपूर्वे वेदेऽसंभवात्; न तु शब्दादेव । तेन न वेदे लौकिकशब्दार्थत्यागदोष इति चेत्, एवमपि शब्दत्वसामान्यं वेदे शब्दार्थः; तल्लोके संबन्धज्ञान-समये प्रमितमिति पदार्थान्तरवत् तस्यानुवादता न व्यावर्तते । अथा-लौकिकविशेषाभिप्रायेण प्रमाणान्तरगोचरतोच्यते, तदपि न; यतः सोऽ-पीतरासंभवेन पारिशेष्यानुमानसिद्धः । एतच्चाभ्युपगम्योक्तम् । तत्त्वतस्तु

पारिशेष्यानुमानमप्यलौकिके विशेषे नास्ति; अन्यासंभवे हि तत्संभवति; न चात्र विशेषान्तरस्यासंभवः, श्रेयःसाधनत्वस्य लौकिकस्य विशेषान्तरस्य संभवात् ।

अथ लोकवेदव्यवहारौ द्वावप्यनादी पृथक्पन्थानौ; तत्र वैदिकीषु P 105-21 प्रवृत्तिषु लौकिकप्रवृत्तिहेतोरसंभवादलौकिके प्रवृत्तिहेतौ वैदिकादेव व्यवहारात् संबन्धज्ञानम् । अतो न लोकावगम्यो वेदे लिङाद्यर्थः, किंतु अन्यथैव । 'लौकिक—' इति न्यायविरोधश्चाहवनीयादिशब्दवत् परिहर्तव्यः । अतो न लौकिकासंभवे मिथ्यात्वम् । न च वैदिकीष्वपि प्रवृत्तिषु प्रवृत्तिहेतोः प्रवृत्त्यनुमेयत्वमविशिष्टमित्यनुवादत्वान्न विमुच्यस इति वाच्यम्; यतो न तत्र प्रवृत्त्या प्रवृत्तिहेतुरनुमीयते, अपितु प्रयोज्यवृद्धस्य तत्प्रत्ययः प्रवृत्तिहेतोश्च सिद्धिस्तत्प्रत्ययसामर्थ्येन । स च प्रयोज्यस्य प्रवृत्तिहेतुप्रत्ययः शब्दोत्थ इति प्रवृत्तिहेतोर्नियोगस्य शब्दैकगम्यत्वम् । यच्चोक्तम्—लौकिकस्य श्रेयःसाधनत्वस्य संभवात् नालौकिको विध्यर्थः कल्प्यत इति, तदयुक्तम्; यतो लौकिकी श्रेयःसाधनता प्रमाणान्तरगम्या, प्रमाणान्तरगम्ये लिङादेः प्रयोगदर्शनात् । लौकिकप्रयोगानुसारेण च वेदे शब्दार्थोऽनुसर्तव्यः । तत्र श्रेयःसाधनता चेद्वेदे लिङर्थः स्यात् ततः प्रमाणान्तरमपि शब्दार्थः स्यात्, तथैव व्युत्पत्तेः; न चैवम्; अपौरुषेयत्वाद्वेदे प्रमाणान्तराभावात् । तेनालौकिक एव प्रमाणान्तरागोचरो वेदे लिङर्थः, नानुवादभाक् । अतोऽपूर्वं संसर्गमाक्षेप्तुमलमिति चेन्मतम्, तत्रोच्यते—भवतु वेदव्यवहारात् वेदे शब्दार्थयोरनुगमोऽन्वयः संबन्धज्ञानमिति यावत्, तथापि न विध्यर्थस्य प्रमाणान्तरगोचरता व्यावर्तते; तथाहि—अलौकिके विध्यर्थे यदा लिङादिशब्दस्य वाचकसामर्थ्यं गम्यते, तदा स विध्यर्थः प्रमितः, न वा अप्रमितः? तत्र प्रमितश्चेत्, ततो न तत एव लिङादेः शब्दात् तस्य तदैव ज्ञायमानसंबन्धत्वेन पूर्वमज्ञातसंबन्धस्याबोधकत्वात् । अतोऽवश्यं प्रमाणान्तरेण प्रमितिरिति वाच्यम् । अत आपन्नं प्रमाणान्तरगोचरत्वम् । अथ न प्रमितः, ततो यदापि शब्दः प्रमितः, तदा विध्यर्थो न प्रमितः; ततश्च द्वयोः संबन्धिनोरज्ञानात् तदाश्रयः संबन्धो ज्ञातुमशक्यः । एतच्चाभ्युपगम्योक्तम् । तत्त्वतस्तु न लिङादयः केवला वैदिकाः; तेन तेषां पश्वादिशब्दवल्लौकिकादेव व्युत्पत्तिर्युक्ता ।

योऽपि मन्यते—शक्तिः शब्दस्य संबन्धः । सा च नार्थे प्रवृत्ति-
हेतौ, तस्य तत्प्रत्ययद्वारेण प्रतीयमानत्वेन व्यवहितत्वात् । किंतु तत्प्रत्यये;
स हि शब्दस्य साक्षात्कार्यः । स एव च प्रयोज्यवृद्धस्य प्रवृत्त्यानुमितो
न प्रवृत्तिहेतुः । तेनैव च लिङ्गेन शब्दस्य संबन्धज्ञानम् । तेन न
प्रवृत्तिहेतोः प्रमाणान्तरगोचरता । न च संबन्धज्ञानानुपपत्तिः, प्रवृत्तिहेताव-
P.106.15 प्रमितेऽपि तत्प्रत्ययेन प्रमितेन तदुपपत्तेरिति । स इदं प्रष्टव्यः—किं
प्रत्ययमात्रे शब्दस्य सामर्थ्यं गृह्यते? अथालौकिकप्रवृत्तिहेतुप्रत्यये? यद्याद्यः
पक्षः, तदा ततः प्रयोज्यस्य प्रत्ययात्तत्प्रवृत्त्यानुमितात् बालेन यत्किंचि-
त्प्रतीयेत, नालौकिकः प्रवृत्तिहेतुः । अथ प्रयोज्यस्य प्रवृत्तिहेतुप्रत्ययः,
तत्प्रवृत्त्या लौकिकासंभवेन च पारिशेष्यादलौकिकार्थविषयमनुमाय तत्र
बालः शब्दस्य सामर्थ्यं प्रत्येति, ततो विशिष्टप्रयोज्यप्रत्ययानुमितौ तद्वि-
शेषणस्य प्रवृत्तिहेतोरपि प्रवृत्तिपारिशेष्याभ्यामनुमितत्वादापन्नं तस्य प्रमा-
णान्तरगोचरत्वम्; तथाहि—स्मृतं वा विशेषणं विशिष्टप्रमितावङ्गं भवति,
यथा—'अग्निमान् धूमात्' इत्यादिसंबन्धज्ञानसमये स्मर्यमाणोऽग्निस्त-
द्विशिष्टपर्वतप्रमितौ; प्रमितं वा, यथा—'शुक्लो गौः' इति शौक्ल्यं
तद्विशिष्टगोप्रमितौ । तदिह यदि प्रवृत्तिहेतुस्तत्प्रत्ययस्य स्मृतौ यदि वा
प्रमितौ विशेषणम्, उभयथापि प्रमाणान्तरविषयो न शब्दैकगम्यः,
शब्दस्य तदानीमगृहीतसंबन्धत्वात् । तत्र यदि स्मृत्याकृष्टः प्रवृत्तिहेतु-
स्तत्प्रत्ययस्य विशेषणम्, ततः स्मृतेः प्रमितिजन्यत्वादवश्यं प्रमाणान्तरं
स्मृतिसिद्धयेऽन्वेष्टव्यम् । अतः प्रमितत्वान्न शब्दैकगम्यत्वम् । अथ
प्रमितौ विशेषणम्, तदापि विशिष्टानुमितौ विशेषणस्याप्यनुमितत्वात्
प्रवृत्तिहेतोः प्रमाणान्तरगोचरत्वम् ।

अथ मतम्—सत्यं प्रतीतालौकिकप्रवृत्तिहेतुविशिष्ट एव प्रयोज्यप्रत्ययस्तत्प्रवृत्त्या पारिशेष्यादनुमानेनानुमीयते, तथापि प्रयोज्यस्य प्रत्यय एवानुमानस्य प्रामाण्यं न तद्विशेषणे प्रवृत्तिहेतौ; तस्य तु तत्र प्रतीतिमात्रम्, न तु प्रमितिः; प्रमितिस्तु तस्य प्रवृत्त्यानुमितात् प्रयोज्यप्रत्ययादेव; स च शाब्द इति नानुमेयत्वम्; तत्राप्रमितस्य विशेषणत्वं क्विमिदमन्यत्र दृष्टम्? दृष्टमिति ब्रूमः; यथा—आप्तवचनं विशिष्टे वक्तृप्रत्यये प्रमाणम्, न प्रत्ययमात्रे; विशिष्टता च प्रत्ययस्यार्थानुबन्धेन, न स्वतः । स चार्थः

प्रतीत एव प्रत्ययं विशिनष्टि । न चाप्तवचनप्रमितः, तस्य वक्तृप्रत्ययमात्रे प्रामाण्यात्; अर्थस्य च तत एव वक्तृप्रत्ययादुत्तरकाले प्रमितेः, ततः पूर्वमेव च विशिष्टप्रत्ययप्रतीतेः । तस्मात्प्रतीतमात्रः प्रवृत्तिहेतुस्तत्प्रत्ययानुमितौ विशेषणम्, न स्मृतो न प्रमित इति । तदयुक्तम्; P. 107-4
पञ्चविधा हि प्रतीतिः—प्रमाणसंशयविपर्ययविकल्पस्मृतिरूपा । तत्र यया प्रतीत्या प्रवृत्तिहेतुः प्रतीतमात्र उच्यते, तयावश्यं प्रमाणादिषु मध्येऽन्यतरया भाव्यम् । तत्र न तावत्स्मृतिः, प्रागनवगतेः; अवगतं हि स्मर्यते । न संशयः, उभयकोटिसंस्पर्शविरहात् । न च विकल्पः; स हि वस्तुशून्यम्; तदुक्तम्—"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति । तत्र प्रवृत्तिहेतुप्रतीतिश्चेत् तद्विषयवस्तुशून्या स्यात्, ततः प्रवृत्तिहेतोरभावात्तत्प्रत्ययस्यापि प्रयोज्यवृद्धगतस्य बालेनानुमीयमानस्य वस्तुशून्यतया विकल्पत्वं प्रसज्येत । तदा च प्रवृत्तिहेतु वस्तु नास्त्येव; को विध्यर्थो भविष्यति? न च विपर्ययः; यतस्तत्र प्रवृत्तिहेतौ यथार्थत्वे प्रयोज्यप्रत्ययस्याभिमते सत्यार्थग्राहिणी सती बालस्य प्रवृत्तिहेतुः प्रतीतिः कथमर्थशून्या स्यात्? स्मृतित्वं च निरस्तम् । पारिशेष्यात् प्रमाणमित्यापन्ना प्रवृत्तिहेतोः प्रमाणान्तरगोचरता । यच्च प्रयोज्यप्रत्ययाद्बालस्य प्रवृत्तिहेतुप्रमितिः; स च प्रत्ययः शब्दोत्थ इत्यनन्यप्रमाणकत्वमुक्तम्; तदप्ययुक्तम्; प्रयोज्यवृद्धस्य हि शब्दोत्थः, न बालस्य । न चान्यप्रत्ययेनान्योऽवबुध्यते । तस्माद्बालः प्रत्ययान्तरेण बुध्यत इति न शब्दैकगम्यता विध्यर्थस्य ।

अथ मतम्—न प्रयोज्यप्रत्ययेन बालो बुध्यते, अपितु स्वप्रत्ययेनैव; प्रवृत्त्यनुमितशब्दोत्थप्रयोज्यप्रत्ययसामर्थ्येन तु ततः; तेन तस्य शब्दैकगम्यत्वमिति । तत्र पृच्छामः—यद्बालस्य स्वं ज्ञानम्, तत् कतमत् प्रमाणम्? न तावच्छाब्दम्; शब्दज्ञानाद्धि यदर्थज्ञानं तच्छाब्दम्; न च बालस्य पूर्वमव्युत्पन्नस्य शब्दज्ञानादर्थज्ञानम्, अपितु प्रयोज्यस्य । यच्छब्दज्ञात्प्रवृत्तिहेतुरूपार्थज्ञानं बालेन प्रवृत्त्यानुमितं ततश्च बालस्य ज्ञानं न शाब्दमिति तद्गम्यस्य विध्यर्थस्यापन्नं प्रमाणान्तरगोचरत्वम् । अथ मतम्—न ब्रूमो बालस्य स्वज्ञानं शाब्दमिति; किंतु यत्प्रयोज्यस्य प्रवृत्तिहेतुविषयं ज्ञानं प्रवृत्त्या बालेनानुमीयते, यन्मुखेन प्रवृत्तिहेतुं बालः प्रत्येति, तस्य प्रामाण्ये सति तद्विषयप्रवृत्तिहेतुर्बालस्य प्रसिध्यति, नान्यथा ।

तस्य च प्रामाण्यं निर्दोषाच्छब्दादुद्भवति । तेन शब्दाधीनस्तत्र बालज्ञाने प्रवृत्तिहेतुनिश्चय इति । यद्यपि बालः स्वज्ञानेन प्रयोज्यप्रत्ययविशेषणत्वेन प्रवृत्तिहेतुं प्रत्येति, तथापि निर्दोषशब्दबलेन तत्र निश्चय इति शब्दस्य तत्र प्रवृत्तिहेतौ प्रामाण्यमुच्यते; न बालज्ञानस्य, तस्यानिश्चायकत्वादिति ।
107-15 तदप्यसारम्; यतः शब्दाद्यदर्थज्ञानं तच्छाब्दम्; न तु परम्परयापि यत्र शब्दाधीनो निश्चयः, तच्छाब्दम् । यदुक्तम्-- आप्तवाक्यात् वक्तृज्ञाने प्रतीते तत एवार्थसिद्धिः, प्रतीतिमात्रेणैव वक्तृज्ञानेऽर्थो विशेषणमिति; तदप्ययुक्तम्; यतः पुरुषवचनमपि नार्थे न प्रमाणम्, न ह्यर्थमप्रतीत्य ज्ञानविशेषः प्रत्येतुं शक्यः । तस्माद्वक्तृज्ञानविशेषणत्वेनार्थः प्रत्येतव्यः । विशेषणं च स्मृतं वा, प्रमितं वा । तत्रार्थस्य पूर्वमननुभूतस्य स्मृत्यसंभवात् प्रमीयमाण एवार्थो वक्तृज्ञाने विशेषणम् । न च तत्प्रमितिः शब्दादन्येन प्रमाणेन, तस्यानुपलब्धेः । तस्माच्छब्दप्रमाणिकैव तत्र प्रतीतिरिति नार्थः प्रतीतिमात्रेण विशेषणम् । न च वक्तृज्ञानेनैव शाब्देन, परज्ञानेन परस्याप्रतीतेः । अतः पुंवचनमदृष्टान्तः ।

ननु पुंवचसि शब्देन स्वज्ञानेन चेत् श्रोतार्थं बुध्यते न वक्तृज्ञानेन, कथं तर्हि 'अपिच पौरुषेयाद्वचनात्' इत्यादिना वक्तृज्ञानाधीनार्थसिद्धिरत्युच्यते? तत् वक्तृज्ञानमिथ्यात्वे तदसंभवे वा चैत्यवन्दनादिवाक्येषु या पुंवाक्यात् वक्तृज्ञानप्रतीतिः सा बाध्यते, वक्तृज्ञानप्रतीत्यबाधे च सा न बाध्यत इति कृत्वा; न पुनः पुंवचसोऽर्थो न विषयः, किंतु वक्तृज्ञानेन श्रोतुरर्थप्रतीतिरित्यभिप्रायेण । यदि तु पुंवचसोऽर्थो न विषयः स्यात्, ततः पुंवचसोऽर्थे सापेक्षत्वम् 'अर्थमात्रे च सापेक्षत्वम्' इत्यत्र यदुक्तं तन्न स्यात् । विषये हि सापेक्षनिरपेक्षते भवतः, नाविषये । तथा चोक्तं वार्तिककृता--"प्रामाण्यस्थापनं तु स्याद्वक्तृधीहेतुसंभवात्" इति । एतदुक्तं भवति--पुंवचसोऽर्थे प्रामाण्यं स्वत एव; वक्तृधीहेतुसंभवेन तु प्रतिष्ठाप्येत । यदि तु वक्तृबुद्धेर्हेतुर्न संभवेत् चैत्यवन्दनादाविव बुद्धबुद्धेः, ततो बाध्येत । तेनाबाधनमत्र स्थापनमभिप्रेतम्, न तु प्रामाण्यमेव । तथा प्रामाण्यस्थापनमित्युक्तम्, न तु प्रामाण्यमिति । एतच्च प्रामाण्यस्थापनं वाक्यस्य, न तु वक्तृधिय एव । तेन न वक्तृधियोऽर्थे प्रामाण्यम्, अपितु वाक्यस्य । किंच "औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः" इत्यर्थ-

ग्रहणाद्‌व्यर्थेनैव शब्दस्य वाच्यवाचकयोग्यतालक्षणः संबन्धः, न ज्ञानेन। स चाप्रमिते संबन्धिन्यर्थे ज्ञातुमशक्य इत्यापन्नं विध्यर्थस्य प्रमाणान्तरगोचरत्वम् । न च वाच्यम्—स्यादेवं यदि प्रमिते विध्यर्थे ज्ञानादेः संबन्धो गृह्येत, किंतु प्रतीतिमात्र इति; यतः सा प्रतीतिर्न तावत्संशयः, उभयकोटिस्पर्शविरहात् । तत्र यद्यर्थवती, ततः स्मृतिः प्रमाणं वा स्यात्। P 108-11
तत्र च विध्यर्थस्य प्रमाणान्तरगोचरत्वमुक्तम् । अथ विपर्ययविकल्परूपा नार्थवती; ततो विध्यर्थो नास्त्येव; केन लिङादेः संबन्धः? किंच यदि शब्दप्रतीतेरन्यथाप्यप्रामाणिकया प्रतीत्या विध्यर्थः प्रतीयेत, ततः शब्दैकगम्यत्वातिक्रमात् प्रमाणान्तरगम्यत्वमप्याशङ्क्येत । यदप्युक्तम्—लौकिकश्रेयःसाधनता प्रमाणान्तरगोचरता; ततः सा यदि लिङर्थः स्यात्, ततः प्रमाणान्तरगोचरतापि शब्दार्थानुप्रवेशिनी स्यादिति; तदप्ययुक्तम्; यतः तस्मिन् सति शब्दः प्रयुज्यते, यद्वा तस्मिन्नसति न प्रयुज्यते, इत्येतावन्मात्रेण न शब्दार्थो भवति; अन्यथा वृक्षत्वे सति शिंशपाशब्दः प्रयुज्यते, तस्मिन्नसति घटादौ न प्रयुज्यते इति तदपि शब्दार्थः स्यात् । क नाम द्वितीयोऽपि शब्दार्थो भवति? तथा सत्सु क्षितिपवनादिषु बीजाभावे नाङ्कुरोत्पत्तिरिति बीजमपि हेतुर्गम्यते। एवं यत्रैकस्मिन्प्रयोजके शब्दप्रयोगनिमित्ते सत्यपि द्वितीयस्याभावान्न शब्दस्य प्रयोगः, तत्र सोऽपि प्रयोजकः प्रयोगनिमित्तं गम्यते, यथा गौ(शो)णशब्दे ; तत्र हि सत्यप्यरुणत्वे गवादावप्रयोगादश्वत्वमपि प्रयोजकमित्येषा तावदन्यत्र स्थितिः । इह च लिङादौ श्रेयोहेतौ लिङादिदर्शनात् तदभावे चाश्रेयोहेतोः प्रमाणान्तरगोचरत्वे सत्यप्यदर्शनात् श्रेयोहेतुत्वं तावच्छब्दार्थः । यद्यपि श्रेयोहेतौ प्रमाणान्तरगम्ये लिङादेर्दर्शनम्, प्रमाणान्तरागम्ये नृशृङ्गादौ प्रमाणान्तरगम्यत्वाभावेनादर्शनम्, तथापि यदि श्रेयोहेतुत्वे सति प्रमाणान्तरगम्यत्वाभावाददर्शनं स्यात् ततः शोणन्यायेन प्रमाणान्तरगम्यत्वमपि शब्दार्थः स्यात्; न त्वेवमस्ति । किंतु यत्र प्रमाणान्तरगम्यत्वं नृशृङ्गादौ नास्ति, तत्र श्रेयोहेतुत्वमपि नास्ति । तेन उभयाभावे लिङादेरप्रयोगात् किं श्रेयोहेतुत्वस्य व्यतिरेकादप्रयोगः, उत प्रमाणान्तरगम्यत्वस्येति संदिग्धो व्यतिरेकः । तत्र श्रेयःसाधनतायाः पूर्वं प्रयोजकत्वस्यावधारितत्वात् तदभावे तदभावनिबन्धन एवाप्रयोगः, न प्रमाणान्तरगम्यत्वाभावनिबन्धन

P.109-1 इति निश्चीयते । ततश्च श्रेयःसाधनत्वे सति प्रयोगः तदभावे चाप्रयोग इत्यन्वयव्यतिरेकयोरुपपत्तौ न प्रमाणान्तरगम्यत्वस्य शब्दार्थत्वे किंचित्प्रमाणमस्ति । अतः श्रेयःसाधनतायाः शब्दार्थत्वे प्रमाणान्तरगम्यतापि शब्दार्थः स्यादिति यदुक्तं तन्निरस्तम् । यदि पुनर्यथोक्तप्रकारं विना अन्वयव्यतिरेकमात्रेण शब्दार्थत्वं स्यात्, ततः सत्तावृक्षत्वादिषु सत्सु शिंशपायां प्रयोगात् तदभावे च नृशृङ्गादावप्रयोगात् सत्तादयोऽपि शिंशपाशब्दार्थाः स्युः । अथ नृशृङ्गादौ शिंशपार्थाभावादेवाप्रयोगोपपत्तेर्न सत्ताद्यभावस्याप्रयोगहेतुत्वम्, अतो न सत्तादेः शिंशपाशब्दार्थत्वमित्युच्यते, तल्लिङादावपि समानम्। यथा चैतत्तथोक्तम्। अथ श्रेयःसाधनता प्रमाणान्तरगम्या; सा चेद्विध्यर्थः स्यात्, ततो वेदे प्रमाणान्तराभावात् प्रामाण्यं न स्यात् । अतः प्रमाणान्तरानवगम्य एव वेदे विध्यर्थ इत्युच्यते, तदसत् । न हि य एकत्र यस्य प्रमाणस्य गोचरः, सोऽन्यत्रापि तस्यैव गोचरः, तत्प्रमाणाभावे वा प्रतीयमानोऽपि मिथ्या भवति; यतः समीपे वह्निरिन्द्रियगोचरः, दूरे त्वनुमानादिगोचरः । न स एकेन्द्रियगोचर इति सर्वत्रैव तथा; न च प्रतीयमानो वा मिथ्या । तेन यदि नाम लोके भोजनादावितरफले श्रेयःसाधनता अन्वयव्यतिरेकावगम्या, तथापि व्यवहितफलेषु यागादिष्वन्वयव्यतिरेकाभावात् शब्दैकगम्या वेदे भविष्यति । को दोषः? वैदिकी श्रेयःसाधनता प्रमाणान्तरानुपलब्ध्या बाध्यते, यथा प्रत्यक्षानुपलब्ध्या बाध्यते शशशृङ्गमित्ययं दोष इति चेत्; नायमपि दोषः, यतः प्रमाणान्तरं दृष्टविषयम् । अदृष्टविषयस्तु शब्दः । तेनादृष्टं प्रमाणान्तरस्य विषय एव न भवति । न च यो यस्याविषयः स तेनानुपलब्ध्या बाध्यते, यथा चक्षुषानुपलब्ध्या रसः । शशशृङ्गं च न केनापि प्रमाणेन गृह्यते । श्रेयःसाधनता तु शब्देन गम्यते । न चैकप्रमाणगम्यमन्याज्ञानाद्बाध्यते रसवदेव । अथ प्रमाणान्तरविषया चेत् साधनता वेदे लिङर्थः स्यात्, ततः प्रमाणान्तरविषये प्रमाणान्तरेण विरोधात् वेदस्याप्रामाण्यं स्यात्; अस्ति च यागादौ अनन्तरफलानुपलब्धेस्तथैव विरोधः; प्रमाणान्तराविषये तु लिङर्थे नैव दोष इति प्रमाणान्तराविषय एव वेदे विध्यर्थ आश्रीयते, नेतर इति चेत्; तदसत्; यतो यदि वेदे फलस्यानन्तर्यं चोदितं स्यात्, ततोऽनन्तरफलानुपलब्ध्या विरोधः स्यात्; न त्वेतदस्ति । तदुक्तम्—"आनन्तर्यमचोदितम्" इति ।

ननु यद्यप्यानन्तर्यमचोदितम्; प्रमाणान्तरगम्यता च न शब्दार्थः; P.109-14
तथापि प्रमाणान्तरसिद्धा चेत् श्रेयःसाधनता वेदेऽपि लिङर्थः, ततो यादृशी सा लोके सिद्धा तादृश्याश्रयितव्या । सा चानन्तरभाविश्रेयःसाधनता प्रमाणान्तरसिद्धा । अतो वेदे तादृश्येवाश्रयितव्या; अन्यथा न शाब्दता स्यात् । न च यागादावनन्तरभाविश्रेयःसाधनतेति वेदे न सा शब्दार्थ इति चेत्, तत्र ब्रूमः; यत्तावदुक्तम्—अनन्तरफलसाधनता लोके सिद्धेति, तत्तावन्न; कृष्यादिषु व्यवहितफलेषु व्यभिचारात् । अथ तत्रापि यद्यपि सस्यलाभादि व्यवहितम्, तथापि भूसंस्काराङ्कुरजन्माद्यवान्तरकार्यमनन्तरमेव भवतीत्युच्यते, तद्यागादावपि समानम्; तेष्वपि हि अपूर्वमनन्तरमुत्पद्यत इत्यर्थापत्त्या सिद्धम् । तदुक्तम्—

"फलाय विहितं कर्म क्षणिकं चिरभाविने ।
तत्सिद्धिर्नान्यथेत्येवमपूर्वं च प्रकल्प्यते ॥" इति ।

किंच यत्र विशिष्टा अनन्तरा श्रेयःसाधनता सिद्धा, तत्र तद्विशेषणं श्रेयःसाधनतामात्रमपि सिद्धम् । अतो यथा गोत्वविशिष्टायां व्यक्तौ गोशब्दप्रयोगे गोत्वमेव तद्विशेषणं तदर्थः, न तद्विशेषः; तथा इहापि श्रेयःसाधनतामात्रं लिङर्थः, नानन्तर्यं विशेषः । तेन यागादावनन्तरफलादर्शनेऽपि न कश्चिद्विरोधः । तदेवं लौकिकेऽपि श्रेयःसाधनत्वे प्रवृत्तिहेतौ लिङर्थे दोषाभावात् अलौकिकविध्यर्थकल्पना व्यर्थैव । किंच यथा मुखप्रसादादिना कस्यचित् सुखसंवेदनेऽनुमीयमाने, सुखमपि तदनुमानप्रमेयं भवति, न तदर्थं पृथक् प्रमाणमर्थ्यते; तथा प्रयोज्यवृद्धप्रवृत्त्या प्रवृत्तिहेतुप्रत्ययेऽनुमीयमाने प्रवृत्तिहेतुरप्यनुमेयो भवति । अतो न तस्य शब्दैकगम्यत्वम् ।

यदापीदं दर्शनम्—वक्तृज्ञानमेव पुंवचसोऽर्थः; तच्च तस्य वक्तुर्ज्ञानमर्थं विना न भवतीत्यनुपपत्त्या; यद्वा आप्तज्ञानमर्थान्वितम्, आप्तज्ञानत्वात् पूर्वदृष्टाप्तज्ञानवत् इत्यनुमानेनार्थसिद्धिरिति; तदपि प्रयोज्यप्रवृत्त्या प्रमितः प्रवृत्तिहेतुप्रत्ययो न प्रवृत्तिहेतुमन्तरेणेत्याप्तवचनार्थस्येव प्रवृत्तिहेतोरनुमेयतया । अतो न शब्दगम्यत्वसिद्धिः । अनुमेयत्वे इति वृत्तौ चानुमानसाम्यादर्थापत्तिगम्यतापि द्रष्टव्या । अथ यतः प्रवृत्तिहेतुप्रत्ययान्

प्रवृत्तिहेतुरनुमीयते, तस्य लिङादिशब्दगम्यत्वाच्छब्दैकगम्यत्वं प्रवृत्तिहेतोरुच्यते; तदसत्; प्रवृत्तिहेतुप्रत्ययस्य शब्दसाधनत्वेऽपि प्रवृत्तिहेतुरनुमेयः, न स तस्य शाब्दो भवति। अन्यथा आप्तवचने यदाप्तज्ञानं तद्यदाक्षसाधनं भवति, तदा तदनुमेयोऽर्थः श्रोतुः प्रत्यक्षप्रमाणकः स्यात्। न चैवम्। अतो न प्रवृत्तिहेतोः शब्दैकगम्यत्वम्। तस्मात् 'तस्यैवमनुमेयत्वे' इत्यादि शोभनमुक्तम्।

P.110-9. अथ प्रमाणरूपेण स विध्यर्थः स्वशब्देन लिङादिना प्रकाशितः, प्रमाणस्य प्रमेयमन्तरेणासंभवात् अपूर्वस्य पदार्थसंसर्गस्याक्षेप्ता संबन्धज्ञाननिरपेक्षत्वात् प्रमाणान्तरं प्रति निरपेक्षश्च कथ्यते। यदि ह्यसौ गोशब्दवत् संबन्धज्ञानापेक्षः स्यात्, ततः संबन्धज्ञानस्य संबन्धिज्ञानाधानत्वात् संबन्धिज्ञानाय च प्रमाणान्तरमपेक्षते; तत्र च यथासिद्धमनूद्यमानो नापूर्वसंसर्गमाक्षिपेत्; न त्वेतदस्ति; किंतु निरपेक्षश्च कथ्यतेऽन्यप्रमां प्रति इत्याशङ्कयति—अथेति।

तद्दूषयति—तथापीति। यद्यपि प्रमाणात्मा विध्यर्थः, तथापि प्रमाणान्तरेणासिद्धे तस्मिन्नपूर्वोक्तावव्युत्पन्नप्रवृत्तिपदधर्मव्यतिक्रमाख्यौ दोषौ स्याताम्; प्रमाणान्तरसिद्धे च तस्मिन्ननुवादता अनूद्यमानता। तच्च यथावगतोऽनूद्यमानो नापूर्वस्य संसर्गस्याक्षेप्ता स्यात्। किंच यत्र प्रमेयस्य विध्यर्थस्य प्रामाण्यं तत्र श्रुतेः श्रूयमाणस्य शब्दस्यैव। ततश्च वृथा त्वयं विध्यर्थ इत्यर्थः।

ननु शब्दे प्रमाणे तस्यानुवादकत्वादपूर्वार्थावगमो न स्यात्; तेन तद्वाच्यो विध्यर्थः प्रमाणमिष्यते; नैवम्; शब्दश्चेदनुवादकः, तद्वाच्यं विध्यर्थाख्यं प्रमाणमपि यथावगममनूद्यमानं कथमपूर्वमर्थं संसर्गाख्यमवबोधयेत्? न च—प्रमाणमनूद्यते, न तत्प्रमेयम्; तेन तदपूर्वमर्थं बोधयिष्यतीति वाच्यम्। यतः प्रमाणं चेदनूद्यते नूनं तत्प्रमेयमप्यनुवदितव्यम्। न प्रमेयसंस्पर्शाहिता विशिष्टप्रमाणावगतिरस्ति। अतः प्रमाणमनूद्यमानं यथावगतप्रमेयमेव प्रतीयत इति नापूर्वप्रमेयाक्षेपसिद्धिरित्यर्थः।

किंच एष विध्यर्थः क्वार्थे प्रमाणम्? न तावद्यागादौ स्वशब्दके, स्वीयो यजत्यादिशब्दो यस्यास्ति स स्वशब्दकः। एतदुक्तं भवति—यजत्यादिशब्देनैव यागादिरुक्तः; किं तव विध्यर्थेनेति। न च पदार्थ

संसर्गोऽपूर्वस्तस्य प्रमेयः; यतो लौकिके शब्दे 'ब्राह्मण, पुत्रस्ते जातः' इत्यादौ अविधौ विधिरहितेऽपि श्रोतुः अपूर्वः पदार्थसंसर्गोऽस्ति प्रतीयते P. 111-2
श्रोत्रेति यावत् । अतो न विधिप्रमाणकोऽसाविति भावः ।

अथ स्वर्गादिकामिनो नियोगः, कामं प्रत्यनुपाये यागादौ विषये नावकल्पते । कर्तव्ये हि विषये कामिनो नियोगः; कामोपायश्च कर्तव्यो नान्यः । तत्राकामोपायो यागादिर्न कामिना कृतः स्यादिति कामोपायः । न चाशक्तोऽसौ कामोपायो भवतीत्येवं यागादेः फलसाधनशक्तौ नियोगः प्रमाणमिति चेत्तत्राह—शब्दस्तत्र फलसाधनशक्तौ न दुष्यति । 'यागेन स्वर्गं साधयेत्' इति शब्दोऽपि यागस्य फलसाधनशक्तिमवगमयितुमलम् । अतः कस्तस्य दोषः? येन तमतिलङ्घ्य विधिराश्रीयते । न च—शब्दः प्रमाणान्तरापेक्षः, तेन नापूर्वफलसाधनशक्तिमवगमयितुमलमिति वाच्यम्, यतः प्रमाणान्तरापेक्षा वैदिकस्य शब्दस्यापौरुषेयत्वेन पूर्वमेव 'अपौरुषेयता तेन पौरुषेयत्वमेव च' इत्यत्र प्रत्युक्ता । न च शब्दगम्ये फलसाधनत्वे अनन्तरं फलादर्शनात् अनुपलब्ध्या विरोध इति वाच्यम्; नियोगगम्येऽप्यस्य विरोधस्य तुल्यत्वात् । अथानन्तर्यस्याचोदितत्वात् तत्र विरोधाभावः, स शब्देऽपि प्रमाणे तुल्य इत्यदोषः । अन्योऽर्थः—शब्दः तत्र फलसाधनशक्तौ न दुष्यति । नियोगात्फलसाधनतावगमो न संभवति । तच्चेदं विधिविवेकभावनाविवेकाभ्यामवगन्तव्यम् । तत्र हि—नियोगो विषयनियोज्यमात्रापेक्षो न फलसाधनापेक्षः । अधिकारी च नियोज्यः । न चाविशिष्टोऽधिकारी भवतीति तत्र स्वर्गकामपदमधिकारिविशेषणम् । स्वर्गकामनायाश्च जीवनभेदादिवत् निमित्तत्वेनाप्यधिकारिविशेषणत्वोपपत्तेः न नियोगात्स्वर्गस्य साध्यत्वं यागस्य तत्साधनत्वमवगन्तुं शक्यत इत्याद्युक्तम् । किंच फलसाधनशक्तिश्चन्नियोगस्य प्रमेयः, नित्येषु तदभावात् प्रमेयानुपपत्तिः । तदेवं यस्मान्नियोगस्य प्रमाणत्वेन विशेषो नास्ति, तस्मात् पदार्थान्तरैः संबन्धज्ञानापेक्षप्रतीतिभिरनूद्यमानस्येनापूर्वसंसर्गमाक्षेप्तुमशक्तेर्नियोगस्य तुल्यत्वात् न नियोगस्यैव विषयसिद्ध्यर्थं या संसर्गाकाङ्क्षा तन्निबन्धनः पदार्थानां संसर्गः, किंतु सर्व एव पदार्थाः स्वशब्दैरन्योन्यसंबन्धं प्रति यथायोग्यं क्रियाकारकादिरूपं तेन प्रकाशिताः सन्तः संसर्गभागिनः । यतो विशिष्टो-

ऽर्थः कथं नु नाम प्रतीयतामिति तत्र युक्ता पदानां समभिव्याहृतिः समुच्चारणं न पदार्थमात्रप्रतिपादनप्रयुक्ता, तन्मात्रस्य व्यवहारानङ्गत्वात् । विशिष्टता पदार्थस्य न संसर्गमन्तरेण । तस्मादेवमपि सर्व एव पदार्थाः संसर्गाक्षेपका न नियोग एव । अतो नियोगाभावेऽपि पदार्थानां संसर्ग उपपद्यते । न संसर्गाय वेदान्तेषु नियोगानुप्रवेशः कल्प्यत इत्यर्थः ।

P. 112-6. तत्रापरः प्रत्यवतिष्ठते—कथमिति । नियोगपरत्वेन लोके पदानां व्युत्पत्तेरवश्यं वेदान्तेषु नियोग उपास्यत इत्यर्थः । तद्व्यभिचारयति—नैतदिति । स्वरूपपरादपि व्युत्पत्तेः नैतदैकान्तिकमित्यर्थः । न चात्रापि 'आनय' इत्यादिर्नियोगः कल्प्यः; अग्निसत्तामात्रप्रत्ययेनैव तदर्थिनः स्वयमेव प्रवृत्तिसिद्धेर्न वाक्यस्य नियोजनसामर्थ्यं शक्यं कल्पयितुम् । किंच पदार्थमात्रे पदप्रयोगविशिष्टार्थप्रत्यययोरनुपपत्त्या नियोगान्वयः कल्प्यः । तयोश्च येन केनचित् पदार्थान्तरेणान्वयेऽप्युपपत्तेः न नियोगान्वये प्रमाणमस्ति । यदि च लोके नियोगान्वयो दृष्ट इति वेदेऽपि तथाश्रीयते ततो लोके प्रमाणान्तरविषयत्वेनान्वयो दृष्ट इति वेदेऽपि तथा स्यात् । न च तत्र प्रमाणान्तरमस्ति। अतो वेदार्थः शब्दप्रमाणको न स्यादित्युक्तम् ।

अथ प्रवृत्तिनिवृत्ती वाक्यस्य प्रयोजने, नान्ये । ते च कर्तव्यताज्ञानाधीने । तेन च कर्तव्यताज्ञानाद्विना वाक्यस्यानर्थक्यम् । अतो वेदान्तेषु विधिरुपास्यत इत्युच्यते; तत्रोच्यते—'आत्मा प्रतिपत्तव्यः' इति प्रतिपत्तिविधौ सत्यप्यात्मप्रतिपत्तेः उत्तरत्र प्रवृत्तिनिवृत्त्योरभावात् वाक्यानर्थक्यं तुल्यम् । तयोरभावेऽपि आत्मस्वरूपप्रतिपत्तिरेव विधेः प्रयोजनमिति चेत्, समानमेतत् स्वरूपनिष्ठेऽपि वाक्ये । ननु न प्रतिपत्तिविधौ तुल्यमानर्थक्यम्; यावता प्रज्ञाक्रियोपासनाद्यधिकारविधिभिरुपास्यस्यात्मनो विषयभूतस्य स्वरूपावगममन्तरेणानुपपद्यमानैः अपेक्षितमर्थमुपास्यमात्मस्वरूपं समर्पयति प्रतिपत्तिविधिः; अतो नास्यानर्थक्यमिति । अत्रोत्तरं—समानमेतदित्यनुवर्तनीयम् । स्वरूपनिष्ठानामपि वेदान्तानामुपासनादिविषयभूतात्मस्वरूपसमर्पकत्वं समानम् । अतश्चैवमपि प्रतिपत्तिविधिर्व्यर्थ एवेत्यर्थः । "विज्ञाय प्रज्ञां कुर्वीत" इति प्रज्ञाक्रिया उपासन-

क्रियोच्यते; "स क्रतुं कुर्वीत" इति क्रतुर्मनोव्यापारः; सोऽप्युपासनैव; "आत्मेत्येवोपासीत" इत्युपासना चोपासनैव । एवमर्थाभेदेऽपि विधिभेदात् भेदेनोपन्यासः कृतः । श्लोके तु 'प्रज्ञाक्रिया' इत्यस्योपलक्षणार्थत्वात् क्रतुक्रियापि द्रष्टव्या । क्रियेति वा क्रतुक्रियैव पृथक् । सूत्रेऽधिकारशब्दः प्रज्ञादिभिः प्रत्येकमभिसंबध्यते । मोक्षार्थी अधिक्रियते येषु विधिषु ते अधिकाराः, तेषां सिद्धिः, तया व्यपेक्षितमित्यन्वयः । विधिनिष्ठत्वेऽन्यपरत्वेन तथा आत्मस्वरूपं समर्पयन्ति वेदान्ताः, यथा स्वरूपनिष्ठत्वे इत्यभिप्रायेण वृत्तौ सुतरामित्युक्तम् ।

ननु यदि वेदान्तवचः प्रज्ञाद्यधिकारविध्यपेक्षितं विषयं समर्पयति, ततः प्रज्ञादिनियोगानुप्रवेशिनस्तस्य स्वरूपनिष्ठता हीयत इति चोदयति—हन्तेति । अत्रोत्तरम्—तुल्यमिति । यदि प्रज्ञादिनियोगानुप्रवेशान्मत्पक्षे P.112-21 स्वरूपनिष्ठता हीयते, तवापि तर्हि तत्प्रवृत्तिविधिवचः प्रज्ञादिनियोगानुप्रवेशात् न स्ववाक्यगतप्रतिपत्तिनियोगनिष्ठं स्यादित्यर्थः । 'समाप्तं च वाक्यं वाक्यान्तरानुगम्' इत्यत्र 'चेत्' इति 'तुल्यमेतत्' इति चोभयमनुवर्तते । तेनायमर्थः—प्रतिपत्तिविधिवाक्यं स्वगतनियोगे समाप्तं तत्पर्यवसितं सत् प्रज्ञाद्यधिकारवाक्यानुगं प्रज्ञादिवाक्येनान्वीयते; तेन प्रतिपत्तिविधिवाक्यस्य स्वगतनियोगनिष्ठता न हीयत इति चेत्, उच्यते—स्वरूपनिष्ठत्वेऽपि वेदान्तवाक्यस्य तुल्यमेतत् यदुक्तं त्वया । तस्यापि प्रतिपत्तिविधिवाक्यवत् प्रज्ञादिनियोगानुप्रवेशिनोऽपि स्वरूपनिष्ठता न हास्यत इत्यर्थः । 'सोऽयं प्राकरणिकः' इत्यादिना स्वनियोगपर्यवसितस्यैवायं वाक्यान्तरेणान्वय इत्येतदेव वृत्तौ दृढीकृतम् । प्राकरणिको हि संबन्धः स्वनियोगपर्यवसितस्यैव भवति, नापर्यवसितस्य; यथा—प्रयाजादिवाक्यस्य दर्शादिवाक्यैः । अपर्यवसितस्य तु वाक्यलक्षणे यथा अर्थवादानां विधिभिः । प्राकरणिकश्चायं प्रतिपत्तिविधेः संबन्धः । तस्मात्स्वार्थपर्यवसितामिति भावः । नन्वेवं सति नियोगानुप्रवेशं विना वृथात्वापत्तेर्वेदान्तानां स्वरूपनिष्ठानामपि प्रयाजादिवाक्यवन्नियोगानुप्रवेशस्तावदस्ति । अतो न नियोगनिरपेक्षाणां तेषां प्रामाण्यं त्वदिष्टं सिध्यतीत्यभिप्रायेणाशङ्कयति—नियोगेनेति । अत्रोत्तरमाह—न चेति । विषयसमर्पणार्थश्चेत् आत्मतत्त्वावबोधविधिः, ततो वेदान्ता एव तत्र समर्प-

यिष्यन्ति । किं तत्त्वावबोधविधिना? इत्येवं तत्त्वावबोधविध्यंशभावस्तावत् उद्धृतो निराकृतः । न तु परमार्थतो वेदान्तानां नियोगानुप्रवेशिता, स्वरूपमात्रनिष्ठत्वे व्युत्पत्तिप्रतिपत्त्योरुक्तत्वादिति भावः ।

P.113-20 अत्र चोदयति—नन्विति । "आग्नेयोऽष्टाकपालो भवति" इत्यादिरूत्पत्तिविधिः यथा आग्नेयादिकर्मस्वरूपबोधे व्यवस्थितः कर्मस्वरूपबोधार्थो न प्रवृत्त्यर्थः, तथा आत्मतत्त्वावबोधविधिरपि तत्त्वावबोधे व्यवतिष्ठते, तत्त्वावबोधमात्रार्थ एवास्तु, न प्रवृत्त्यर्थः । प्रवृत्तिस्तु "प्रज्ञां कुर्वीत" इत्यधिकारात् अधिकारविधेरेतत् ; यथा आग्नेयादौ "दर्शपूर्णमासाभ्यां यजेत" इति कर्माधिकारविधेः । यत एव प्रवृत्तिनिवृत्तिरूपं प्रयोजनद्वयं विधेः, अतो द्विविधं विधिमाचक्षते धीरा इत्यर्थः । एतदुक्तं भवति—यथोत्पत्तिविधिः कर्मस्वरूपं बोधयन् नानर्थकः ; एवमात्मतत्त्वावबोधविधिः आत्मस्वरूपं बोधयन्नानर्थकः । अतो नोद्धर्तव्य इति । उत्पत्तिविधिरज्ञातज्ञापके, अधिकारविधिरप्रवृत्तप्रवर्तने इति विवेकः । उत्पत्तिविधिपूर्वकोऽधिकारविधिरिति सूचनार्थोऽथशब्दः । तद्दूषयति—एतदिति । तादृशमिति ; असारमित्यर्थः । असारत्वमाह—कर्मेति । तत्र उत्पत्तिवाक्ये विधेः विधीयतेऽनेनेति विधायकस्य शब्दस्य नाग्नेयादिकर्मस्वरूपावगम एव फलम्, किंतु कार्यं फलं विना निष्फलस्य विध्यनुपपत्त्या कार्यापेक्षस्योत्पत्तिविधेः फलवाक्येन फलवता दर्शपूर्णमासवाक्येन संगतिः फलमित्यर्थः । अत्र च फलवाक्येन संगत्या तद्गतमेव स्वर्गादि फलमिति उपचारात्संगतिः फलमित्युक्तम् । न च तत्त्वप्रतिपत्तिविधेरपि तदेव फलमित्याह—इहेति । इहात्मतत्त्वावबोधे विधौ यस्यात्मतत्त्वस्य प्रज्ञायमानत्वेन उपास्यमानत्वेन च "प्रज्ञां कुर्वीत" "आत्मेत्येवोपासीत" इत्यधिकारसंबन्धः, स न विधीयते । भावोऽर्थो हि विधीयते । न च द्रव्यादिविधिः, कर्मकारकत्वात् । यस्तु विधीयते तत्त्वावबोधः, तस्य "प्रज्ञां कुर्वीत" इत्याद्यधिकारानुप्रवेशिता नास्तीत्यर्थः । नन्वनवबुद्धस्योपासितुमशक्यत्वात् तदवबोधोऽप्यधिकारानुप्रवेशीत्याशङ्क्याह—न हीति । न ह्यनपेक्षा व्रीह्यादिर्नाङ्गानि सत्यपेक्षणमधिकारभाक् अधिकारमनुप्रविशति, प्रयोगैकदेशतां यातीति यावत् । यतः प्रमितानां तेषामधिकार-

संवन्धः, अतः प्रमितिस्तेषां पूर्वसिद्धानामधिकाराक्षिप्ता; यथा—"अनो ददाति, वासो ददाति" इति शकटवासःप्रभृतीनां निष्पन्नानामधिकारसंवन्धात् न तक्षणवानादीनामधिकारानुप्रवेशः, तद्वदित्यर्थः । एवं शाब्दी प्रतिपत्तिः विधेर्न गोचरस्त्युक्तम् ।

इदानीमुन्मूलितसकलविकल्पसाक्षात्कारवति या तृतीया प्रतिपत्तिः P. 115-1
तद्गोचरता प्रतिपत्तिविधेर्निरस्यते । तदाह—इदानीमिति । ननूपासनाख्यद्वितीयप्रतिपत्तिगोचरविधिमतिक्रम्य तृतीयप्रतिपत्तिविधिनिराकरणमयुक्तमित्याशङ्क्याह—तत्त्वावबोधेति । तृतीयप्रतिपत्तिगोचरो विधिः प्रमाणात्मतत्त्वावबोधविषय इत्यनेन संवन्धेन स एवानन्तरं बुद्धिस्थो भवति, न द्वितीयप्रतिपत्तिगोचरः । स हि न प्रमाणभूततत्त्वावबोधविषयः, किंतु स्मृतिरूपतत्त्वाभ्यासविषय इत्यर्थः । तत्र तृतीयप्रतिपत्तिविधिपक्षमुपन्यस्यति—सोपायमिति । यदि शाब्दं ज्ञानं प्रतिपत्तिविधिना न विधीयते, तर्हि शाब्दात् ज्ञानादन्यदिदमनन्तरवक्ष्यमाणस्वरूपं ज्ञानं सोपायं शमाद्युपायसहितं विधीयते । कीदृशं तज्ज्ञानमित्यपेक्षायामाह—प्रलीनग्रहणग्राह्यविभागोद्ग्राहमिति । प्रलीनं प्रत्यस्तमितम् 'इदं ग्रहणम्, इदं ग्राह्यम्' इति विभागोद्ग्राहो भेदावभासो यत्रेति विग्रहः । द्वितीयतत्र्यविधज्ञानाभावात् प्रमातृप्रमेयादिद्वयविरहाद्वा अद्वयं ज्ञानमित्यर्थः । शाब्दाज्ज्ञानादन्यदित्युक्तम्; तत्र हेतुमाह—न हीति । भिन्नानां पदार्थानां संसर्गः, तद्रूपो वाक्यार्थः, तत्र धीः, तस्याः पदं विषयः न निष्प्रपञ्चमात्मतत्त्वं यतः, अतः शाब्दज्ञानादन्यदिदं ज्ञानमित्यर्थः । नानार्थसंसर्गात्मा वाक्यार्थः, तद्विरुद्धरूपमद्वयं चात्मतत्त्वम्; अतो न तद्बुद्धिविषय इत्युक्तं भवति । ननु मा भवतु वाक्यप्रमाणकमात्मतत्त्वम्, पदप्रमाणकं तु किं न स्यादित्याशङ्क्य वाक्यलक्षणो हीत्यादि वृत्तमुक्तम् । पदमात्रमप्रमाणमिति भावः । तदुक्तम् "पदमभ्यधिकाभावात्स्मारकान्न विशिष्यते" इति । तदनुगमेनेति संसर्गस्य वाक्यविषयत्वे हेतुः । वाक्ये सति संसर्गस्य प्रतीतेः वाक्यविषयत्वमित्यर्थः । यद्वा नानापदार्थानुगमेन प्रतीतिर्नानापदार्थसंसर्गात्मा वाक्यस्य विषय इत्यर्थः । विविक्तेत्यादि; विविक्तानामर्थमात्राणां पदार्थानां संभेदः संसर्गः, तमवभासयति यज्ज्ञानं तस्येत्यर्थः । अनवगृह्य-

P. 115.7. मिति, असंस्पृष्टमित्यर्थः । तद्दूषयति—एतदिति । पेलवमित्यकौशलम् अदृढम् असारमिति यावत् । पेलवत्वमाह--अद्वयेति । अद्वयस्यात्मनः प्रकाशोऽद्वयात्मप्रकाशः । अनवच्छेदविभ्रम इति देहेन्द्रियविषयैरनन्तस्यान्तवत्त्वमवच्छेदः, तद्विषयो विभ्रमोऽवच्छेदविभ्रमः, स न विद्यते यस्य सोऽनवच्छेदविभ्रमः । स्वात्मस्थितिरिति, स्वात्मना स्वात्मरूपेण स्थितिः। सुप्रशान्ता, सुष्ठु प्रशान्ता । प्रशान्तशोकादिसकलकल्याणप्रकाशमाननिरतिशयानन्दरूपा चेत्यर्थः । एतेन दुःखनिवृत्तेरानन्दावाप्तेश्च परमपुरुषार्थतया अद्वयात्मबोधस्य फलवत्त्वमुपपादितम् । तदयं वाक्यार्थः---अनवच्छेदविभ्रमोऽद्वयात्मप्रकाशो योऽसौ स्वात्मस्थितिः सुप्रशान्ता फलम्, तन्न विधेर्विषयो न विधेयमित्यर्थः । अवच्छेदकलुषतयेति; अवच्छिद्यतेऽनेनेत्यवच्छेदो देहेन्द्रियादि, तेन कलुषतया तदनात्मस्वरूपेण प्रकाशते । न ततोऽद्वयात्मस्वरूपादन्यस्तत्त्वबोधः, किंतु अद्वयात्मप्रकाशस्वरूपमेवेति सत्यज्ञानानन्दात्मकः स इत्यर्थः ।

न च—फलेऽप्यज्ञातोपाये न प्रवर्तते; अतः कथं तत्र स्वयं प्रवृत्तिः? अपितु उपायप्रज्ञापनद्वारेण विधित एवेति वाच्यम्; यत इच्छा प्रवृत्तेः पूर्वरूपम् । इच्छया हि प्रवर्तते । सा चास्ति फलेऽपि । नापि विधिना । अतस्तत एव प्रवृत्तिसिद्धेर्न तत्र विध्यपेक्षेत्यर्थः । किंच अज्ञातोपाये चेत्फले न प्रवर्तते तत्रावश्यमुपायज्ञापनया फलमुद्दिश्य उपाये प्रवर्त्यः; न फलेऽपि, वाक्यभेदप्रसङ्गात् । तावता च ज्ञातोपायत्वं संवृत्तमिति तत एव फलेऽपि प्रवृत्तिः सिद्धेति न तत्र प्रवृत्त्यर्थं विधिव्यापार आश्रयितव्यः । तदुक्तम्—"तस्य लिप्सार्थलक्षणा" । तस्य फलस्य लाभेच्छा अर्थलक्षणा प्रयोजनलक्षणा, न विधिलक्षणेत्यर्थः । तस्मान्न फलं विधीयते, अपि तु तत्साधनम् । तदुक्तम्—तत्साधनेति । ननु यः फलमिच्छति, सोऽनुपायस्य फलस्यासिद्धेस्तदुपायमपीच्छत्येव । अतः फलवदुपायेऽपि फलवदर्थलक्षणैव प्रवृत्तिः, न विधिलक्षणा; अतः साधनेऽपि न विधेर्व्यापार इति परेण चोदिते सिद्धान्ती पृच्छति—क तर्हीति । पर आह—इत्थंभाव इति; कर्तव्यत्वांश इत्यर्थः । तद्दूषयति—नेतीति । साधनविशेषे तावद्विधेः पूर्वमज्ञाते नार्थलक्षणा

प्रवृत्तिः । अथ साधनसामान्ये, इत्थंभावसामान्येऽपि समाना; यतो यथा फलार्थी तदुपायसामान्यमिच्छति, तथा तदनुग्राहकसामान्यमपि; निरनुग्रहस्य साधनस्यासमर्थत्वात् । अथेत्थंभावविशेषो विधीयते, ततः साधनविशेषोऽपि तथा विधास्यत इति न तत्राप्यर्थलक्षणा प्रवृत्तिरित्यर्थः । इतश्च फलसाधने विधायकस्य व्यापार इत्याह—अपेक्षितेति । अप्रवृत्त- P.116-17
प्रवर्तनरूपो विधिः । प्रवृत्तिहेतुश्च धर्मः प्रवर्तना । स च द्विविधः—इष्टता, तत्साधनता च । यत इष्टे तत्साधने वा पुरुषः प्रवर्तते, नान्यत्र । तत्रेष्टतायामिष्टफलधर्मभूतायां जानात्येवासौ 'मयैतत्कर्तव्यम्' इति; प्रमाणान्तरसिद्धायां स्वयमेव पुरुषस्य प्रवृत्तिः, नाप्रवृत्तप्रवर्तनात्वम् । अतो न सा विधिः । इष्टसाधनता तु यागादेर्न प्रमाणान्तरावसेया; अपितु शब्दैकगम्या । तेनेष्टसाधने शब्दादेव प्रवृत्तिः, नान्यत इति तस्या एव प्रवृत्तिहेतुत्वम् । तेनेष्टसाधनतैव शब्दप्रमाणिका सती विधिरिति गीयते । नन्वस्तु इष्टसाधनं प्रवृत्तिहेतुः, स च विधिः । अनुष्ठानं तु कथं तद्विषयमवगम्यते? अथान्यविषयमेव कस्मान्न भवति? इत्यत आह—अनुतिष्ठत इति । नेष्टसाधनं वायुवद्यस्य कस्यचित्प्रवृत्तिहेतुः, अपितु अनुतिष्ठतः । अनुतिष्ठतश्चानुष्ठेयं सत् इष्टसाधनं प्रवृत्तिहेतुः; न वायुवत् स्वतः सिद्धम् । तेनानुतिष्ठत इष्टसाधनता विधिः । यतश्च अनुतिष्ठतो विधिः, अतः तदिदमनुष्ठानमनुष्ठेयापेक्षमनुष्ठेयभूतेष्टसाधनविषयमेव विधायकाल्लिङादिशब्दादर्थाद्गम्यते, नान्यविषयमित्यर्थः । साधनं प्रवृत्तिहेतुरिति धर्मधर्मिणोरभेदादुक्तम् । न च गोदोहनादिना अननुष्ठेयेन व्यभिचारः; तद्धि न स्वरूपेणेष्टसाधनम्; अपितु तत्साध्या प्रणयनक्रिया; अत एव तां प्राकरणिकीमपेक्षते; सा चानुष्ठेयैवेत्यव्यभिचारः । नन्वध्यवसायादिलक्षणां विधिरिति विधिविदो विधिमाचक्षते; तत्कथमिष्टसाधनता विधिरित्याशङ्क्याह—तत इति । 'ममेदं कार्यम्' इत्यध्यवसायो निश्चयः, ततः आकूतः संकल्पविशेषः, तत आद्या प्रवृत्तिः, तथा 'पचेत्' इति कालत्रयापरिच्छिन्नं प्रवृत्तिमात्रम्, तथा प्रमाणान्तरेणाज्ञातो यागादिक्रियायास्तत्कर्तुश्च संबन्धो 'यजेत' इत्यस्मादेव गम्यमान इत्ययमध्यवसायादिस्तत एवेष्टसाधनत्वात् भवति; नाकस्मात् कारणं विनेत्यर्थः । एतदुक्तं भवति—इष्टसाधनताया एवावगम्याया अध्यवसायादिर्भवति । नैवमेव; अतः सैव

मूलभूता प्रवृत्तिहेतुरिति सैव विधिः, नाध्यवसायादीति । लिङादिभिरभि-
P. 117-6 धानादेवाध्यवसायादिर्भविष्यति, किं विधिनेति चेत्, अत्राह—नाभिधानत इति । नाभिधानत एषामुत्पत्तिः; अपितु प्रतीतिमात्रम् । न च प्रतीतिमात्रेण तेषां प्रवृत्तिहेतुत्वम् । न हि प्रतीतिमात्रेण घटादयः प्रवृत्तिहेतव इत्युक्तं विधिविवेके । उत्पत्तिस्तु तेषामिष्टसाधनतायाः; तेन सैव विधिरिति भावः । अन्योऽर्थः—अभिधीयतेऽनेनेत्यभिधानं लिङादिशब्दः; तत एवाध्यवसायादेरुत्पत्तिर्भविष्यतीति किमिष्टसाधनतयेत्याशङ्क्याह—नाभिधानत इति । न लिङादिशब्दादध्यवसायादेरुत्पत्तिः; स ह्यध्यवसायादेर्ज्ञापकः, न कारकः । यदि तु कारकः स्यात्, वायुवदव्युत्पन्नमपि प्रेरयेत्; अतश्च संबन्धव्युत्पत्त्यपेक्षा शब्दे न स्यात्; न चैवम् इत्यपि विधिविवेक एवोक्तम् ।

ततो ह्यध्यवसायादिः; अन्योऽर्थः—'ममेदं कार्यम्' इति यतोऽध्यवसायः 'नियुक्तोऽसि' इति बुद्धिः, स एवालौकिको नियोगो विधिरिति यो मन्यते, तं प्रत्युच्यते । तत एवेष्टसाधनत्वादध्यवसायादि भवति । अतोऽध्यवसायहेतावपि विधाविष्टसाधनतैव विधिः, न लौकिकोऽन्य इत्यर्थः । तथाहि—इष्टस्याभ्युपाये कृष्यादौ 'ममेदं कर्तव्यम्' इति कर्तुर्बुद्धिर्लोके भवति । इष्टाभ्युपायाभावे चाकर्तव्यबुद्धिः । अतोऽन्वयव्यतिरेकाभ्यां ते बुद्धी इष्टाभ्युपायानभ्युपायविषये गम्येते; तथाहि—'प्रवृत्तोऽसि' इति प्रवृत्तिहेतुप्रतीतिर्भवति; न पुनर्वायुनेवात्मानं प्रवर्तितं मन्यत इति तवाप्यभिमतम् । न चेष्टसाधनताया अन्योऽलौकिकः संभवति, तस्या एव कृष्यादौ प्रवृत्तिहेतुताया लोके दृष्टत्वात् । न च लोके नृसामर्थ्यं प्रवृत्तिहेतुरहेतुः, अपितु अन्य एवालौकिक इत्यकस्मात्कारणं विना युक्तं वक्तुम् । लौकिकत्यागेनालौकिककल्पनायां प्रमाणाभावात् । इतश्च नालौकिककल्पनोचिता—यतः शब्देन तस्याभिधानमिष्यते । न चालौकिकस्याभिधानं संभवति, संबन्धाग्रहात् इत्युक्तं 'पदं स्वधर्मं व्युत्क्रामेत्' इत्यत्र । ततोऽध्यवसायः, प्रारम्भः संकल्पः, ततोऽनुष्ठानं, ततोऽनुष्ठितस्य समापनेत्येतत्सर्वमिष्टसाधनत्वादेव भवति, नान्यस्मात् । इष्टसाधनतासद्भाव एव नियुक्तस्य प्रवृत्तेः, यस्य कस्यचिदिष्टसाधनतामज्ञात्वा नियुञ्जानस्यानाप्तस्य नियोगान् पुंसामप्रवृत्तेः । तस्मादिष्टसाधनतैव विधिः ।

ननु 'ममेदं कर्तव्यम्' इति प्रत्ययात्प्रवर्तते; अन्यथा यदि कर्तव्यावगमान्न प्रवर्तते, ततः प्रमाणभूतात् वेदात् यत्कर्तव्यमवगतं तन्न कृतं स्यात्। न च तद्युक्तम्। न चेष्टसाधनमपि 'ममेदं कर्तव्यम्' इति यावन्न प्रतीयते तावत्तत्र कश्चित्प्रवर्तते। तस्मात्कर्तव्यतावगमादेव प्रवृत्तिः, नेष्टसाधनत्वात्। उच्यते—बाढं कर्तव्यतावगमात्प्रवृत्तिः; न तु तदुत्पादोऽकस्मात्कारणं विना भवति। स हि स्वार्थमिष्टमस्मादवाप्यत इत्यनेन निमित्तेनेष्टसाधने भवति। ननु न ब्रूमोऽकस्माद्भवतीति; किंतु शब्दादेव कर्तव्यताबुद्धिर्भवति: तत्रोच्यते—नाभिधानत इति। न हि लिङादि- P. 118-3.
शब्दात्कर्तव्यताबुद्धिः; यतो नियोगः शब्दार्थस्त्वयेष्टः। स च प्रेषणादिरूपो नियोक्तृधर्मो वा स्यात्। यद्वा न नियोक्तृधर्मः; किंतु स्वतन्त्र एव, फलनिष्पत्तेः; अतो विनाशी च। कर्तव्यता क्रियमाणभावार्थाख्यविषयधर्मो न नियोक्तृधर्मः; न च स्वतन्त्रः। अतो न तद्बुद्धिरभिधानतः। अथ नियोगो विषयधर्म उच्यते, ततो विषयस्येष्टसाधनत्वादन्यस्य धर्मस्याभावादिष्टसाधनतैव नियोग इत्यापन्नम्। अथ न शब्दात्कर्तव्यताबुद्धिः, अपितु नियोगादित्युच्यते; तथापि न तावत्तस्यां शब्दः प्रमाणम्, तस्य नियोगाभिधायकत्वात्। न च नियोगानुपपत्त्या अर्थात्कर्तव्यताबुद्धिः, अकर्तव्येऽप्यनाप्तनियोगदर्शनात्।

अथ मतम्—सा कर्तव्यताविषयस्य मोक्षस्य धर्म उच्यते, ततो विषयमोक्षसाधनत्वाद्विधानमापन्नमिति; ततो भिन्नं मोक्षं मन्वानः परः प्रत्यवतिष्ठते—स्यादेतदिति। अद्वयात्मज्ञानस्य मोक्षसाधनत्वं श्रुतिभिरुपपादयति—श्रूयत इति। अनुविद्य विजानातीति; शब्दात्प्रथमं विदित्वा पश्चाद्विशेषेणापरोक्षतया जानातीत्यर्थः। ननु मोक्षस्य साधनसाध्यत्वे घटवदनित्यत्वं स्यात्, अतश्च मुक्तस्य पुनरावृत्तिः स्यादित्याशङ्क्याह—न चेति। हेतुमाह—शब्देति। शब्दमाह—न चेति। ननु साध्यत्वान्मोक्षस्य घटवदन्तवत्त्वं तर्केण प्राप्नोति; अतः कथमपुनरावृत्तिरित्याशङ्क्याह—न हीति। न खल्वग्नीषोमीयादिहिंसा शब्दावगतधर्मता, बाह्यहिंसावत्; हिंसात्वादधर्म इति तर्केणाधर्मो भवतीति भावः। नित्यात्मस्वभावभूतां विद्यामभिप्रेत्य परिहारान्तरमाह—अनन्तेति। क्षणिकज्ञानवादि-

P. 119-1 मतेऽपि विद्यानन्त्यमाह—क्षणिकेति । अत्र सिद्धान्तमाह—न चेति । श्लोकार्थमुपपादयितुं मोक्षस्वरूपनिरूपणाय पृच्छति—कः पुनरिति । तत्र न तावदनागतदेहाद्यनुत्पादो मोक्षः, तस्य प्रागभावत्वेनासाध्यत्वादित्याह—यदीति । अशरीरं वावेति वावशब्दोऽवधारणार्थः । तदेवमसंभवादस्मिन्पक्षे निरस्ते सारेतरविभागाय अनेकान्मोक्षपक्षानुपन्यस्यति—अथेति । चैत्रग्रामयोरिवेति; गतिपूर्वां संयोगलक्षणां ब्रह्मप्राप्तिमाह । आयन्निति; गच्छन्नित्यर्थः । स यावदिति; मनसः क्षिप्रस्यैव ब्रह्मप्राप्त्यर्थमादित्यलोकं गच्छतो योगिनः क्षिप्रतामाह । एतद्वै खल्विति मार्गस्तुतिः । अर्चिरिति अर्चिरादिमार्गकथनम् । मधुकृतो मधुमक्षिकाः । विधूयेति अपनीयेत्यर्थः । निरञ्जन इति; देहादिव्यञ्जनरहित इत्यर्थः । योगव्याघ्रवदिति; यथा योगबलेन प्राप्ताष्टगुणैश्वर्या व्याघ्ररूपेणात्मानं परिणमयन्ति, तद्वदित्यर्थः। 'ब्रह्म संपद्यते' इत्यत्र दर्शनादित्यनुवर्तते । रागाद्यपकर्षण इति; जपाद्युपाधिकल्पितरागापनयने ; रज्यते अनेनेति वा रागः जपादिरेव, तदपकर्षण इत्यर्थः ।

तत्र पृथक्स्वरूपस्य गतिपूर्वकब्रह्मप्राप्तिपक्षं तावत् दूषयति—तत्रेति । हेतुमाह—सर्वेति । चैत्रग्रामयोः प्राप्तिर्युक्ता ; न तु जीवब्रह्मणोः, ब्रह्मणः सर्वगतत्वात्; सर्वगतस्य च नित्यप्राप्तत्वादिति भावः । सर्वगतत्वं श्रुतिद्वयेन घटयति—तदिति । "तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः" इति श्रुतिः "नित्यं विभुम्" इति च श्रुतिः ब्रह्मणः सर्वगतत्वमाहेत्यर्थः । 'विभुम्' इत्यस्य विवरणं सर्वगतम् इति । विविधभावाद्वा विभुरित्यपौनरुक्त्यम् । किंच ग्रामाद्भिन्नस्य चैत्रस्य ग्रामप्राप्तिर्गतिपूर्विका युक्ता । जीवस्तु ब्रह्मणो नान्यो ब्रह्मैव सन् । तस्मादप्यस्य गतिहेतुका न ब्रह्मप्राप्तिरित्याह—अनन्यत्वाच्चेति । अनन्यत्वे हेतुमाह—तादिति । "आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति" इति श्रुतिः जीवब्रह्मणोरनन्यत्वे घटते, नान्यत्वे । न ह्यन्यस्मिन्विज्ञातेऽन्यद्विज्ञातं भवति । अतोऽनन्यत्वम् । तथा "तत्त्वमसि" इति त्वमिति जीवमुद्दिश्य तदर्थाद्ब्रह्मणोऽनन्यत्वमुक्तम् । तथा "अनेन जीवेनात्मना"

इति आत्मशब्देन प्रत्यगात्मवृत्तिना स्वात्मवाचिना जीवो निर्दिष्टः । न चान्यत्स्वात्मा भवति । तथा "योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमिति न स वेद" इति जीवपरयोर्भेददर्शनं निन्दया निषिद्धम् । अतोऽनयोरनन्यत्वमित्यर्थः ।

यत एव जीवब्रह्मणोरनन्यत्वम्, अत एव मधुनि नानारसवत् नदीसमुद्रवच्च नानयोरविभागोपपत्तिर्मोक्षः; विभागे हि सा भवति, नानन्यत्वे इत्यभिप्रायेणाह— अत इति । किंच सावयवानामन्योन्यावयव- P. 120-7. मिश्रतालक्षणोऽविभागो भवति । आत्मा च "निष्कलः" इति श्रुतेरनवयवः । अतो नास्याविभागोपपत्तिरित्याह —निरवयव इति । एकादशेन्द्रियाणि पञ्चमहाभूतानि षोडश कलाः, तद्रहितत्वेनात्मनो निष्कलशब्देनानवयवत्वमुक्तम् ।

तथा—"यथाग्नेर्ज्वलतः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति, एवमेवास्मादात्मनः" इत्यादिश्रुतेः जीवस्य ब्रह्मकार्यत्वम्, कार्यस्य कारणभावापत्तिर्ब्रह्मप्राप्तिरित्ययमपि पक्षो नेत्याह—नापीति । सर्वदा कार्यमुपादानकारणात्मकम् । अतोऽस्य तद्भावापत्तिर्नित्यसिद्धा, न विद्यासाध्या; विद्यासाध्यश्च मोक्षः श्रुत इति भावः । अथ कार्यस्य नित्यं कारणात्मत्वेऽपि जैवस्य कार्यरूपस्य विनाशः कारणे ब्रह्मणि लयो मोक्षः; ततो जीवस्योच्छेद एव मोक्षः स्यात् । तत्र "विद्ययामृतमश्नुते" इति श्रुतिविरोधः । तदा हि विद्यया उच्छेदः प्रसज्येत, नामृतत्वममरत्वम् । किंच नात्मन उच्छेदं कश्चिदिच्छति । न च निष्प्रमाणं फलं भवति । तत्र निष्फलैव विद्या स्यात् । अपिच जीवब्रह्मणोस्तावदाकाशघटाकाशयोरिव भेदस्यौपाधिकत्वात् कार्यकारणभावो नास्त्येव । यत्राप्यसौ प्रसिद्धः, तत्रापि परमार्थतो नास्तीत्युक्तम् । किं स्वातन्त्र्येण? न, वाचारम्भणश्रुत्या विकारानृतत्वप्रतिपादनात्; तथाहि— विकारो घटादिः 'घटः' इति नामधेयं च वाचा केवलमारभ्यते, न तु तत्त्वतोऽस्ति । कारणमात्रमेव तु सत्यम्, मृत्तिकेत्येव तु सत्यमिति । वागिति व्यवहारो लक्ष्यते; तेन व्यवहारसाधनमात्रमिदं घटादि, न तत्त्वतोऽस्तीत्यर्थः ।

P.120-13 न च योगव्याघ्रवदेव जीवस्य ब्रह्मरूपेण परिणामो मोक्षः; अन्यस्य ह्यन्यरूपेण परिणामो भवति, योगिन इव व्याघ्ररूपेण । न च जीवब्रह्मणोरन्यत्वमस्तीत्युक्तम् । अपिच पूर्वावस्थातो विशेषापत्तिः परिणामे; सा नास्ति, चैतन्यब्रह्मरूपस्य जीवानामविशेषात् । पूर्वं शोकमोहादि चैतन्यमासीत्, चैतन्यमात्रस्वभावब्रह्मपरिणामे तु जीवानां शोकाद्यभावो भूत इत्यस्ति विशेष इति चेत्, न; अस्मिन्नपि पक्षे यदि शोकादयो जीवानां स्वभावभूताः, ततो जीवानां नित्यत्वात्तेऽपि जीववदनुच्छेद्याः । अथ जीवेभ्योऽर्थान्तरभूताः क्षणिका गुणाः, ततः क्षणिकत्वादेव विनङ्क्ष्यन्तीति न तदर्थं विद्याख्यं साधनमपेक्षितमिति विद्यावैफल्यम् । न चागामिनां शोकादीनामनुत्पत्तये साधनमपेक्षितमिति वाच्यम् । स हि तेषां प्रागभावः; स चासाध्य इत्युक्तम् । अतो न तदर्थमपि साधनापेक्षा ।

अथ ब्रह्मण्यैश्वर्यविशेषोऽस्ति; तत्प्राप्तिरेव ब्रह्मरूपपरिणामो मोक्ष उच्यते; तथाहि—"स स्वराड् भवति" इति श्रुतिर्मुक्तस्य स्वयंप्रभुत्वमाह। तदसत्, अनेकेश्वरत्वानुपपत्तेः । तथाहि—ब्रह्मणो न्यूनं समं वा मुक्तानामैश्वर्यं स्यात्; तत्र न्यूनत्वे न ब्रह्मरूपापत्तिः, न च स्वयंप्रभुत्वम्; मुक्तेश्वराणां परमेश्वरपरत्वदर्शनात् । तथा सति चान्यराजन्यत्वं मुक्तानां स्यात् । अन्यराजन्यत्वे "अथ येऽन्यथातो विदुः, अन्यराजानस्ते क्षय्यलोका भवन्ति" इति श्रुतेर्मुक्तानामैश्वर्यस्यान्तवत्त्वं, ततश्च स्वर्गिणामिव पुनरावृत्तिः स्यात् । अतो ब्रह्मात्मभावात् अन्यथा ये विदुरित्यन्वयः । अन्यो राजा येषां ते तथोक्ताः । न चान्तवत्त्वमनुपपन्नम्, लोके परमेश्वरेच्छया न्यूनेश्वराणामैश्वर्यप्रच्युतिदर्शनात् । ब्रह्मैश्वर्यसमस्य चैश्वर्यस्य मुक्तानां युगपदनुपपत्तिरेव; तथाहि—एकश्चेदीश्वरः सर्वस्य जगतोऽधिपतिः प्रशासिता च स्यात्, ततोऽपरस्य कर्तव्यमेव नास्ति; स किं कुर्वन्नीश्वरः स्यात्? विरोधाच्च समस्यैश्वर्यस्य युगपदनुपपत्तिः; न खलु यदेकस्येश्वरस्याभिप्रेतं तदपरस्यापीति नियमे हेतुरस्ति । तत्रैकस्मिन्वस्तुनि विरुद्धाभिप्राययोर्द्वयोरीश्वरयोर्मध्ये यद्येकाभिप्रायानुविधायित्वं तस्य वस्तुनः स्यात्, ततो यस्येश्वरस्याभिप्रायं तद्वस्तु नानुविधत्ते न तदभिप्रायानुरूपं भवति तस्यानीश्वरत्वं स्यात् । उभयेश्वराभिप्रायानुवर्तित्वं च वस्तुनो-

ऽसंभाव्येव, विरोधात् । अथ उभयोरभिप्रायं नानुवर्तते, यादृशं वस्तु P. 121-9
उभयोरभिप्रेतं ततोऽन्यथैव स्यात् । तथोभयोरप्यनीश्वरत्वं स्यात् ।
अथोच्येत—स्यादेवं यद्यैकमत्ये न हेतुरस्ति; न त्वेवम् । अनैकमत्ये
हीश्वराणां परस्परविरोधात् कार्यं न सिध्येत् । ततश्च कार्यसिद्धिरेव
तेषामैकमत्ये हेतुः । भवति च कार्यसिद्धये बहूनामैकमत्यम्, यथा
व्यवहारादिषु परिषद इति चेत्; तन्न; एवं हि प्रत्येकमनीश्वरत्वं स्यात् ।
एतच्च कर्महेतुकेऽप्यैकमत्ये तुल्यम् । अथ पूर्वोक्तविरोधाभावाय पर्यायेण
तेषामीश्वरत्वमुच्यते, ततो यस्यैश्वर्यमुपरतं तदीयस्यैश्वर्यलक्षणस्य मोक्ष-
स्यान्तवत्त्वं स्यात् । अनन्तश्चासौ, अपुनरावृत्तिश्रुतेः । इतश्च न ब्रह्म-
तुल्यमैश्वर्यं मुक्तानाम्, यतो ब्रह्म जगत्सृजति न मुक्ताः । ते तु
सृष्ट्युत्तरकालमीश्वरोपासनेनापवृज्यन्ते । अतः सृष्टिसमये न सन्त्येव;
कुतस्तेषां स्रष्टृत्वम्? अतस्तेषां स्रष्टृत्वाभावात् न ब्रह्मतुल्यमैश्वर्यम् ।
तस्माद्यथा शुद्धस्वरूपस्य स्फटिकस्य जपाद्युपाधिकल्पितरागतिरोहित-
स्वरूपस्य रागापनये विद्यमानमेव स्वरूपमाविर्भवति, न त्वपूर्वं जन्यते,
तथा "तत्त्वमसि" "अनेन जीवेनात्मना" इत्यादिश्रुतिसिद्धब्रह्मस्वरू-
पस्य जीवस्याविद्यातिरोहिततद्रूपस्य विद्यया अविद्यापनये निजब्रह्मरूपा-
विर्भावमात्रं ब्रह्मप्राप्तिः, न रूपान्तरापत्तिः । तथा च "स्वेन रूपेण"
इति श्रुतौ स्वशब्द उपपद्यते, नान्यरूपनिष्पत्तौ । स्वशब्दोऽयमात्मा-
त्मीयवचनः । तत्रान्यदपि रूपं यद्यभिन्नं निष्पद्यते, तदा स्वम्, अथ
भिन्नं तदा स्वीयम्, इत्यभेदात् संबन्धाद्वान्यरूपनिष्पत्तावपि स्वशब्दो-
पपत्तिरिति चेत्; न, 'स्वेन' इति विशेषणानर्थक्यप्रसङ्गात् । संभवे
व्यभिचारे हि विशेषणमर्थवत् । अन्यरूपस्य निष्पद्यमानस्य स्वत्वं
स्वीयत्वं वा संभवत्येव, न व्यभिचरति । अतः 'स्वेन' इति विशेषणा-
नर्थक्यम् । स्वत्वादिति; स्वशब्द आत्मात्मीयवचनः । निजस्यैव ब्रह्म-
स्वरूपस्याभिव्यक्तिमात्रं यदि मुक्तिः, कथं तर्हि निष्पद्यत इति? निष्प-
त्तिर्हि जन्म; तच्चाभूतप्रादुर्भावः, न तु विद्यमानरूपाभिव्यक्तिमात्रम् इति
चेन्न; अभिव्यक्तावप्येवंविधशब्दप्रयोगदर्शनात्; यथा—मलापकर्षणाभि-
व्यक्तशौक्ल्ये 'घटः शुक्लो जातः, निष्पन्नः, भूतः' इति चोच्यते ।
तेनायमप्यदोषः । तथा "ब्रह्मैव सन् ब्रह्माप्येति" इतीयमपि श्रुतिः

जीवस्य विद्यमानब्रह्मरूपाविर्भावमेव मोक्षमाह—अन्यथा "ब्रह्मैव सन्" इति न घटते ।

एवं मोक्षस्वरूपं निरूप्य 'साध्यो मोक्षो न चापरः' इति श्लोकार्थ-
P.121-19 मुपपादयन् व्याचष्टे—तदेवमिति । न चेति नकारः काकाक्षिवत् 'न साध्यः' 'न चापरः' इत्युभाभ्यां संबध्यते । 'न साध्यः' इत्यत्र पूर्वो वा वर्तते । यद्वा 'न च' इत्यस्य साध्य इत्यनेन संबन्धः । अपर इति चान्यो न भवतीत्यर्थः । क्वचित्तु 'न नापरः' इति पाठः; तत्र न साध्यो नापर इत्यर्थः । न चान्यत्वमिति; विद्यातो मोक्षस्य नान्यत्वमित्यर्थः । एतच्च 'नापरः' इत्यस्य व्याख्यानम् । अनन्यत्वे हेतुमाह—यत इति । यतो ब्रह्मस्वरूपभूतनित्यविद्याविर्भाव एव मोक्षः, अतो न विद्यातोऽन्यः । अन्यच्च साध्यं भवति । अतो न विद्यासाध्य इति प्रकृतोपयोगः ।

यद्यपि 'अविद्यास्तमयो मोक्षः' इत्युक्तं श्लोके, तथापि विद्यैवाविद्यास्तमय इति वक्ष्यमाणत्वात् वृत्तौ विद्याधिगमो मुक्तिरुक्तेत्यदोषः । 'अविद्याविगमः' इति पाठे त्वविरोध एव । उक्तेनेति; स्फटिकन्यायेन, 'अद्वयात्मप्रकाशोऽसौ' इति वानेनोक्तेनेत्यर्थः । अद्वयात्मप्रकाशरूपाया विद्याया मोक्षत्वमुपपादयति—अविद्येति । अविद्यानिवृत्तावपि मोक्षे 'संसारनिवृत्तिर्मोक्षः' इति प्रसिद्धेर्न दोष इति । ननु तथाप्यविद्यानिवृत्तिर्मोक्षः, न विद्येत्याशङ्क्याह—विद्यैवेति । अग्रहरूपा वा अविद्या, विपर्ययज्ञानरूपा वा; तत्र यदि तावदग्रहणमविद्या, ततो विद्यैव तन्निवृत्तिः, यतोऽग्रहणप्रागभावो ग्रहणम् । तस्य ग्रहणभाव एव निवृत्तिः, नान्या; घटप्रागभावस्येव घटभावः । अथ विपर्ययज्ञानमविद्या, तथापि तद्विरोधितत्त्वज्ञानोदय एव तन्निवृत्तिरित्यर्थः । एतत् दृष्टान्तेनोपपादयति—न हीति । तत्र शुक्तिज्ञानासाध्यत्वे हेतुमाह—तयोरिति । यदि शुक्तिज्ञानेन रजतज्ञाननिवृत्तिः साध्या, तत्र शुक्तिज्ञानरजतज्ञाननिवृत्त्योरयौगपद्यं स्यात्; न च तदस्तीत्यर्थः । प्रयत्नान्तरासाध्यत्वे हेतुमाह—प्रयत्नान्तर इति । न हि रजतज्ञाननिवृत्तये शुक्तिज्ञानोदयात् पृथक् प्रयतत इत्यर्थः ।

विद्यैवाभिव्यक्ता ब्रह्मप्राप्तिः; न तत्साध्येतीममर्थं श्रुत्या द्रढयति—तथा चेति। पूर्वभावि हि कारणं भवति; तत्र यदि विद्यासाध्या ब्रह्मप्राप्तिर्भवति, ततो 'विदित्वा ब्रह्मैव भवति' इति विद्याब्रह्मीभावयोः, तथा 'विदित्वा न बिभेति' इति विद्याभयनिवृत्त्योः, तथैकत्वदर्शनमोहाभावयोः पौर्वापर्यं श्रूयेतेति नैककालता। इह च 'वेद भवति' 'विद्वान्न बिभेति' 'को मोहोऽनुपश्यतः' इत्येककालता श्रूयते; तथाहि—'वेद' इति विदेर्लडन्तस्य "विदो लटो वा" इति तिपो णलादेशात्प्रयोगः; 'विद्वान्' इति च "विदेः शतुर्वसुः" इति शतुर्वस्वादेशात्, अनुपश्यत इति व्यक्ता वर्तमानता। तदेवं वर्तमानैककालत्वाच्च विद्याप्राप्त्योः साध्यसाधनभावः। "तदात्मानम्" इत्यत्र तु 'अवेत्, अभवत्' इत्यनयोर्भूतार्थत्वादनेककालता द्रष्टव्या; तथाहि—'अवेत्' इति विदेर्लडन्तात् "हल्ङ्याब्भ्यः" इति तिपो लोपात् भूतार्थप्रयोगः। ननु "तमेव विदित्वातिमृत्युमेति" इति पौर्वापर्यं श्रूयत इत्याशङ्क्याह—यत्त्विति। ननु विद्याब्रह्मप्राप्त्योरेकत्वे तुल्यकालतापि न युक्ता; भिन्नयोर्हि सा भवतीति चोदयति—नन्विति। उत्तरमाह—नेति। यथा कपालजन्मैव घटनाशः, तथापि तयोर्भेदेन व्यपदेशः; तथेहापि वस्त्वभेदेऽपि व्यपदेशमात्रभेद इत्यर्थः। यद्वा अत्रापि भावाभावरूपेणैव व्यपदेशभेदः। स हि 'विद्वान्न बिभेति,' 'को मोह एकत्वमनुपश्यतः' इति व्यक्त एव। "ब्रह्मैव भवति" इत्यत्र त्ववधारणेनाब्रह्मत्वाभावोऽभिप्रेयत इति दृष्टान्तदार्ष्टान्तिकयोः साम्यम्।  P. 122-3.

ननु यदि विज्ञानात्मनोऽद्वयब्रह्मरूपस्य तत्स्वरूपाविर्भावरूपविद्योदय एव मोक्षः; ततो यत्रैव विद्योदयस्तत्रैव स मुच्येत; ततो गत्यभावात् "तेऽर्चिरभिसंभवन्त्यर्चिषोऽहः" इत्याद्या मार्गश्रुतयः कथम्? कथं च "लोके यथा मधुकृतः" इति "यथा सौम्य नद्यः" इत्याद्याश्च जीवब्रह्मणोरसति विभागे विभागस्याप्ययं लयं श्रावयन्त्यः श्रुतयः? कथं चाद्वयात्मस्वरूपाविर्भावे "स एकधा भवति, द्विधा" इत्याद्याः श्रुतयः?—इति पृच्छति—कथमिति। अत्रोत्तरमाह—तत्रेति। आचार्या इत्यध्याहार्यमेव। तच्च पूजार्थमुक्तम्। न स्वमतपर्युदासाय। विद्या सगुणा

निर्गुणा च । तत्र मार्गादिश्रुतयो न निर्गुणविद्याविषयाः; तत्र हि गति-निषेध एव "ब्रह्मैव सन्" इति श्रूयते । ब्रह्मस्वरूपस्यैव ब्रह्मभावं वदन्ती श्रुतिरेषा स्वरूपस्य तत्रैव देशे सुलभत्वादन्यत्र गतिं निषेधति । तथा "न तस्मात्प्राणाः" इत्याद्या च श्रुतिः तस्माद्विदुषो देहान्न प्राणा उत्क्रामन्ति, अपितु अत्रैव समवनीयन्ते प्रलीयन्ते इति वदन्ती विदुषो विज्ञानात्मनो गतिं निषेधति । गत्यर्थश्च मार्गोपदेशः । स गत्यभावे निर्गुण विद्यायामनर्थक इत्याशयः । ननु प्राणानामयं गतिनिषेधो न विज्ञानात्मन

P.122-14 इत्याशङ्क्याह—प्राणेति । अत्र हेतुमाह—न हीति । यथा बिम्बस्यैवादर्शाद्युपाधेर्बिम्बाद्भेदेन प्रतिबिम्बत्वम्, एवं ब्रह्मण एव प्राणोपाधेः ब्रह्मणो भेदेन विज्ञानात्मत्वम्; तत्र प्राणानामगमने सत्युपाधेरभावाद्विज्ञानात्मत्वमेव नास्ति; कस्य गमनं भवत्विति अर्थात्प्राणगमने विज्ञानात्मन एवागतिरुक्ता भवतीत्यर्थः । अत्राह—"न तस्मात्प्राणा उत्क्रामन्ति" इति जीवापादाना प्राणानामुत्क्रान्तिरनेन निषिध्यते, न देहापादाना । तेनायमस्यार्थः—जीवमुज्झित्वा प्राणा नोत्क्रामन्ति, अपितु जीवेन सहैव देहादुत्क्रामन्तीति । एवं च "न तस्य प्राणा उत्क्रामन्ति" इति शाखान्तरश्रुतिरपि 'तस्य प्राणाः कुतो नोत्क्रामन्ति? किं देहात्? उत देहिनः?' इत्यपेक्षायां "न तस्मात्" इति श्रुतिबलात् देहिन इति विशेषे स्थाप्यते । किंच प्राप्तिपूर्वकत्वान्निषेधस्य "तमुत्क्रामन्तं प्राणा अनूत्क्रामन्ति" इति देहान्तरग्रहणायाविदुषो योत्क्रान्तिः श्रुता, सा "न तस्मात्प्राणाः" इत्यनेन विदुषि निषिध्यते, न परब्रह्मप्राप्त्यर्था । तदुक्तम्—"देहान्तरार्था योत्क्रान्तिः सा तत्र प्रतिषिध्यते" इति । तेन विदुषोऽप्युत्क्रान्तिरस्तीति परविद्याविषया अपि मार्गश्रुतयः । तथा च तत्प्रकरणेऽपि ताः पठ्यन्त इति । तदिदमसंबद्धम्; तथाहि—यद्यविदुषो योत्क्रान्तिः सा विदुषो निषिध्यते, तर्हि सा देहाच्च्युता कथं जीवान्निषिध्यते? अथ देहादेव सोत्क्रान्तिर्निषिद्धा; किं तु देहान्तरार्था, न ब्रह्मप्राप्त्यर्थेत्युच्यते; ततोऽनेन देहान्तरार्थोत्क्रान्तिर्विदुषो निषिद्धा; ब्रह्मप्राप्त्यर्था तु केन विहिता? न तावदनेनैव, वाक्यभेदप्रसङ्गात् । न चार्थाक्षेपसिद्धा, विनैव तया देहान्तरोत्क्रान्तिनिषेधोपपत्तेः, ब्रह्मप्राप्त्युपपत्तेश्च । तथाहि—यदन्यत् दूरस्थं च, तद्गत्या प्राप्यते । ब्रह्म तु जीवस्य निजं रूपं सर्वगतं च; अतो नान्यत्,

न च दूरस्थम् । अतः किं तत्र गत्या, येन सार्थादाक्षिप्येत? किंच "अत्रैव समवनीयन्ते" इति च तत्रैव देशे प्राणानां प्रलयमभिवदन्ती श्रुतिः विदुषोऽनुत्क्रान्तिं सूचयति । अत्रेति ब्रह्मोच्यते, न देशविशेष इति चेत्; महाभिज्ञो भवान् शब्दवृत्तस्य! न हि 'राजा न गतः, अत्रैव तिष्ठति' इत्युक्ते यतो न गतः, ततो देशादन्यत् 'अत्र' इत्युच्यते । तस्माद्विदुषो ब्रह्मप्राप्त्यर्था नोत्क्रान्तिरिति व्यर्था मार्गश्रुतयः परप्रकरणेऽपि पठिताः। यत्रार्थवत्यः, तत्र पूषानुमन्त्रणमन्त्रवत् दुष्यन्त इत्यलं प्रपञ्चेन ।

किंविषया नाम ता मार्गश्रुतयः? इत्यपेक्षायामाह—यत्र त्विति । P.122-16
सगुणविद्याविषयास्ता इत्यर्थः । न च निर्गुणविद्यान्यायेन तत्रापि तासामनुपयोग इत्यभिप्रायेणाह—तत्र चेति । परब्रह्म हि जीवस्य निजं रूपम्, तच्च नित्यप्राप्तमेव सदविद्यया कण्ठस्थसुवर्णवदप्राप्तं विद्यया अविद्यानिवृत्तौ तत्रैव सुलभमिति न गतिमपेक्षते; तेन युक्तस्तत्र मार्गश्रुतीनामनुपयोगः । कार्यब्रह्मलोकः पुनः इतस्तृतीयस्यां दिवि तिष्ठति; तेन स दूरस्थः; तत्प्राप्तये ग्रामवत् गतिमपेक्षत इति तत्र मार्गश्रुतय उपयुज्यन्त इत्यर्थः । कार्यब्रह्मलोकास्तित्वं श्रौतत्वेन दर्शयति—यत्रेति । कार्यं च ब्रह्मलोकं येऽपि न परब्रह्मविदस्तेऽपि यान्ति । तत्र श्रद्धासत्यतपसामुपासकानां कार्यब्रह्मलोकं श्रुत्या द्रढयति—तथा चेति । ननु सगुणोपासकानामपि ब्रह्मप्राप्तिरेव किं न स्यादित्याशङ्क्याह—परेति । अत्र हेतुमाह—विद्ययेति । मृत्युमत्येतीत्यन्वयः ।

ननु सगुणोपासकानां कार्यब्रह्मलोकप्राप्तिश्चेत्, ततस्तस्य महाप्रलये नाशात् तेषां पुनरावृत्त्या भाव्यम्; अथ कथम् "इमं मानवमावर्तं नावर्तन्ते" इत्यनावृत्तिश्रुतिरिति पृच्छति—अपुनरावृत्तीति । अत्र मतभेदेनोत्तरमाह—अत्रेति । तत्प्रपञ्चयति—तदिति; कार्यब्रह्मलोकस्थानं निर्दिशति; तत् कार्यब्रह्मलोके स्थानं प्राप्य तत्रोत्पन्नसर्वोपाधिनिर्मुक्तब्रह्मतत्त्वविज्ञाना महाप्रलये प्राप्ते क्रमेण परं पदमश्नुवते इति तेषामपि पुनरावृत्त्यभावात् अपुनरावृत्तिश्रुत्युपपत्तिः । अत्र वाक्यं पठति—यथेति । वेदान्तविज्ञानेन सुनिश्चितोऽर्थो येषां ते तथोक्ताः, उत्पन्नवाक्यार्थमात्रज्ञानाः,

अनुत्पन्नाद्वयात्मसाक्षात्कारा इति यावत् । अत एव सहसा न मुच्यन्ते, अपितु कार्यब्रह्मलोकं गत्वानन्तरं मुच्यन्ते । "ते ब्रह्मलोकेषु" इति परमेव ब्रह्मोच्यते ; अतस्तत्प्राप्तिरेवानेन कथ्यते, न कार्यब्रह्मलोकप्राप्ति-
2.123-14 रित्याशङ्क्याह—ब्रह्मेति । परं ब्रह्मैकमनवयवं च । अतस्तस्य न स्वतो नाप्यवयवद्वारेण बहुत्वमवकल्पते ; कार्यब्रह्मलोकस्तु यद्यप्येकः, तथाप्यवयवबहुत्वेन तत्र बहुवचनमुपपद्यते ; तेन स एवोच्यते, न परमित्यर्थः । अत्र केचित् ग्रहैकत्ववद्बहुत्वमविधेयत्वादविवक्षितम् ; अतः परं ब्रह्मैवात्र ब्रह्मलोकमित्याहुः ; तदयुक्तम् ; परान्तकालप्रतीक्षणात् ; न हि विदुषो महाप्रलयकाले परब्रह्मप्राप्तिः, अपितु देहपातानन्तरमिति तेषामप्यभिमतम् । तथाच सूत्रम्—"पाते तु" इति । लोकशब्दश्च भोगभूमौ मुख्यो न परब्रह्मणि । आधारत्वमपि तस्यैव कार्यब्रह्मलोकस्य निवासस्थानत्वात् घटते । तस्मात्कार्यब्रह्मलोकनिर्देश एवायम् । एवं च सति बहुवचनमपि कथंचिदवकल्पत इति तदपि लिङ्गस्थानीयमुक्तमित्यदोषः । सर्वमिदं कर्त्रादि ब्रह्मेत्युपासनादिति ; योगशब्देन उपासनामात्रमुच्यते, न तत्त्वज्ञानमित्युक्तं भवति । अत एव कार्यब्रह्मलोकप्राप्तिः फलम् । अत्रैवार्थे स्मृतिमाह—तथाचेति । ब्रह्मलोकं गतास्ते सर्वे कृतात्मानः संस्कृतबुद्धयः परस्य प्रधानस्य ब्रह्मणोऽन्ते अधिकारसमाप्तौ यदा प्रतिसंचरो महाप्रलयो भवति तदा ब्रह्मणा सह परं पदं प्रविशन्तीत्यर्थः । अन्ये तु अनावृत्तिश्रुतेरिममर्थं मन्यन्ते—यथा कर्मिणो धूमादिमार्गेण चन्द्रलोकं गतास्ते तत्र पतनकालपर्यन्तं स्थित्वा भुक्त्वा भोगांस्तस्मिन् स्थित एव निवर्तन्ते, नैवं स्थिते ब्रह्मलोके तत्र गतानां तत आवृत्तिः ; अपितु ब्रह्मलोकप्रलयपर्यन्तं तत्रैव तिष्ठन्ति । न च वाच्यम्—तथापि तत्प्रलये तेषामावृत्तेः कथमनावृत्तिश्रुतिरिति ; यतस्तस्मिन् सति न तत आवृत्तिर्भवति ; तत्प्रलये तु स एव नास्ति ; कुतस्तत आवृत्तिः ? अतश्चैवमनावृत्तिः श्रूयते । यत्र तु 'तत्प्रलये हि तत आवृत्तिः' इति पाठः, तत्र ततः प्रलयात् प्रागावृत्तिर्नास्ति, ततश्चानावृत्तिः श्रूयत इत्यर्थः । तथाच "इमं मानवम्" इति "इह नावर्तन्ते" इति 'इमम् इह' इति विशेषणम् अस्यां संनिहितायां वर्तमानसृष्टावनावृत्तिमाह । सर्वथानावृत्तौ दुर्योजमेतत् । "अमृतत्वयेति" इति चामृतत्वं ये प्राणिनः प्रलयादर्वागेव म्रियन्ते तानपेक्ष्य ।

महाप्रलये म्रियमाणानामपि तेषां देवानामिवामरत्वमुपपद्यते । तथा च "आभूतसंप्लवं स्थानम्" इति स्मृतिः यावद्भूतग्रामस्यावस्थानं तावदमृतत्वम्, प्रलये म्रियन्त इत्याह ।

यत्तु मन्यते—ब्रह्मणः प्रादेशिकोऽयं भूतभौतिकविकारो न सार्वत्रिकः । P. 124-5 तेनाविकृतोऽप्यस्य प्रदेशोऽस्ति । तथाच "यदतः परः" इत्यादिका श्रुतिः अतो दिवः परस्ताज्जडैर्विकारैरनभिभूतमात्मज्योतिर्दीप्यमानं दर्शयति। तत्रैतस्य च मुक्तिः । अतोऽस्ति मार्गश्रुतीनां परब्रह्मप्राप्तावुपयोग इति न कार्यब्रह्मविषयतेति । तन्निरूप्यम्—न तावदनुत्पन्नाद्वयज्ञानस्यायं मार्गोपदेशः' ब्रह्मविदः श्रवणात् । योऽप्युत्पन्नाद्वयात्मविद्यः, तस्यापि विद्यया निःशेषाविद्यानिवृत्तौ तज्जस्य भेदप्रपञ्चस्य सर्वत्र विलयादिहाप्यविकृतं ब्रह्म सुलभमिति न तत्प्राप्तयेऽन्यत्र गतिरुपयुज्यते । अतो न तदर्थो मार्गोपदेश इति कार्यब्रह्मलोकविषयतैवास्य युक्ता । यापि मधुनदीनिदर्शनेन जीवब्रह्मणोरविभागश्रुतिः, सापि यथा मधुनि कुसुमरसानां यथा च समुद्रे नदीनां संसर्गे द्रव्यत्वेन परस्परमविभागः, तथा जीवब्रह्मणोरित्येवंपरा न भवति, तयोरसंसर्गिद्रव्यत्वात्; अपितु यथा तत्र विवेकेन ज्ञानाभावः, तथा जीवब्रह्मणोरपीत्येवंपरा; किंचित्सादृश्येनापि दृष्टान्तोपादानात् ।

तथा सृष्टिश्रुतीनां सृष्टिपरत्वे सृज्यमानप्रपञ्चसत्यत्वादद्वैतहानिशङ्कानिवृत्त्यर्थं ता अपि प्रसङ्गतो व्याचष्टे—सर्गेति । ता अपि न सृष्टिपराः; आत्मैको जगतस्तत्त्वम्, न ततोऽन्यत् द्वितीयं जगदस्तीत्येतत्प्रतिपत्तिपराः । तेनात्मैकत्वानुग्रहस्तासामर्थो व्यवस्थाप्यः, नान्यथा । आत्मैकत्वं वाक्यार्थीभूतं विरुध्यते । कथं तासामात्मैकत्वपरत्वमुच्यते? "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इत्युपक्रमः । यदि च आत्मैकः सर्वस्य तत्त्वं न तत्त्वान्तरमस्ति, तदा आत्मनि ज्ञाते सर्वमिदं ज्ञातं भवति, नान्यथा । तेनात्मैकत्वेनोपक्रम इति गम्यते । तथा "सदेव सोम्य" इत्यत्र "एकमेवाद्वितीयम्" इत्येकत्वेनोपक्रमः । तथा "ऐतदात्म्यमिदं सर्वम्" इत्येकत्वेनोपसंहारः । तेनात्मैकत्वप्रतिपत्तिपरमिदं वाक्यम् । तत्र यदि भूतसृष्टिरपरा सत्यतया प्रतिपाद्येत, ततो वाक्यभेदः स्यात् । अतो यथोपांशुयाजवाक्ये "जामि वा एतद्यज्ञस्य क्रियते

यदन्वञ्चौ पुरोडाशौ" इत्युपक्रमात् "उपांशुयाजमन्तरा यजत्यजामित्वाय" इत्युपसंहाराच्चैकवाक्यत्वे अवगते तन्मध्यवर्तीनि "विष्णुरुपांशु यष्टव्यः" इत्यादीनि वचांसि वाक्यभेददोषात् पृथग्विधत्वमलभमानान्युपांशुयाजशेषत्वात्, तदानुगुण्येन 'ईदृशोऽयमुपांशुयाजो महाभागो यस्मिन्निज्यमाने विष्ण्वादयोऽपीष्टा भवन्ति' इत्येवमुपांशुयाजस्तुत्यर्थतया व्यवतिष्ठन्ते, तथा सृष्टिश्रुतयो वाक्यार्थभूतसृज्यमानप्रपञ्चभेदप्रतिपत्तिपराः। यत एकत्वेनैवोपक्रमोपसंहारौ सर्वत्र श्रुतौ, येन च तौ श्रुतौ स एव वाक्यार्थः, यश्च वाक्यार्थः स एव प्रधानम्, यच्च प्रधानं तदर्थमेवान्यद्युक्तम्। अफलं च भेदज्ञानम्। आत्मैकत्वज्ञानं तु दृष्टेन च शोकादिनिवृत्तिफलेन फलवत्। अतः 'फलवत्संनिधावफलं तदङ्गम्' इति न्यायेनाप्यैकात्म्यपरत्वं सृष्टिश्रुतीनाम्। तत्र विशुद्धेत्यादिना फलस्य दृष्टत्वमुक्तम्। "तत्र को मोहः" इत्यादिना श्रुतत्वमिति विवेकः। सर्गश्रुतयः एकत्वोपायतया
P.125-7. व्यवतिष्ठन्त इत्युक्तम्, तदुपायत्वं दर्शयति—उपायत्वं चेति। नेदमसन्मूलमिति "कथमसतः सज्जायेत" इति श्रुत्यर्थ उक्तः। अद्वितीयैकसन्मूलमिति तु "सदेवेदमग्र आसीदेकमेवाद्वितीयम्" इति श्रुत्यर्थः।

नन्वेवं कार्यकारणयोर्भेदात् कथमात्मैकत्वमित्याशङ्क्याह—कारणेति। स्यादेवं यदि तयोर्व्यतिरेकः स्यात्; स एव तु नास्ति; 'मृदयं घटः' इत्यभेदप्रतीतेरिति भावः। इदमिति; जगदित्यर्थः। अत्र दृष्टान्तमाह—घटादीति। यथा मृद्रूपेण घटादीनामेकत्वम्, एवं सद्रूपेण जगत इत्यर्थः।

ननु यदि सन्मूलं जगत् ततो मुख्य एव कार्यकारणभाव उक्तः स्यात्। अतश्च प्रपञ्चसत्यता। तत्र चाद्वैतहानिरित्यभिप्रायेण चोदयति—नन्विति। परिहरति—नेति। एतत्प्रपञ्चयति—न खल्विति; एकत्वावतारोपायत्वं विवृणोति। तदुक्तम्—

"मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिता श्रुतौ।
उपायः सोऽवताराय नास्ति भेदः कथंचन॥"

इति। भेदाभिनिवेशातिशयात् सहसैवाभेदं बोद्धुमशक्तः सदुपादानतया सद्रूपेणाभिन्नं जगत् घटादिवन्मृद्रूपेणेति प्रतिबोध्यत इत्युक्तं भवति। ननु

मुख्य एव कार्यकारणभाव एकत्वावतारोपायो भविष्यति; तथापि प्रपञ्च-सत्यता न व्याहन्यत इत्याशङ्क्याह—स चेति । स च मुख्य एकत्व- P.125-13 विरोधी; तेनामुख्यो गृह्यत इत्यर्थः ।

ननु मुख्येऽपि कार्यकारणभावे, कार्यात्मना नानात्वं कारणात्मना चैकत्वमिति नैकत्वस्य कश्चिद्विरोध इत्याशङ्क्य तन्निषेधयति—एकमिति । किंच यदि कार्यात्मना नानात्वं ततः कार्यस्यापि सत्यत्वात् "तत्सत्यम्" इति तच्छब्दोक्तस्य कारणस्यासाधारण्येन सत्यत्वं श्रुतिर्नावधारयेत्; अवधारयति च ! अतो न कार्यात्मना नानात्वमित्याह—तत्सत्यमिति । ननु कार्येऽपि सत्यश्रुतिरस्ति: यथा—"मृत्तिकेत्येव सत्यम्" इति "प्राणा वै सत्यम्" इति च । उच्यते—यथा अन्तरतमे मुख्य आत्मनि विवक्षिते "अन्योऽन्तर आत्मा प्राणमयः" इत्यात्मशब्दोक्तं बोधयितुं प्राणमयादिषु प्रयुज्यते; न चैतावता तेषां मुख्यमात्मत्वम्, तथा मूलकारणमुख्यसत्यत्व-विवक्षया मृत्तिकायामज्ञासिद्धसत्यत्वे कारणे प्राणेषु चासिद्धसत्यत्वेषु "तेषामेष सत्यम्" इति मुख्यसत्यविवक्षया सत्यशब्दः प्रयुक्त इत्यदोषः । कार्यात्मना नानात्वाभावे श्रुतिद्वयमपरमाह—अन्यत्रेति । अत्रैव हेत्वन्तरमाह—भेदेति । 'एकत्वमविरोधेन' इत्यत्र वर्णितमत्र स्मर्तव्यम् । तस्मादेतत्समस्तश्रुत्यविरोधेन यथा बिम्बात्प्रतिबिम्बानि विकल्पाः, वर्णेभ्यश्च पदानि विकल्पाः, तथा जगद्विकल्पस्यात्मोपादानम् । तथा सृष्टिश्रुति-र्वर्ण्यत इत्याह—एतदिति । दृष्टान्तद्वयं विवृणोति—यथा हीति । यथा बिम्बात् प्रतिबिम्बानि संभूतानीत्युच्यन्ते न च तानि परमार्थतः सन्ति, तथा "आत्मन आकाशः संभूतः, आकाशाद्वायुः" इत्युच्यत इति । किंच स्वप्नेऽपि सृष्टिश्रुतिरस्ति; न च तावता तत्र रथादीनां सत्यत्वम् । तद्वदेवापि भूतसृष्टिर्भविष्यति, आत्मैकत्वप्रतिपत्तिपरत्वादित्याह—अपिचेति । किंच स्यादपि भूतसृष्टिः पारमार्थिकी, यदि स्वयमेव वाचारम्भणश्रुत्या "मृत्तिकेत्येव सत्यम्" इति कारणमात्रस्य सत्यत्वमवधारयन्त्या पारमार्थिकी सोक्ता; न चैतदस्तीत्याह—स्वयमिति ।

एवं सृष्टिश्रुतीनां गतिमुक्त्वा ऐश्वर्यश्रुतीनामाह—ऐश्वर्येति । सगुण-विद्यायां स्वर्गादिस्थानीयं फलमिहानेकधादिभावः श्रूयते; न तु मोक्षः; स

हि निर्गुणविद्यानिमित्त इत्यर्थः । कथं पुनस्तत्रापि क्वचिदपुनरावृत्तिस्मृति-
.126-10 रित्याशङ्क्याह—यद्यपीति । द्वौ गतिरिति; क्रममुक्त्यभिप्रायं वा वर्तमान-
सर्गानावृत्त्यभिप्रायं वा अनावृत्तिश्रवणं व्याख्यातमित्यर्थः ।

ऐश्वर्यश्रुतिषु मतान्तरमाह—अन्य इति । यतो ब्रह्म सर्वात्मकं, सर्वेश्वरं, सर्वोपभोगानां च भोक्तृ, सर्वज्ञं, देवाद्यानन्दाश्च ब्रह्मानन्दस्य मात्रा, अतो यत्किंचिदीश्वरत्वादि ब्रह्मादिस्थावरान्तेषु भूतेषु तत्सर्वं ब्रह्मणि, यच्च ब्रह्मणि तत्सर्वमाविर्भूतब्रह्मस्वरूपो विद्वान् ब्रह्मणः सर्वात्मत्वात् आप्नोति, तेन "सर्वान्कामानाप्नोति" इत्यादि तस्य स्वरूपाविर्भावलक्षणमोक्षप्रशंसार्थमुच्यत इत्यर्थः । ननु यद्याविर्भूतब्रह्मस्वरूपो विद्वान् सर्वात्मत्वात्सर्वकामानाप्नोति, ततः सर्वात्मत्वादेव सर्वभूतगतशोकाद्यवाप्नुयात्; ततश्च मोक्षे दुःखमपि स्यादित्यभिप्रायेण चोदयति—नन्विति । परिहरति—नेति । ब्रह्मणो रूपं विद्वानाप्नोति; शोकादयस्तु न ब्रह्मणो रूपमित्यर्थः । अत्र हेतुमाह—अविद्येति । ज्ञानैश्वर्यादयश्च ब्रह्मणो रूपम्; तेन ब्रह्मप्राप्तौ प्राप्यत इति युक्तमित्याह—ज्ञानेति । कुतः पुनर्ज्ञानादीनां ब्रह्मरूपत्वं गम्यत इत्याह—विज्ञानमिति । "नान्योऽतोऽस्ति द्रष्टा" इति च ज्ञानरूपत्वे, "एतस्य" इत्यानन्दात्मत्वे, "सर्वस्येशानः" इति चैश्वर्यात्मत्वे श्रुतिरिति विवेकः । तदेवं शोकादीनामविद्याध्यस्तत्वात् ज्ञानादीनां च ब्रह्मरूपत्वात् युक्तं यदाविर्भूतब्रह्मस्वरूपो विद्वान् ज्ञानादीनश्नुते, न शोकादीनित्याह—तथा चेति । अत्र चोदयति—नन्विति । तत्परिहरति—नैतदिति । दृष्टान्तौ विवृणोति—सिद्धेनेति । ननु प्रकाश्यानधीनेऽपि प्रकाशरूपे ब्रह्मणोऽद्वयत्वादसति सर्वस्मिन् कथं सर्वज्ञत्वमित्याशङ्क्याह—तथा चेति । तथा च सति प्रकाश्यानपेक्षे ब्रह्मणः प्रकाशरूपत्वे सति, तत्त्वतः सर्वाभावेऽपि अविद्यावस्थायां सर्वस्य प्रपञ्चस्य "तस्य भासा" इत्यादिश्रुतिसिद्धात्मचैतन्येनावभासत्वात् आत्मनः सर्वज्ञत्वमित्यर्थः । एवमद्वये ब्रह्मणि सर्वाभावे सर्वेश्वरत्वानुपपत्तिमाशङ्क्य तदुपपादयति—सर्वेति । अत्राप्यविद्यावस्थायामेव ब्रह्मेन्द्रादीनामीश्वराणां यथायथं स्वेषु स्वेष्वीशितव्येषु यदैश्वर्यं तत्सर्वं ब्रह्मणः सर्वात्मत्वात् तदैश्वर्येणैवेति तस्य सर्वेश्वरत्वमित्यर्थः । "एष भूताधिपतिः" इत्यादावपि एषैव योजनेत्याह—

एवमिति । तत्राप्यविद्यावस्थायामेव भूतेषु लोकेषु च ब्रह्मेन्द्रादीनां यदै- P.127-14
श्वर्यं तत् कर्मोपासनाविशेषेण परमेश्वरस्यैव सर्वात्मना तेष्ववच्छिन्नमभि-
व्यक्तम् । तेनेन्द्रादीनां यदैश्वर्यं तत् "एष भूताधिपतिः" इत्यादिना
परमेश्वरस्योक्तमित्यर्थः । एवमाविर्भूताद्वयब्रह्मस्वरूपं प्रति सर्वस्य स्वर्गादेः
कामस्याभावात् सर्वकामावाप्तिश्रुतेरनुपपन्नत्वमाशङ्क्य तामप्युपपादयति—
सर्वेति । अत्राप्यविद्याभूमावेव कर्मणो यान्यान्कामानाप्नुवन्ति तेषु
तेषु य आनन्दाः, ते "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुप-
जीवन्ति" इति श्रुतेः ब्रह्मानन्द एव । अतश्च ब्रह्म प्राप्तो विद्वान् तत्सर्वा-
नन्दानाप्नोतीति "सर्वान्कामानवाप्नोति" इत्युच्यते । न तु स्वरूपेणैव
सर्वकामानवाप्नोतीत्यर्थः । एतामेव योजनां श्रुत्यन्तरेऽप्यतिदिशति—
एवमिति । अत्र दृष्टान्तमाह—यथेति । दृष्टान्तासिद्धिमाशङ्क्य तत्साध-
यति—न हीति । द्वितीयेन हि क्रीडा मिथुनीभावश्च भवति । न
चाद्वयं ब्रह्म प्राप्तस्य द्वितीयमस्ति । तेनात्र यथा मिथुनीभावानन्दप्राप्त्या
"आत्ममिथुनः" इत्युक्तम्, तथा "रममाणः स्त्रीभिः" इत्याद्यपि यथोक्त-
न्यायेन तदानन्दप्राप्त्योक्तमित्यर्थः । ब्रह्मण एव यानि ज्ञानादीन्यनव-
च्छिन्नानि तान्येव कल्पितावच्छेदानि भूतेषु, नान्यानीतीममर्थं गीतया
द्रढयति—यच्चेति । यत एव ब्रह्मण एव ज्ञानानन्दादीनि यान्यनव-
च्छिन्नानि तान्येवावच्छिन्नानि सर्वभूतेषु । अत एव यत्र यत्र भूतेषु
ज्ञानादीनां नात्यन्तमवच्छेदः अल्पीभावः, तानि व्यासादिभूतानि ज्ञाना-
दीनां समुत्कर्षात् भगवतः प्रत्यासन्नानि, भगवान् "मुनीनामप्यहं व्यासः"
इत्यात्मत्वेनोक्त्वा "मुनीनाम्" इत्यादि यदुक्तं तत् "यद्यद्विभूतिमत्स-
त्त्वम्" इत्युपसंजहारेत्यर्थः । परमात्मज्ञानमेवानवच्छिन्नं सत् दर्शनादि-
व्यवहारहेतुरिति गम्यत इति ज्ञानं प्रति विशेषेणाह—तथेति । तथा
सर्वभूतदर्शनश्रवणादीनां परमात्मज्ञाननिबन्धनत्वम् "अदृष्टं द्रष्टृ" इत्या-
दिषु श्रुतमित्यर्थः ।

एवं सर्वज्ञत्वादिकमुपपाद्य तत्र मतान्तरमाह— अन्य इति । नामरूपे
शब्दार्थावाश्रयौ यस्य स तथोक्तः । ध्यानमेवाध्यानम् । तत्र दृष्टान्त-
माह—यथेति । तदुपपादयति—न हीति । स्वमहिमप्रतिष्ठस्येति । आधारा-

P.128-10 नपेक्षत्वमाह । देशविशेषः आदित्यमण्डलं स्वरूपं च हिरण्मयादि । ननु परब्रह्मण एव देशविशेषो रूपं चोक्तमिति कुतोऽयं गम्यत इत्याह—पर इति । श्रुतिमाह—उदित इति । पाप्मशब्देन पुण्यमप्युच्यते; तेन सर्वेभ्यः पुण्यपापेभ्य उदित उत्क्रम्योर्ध्वं वा गतः; तैरसंसृष्ट इति यावत् । पुण्यपापासंस्पर्शश्च "अन्यत्र धर्मात्" इति परस्य श्रुतः । तस्मात्परस्यैवैष देशविशेषो रूपं च श्रुतम् । न च ते तस्य विभोररूपस्य च संभवतः । तेन ध्यानं तेन रूपेण विधीयते । तथा सर्वज्ञत्वाद्यपि द्रष्टव्यमिति । तदेवं स्वरूपाविर्भावलक्षणे मोक्षे मार्गादिश्रुतीस्तद्विरुद्धार्थाः तथा अन्याश्च प्रसङ्गागताः समाधाय तमेव मोक्षं प्रतिष्ठापयति—तदेवमिति । ब्रह्मात्मन इति; ब्रह्मैव आत्मा यस्य विदुषः स तथोक्तः, तद्रूपाविर्भाव इत्यर्थः ।

सा च तत्प्राप्तिरात्मनो ज्ञानस्वरूपत्वाद्विद्यैवेत्याह—सा चेति । एवं स्थिते 'न साध्यो मोक्षो न च विद्याया अन्यः' इति यदुक्तं तदुपसंहरति—तस्मादिति ।

मतान्तरमाशङ्कयति—अथेति । उक्तेऽर्थे प्रमाणमाह—श्रूयत इति । ननु पाप्ममात्रस्य विद्यया दाहः श्रुतः, न पुण्यस्य; तदपि च बन्धहेतुः । अतो नाशेषबन्धक्षयहेतुर्विद्येत्याशङ्क्याह—पाप्मेति । अत्र हेतुमाह—सावद्येति । सावद्यं सदोषं फलं यस्येति विग्रहः । दोषश्च संसारानुबन्धित्वं पतनादिहेयवत्त्वं च । पाप्मशब्देन पुण्यमप्युच्यत इत्यत्रार्थे हेत्वन्तरमाह—अन्यत्रेति । सुकृतदुष्कृतोपक्रमः पाप्मशब्दस्तत्र द्वयोरपि तयोर्वर्तते यत इत्यर्थः । यदि च कर्मक्षयमन्तरेण मोक्षः स्यात् ततो नासौ साध्येत; न चैतदस्तीत्याह—न चेति । फलैकविनाश्यत्वात् कर्मणो नादत्तफलस्य निवृत्तिः; अतः कथं विद्यया तत्क्षय इत्याशङ्क्याह—प्रायश्चित्तानामिति । गोवधादिदोषसंयोगेन प्रायश्चित्तान्याम्नायन्ते; न च तन्निमित्तमात्रमित्युक्तम् । अतो दोषक्षयहेतुत्वमेषां गम्यते । तेन प्रायश्चित्तेनादत्तफलमेव पापं कर्म क्षीयते । तथा विद्यया बन्धहेतुकर्मक्षय इत्यर्थः ।

ननु बन्धहेतुकर्मक्षयश्चेत् विद्यासाध्यो न तर्हि विद्यातो मुक्तिरित्याशङ्क्याह—सैवेति । एवं च स्वरूपाविर्भावो मोक्ष इत्यपि प्रत्युक्तम् ।

ननु कर्मक्षयस्य विद्याकार्यत्वे कार्यत्वात् घटवत् अन्तवत्त्वं स्यात्; अतश्च पुनः कर्मप्रादुर्भावात् मुक्तस्य पुनर्बन्धः स्यादित्याशङ्क्याह—एवमिति। न हि घटध्वंसो विनाशी, घटस्य पुनः प्रादुर्भावादर्शनादिति भावः। P. 129-5

एवं परमतमुपन्यस्य दूषयति—तत्रेति। प्रायश्चित्ते या न्यायदिक् तथा। बन्धहेतोः कर्मण उच्छेदः क्षयो न भवति; यतः सर्वाविद्याप्रविलये छेद्यं कर्म नावशिष्यत इति। तत्र हेतुमाह—बन्धेति। बन्धहेतुः कर्म अविद्योपादानत्वात् अविद्यास्वभावम्। तत्र विद्यायां सत्यामविद्या कार्त्स्न्येन प्रणष्टा। तेनाविद्यानिवृत्त्यैव तदात्मबन्धहेतुरपि निवृत्त इति न पृथक् छेद्यमवशिष्यत इत्यर्थः। विद्योत्पत्तिरेवाविद्यात्मकबन्धहेतुनिवृत्तिः। अतो न सा तत्साध्येति भावः। वृत्तिः स्पष्टार्था। अविद्योच्छेदेन कर्मोच्छेदे लिङ्गं दर्शयति—यतश्चेति। अविद्योच्छेदने उच्छिद्यमानाभ्यां संशयविपर्ययाभ्यां सह कर्मणाम् "भिद्यते हृदयग्रन्थिः" इत्यत्र संख्यानमविद्योच्छेदेन तेषामुच्छेदं सूचयतीत्यर्थः। हृदयग्रन्थिर्विपर्ययोऽभिप्रेतः।

अत्र चोदयति—नन्विति। अत्र दोषमाह—तस्येति। उत्पन्नज्ञानस्य तावदेव चिरं कालविलम्बो यावद् देहेन विमोक्ष्यते। छान्दसस्तकारलोपः। अथ देहविमोक्षानन्तरं ब्रह्म संपत्स्यत इत्यर्थः। कस्य नामेयं श्रुतिर्न बाध्यते इत्यत्राह—यस्येति। यस्य कर्मक्षयहेतुर्विद्या शास्त्रात् गम्यते, तस्य शास्त्रानुसारेण केषांचित्कर्मणां विद्यया क्षयः, केषांचिदुपभोगेनेति व्यवस्थोपपद्यत इत्यर्थः। शास्त्रानुसारमाह—तत्रेति; तस्मिन् पक्ष इत्यर्थः। तत इति; विद्यात इत्यर्थः। अविशेषेणोत्सर्गतो विद्यया सर्वकर्मक्षयप्राप्तौ स मुक्तेर्देहपातावधित्वश्रुत्यापोद्यत इत्यत्र हेतुमाह—न हीति। सर्वेषां कर्मणां विद्यया क्षये विद्योदयानन्तरमेव मुक्तिः स्यात्; अतो देहपातप्रतीक्षा नोपपद्येत; श्रूयते चासौ। अतः केषांचित् कर्मणां भोगेन क्षय इति गम्यत इत्यर्थः। आचार्यजुष्टश्चायं मार्ग इत्याह—तदुक्तमिति। अनारब्धकार्ये अप्रवृत्तफले वर्तमानदेहानारम्भके पुण्यपापे पूर्वोपात्ते विद्यया क्षपयित्वा,

इतरे तु आरब्धकार्ये तदवधेर्मुक्तेर्देहपातावधिश्रुतेर्भोगेन क्षपयित्वा ब्रह्म संपद्यत इति सूत्रार्थः ।

यस्य तु कर्मफलव्यवहारं दृष्टेनैव विद्योच्छिनत्ति, तस्य विद्यया सर्वाविद्योच्छित्तावविशेषेण सर्वकर्मोच्छेदादनन्तरमेव मुच्येत; अतश्च देह-
P.130-6. पातावधिश्रुतिर्बाध्येतेत्याह—विद्ययेति । तत्परिहरति—नैष इति । एष देहपातावधिश्रुतिबाधदोषो नास्तीत्यर्थः । तत्र हेतुमाह—न हीति । यदीयं श्रुतिर्देहपातावधिं चिरकालताविशिष्टत्वं च मुक्तेर्ब्रूयात्, ततः स्यादेष दोषः; न त्वेदस्तीत्यर्थः । किं नामाहेत्यपेक्षायामाह—किं त्विति । अत्र दृष्टान्त-माह—यथेति । यथा कश्चित् 'क्षिप्रतरं गच्छ' इति नियुक्तः क्षिप्रतरत्वं प्रतिपादयन्नाह—'तावदेव मे चिरं यत् स्नातो भुञ्जानस्य उपानहौ वा क्रम-माणस्याश्वं वारोहतः' इति, तथेयमपीत्यर्थः । यदि तु चिरत्वमात्रं श्रुतौ विवक्षितं स्यात् ततश्चिरमित्येव ब्रूयात्, न तु तावदेवेत्यवधिविशेषम् । देहपातावधिं तु दर्शयन्त्याः श्रुतेरयमभिप्रायः—यदविद्याजेन देहेन विद्यया अविद्यानिवृत्तावनन्तरमेव पतितव्यम्, अतः क्षिप्रमेव मुक्तिरिति । एवं क्षैप्र्यपरता श्रुतेर्लक्ष्यत इत्याह—अन्यथेति । उपसंहरति—अत इति । न प्रतीक्षणीयमिति; भोगेनारब्धकर्मक्षपणं न प्रतीक्षणीयमित्यर्थः । यदा चानन्तरमेव मुक्तिः, तदा देहपातमन्तरेण तदसंभवान्नान्तरीयकत्वाद्देहपातो-ऽप्यनन्तरं भवत्येवेत्याह—देहेति ।

अस्यास्तावच्छ्रुतेरर्थान्तरमाह—अथवेति । उभयविधौ दोषमाह—अन्यथेति । तदेवं सति यः श्रुतेरर्थः संपद्यते तमाह—तत्रेति । अन्यतः प्राप्त कस्यचिन्मुक्तेश्चिरत्वमनूद्य देहविमोक्षणमवधिर्विधीयत इत्यर्थः ।

तत्र पूर्वस्मिन् श्रुत्यर्थं चोदयति—नन्विति । विद्योदयानन्तरं मुक्तौ स्थितः प्राज्ञः पतितदेहत्वान्नास्त्येव; कस्य लक्षणमुच्यते? इत्यर्थः । द्वितीयेऽपि श्रुत्यर्थे चोदयति—द्वितीयेऽपीति । विद्यातः सर्वकर्मक्षये कर्मजस्य शरीरस्यानन्तरमेव पातान्न कस्यचिन्मुक्तेश्चिरत्वमस्ति; अतो न तदनुवादेनावधिविशेषविधानमुपपद्यत इत्यर्थः । तत्राद्यं चोद्यं तावत्परि-हरति—उच्यत इति । विगलितायां निखिलायामविद्यायां सिद्धः, विगलित

निखिला अविद्या यस्यां विद्यायां तया वा सिद्धो विगलितनिखिलाविद्यासिद्धः । यो योगाभ्यासपरिपाकादुत्पन्नाद्ध्यात्मसाक्षात्कारप्रकाशोऽनन्तरमेव मुच्यते, न स स्थितप्रज्ञः; किन्त्वद्ध्यात्मसाक्षात्कारप्रकारस्य साधक एवावस्थाविशेषं प्राप्तः सिद्धेः किंचिदर्वाचीनायामवस्थायां वर्तमानो यः सिद्धप्रायो नाद्यापि सिध्यति स स्थितप्रज्ञः । तस्य चापतितदेहस्य लक्षणाभिधानं युक्तमित्यर्थः । द्वितीयं चोद्यं परिहरति—न चेति । आरब्ध- P.130-21 कार्यकर्मानपेक्षणे यत्सिध्यति, तदाह—तत्रेति । भोगेन कर्मक्षयापेक्षायां सर्वस्य चिरेणैवापवर्गः । तदनपेक्षायां च कस्यचित्तत्कालः, कस्यचिच्चिरेण; यस्य चिरेण तस्य चिरत्वमनूद्यावधिविशेषविधानमुपपद्यत इति भावः । ननु यदाप्यारब्धकार्यकर्मक्षयं भोगेन न प्रतीक्षते, तदापि विद्यया अविद्याजकृत्स्नकर्मनिवृत्तौ तज्जन्यदेहस्यानन्तरमेव वियोगः; अतः कथं कस्यचित् चिरकालोऽपवर्ग इत्याशङ्क्याह—यथेति । तत्संस्कारादिति; तच्छब्देन भयं कम्पादि चोच्यते । भुज्यमाने विपाके प्रारब्धकार्यस्य कर्मणः फले 'अहं शरीरी भोक्ता, इदं भोग्यम्' इति यः संस्कारो जातः, तस्यानुवृत्तिः, तन्निबन्धनेत्यर्थः । संस्कारात्कार्यानुवृत्तौ दृष्टान्तमाह—कुलालेति ।

अत्र चोदयति—नन्विति । तत्र च दोषमाह—तथाचेति । अथैतद्दोषभयात् भोक्त्रादिविभागदर्शनस्याविद्याहेतुकस्य विद्यया अविद्योच्छेदादननुवृत्तिरित्युच्यते, तदा क्षणमपि न भोक्त्रादिविभागदर्शनं स्यादिति स एव देहपातावधिश्रुतिविरोधः । सैषा उभयतो दोषादुभयतःपाशा रज्जुरित्युपमयोच्यत इत्याह—अथेति । तत्राननुवृत्तिपक्षमनभ्युपगम्यैवानुवृत्तिपक्षोक्तदोषं परिहरति—उच्यत इति । न च मूलकारणेति । मूलकारणं भयं ततो यथा कम्पादि साभिनिवेशं प्रबलतरं तथा तत्संस्कारादित्यर्थः । एतच्च यथा कर्मणो मूलकारणस्य फलं साभिनिवेशं न तथा तत्संस्कारफलमिति वक्ष्यमाणविशेषोपयोगितयोक्तम् । तत एवेति; रज्जुत्वदर्शनादेवेत्यर्थः । ननु क्षणिकं तत्, अतः कथं क्रमेण निवृत्तिः? उच्यते—यथा यागादेः क्षणिकादपूर्वाधानद्वारेण फलसिद्धिः, तथा तत्त्वदर्शनादपि संस्काराधानद्वारेण भयसंस्कारनिवृत्तिरित्यदोषः । स्वयमेव

वेत्यत्र चक्रभ्रमणसंस्कारो दृष्टान्तः । एतच्च सर्वं 'न च भयविगमेऽप्यनुवृत्तिरित्येतावता चिरकाला भवति' इत्येतदुपयोगितयोक्तम् । स्वयं वेत्यत्र क्रमेणेत्यनुवर्तते । ननु क्षणिकस्य सहेतुको नाशो दृष्टः; तत्कथं स्वयमित्युच्यते; चक्रसंस्कारोऽपि फलविनाश्येव । अथ करभूभागादिस्पर्शवद्द्रव्यसंयोगाद्वा नश्यतीत्यसिद्धो दृष्टान्तः । उच्यते—को वा ब्रूते न सहेतुक इति? काल एव हेतुर्भविष्यति; अत एव क्रमेणेत्युक्तम् । दृष्टं च कालस्यापि सूतकदोषादिविनाशकत्वम् । तथेहापि भविष्यति । कथं तर्हि स्वयमित्युक्तम्? प्रयत्नान्तरानपेक्षमात्रविवक्षयोक्तमित्यदोषः । एवं
P.131-16 दृष्टान्तं प्रसाध्य दार्ष्टान्तिके योजयति---तथेति । कर्मसु चारब्धकार्येष्वनारब्धकार्येष्वित्यत्र 'निवृत्तायाम्' इति लिङ्गवचनव्यत्ययेन 'निवृत्तेषु' इति कृत्वा योज्यम् । रूढाभिनिवेश इति; रूढः प्रादुर्भूतोऽभिनिवेशः आस्थातिशयो यस्येति विग्रहः । तेनायमर्थः—विद्यया अविद्यायां कर्मसु चाविशेषादारब्धानारब्धकार्येषु निवृत्तेषु आरब्धो भुज्यमानो विपाकः प्रारब्धकार्यस्य कर्मणः फलं तत्संस्कारात् विद्वानपि शरीरिणं भोक्तारं चात्मानमाभासमात्रेण आस्थाविकलं प्रत्येति । न त्वविद्यानिवास्थातिशयोपेतामिति । एतदुक्तं भवति—यत्प्रारब्धफलं कर्म, तस्मिन्निवृत्तेऽपि तत्फले भुज्यमाने यः शरीरित्वादिसंस्कार उद्भूतः, तेनोत्तरकालमपि शरीरिणं भोक्तारमिव चात्मानं मन्यत इति । अत्रान्तरे विवक्षितमर्थमसमाप्यैव स्थितप्रज्ञलक्षणाभिधानोपपत्तये स्थितप्रज्ञस्वरूपं तावदाह—स चायमिति । पूर्वं साधकः स्थितप्रज्ञ उक्तः, अधुना सिद्ध एवेति विशेषः । तस्य च "प्रजहाति यदा कामान्" "आत्मन्येवात्मना तुष्टः" "दुःखेष्वनुद्विग्नमनाः" इत्यादिलक्षणं संपादयितुमाह—विगतेति ।

अत्र दृष्टान्तमाह—यथेति । उक्तमर्थं दार्ष्टान्तिके योजयति---तथेति । क्षीणा कर्मकृता अविद्या यस्य, क्षीणे वा कर्माविद्ये यस्येति विग्रहः । तत्संस्कारादिति तच्छब्देन कर्म परामृश्यते; द्वितीयेऽपि विग्रहे कर्माविद्ये; तदा चाविद्यासंस्कारोऽपि सूचित इति मन्तव्यम् । छायामात्रेणेत्यभिनिवेशवैकल्यं दर्शयति । विदुषः शरीरादिष्विदमभिनिवेशवैकल्यं श्रुत्या द्रढयति---तथा चेति । अहिनिर्ल्वयनी अहेस्त्वक्, सा यथा प्रत्यस्ता

प्रतिक्षिप्ता त्यक्ता सती अहंमानशून्यतया सा विकला शेत इव, तथा विदुषः संस्कारमात्रानुवर्ति शरीरमित्यर्थः । किमिति पुनः कर्मैव शरीरे संस्कारवर्तिन्यप्यास्था न स्यादित्याशङ्क्याह—यत इति । अतुल्यत्वं च P. 132-3.
दर्शितं भयसंस्कारे । इदानीं संस्काराचेद्धोक्त्रादिविभागदर्शनमनुवर्तते, देहपातादुत्तरकालेऽप्यनुवर्तेतेति यदुक्तं तत्परिहरति—कम्पादीति । अत्र हेतुमाह—अल्पेति । ननु संस्कारश्चेदनुवर्तते तन्निवृत्तये हेत्वन्तरमुपास्यम्, न च विदुषस्तदस्तीत्याशङ्क्याह—तद्वदेवेति । "तत्र तस्येव" इति सप्तमीसमर्थाद्वतिः । तत्र कम्पादौ यथा संस्कारनिवृत्तये न हेत्वन्तरमपेक्ष्यते, तथात्रापीत्यर्थः ।

इदानीमनेनैव प्रसङ्गेन जीवन्मुक्तिमपि दर्शयति—सा चेति । संस्कारक्षयः कथमवगम्यत इति चेत् अत आह—प्रारब्धेति । ननु क्वचिद्भुज्यमानविपाकसंस्कार इत्युच्यते, क्वचित्कर्मसंस्कार इति; किमिदं विप्लुताभिधानम्? न विप्लुतम्, पक्षद्वयस्यापि विकल्पेनेष्टत्वात्; तथा च वक्ष्यति—लब्धवृत्तिकारणसंस्काराद्वा कार्यशेषः, कार्यसंस्कारादेव वेति । यद्वा तत्रापि भुज्यमानो विपाको यस्य सः, तथा प्रारब्धो विपाको यस्येति च बहुव्रीहिणा प्रारब्धकार्यं कर्मैवोच्यत इत्यविरोधः । कथमित्याह—तदिति । तदेव देहपाते प्रारब्धकार्यकर्मसंस्कारस्य क्षीणत्वात् तन्निमित्तस्य कर्मफलस्य विपाकाभासमात्रेणापि देहपातोत्तरकाले दर्शनं न शक्यत इत्याह—इतीति । इतिशब्दो हेत्वर्थः काकाक्षिवदुभयत्र संबध्यते । प्रारब्धकार्यकर्मसंस्कारक्षयं लिङ्गमुक्तम् । उपपत्तिरुच्यते—येन हीति । येन कर्मणा यच्छरीरमारब्धम्, तत्रैव तत्फलं ददाति, नान्यत्र ! यत्र च तत्फलं ददाति, तत्रैव संस्कारादपि तत्फलशेषाभासता युक्तेत्यर्थः । ननु यथा निवृत्तेऽप्यारब्धफले कर्मणि तत्संस्कारोऽनुवर्तते, तथा अनारब्धफलानामपि कर्मणां संस्कारः कस्मान्नानुवर्तते? तदनुवृत्तौ च दीर्घः संस्कारः स्यात्; अतः स एव देहपातावधिश्रुतिविरोध इत्याशङ्क्याह—अनारब्धेति । अत्र हेतुमाह—लब्धेति; लब्धा कार्याय वृत्तिर्व्यापारो येन तत् तथोक्तम् । एतत् दृष्टान्तेन साधयति—न खल्विति । अलब्धवृत्तौ अत एवानुपजनितकम्पादौ इति हेतुहेतुमद्भावः । न लब्धा वृत्तिर्येन,

अनुपजनितं कम्पादि येनेति विग्रहः; भयमन्यपदार्थः। प्रकृतमुपसंहरति—
P.132-12 तस्मादिति। एतेन 'ननु ब्रह्मविदोऽपि चेत्' इत्यादिना 'नावश्यंभावि कैवल्यं स्यात्' इत्यन्तेन यच्चोदितं तत्परिहृतम्। इदानीं सर्वथाभिमतसिद्धेः संस्कारविशेषावधारणं प्रत्यनादरं दर्शयति—अत्र चेति। कारणं कर्म, कार्यं च तत्फलम्; तेन लब्धवृत्तेः प्रारब्धकार्यस्य कर्मणः संस्कारात् तत्कार्यसंस्काराद्वा विदुषोऽपि कार्यशेषोऽनुवर्तत इत्यर्थः। तथा दृष्टान्तेऽप्येषैव दिगिति दर्शयति—तथेति। तस्मात्संस्कारविशेषो नाद्रियत इत्यपेक्षायामाह—सर्वथेति। कारणमत्र भयम्; कार्यशेषः संस्कारजकम्पादिः। प्रकृतमुपसंहरति—अत इति। तेन न देहपातावधिश्रुतिविरोध इति भावः। 'एतेन क्षणमपि न स्यात्' इति यच्चोदितं तदपि परिहृतम्। इदमेव स्वपक्षं कापिलतन्त्रसिद्धत्वेन द्रढयति—तदुक्तमिति।

प्रवृत्तभोगानां कर्मणां प्रवृत्तवेगस्येवेषोश्चक्रस्येव वान्येन विद्यया प्रतिबन्धोऽशक्यः; अतो भोगेन तेषां क्षयप्रतीक्षेति सूक्तं "भोगेन त्वितरे क्षपयित्वा" इति भगवत्पादीयमतमुपन्यस्यति—ये त्विति। तद्दूषयति—तदिति। प्रवृत्तवेगोऽपीषुः कुड्यादिभिः प्रतिबन्धुं शक्यः; अतो दृष्टान्त एवासिद्धः। तेन तत्र यथा कुड्यादिभिः प्रवृत्तवेगस्यापीषोः प्रतिबन्धः, तथा कर्मणामपि विद्ययेति न भोगेन तत्क्षयप्रतीक्षा युक्तेति भावः। आस्तां तावत्प्रतिबन्धः; नाशोऽपि यावच्छक्यत इति प्रतिबन्धं दण्डापूपन्यायसिद्धं दर्शयितुं 'नाशयितुम्' इत्युक्तम्। दृष्टार्थस्येषोः प्रतिबन्धः शक्यः, न त्वदृष्टफलस्य कर्मण इति चेदत आह—स्वप्नेति। स्वरारोहणादिस्वप्नेन गृध्रपतनाद्यापातेन च सूचितः उपस्थितः प्रत्यासन्नो विपाकः फलं यस्य, तच्च वर्तमानदेहभोग्यं च तत् कर्म चेति समासः। स्वपक्षमुपसंहरति—तस्मादिति। संस्कारादेवेति प्रारब्धकार्यस्य कर्मणः क्षयप्रतीक्षां निवर्तयति।

नन्वेवं सति 'सर्वाविद्याप्रविलये न च्छेद्यमवशिष्यते' इति यदुक्तं तद्विघटितम्; तन्न, यतः संस्कारकार्यशेषाभासौ स्वयमेव प्रविलीयेते इति न प्रविलाप्ये इत्यभिप्रायेण तावत् 'न च्छेद्यमवशिष्यते' इत्युक्तम्।

तयोश्चाविद्यात्मनोरप्यकिंचित्करत्वात्, अपुत्रन्यायेनासत्त्वमध्यारोप्य छेद्याभिप्रायेण 'सर्वोविद्याप्रविलये' इत्युक्तमित्युभयत्र परिहाराभिप्रायः। विलीनतुल्यत्वदर्शनार्थं हेतुमाह—अकिंचिदिति। यद्धि लीनं तदकिंचित्करम्, अबन्धः, स्वनिवृत्तये हेत्वन्तरानपेक्षं च। संस्कारकार्यशेषावपि तथा। अतस्तावपि विलीनकल्पावित्यर्थः। तत्र स्वनिवृत्तये हेत्वन्तरानपेक्षत्वं तत एव क्रमेण निवर्तते, स्वयमेव वा इत्यत्रोक्तमित्युपेक्ष्य अकिंचित्करत्वाबन्धत्वयोरुपपत्त्यभिधानपुरःसरं कार्यशेषाभासस्य प्रविलीनप्रायत्वमाह—विशुद्धमिति। प्रारब्धकार्यस्य कर्मणः कार्यशेषाभासो विपाकाभासः; स विशुद्धं प्रपञ्चकालुष्येणासंस्पृष्टमात्मानं पश्यन्तं न स्पृशति। न च तमसंस्पृशन् तस्य किंचित्करोति, बध्नाति च तम्। अतश्छिन्नाभ्रमिव प्रलीनप्राय एव स इत्यर्थः। यद्यपि पूर्वं संस्कारस्याप्यकिंचित्करत्वं प्रतिज्ञातम्; तथापि कार्यशेषाभासावेशमुखेन तस्याकिंचित्करता; अतस्तस्मिन्नकिंचित्करे तस्याप्यकिंचित्करता अर्थादुक्तेति पृथगिहोक्ता। अत्र दृष्टान्तमाह—यथेति। स्रचाद्याभास इत्यत्र प्रविलीन एवेत्यनुवर्तते; प्रविलीनप्राय एवेत्यर्थः। रागादीनामिति अकिंचित्करत्वमुक्तम्। दृष्टान्तान्तरमाह—तथेति। आत्मानमिति, आत्मशब्देन लौकिकः शरीरात्मोच्यते। अवदातं गौरम्। विपरीतम् अनवदातम्। तत्रावदातस्य मुखस्य खड्गादौ श्यामाभासोऽनवदातस्य च सुवर्णादौ अवदातावभास उत्पन्नोऽपि मुखस्य रूपतत्त्वज्ञानादात्मसंस्पर्शं प्रत्यवकाशमलभमानः प्रविलीनप्राय एवेत्यर्थः। प्रविलीनप्रायत्वमेव द्रढयति—तथा चेति। एतेन कर्मसंस्कारनिमित्तयोः शरीरस्थित्योर्महान्विशेषः, विदुषो यथोक्तकर्मफलनिवृत्त्या कर्मक्षयो गम्यते; ततश्च कर्मणः क्षीणत्वान्न भोगेन क्षयप्रतीक्षेत्युक्तं भवति। विदुषो विपाकाभासस्यानभिनन्द्यमानाद्धिप्यमाणत्वे गीतया द्रढयति—तथा चेति। विद्वानाभासमात्मसंस्पर्शिनं न मन्यत इति यदुक्तं तदपि गीतयैव द्रढयति—तथा चेति।

अत्र वाक्यार्थज्ञानादेव मुक्तिरिति मन्वानश्चोदयति—नन्विति। तस्येति; तत्त्वज्ञानस्येत्यर्थः। परिहरति—उच्यत इति। समानजातीयं हि विरोधि भवति, न विजातीयम्; प्रत्यक्षस्य च प्रपञ्चाभासस्य परोक्षं शाब्दं

तत्त्वज्ञानं विजातीयम्; तेन तयोरविरोधात् परोक्षेण तत्त्वज्ञानेनापरोक्षस्य प्रपञ्चाभासस्यात्मासंस्पर्शित्वमकिंचित्करत्वमसंबन्धत्वं वापादयितुं न शक्यत
P.134.4. इत्यर्थः । अत्र दृष्टान्तमाह—यथेति । यथा खण्डो मधुरः खण्डत्वात्, प्रागनुभूतखण्डवत् इत्यनुमानादाप्तवचनाद्वा प्रमाणान्तरावगतमाधुर्येऽपि खण्डद्रव्ये प्रत्यक्षसरूप इन्द्रियजस्तिक्तावभासः स खण्डद्रव्यासंस्पर्शी नाभासमात्रतया अनभिनन्द्यमानोऽद्विष्यमाणश्चात्मासंस्पर्शितयावतिष्ठते, अपितु द्विष्यत इत्यर्थः ।

एतदेव द्रढयति—तथा चेति । दुःखाय भवतीति द्विष्यमाणत्वमुक्तम् । तथा च थूत्कृत्य त्यागादित्युक्तम् । उपासनायां तु सत्यां तया साक्षात्कृतात्मतत्त्वस्य विदुषोऽपरोक्षेणात्मतत्त्वज्ञानेनापरोक्षस्य प्रपञ्चाभासस्य समानजातीयत्वेन विरोधः; ततश्च सन्नपि प्रपञ्चाभासस्तेनासत्समीकृतो नात्मसंस्पर्शी न सुखाय वा भवति । तेनास्त्युपासनोपयोग इति भावः । अत्र दृष्टान्तमाह—देवदत्तेति ।

इतश्चात्मतत्त्वापरोक्षायोपासनापेक्षितव्येत्याह—नित्यश्चेति । आत्मतत्त्वप्रकाशः आत्मनः "सत्यं ज्ञानमनन्तम्" इति ज्ञानात्मकस्य प्रकाशः "अविनाशी वारेऽयमात्मा" इति नित्यः । अतस्तस्मिन्नाविर्भूते न पुनः प्रपञ्चभ्रान्त्यवभासो भवति । तेनात्यन्तिकसंसारनिवृत्तिरुपपद्यते । शाब्दं तु ज्ञानं क्षणिकम् । अतस्तस्मिन्नष्टे प्रमाणाननुसंधाने पुनरपि प्रपञ्चभ्रान्तिरवकाशं लभते । तस्य पुनरावृत्तिः स्यात् । ततो नित्यात्मप्रकाशाविर्भावायोपासना युक्तेत्यर्थः । दृष्टं चैतत्—प्रमाणाननुसंधाने भ्रान्तिर्भवति, सा च दुःखहेतुरित्याह—दृष्टमिति । ननु प्रमाणाननुसंधाने चेत्पुनर्भ्रान्तिर्भवति, ततोऽत्रापि शाब्दमेवात्मज्ञानं संततमनुसंधीयताम्; तत एव पुनर्भ्रान्तिर्न भविष्यति; किमुपासनयेत्याशङ्कयति—अथेति । तद्दूषयति—किमिति । संततानुसंधानमेवोपासना, नापरा । अतस्तच्चेदाश्रीयते, कथमुपासना नेष्टेत्यर्थः ।

एवं देहपातावधिश्रुतिविरोधं परिहृत्य वाक्यार्थज्ञानातिरिक्तोपासनोपायं चोक्त्वा 'न च्छेद्यमवशिष्यते' इति यदुक्तं तदुपसंहरति—तस्मादिति ।

एवमविद्यानिवृत्तिमुखेन दृष्टेनैव विद्या प्रारब्धानारब्धकार्यपूर्वकर्मक्षयहेतुरिति प्रसाध्य उत्पन्नात्मतत्त्वबोधस्योत्तरकालीनेन प्रमादजेन पापेनालेपमदृष्टशक्त्या विद्या करोतीति ये मन्यन्ते, तान्निराकर्तुं तत्रापि दृष्टेनैव विद्या हेतुरित्यतिदिशति—एवमिति । तत्रोत्तराघाश्लेषश्रुतिं तावत्पठति—यथेति । P.134-14
यथा च तत्र दृष्टेनैव विद्या हेतुस्तथा दर्शयति—कर्त्रिति । कर्तुर्हि कर्तव्येन कर्मणा संबन्धः; अतो यावदेवात्मानं कर्तारं कर्तव्यं च पापकर्माविद्यया मन्यते, तावदेव तल्लेपः । विद्यायां तूदितायामविद्याविलयात् कर्तृकर्तव्यविभाग एव नास्ति; कस्य केन श्लेषः? एवं दृष्टेनैवोत्तराघाश्लेषेऽपि विद्या हेतुरित्यर्थः । इदानीं दृष्टेनैव विद्या पूर्वोत्तरकर्मणोः क्षयाश्लेषयोर्हेतुरित्यस्य स्वपक्षस्य साधुत्वं दर्शयन् अदृष्टशक्त्या विद्या तयोर्हेतुरित्यस्य पक्षस्यासत्तां सूचयति—एवमिति । अदृष्टशक्तिवादिनामदृष्टा शक्तिस्तावत् कल्प्या; सा च पूर्वोत्तरकर्मक्षयाश्लेषयोर्भेदादनेकेति कल्पनागौरवम्; "न च पुनरावर्तते" इत्यादिवर्तमानापदेशानां च विपरिणामेन फलविधित्वकल्पनेति दोषः; न त्वस्माकमित्यर्थः । नन्वविद्यात्वादितराविद्यावत् संस्कारकार्यशेषाविद्यया विनिवर्तितव्यम्; अतः कथं प्रविलीनप्राययोरपि तयोरनुवृत्तिरुच्यते; अनुमानमिदम्; तच्चाभासानुवृत्त्यर्थापत्तिदेहपातावधिश्रुतिभ्यां विरुद्धत्वादप्रमाणम् । संस्कारश्च स्वहेतुनिवृत्तावप्यनुवर्तते, भयादिसंस्कारवत् ।

इदानीं तृतीयाप्रतिपत्तिविधिवादिना यदुक्तं नानापदार्थसंसर्गात्मिकायाः शाब्दप्रतिपत्तेरप्रपञ्चं ब्रह्म न विषय इति, तदुपन्यस्य दूषयति—यदिति । यदि वेदान्तशब्दजनितधीगम्यं ब्रह्म न भवति, ततः 'आत्मा ज्ञातव्यः' इति ब्रह्मधियो विधिरशक्यः; यतो नानिरूपितपदोऽनवगतविषयो विधिर्भवति, न तत्त्वमात्रमविशिष्टं विधेर्विषयः, किंतु धीविशेषः । विशेषश्च स्वयमनाकाराया धियोऽर्थनिबन्धनः । अर्थश्चासिद्धोऽनवगतो धीविशेषस्य प्ररूपाय निरूपणाय न क्षमः । अतोऽर्थे प्रमाण्यवगते ब्रह्मज्ञानं विधातुं शक्यम् । न च तस्य शब्दादन्यतोऽवगतिरस्ति । तस्माच्छब्दगम्यं ब्रह्मेष्टव्यमित्यर्थः ।

किंच यस्य प्रतिपत्तिविशेषविधिपरा वेदान्ताः तस्यात्मतत्त्वमप्रमाणकमेव स्यादित्याह—अपि चेति । विधिः नियोगः स्वसिद्धिनिष्ठः स्वकार्य-

P. 135-9. तायां पर्यवसितः; अथवा क्रियासिद्धिपरः, क्रियात्मनो विषयस्य ततः कार्यता गम्यते; तत्राद्ये पक्षे विधिः स्वात्मनि पर्यवसितः, शब्दोऽप्यद्वयात्मप्रतिपत्तिविषयो नियोगः कार्यं इत्यत्रैव पर्यवसितः। द्वितीये विषयसिद्धौ विधिः पर्यवसितः, शब्दोऽपि तथेति अद्वयात्मप्रतिपत्तिरहेतुका अप्रमाणिका स्यात्। अथ नियोगात् "विजरो विमृत्युर्विशोकः" इत्यादिपदानां सामानाधिकरण्यात् क्वचित्, अन्यत्रान्यथा वा वैयधिकरण्येन वा संबन्धात् आत्मस्वरूपाधिगतिर्भविष्यतीति चेदत आह—विनियोगादिति। विनियोगादात्मस्वरूपाधिगतिर्या, अस्या आत्मस्वरूपाधिगतेः 'आत्मा ज्ञातव्यः' इति या ज्ञानक्रिया विहिता तदर्थता तत्परता, नात्मस्वरूपपरता। 'विरजादिस्वरूप आत्मा ज्ञातव्यः' इत्येवंपरा, न पुनः 'विरजादिरूप आत्मा' इत्येवंपरेत्युक्तं भवति। अतश्च ज्ञानक्रियापर्यवसितात्माधिगतिरतत्परा आत्मस्वरूपपरा न भवन्ती नात्मस्वरूपे प्रमाणम्। यथा विधिस्तुतिपरा अर्थवादोत्था बुद्धिः 'पूजा कार्या' इत्यत्रैव पर्यवसिता, न पुनः 'अद्वय आत्मा' इत्यात्मस्वरूपे। तत्रोभयथा अद्वयात्मरूपपरत्वाभावः। यत्परश्च शब्दः स शब्दार्थो लोके। अतोऽद्वयात्मप्रतिपत्तिरप्रमाणिका; यथा "प्रजापतिर्वपामुदक्खिदत्" इत्यादिवृत्तान्तेषु। वृत्तावन्यथा वेत्यस्य वैयधिकरण्येन वेत्यर्थः।

तत्र च "यतो वा इमानि भूतानि जायन्ते" इत्याद्युदाहरणविधिर्न स्वनिष्ठो नापि क्रियासिद्धिनिष्ठः; किंतु आत्मस्वरूपमेव विधीयते। अतः शब्दस्य तत्परत्वात् स एव तत्र प्रमाणमिति नाद्वैतात्मप्रतिपत्तिरप्रमाणिकेति चेदत आह—विधिरिति।

अनुष्ठेये हि विषये विधिः पुंसां प्रवर्तकः; अनुष्ठेया च क्रिया; अतः क्रियागोचरत्वात् सिद्धरूपतया स्वशब्देनोपात्तेऽनुष्ठेये आत्मद्रव्ये विधिर्न व्यापाराय क्षमः। वृत्तौ सिद्धवदिति स्वार्थे वतिः। यथा चान्यत् घटादि सिद्धं स्वशब्देनोपादीयते तथा आत्मापीत्यर्थः। ननु द्रव्यं चेन्न विधीयते, कथं तर्हि "दध्ना जुहोति" इत्यादौ गुणविधिः? उच्यते—तत्रापि क्रियैव विधीयते; ननु सा "अग्निहोत्रं जुहोति" इत्यतः प्राप्तैव। बाढम्; गुणविशिष्टा तु न प्राप्ता। कथं तर्हि स गुणविधिरुच्यते? प्राप्ताप्राप्त-

विवेकेन विधिमध्ये गुणमात्रफलत्वादित्यदोषः । किंच ईदृशं वस्तु अभूत् अस्ति भविष्यति वा इति कालत्रयस्यान्यतरेण संसृष्टया सत्तयान्वितस्य द्रव्यस्य प्रतीतिरिति हेतोर्न केवलं विधिर्द्रव्यं विधातुं क्षमः; प्रत्युत दुष्यति यावत्, स्वरूपहानात् । कालकर्त्रनवाच्छिन्नभावार्थविषयतास्वरूपो हि सः । न हि 'यजेत्' इत्यादौ कालत्रयस्य मध्येऽन्यतरेण विशिष्टा सत्ता प्रतीयते । ननु विहितमनुष्ठास्यते, अनुष्ठेयं च भविष्यति; अतश्च भविष्यत्काला तस्य सत्ता प्रतीयते । नैतत् । न विहितमवश्यमनुष्ठीयते; अन्यथा हि तस्याकरणं न स्यात्; अतश्च "अकुर्वन्विहितं कर्म" इति दोषश्रुतिरनर्थिका स्यात् । तस्मात्सूक्तम्-- कालत्रयान्यतरसंस्पर्शे स दुष्यतीति । ननु यथा "सोमेन यजेत" इति सोमविशिष्टहोमक्रियाविधिवाक्यमेव तद्विशेषणे सोमे प्रमाणं न पृथक्, तथा 'एवंभूत आत्मा प्रतिपत्तव्यः' इति प्रतिपत्तिकर्तव्यताप्रमाणमेवात्मस्वरूपे प्रमाणम्; अतः कथमप्रमाणिकात्मतत्त्वप्रतीतिरित्याशङ्क्योच्यते—विशिष्टेति । अन्यस्यां याग- P.185-15
क्रियायां सोमविशिष्टायां यो विधिः स एव विशेषणे सोमे प्रमाणं भवति । 'एवंभूत आत्मा प्रतिपत्तव्यः' इति विहिता प्रतिपत्तिस्तु आत्मस्वरूपविशिष्टा प्रतिपत्तिविषयस्यात्मनो विजरादिरूपस्य सत्तां नियोगतो नियमेन न साधयति । कुतः? समारोपेणातद्रूपे तद्रूपाध्यारोपेणापि "असौ वाव लोको गौतमाग्निः" इतिवत् संभवादित्यर्थः । श्रुतौ लोकशब्देन द्युलोकादिरुच्यते । वैदिकलौकिकभेदेन विधायकवर्तमानापदेशभेदेन वा विशेषणैकत्वानेकत्वभेदेन वा वृत्तौ दृष्टान्तद्वयमुक्तम् ।

समारोपेण बुद्धेः संभवादित्युक्तमसहमानश्चोदयति—नन्विति । नो शब्दो निषेधार्थः । विपरीतोऽर्थो विषयो यस्याः सा, तादृशी अन्यदन्यथा गृह्णती धीर्न भवति । कुतः? य एवार्थो यस्यां संविदि भाति स तस्य विषयो नान्यत् । तत्र रजतं भाति शुक्तिर्विषय इति प्रतीतिविरुद्धम् । यदि च ज्ञानमन्यदन्यथा गृह्णीयात् ततो व्यभिचारशङ्कया सर्वत्रानाश्वासः 'तथैव' इति निश्चयो न स्यात् । यदि शुक्तिः रजततया न भाति, किं नामायं शुक्तौ रजतप्रत्यय इत्यपेक्षायामाह—रजतेति । न तावदिदं रजतज्ञानमिन्द्रियसंप्रयोगजम्, असंनिहितेन रजतेनेन्द्रियसंयोगाभावात् ।

नापि लिङ्गादिजम्, लिङ्गादेरभावात् । अस्ति तु पूर्वानुभवजः स्मृतिहेतुः संस्कारः । तस्मात् स्मृतेः कारणसद्भावात् स्मृतिरेवायं रजतप्रत्यय इत्यर्थः । किंच विषयस्य शुक्तेः रूपं चेन्नानुकरोति ज्ञानम्, शुक्त्याकारं न भवति अपितु रजताकारं भवति, तदा तज्ज्ञानं निरालम्बनं स्यात् । न चैतदुचितम् । न विद्यते आलम्बनं विषयो यस्येति विग्रहः । शुक्त्याख्यविषयाननुकारादविषयत्वमुक्तम् । अनालम्बनमिति च दृष्टान्तलाभेन बौद्धानां निरालम्बनानुमानस्यावकाशः स्यादिति वचनार्थमुक्तम् । अग्राह्यमिति च कर्मविज्ञानक्रियानुपपत्तिसूचनार्थमिति विवेकः । ननु यदि नाम शुक्तिर्वेद्यतया नालम्बनं, तथापि हेतुतया भविष्यति; अस्ति च निरधिष्ठानभ्रमासंभवात् तस्या हेतुत्वमित्याशङ्क्याह—हेत्विति । हेतुमात्रस्यालम्बनत्वे चक्षुरादेरपि ज्ञानालम्बनता स्यात् । न च तद्दृष्टम् । तस्माद्वेद्यमेवालम्बनम्, न च शुक्तिस्तथेति नालम्बनमित्यर्थः । यदि च हेतुमात्रतयालम्बनमर्थो न वेद्यतया तथा सति ज्ञानस्यावेदकत्वात् प्रमाणान्तरापेक्षादपि ततो ज्ञानादर्थसिद्धिर्न स्यात्, किमुत निरपेक्षात् । अतश्चानपेक्षं ज्ञानप्रामाण्यं न स्यादित्यभिप्रायेणाह—तथा चेति । यदि विपरीतार्थं रजतज्ञानमिदं न भवति, किं तर्हीदं रजतज्ञानमिति सिद्धान्ती पृच्छति—कथमिति । अपर आह—शुक्तीति । स्मृतेरुत्पत्तिहेतुमाह—सामान्येति । शुक्लभास्वरत्वादिरूपस्य शुक्तिरजतयोः सामान्यस्य दर्शनात् सदृशीं शुक्तिं दृष्टवतः संस्कारोद्बोधात् रजते स्मृतिर्जायत इत्यर्थः । तदुक्तम्—"सदृशादृष्टचिन्ताभ्यां स्मृतिबीजस्य बोधकः" इति । यदि शुक्तेः 'इदम्' इति ग्रहणं रजतस्य च स्मृतिः, ततस्तयोर्यथार्थतयैव कथं भ्रान्तित्वमिति सिद्धान्ती पुनः पृच्छति—भ्रान्तिः कथमिति । पर आह—प्रत्यक्षेति । 'इदम्' इति प्रत्यक्षस्य शुक्तिशकलस्य ये विशेषा रजतादिविवेकहेतवः तेऽभिभवान्न ज्ञाताः । शुक्लभास्वरत्वादिसामान्यमात्रं ज्ञातम् । स्मृत्यापि मनोदोषात् 'तत्' इत्युल्लेखरहिततया रजतं गृह्यमाणात् शुक्तिशकलात् पूर्वदेशकालगतत्वेनाविविचनम् । तदेवं प्रत्यक्षस्मर्यमाणयोरविवेकात् रजतबुद्ध्या शुक्तौ प्रवृत्तस्य व्यवहारे विसंवादाद्यथार्थयोरपि स्मरणग्रहणयोर्भ्रान्तित्वमित्यर्थः । ननु 'इदं रजतम्' इति सामानाधिकरण्येन प्रतीतेरभेदग्रहण-

मिति कथमुच्यते, विवेकाग्रहणादित्याशङ्क्याह—सोऽयमिति । अत्र P. 137-3.
दृष्टान्तमाह—यथेति । तथा आलोकाग्रहणे कृष्णतमोरूपज्ञानाभिमानोऽन्धानामुदाहार्यम् । स्वपक्षमुपसंहरति—तस्मादिति ।

तदेतत्सिद्धान्ती दूषयति—अत्रेति । यदुक्तं नान्यस्यान्यथा भानमिति; यदि चक्षुःसंयुक्तं शुक्तिशकलं रजतमिति न प्रतीयात्, रजतं वा देशान्तरगतं तथा पुरोवर्तितया न प्रतीयात्, तदा रजतार्थी रजतमादातुकामः शुक्तिशकले न प्रवर्तेत; शुक्तिशकलस्य रजतत्वेनानवगमात् । यद्धि रजतत्वेनानवगतं न तत्र रजतार्थी प्रवर्तते, यथा लोष्टादिषु । अथ रजत एव स्मर्यमाणे सा प्रवृत्तिरित्युच्यते, तन्न; स्मर्यमाणस्य पुरोवर्तिनि देशे संनिधानाभावात् पुरोवर्तिनि देशे प्रवृत्तिर्न स्यात्, अपितु पूर्वदृष्ट एव रजते प्रवर्तेत । अथ 'तत्' इत्युल्लेखरहितया स्मृत्या रजतमात्रमुपस्थापितम्, न पूर्वदेशसंबन्धः; तेन रजतमात्रप्रतीतेरसंनिधेश्चाप्रतीतेः शुक्तौ प्रवृत्तिरुच्यते, तन्न; एवं हि सर्वमिदमन्यत्राप्यविशिष्टमिति तत्रापि प्रवर्तेत, न शुक्तावेव । शुक्तौ तु यन्नियमेन प्रवर्तते, तत्तत्र रजतसंनिधिकारितम् । तत्संनिधिश्च भवति यदि शुक्ती रजततया गृहीता स्यात्, नान्यथा । न हि तस्य वस्तुनः संनिधिरस्ति । तस्माच्छुक्ती रजततया गृह्यत इति भावः ।

अथ अन्यदेशेषु वस्तुषु सविशेषेषु प्रत्यक्षेण गृहीतेषु रजताद्विवेकस्य भेदस्य ग्रहणादप्रवृत्तिः, शुक्तौ विवेकाग्रहणात् प्रवृत्तिः; विवेकाग्रहणं च शुक्तेर्भास्वररूपसामान्यनिबन्धनात् सादृश्यात् विवेचकानां च शुक्तेर्विशेषणानामप्रतीतेरित्युच्यते; एवमप्यदृष्टेष्वपि लोष्टादिष्वदृष्टत्वादेव विस्मृतेश्चाविवेकत्वाद्रजताद्विवेको न गृहीत इति तेष्वपि प्रवर्तेत । अथ तेषु रजतबुद्धिर्नास्ति, तेन तेषु न प्रवर्तते; तर्हि शुक्तावपि रजतबुद्धिर्नास्ति, तत्रापि न प्रवर्तेत । अथास्ति शुक्तौ रजतबुद्धिरित्युच्यते, ततो विपरीतार्थख्यातिरापन्ना; कथं सापह्नूयेत? विपरीतोऽर्थो यस्या इति विग्रहः । अथ लोष्टादिष्वदृष्टत्वादप्रवृत्तिः, तर्हि शुक्तिरपि रजततया न दृष्टेति तत्रापि रजतार्थिनः प्रवृत्तिर्न स्यात्, शुक्तिः शुक्लभास्वरादिसामान्यस्वरूपेण दृष्टेति चेत्, तन्न; न हि सामान्यरूपेण रजतार्थिनः प्रवृत्तिकारणम्;

अपितु रजतरूपेण । तेन तद्रूपेणादृष्टलोष्टादिवत् शुक्तिशकलमपि न
P.187-17 दृष्टम्, ततस्तत्रापि प्रवृत्तिर्न स्यादिति भावः । दृष्टस्मृतयोः शुक्तिरजतयो-रविवेकात् प्रवृत्तिः, तत्रादृष्टेषु लोष्टादिषु कुतः प्रसङ्ग इति चेत्; तत्रापीदं विचार्यम्—किं शुक्तिरजतयोर्विवेकग्रहणस्य विवेककारिणोऽभावात् रजतस्य संनिधौ पुरोवर्तित्वेन प्रतीतेः शुक्तिरजतयोस्तत्त्वस्याभेदस्य बोधः; ततः शुक्तौ रजतवेदनात् प्रवृत्तिः, उतातत्त्वस्य भेदस्याबोधादिति । तत्र तत्त्वबोधात् प्रवृत्तिरित्यस्मिन्नाद्ये पक्षे शुक्तिशकलं रजततया गृह्णाति । अतः रजतमतेर्विपरीतार्थता स्यात् । परस्मिंस्तु पक्षे यथा दृष्टात् शुक्तिशकलात् विवेको रजतस्य न गृह्यते, तथा लोष्टादेरदृष्टादपि । अतो दृष्टादृष्टयोर्भेदो न स्यात्; दृष्टवददृष्टेऽपि प्रवृत्तिः स्यादित्यर्थः । ननु विषये क्वापि प्रवृत्तिः; नाविषये । न चादृष्टं लोष्टादि विषयः । अतः कथं तत्र प्रवृत्तिः? बाढम्; रजतमपि पुरोवर्ति न दृष्टम्, तव तत्रापि प्रवृत्तिर्न स्यात् । या तु दृष्टा शुक्तिः, सा रजतार्थिनो न प्रवृत्तेर्विषय इति परस्याप्यविषयैव प्रवृत्तिः । एवं चेददृष्टेऽपि किं न स्यादिति भावः । ननु दृश्यमानाविवेको भ्रमः; तत् कथमदृष्टेषु तत्प्रसङ्गः? स्यादेवं यदि दृष्टादृष्टयोर्विवेकाग्रहणस्य स्वरूपभेदः स्यात्; स तु तस्य प्रागभावत्वान्नास्तीति मन्यते । यदप्युच्यते—भ्रमसम्यग्रजतज्ञानयोर्विवेकाग्रहणं नाम साधारणं रूपमस्ति, अतस्तेन रूपेण तुल्यत्वात्सम्यग्रजतज्ञानतुल्यभ्रमेऽपि व्यवहारप्रवृत्तिरिति; तदप्ययुक्तम्; न हि यत्किंचित्साम्येन व्यवहारसाम्यम्, सुखदुःखहेतुज्ञानयोरपि ज्ञानत्वसाम्यात् तत्प्रसङ्गात् । तस्मात्सम्यग्रजतज्ञाने यत्प्रवृत्तिनिमित्तं तत्साम्ये तत्तुल्या प्रवृत्तिरिति युज्यते । सम्यग्रजतज्ञाने विवेकाग्रहो न प्रवृत्तिनिमित्तम्, अपितु विवेकग्रहः; स च भ्रमे तव नास्तीति कथं तुल्या प्रवृत्तिरिति । ननु दृष्टे दर्शनमिन्द्रिययोगश्चास्ति, नादृष्ट इत्यस्ति तयोर्भेदः; कथमभेद इत्याशङ्क्याह—नेति । तथाहि दृष्टादृष्टाभ्यां विवेकाग्रहस्य तुल्यत्वादिन्द्रिययोगदर्शने नोपयोगिनी । न ह्यग्रहणे तयोः कश्चिदुपयोगः, तस्य प्रागभावरूपत्वादिति भावः । क्व नाम ते उपयोगिनी इत्यपेक्षायां स्वपक्षे तयोरुपयोगमाह—ते हीति । रजतस्य शुक्तौ समारोपे उपयोगिनी इत्यर्थः । अत्र

हेतुमाह—नेति । चाक्षुषोऽयं रजतभ्रमः । स च चक्षुःसंयुक्ते सामान्येन P.137-22
'इदम्' इति दृष्टे च वस्तुनि युज्यते, नान्यत्र । अतस्तत्र स्वयोगदर्शने उपयोगिनी इत्यर्थः ।

दूषणान्तरमाह—स्मृतमिति । स्मृतं रजतं प्रत्यक्षतः शुक्तिशकलाद्यदि स्वज्ञानात् रजतस्मृतिरूपात्तस्य विवेचनसामर्थ्यमहिम्नैव भिन्नं विविक्तं भाति; तदा स्मृतप्रत्यक्षयोरविवेकः कुतः? अपितु विवेक एव। तत्र कुतो रजतार्थिनः शुक्तावविवेकात्प्रवृत्तिः । स्मृतिज्ञानस्येत्यादि पूर्वोक्तविकल्पविवरणमात्रम् । अथ तु स्मृतिः स्वमहिम्नैव स्वविषयं न विविनक्ति, तत उर्ध्वत्वादिसामान्यदर्शने अन्यत् स्थाणुपुरुषादिकं स्मरतः सदा विपर्ययः स्यात्; न चैतत्, 'स्थाणुर्वा पुरुषो वा' इति संशयस्यापि दर्शनात् । तत्र च विपर्ययशब्दो विवेकाग्रहणलक्षणं भ्रमं विवेकाग्रहणसाम्येनोपचारादाह । न तु परस्य विपर्ययोऽभिमतः, येनासौ संप्रसज्यते । एकस्मृतौ पुरोवर्तिनस्तदविवेकाद्भ्रमः, अनेकस्मृतौ तु स्मृतद्वयाविवेकात् संशय इति यदि मन्यते, तन्न; यतः स्थाणुपुरुषयोरपि स्मृतौ कदाचिदन्यतरभ्रमो दृष्टः । स त्वत्पक्षे न स्यात् ।

अथ स्मृतं स्वज्ञानान्न विविच्यते, अपितु पुरोवर्तिनि शुक्त्यादौ 'इदम्' इत्यनिर्धारितविशेषे सामान्यरूपेणाध्यक्षे प्रत्यक्षेण दृश्यमाने यद्रजतादिभ्यो विवेकापादकं विशेषज्ञानं भवति तत इत्युच्यते, तन्न; तदापि हि असत्यस्मिन्नध्यक्षगते विशेषज्ञाने द्वयोः स्मृतौ सदा संशयः स्यात्, कथमेकाकारो विपर्ययः? भवति चासावपि कदाचित् । तस्मान्नायमपि पक्षः श्रेयान् ।

यदा तु स्मृतिः स्वार्थविवेचनस्वभावतया स्मर्यमाणं दृश्याद्विविनक्ति, स्मृतेश्च विपर्ययो भिन्नोऽभ्युपगम्यते; तत उभयस्मृतावपि इन्द्रियादिदोषविशेषादविवेकाकारो विपर्ययो युज्यते । तस्मात्स्मृतिः स्वविषयविवेचनस्वभावैव, विपर्ययश्च ततो भिन्न एवेत्ययमेव पक्षः श्रेयान् । इतश्च स्वविज्ञानादेव स्मृतिलक्षणात् स्मृतमपि विविच्यते, न दृश्यमानस्य विशेषज्ञानात्, यतो दर्शितमिदं विभ्रमविवेके—"यदूर्ध्वतादिसामान्यदर्शनेऽपि स्थाणुं पुरुषं वा एकां कोटिं स्मरतः उभयकोटिस्मरणाभावात् न संशयः,

दोषाणामदृष्टत्वाच्च न विपर्ययः" इति। तत्र यदि स्मृतिः स्वविषयं स्वयं न
P.139-23 विविनक्ति, तत एकां कोटिं स्मरतस्तद्विपर्ययः स्यात्; न चैवम् । अतः स्वज्ञानादेव स्मृतं विविच्यते न दृश्यमानस्य विशेषपरिज्ञानात् । सामान्यमात्रदर्शनसमये तस्याभावात् । अतश्च स्मृतेः स्वभावेन स्मृतविवेकत्वात् कुतः स्मर्यमाणगृह्यमाणयोः विवेकाभावः? येन विवेकाख्यातिर्भ्रम उच्यते ।

किंच यदि स्मर्यमाणगृह्यमाणयोरविवेको भ्रमः, तदा शशिनि प्राग्रूढं प्रसिद्धमेकत्वं स्मरतो द्वित्वं चास्मरतः तिमिरादिदोषेण योऽयं द्वित्वभ्रमो दृश्यते स न स्यात्, स्मर्यमाणस्य विवेकाग्रहासंभवात् । तिमिरादिदोषादिन्द्रियवृत्तिर्द्वेधा भिन्नाभिन्ने ज्ञाने जनयति; तेन ज्ञानभेदाविवेकात् इन्द्रियवृत्तिभेदाविवेकाद्वा चन्द्रे भेदभ्रम इति चेत्, तन्न; तत्राविवेकयोर्ज्ञानेन्द्रियवृत्त्योरनुमेयत्वेनाप्रत्यक्षत्वात् । नापि स्मर्यमाणात्, तयोरस्मरणात् । नन्वनुमानेन गृह्यमाणात् ज्ञानात् इन्द्रियवृत्तेर्वा विवेकाग्रहो भविष्यति । नैवम् । उत्पन्ने द्विचन्द्रानुभवे पश्चादनुमानम् । अतो न तेन गृह्यमाणाभ्यामिन्द्रियज्ञानवृत्तिभ्यामविवेकात् द्विचन्द्रभ्रमसंभवः । तच्चानुमानज्ञानाभिप्रायेणोक्तम् । अनुभवस्तु यद्यपि प्रत्यक्षः, तथापि तस्यानाकारस्य स्वयमनवगतभेदस्यार्थभेदादेव भेदावगमान्न तत्रार्थभेदभ्रम इति सूक्तम्—'ते कथं द्विचन्द्रभ्रमः?' इति । किंच यदि कश्चित्सलिलं पातुमिच्छन् तद्भाजने शुक्तावर्पितचेता भवति, तदा रजतस्यास्मरणात् रजतभ्रमो न भवेत्; भवति च सोऽपि कदाचित् । भवन् वा भ्रमः सलिलस्मृतेस्तस्याश्चापि स्वार्थाविवेचकत्वात् सलिल एव भवेदित्यर्थः ।

किंच यदि शुक्तिसादृश्यदर्शनाद्रजते स्मृतिः, सा च विवेकाग्रहाद्भ्रम इत्येवं सादृश्यनिबन्धनभ्रान्तिरिष्यते, ततः श्वेतपीतयोः तिक्तमधुरयोश्च सादृश्याभावात् श्वेतपीतभ्रमो न स्यात्; अस्ति चासौ । तस्मान्न सर्वथा भ्रान्तिर्नियोगेन नियमेन सादृश्यनिबन्धना । अथोच्यते—न सर्वत्रैव स्मृतिप्रामाण्येनास्माकं भ्रमोऽभिमतः, येन सर्वत्र सादृश्यनिबन्धनः स स्यात्; अपितु गृह्यमाणविवेकाग्रहादपि क्वचिद्भवति । तेनान्तरं नेत्रगतं पित्तं पीतं संवेद्यते, रसनागतं च पित्तं तिक्तम्, न तु स्मर्यते; तदविवेकाच्च भ्रम इति । तथाहि—अप्स्ववौष्ण्यं द्रव्यरहितः पीनिमा तैक्त्यं

च गृह्यते, द्रव्यं चेन्द्रियदोषात् स्वगुणरहितं स्फटिकमणिरिव जपोपहितः। तदेवं द्रव्यगुणयोरन्योन्यापेक्षयोरसंबन्धानवबोधात् भ्रमः। इन्द्रियं बहिर्व्यापारयितव्यम्। तत्कथम्? उच्यते—बहिरव्यापारात् नाक्षिगतमक्ष्णा दृश्यते, यथा अञ्जनम्। नन्वञ्जनं नायनतेजोवृत्तिनिरोधकम्; पित्तेन तु काचेनेव (न) तेजोवृत्तिर्निरुध्यते; प्रसरच्च नायनतेजो ग्राहकम्, नाश्रयस्थम्। तदयुक्तम्; इन्द्रियमात्मस्थपीतगुणं चेत् गृह्णाति, ततो बहिरर्थेष्वव्यापृतमपि गृह्णीयात्। ततश्च बहिरिन्द्रियमव्यापारयतोऽपि पुंसः पीतिमादिसंवेदनं स्यात्। न चैवम्। किं नयनेनातो नाव्यापृतेनाञ्जनरुद्धेन च नयनपित्तपीतिमा गृह्यते? नैवम्। एवं हि स्वगतं कृष्णिमानमक्षिगतं च जलं गृह्णीयात्, तयोरपि तेजोवृत्ति(त्त्य)प्रतिरोधकत्वात्। तस्मात्प्रसरदपि नायनं तेजो बहिरेव गृह्णाति, न नेत्रस्थम्। शङ्खखण्डोऽपि केनचिद्रूपेण पीततिक्ताभ्यां किंचित्सादृश्यमस्ति; तेन शङ्खखण्डावुपलभ्य पीततिक्तस्मृतिर्भ्रम इति चेत्, न; एवं हि क्व नाम तथा सादृश्यं नास्तीति शङ्खखण्डे वा न कश्चिद्भ्रमो न स्यात्, अपि तु सर्वप्रकारः स स्यात्। तदेवं परपक्षे दोषमुक्तमुपजीव्य स्वपक्षे साधुत्वमाह—तस्मादिति। कस्यचिदिन्द्रियदोषस्य क्वचिद् भ्रमे सामर्थ्यमिति दृगादीन्द्रियदोषसामर्थ्यस्य विभागात्क्वचित्कस्यचिद्भ्रम इति भ्रमेषु नियमो भवति। यदि दोषादग्रहणमात्रं स्यात् न तु विपर्ययः, तदा कामिलादिदोषभेदात् भ्रमेषु नियमो न स्यात्। न हि स भ्रमनियमः सादृश्यनिमित्तः, असदृशेऽपि पीतशङ्खादौ भ्रमदर्शनादिति भावः। P.140-11

स्वज्ञानादेव स्मृतं विविच्यते, तत्र कुतः स्मर्यमाणगृह्यमाणयोरविवेक इति सिद्धान्तिनोक्ते, सत्यं स्वज्ञानादेव स्मृतं विविच्यते; अयं तु विशेषः—यद्विशेषग्रहिण्यपि प्रत्यक्षे दूरत्वादिदोषादूर्ध्वतादिदर्शने कदाचिद्विशेषाग्रहो यथा, तथा स्मृतावपि मनोदोषादग्रहः कदाचिद्भवति। तदा विवेकाभावो भ्रान्तित्वं च। सति तु मनोदोषाभावाद्विशेषग्रहे पुरोवर्तिनीन्द्रियसंयुक्तेऽपि स्थाणौ पुरुषे चोर्ध्वतासामान्यदर्शनेऽपि विशेषज्ञानेन विवेचितत्वात् तदविवेकाभावः। ततश्चोभयकोटिस्मरणे संशयः। एकस्मृतौ तु न संशयो न विपर्ययः। अतश्च 'अन्यथा तु स्यात् सदा सामान्यदर्शने। विपर्ययोऽन्यं स्मरतः' इत्यादिर्न दोषो भवतीति परमतमाशङ्क्य, एवमपि द्वयो-

र्विविक्तयोः स्मरणे विपर्ययो न स्यात्, भवति चासावपि कदाचिदिति
P.140-16 यद्यपि दोषोऽस्ति; तथापि दूषणान्तरमाह—विशेषेति । न च स्मृतौ विशेषाग्रहोऽपि कदाचिद्भवति; यतो न निर्धारितविशेषं वस्तुमात्रं स्मर्यते, अपितु वस्तुविशेष एव रजतादिः । अथोच्यते—न ब्रूमो वस्तुविशेषो न स्मर्यत इति; किंतु स्मर्यमाणोऽप्यसौ यदा पूर्वाधिगतदेशकालविशेषापन्नः स्मर्यते, तदा गृह्यमाणाद्विविच्यते स्वज्ञानात् । यत्र तु देशकालविशेषाग्रहः, तत्र न विविच्यते । तेन देशकालविशेषात्स्मृतं विविच्यते, तदभावे त्वविवेकाद् भ्रम इति, तत्राह—देशेति । अत्र हेतुमाह—अनेकेति । देशग्रहणमुपलक्षणम्, अनन्तदेशकालाधिगतम् । ततो देशकालविशेषात् स्मर्यमाणं गृह्यमाणं न पुनर्विविक्तं गम्यते; अपितु स्वत एव स्मृतिर्विविनक्ति । अन्यथा हि यद्यपि सकृद्देशकालज्ञातस्य रजतादेर्देशकालस्मृतिसंभवः, तथापि अनन्तदेशकालाधिगतानां रजतादीनामनन्तदेशकालस्मरणासंभवात् यस्य रजतादेर्देशकालविशेषः स्मर्यते, तत एव दृश्यं विविच्येत, नान्यस्मादस्मर्यमाणदेशकालविशेषात् । अतश्च येनानन्तदेशकालस्थं रजताद्यधिगतं तस्य सर्वदेशकालविशेषस्मरणासंभवात् सदा स्मृतेरविवेकत्वाद् भ्रान्तिः स्यादित्यर्थः । यदि च समुचितयोर्देशकालयोर्विवेचकत्वं, तदा तद्देशाधिगते तत्रैव स्मर्यमाणे यद्यपि कालभेदोऽस्ति, तथापि देशभेदाभावान्नित्यमविवेकः, ततश्च सदा भ्रान्तित्वप्रसङ्गः; न चैवम् । तस्मात् देशकालविशेषो न विवेकहेतुः । तेन तयोरग्रहाविवेके भ्रम इत्यपि न युक्तम् ।

अथ 'स्मरामि' इत्युल्लेखेन स्मर्यमाणताज्ञानात् स्मृतस्य विवेकः, तदभावे चाविवेकः; तेन 'स्मरामि' इति ज्ञानशून्यानि रजतादिज्ञानानि भ्रान्तित्वहेतव इत्युच्यते, तत्राह—स्मृतिरिति । रजतस्मृतेरन्यदेव रजते 'स्मृतिरियम्' इति स्मृतित्वग्राहि 'स्मरामि' इति ज्ञानमुदाहृतम् । अतस्तदभावेऽपि रजतस्मृतिः संपूर्णैव; न तया स्वविषयस्य किंचिन्न गृहीतम्, येन तस्याः प्रमोषः स्यात् । एवं च स्वयमेव सा स्वविषयं गृह्यमाणात् विविनक्ति । कुतः स्मर्यमाणगृह्यमाणयोरविवेकः? यतो भ्रान्तिः स्यादित्यर्थः । वृत्तौ विपर्ययशब्दौ भ्रान्तिमात्रपरौ ।

अथोक्तदोषपरिजिहीर्षया स्मृतिः स्वविषयविवेचनस्वभावा न भवतीत्युच्यते, तदान्येषां स्थाणुपुरुषादीनां स्मृतावूर्ध्वतासामान्यदर्शने च स्मृतिदर्शनयोरप्यविवेचकत्वात्सदा भ्रमः स्यात् । न चैतत्, संशयस्यापि दर्शनात् । एतच्च 'अन्यथा तु स्यात्' इत्यत्रोक्तम् । किंच 'स्मरामि' इत्यपि स्मृतिज्ञानं प्रमाणफलादनुभवात् स्मृतं फलं भिन्नं विविक्तं यदि स्यात् ततः सिध्यति, न तु तस्माद्विना । तस्मात् स्मृतिः स्मृतं विविक्तमेवानुभावयतीति कुतो गृह्यमाणादविवेको यतो भ्रमः स्यादिति भावः । वृत्तौ न स्मरामीति; 'नैष दोषः स्मरामीति विवेकाचेत्' इति ग्रन्थ P.141-21
च्छेदः । स एवेति; स एव 'स्मरामि' इति विवेकः स्मृतेः स्वविषयाविवेचकत्वे सति न स्यादित्यर्थः । किंच यदि 'स्मरामि' इति ज्ञानाद्विवेकः, तदभावाच्च स्मृतावविवेकाद्भ्रमः, ततोऽयमनयोरेकः 'स्मरामि' इत्युछिख्यमाने स्मृतिविवेके सति अपरत्र 'स एवायम्' इति यः प्रत्यभिज्ञाभ्रमो दृश्यते स न स्यात् । न चात्रापि 'स्मरामि' इति ज्ञानेन स्मृतं विवेचितमेव । प्रत्यक्षग्राह्यस्य तु पुरोवर्तिनः स्मृताद्विवेकाभावात् भ्रम इति । यतः स्मृतस्य चेत्प्रत्यक्षाद्विवेकः, ततः प्रत्यक्षस्यापि स्मृताद्विवेकः सिद्धः । न ह्यविविक्तात् विवेकज्ञानसंभवः । किंचैवं सति स्मृतादावविवेकात् स्मृतिभ्रमोऽप्ययं स्यात् । प्रत्यक्षभ्रमस्त्वयं प्रसिद्धः । तस्मान्न 'स्मरामि' इत्युल्लेखप्रमोषादविवेकः ।

अथासंनिहितो रजताद्यर्थः संनिधिमत्तया पुरोवर्तित्वेन वेद्यः सन्नविविक्त इत्युच्यते, एवं सत्यसंनिहिततया दर्शयन्त्या विविक्तस्मृतेर्विपरीतार्थता स्यात् । अतश्च विपरीतार्थख्यातिः स्यात्, नाख्यातिः । विपरीतोऽर्थो विषयो यस्या इति विग्रहः । अथ नासंनिहितस्य संनिधिमत्तया प्रतीतिरविवेकः; किंतु असंनिधेरपरिग्रह इत्युच्यते, तन्न; यतोऽसंनिहितश्चेत् सोऽर्थः, कस्मात्तस्यासंनिधिर्न ज्ञातः? मनोदोषादिति चेत्, एवं तर्हि यत्र स्वप्नादिज्ञाने मनसो दोषैरुपघातस्तत्र भवत्वेवम् । यत्पुनः स्वस्थमनस एव तिमिरादिदोषोपघातात् बहिरिन्द्रियजा भ्रान्तिः, तत्र मनसो दोषैरनुपघातान्नासंनिधेरपरिज्ञानम् । यस्मात्कारणात् दोषो ग्रहणाभावे हेतुः, स च मनसस्तत्र नास्ति, तस्मात्तत्रासंनिध्यपरिज्ञानासंभवात् भ्रमो न स्यात्; अस्ति चासौ । किंच अत्र पक्षे शुक्तावेव प्रवृत्तिः, नान्यत्रेत्यपि प्रवृत्ति-

नियमो न स्यादिति 'असंनिधानावोधाच्चेत् प्रवृत्तिनियमः कुतः' इत्यत्रोक्तम्। यदि च स्मृतं सर्वात्मना न स्मृतम्, शुक्तिरपि सर्वात्मना न गृहीतेत्येतावन्मात्रेण मिथ्यात्वं स्यात्, ततः सर्वाण्येव ज्ञानानि मिथ्या स्युः। न हि कश्चिदर्थः केनचित् ज्ञानेन सर्वात्मना गृह्यते। किंच
P.142-5 यदि विवेकाग्रहणमात्रं भ्रमः स्यात्, तदा आप्तवाक्यानुमानादिना प्रमाणान्तरेण च 'एकश्चन्द्रो नानेकः, प्राचीयं दिक् नोदीची' इति ज्ञातविवेकस्य पुंसो द्विचन्द्रदिङ्मोहादिविपर्ययान् अनुवृत्तिमतोऽनुवर्तमानान् पश्यन् स्वस्थात्मा स्वस्थान्तःकरणः कोऽपह्नुते? सत्यपि विवेके द्विचन्द्रादिभ्रमोऽनुवर्तते। तस्मान्न विवेकाग्रहणं भ्रम इत्युक्तं भवति।

इतश्चाख्यातिपक्षो दुर्घट इत्याह—प्रसक्तेति। यदि शुक्तौ 'रजतम्' इति ज्ञानं स्यात्, ततस्तेन रजतस्य प्राप्तौ सत्यां प्रसक्तप्रतिषेधात्मा प्रसक्तप्रतिषेधरूपा 'नेदं रजतम्' इति ख्यातिर्ज्ञानं प्रकल्पते घटते। न स्मृतदृश्ययोर्विवेकाग्रहमात्रे भ्रमः। यतः प्राप्तः प्रतिषिध्यते। न चाविवेकाग्रहः प्रापकः, स हि विवेकग्रहणाभावः; न चाभावः प्रापकः, अभावत्वादेव। किं नाम प्रापकमित्यपेक्षायामाह—प्रापिकेति। शुक्तिं रजततया रजतं वा पुरोवर्तितया या दर्शयति सा विपरीतार्था धीः प्रापिका। ननु विवेकाग्रहणपक्षेऽपि रजतस्मृतिः रजतस्य नयनसंयुक्ते वस्तुनि 'इदम्' इति ज्ञानं पुरोवर्तिनः प्रापकमस्त्येव; अतस्ताभ्यां प्रापितयोः रजतेदमंशयोरयं प्रतिषेधो भविष्यतीत्याशङ्क्याह—ये चेति। रजते नयनसंयुक्ते च शुक्तिवस्तुनि स्मृतिगृहीतिरूपे ख्याती ज्ञाने, ताभ्यामुपनीतस्यार्थस्य नायं 'नेदं रजतम्' इति प्रतिषेधोऽवगम्यते। अपितु शुक्तौ रजतत्वस्य, रजतस्य वा पुरोवर्तित्वस्यैव प्रतिषेधः। न चाप्राप्तस्यासौ संभवति। न चाग्रहणमभावत्वात्प्रापकम्। तस्माच्छुक्तौ रजतत्वस्य रजतस्य वा पुरोवर्तित्वस्य प्रापिका विपरीतख्यातिरुपासनीया। न च स्मृतदृश्ययोर्विवेकाग्रहणमेव 'नेदं रजतम्' इत्येषा प्रतीतिरपबाधते; तथा सति सर्वासां घटादिप्रतीतीनामग्रहणबाधेन जन्मन उत्पत्तेः सर्वैव घटादिप्रतीतिरीदृशी प्रसक्तप्रतिषेधरूपा स्यात्, न चैवम्। किंच 'नेदं रजतम्' इति रजतमत्र निषेध्यं भाति, नाग्रहणम्। अतः प्रतीतिविरुद्धश्चायं पक्षः। न च

स्मृतिप्रत्यक्षयोः 'इदं रजतम्' इति, विवेकज्ञानमिदं 'नेदं रजतम्' इति ; न तु प्रसक्तप्रतिषेधधीरेषा; अतो न पूर्वोक्तदोषप्रसङ्ग इति वाच्यम् । एवं हि धार्ष्ट्याद्ब्रुवाणः स्वां प्रतीतिमपह्नुते ; यस्मादभ्रान्तस्य शुक्तिरजतयोः P.142-14 क्रमे सति रजतमुपलभ्य पश्चाच्छुक्तितां विविक्तां पश्यतो यौगपद्ये वा युगपच्छुक्तिरजते विविक्ते पश्यतो या विवेकमतिर्भवति सा 'नेदम्' इतीदृशी न भवति; अपितु विविक्ते एते ईदृशी, इयं तु 'नेदम्' इतीदृशी जायेत इत्यसौ प्रतिपद्यते; तथाप्यपह्नुते । न चैतत्प्रतीत्यनुसारिणोऽनुरूपमिति भावः । शुक्तिरजतयोरविविक्तयोर्ग्रहणे स्यादीदृशीति चेत्, इदमस्माकमपीत्याह— प्राप्तेरिति । शुक्तिरजतयोरैक्यस्याभेदस्य प्रापिकायाम् 'इदं रजतम्' इति विपरीतसंवित्तौ सत्यां रजतस्य पुरोवर्तित्वेन प्राप्तेः प्रसक्तप्रतिषेधात्मा 'नेदम्' इति प्रतीतिः स्यात्; न तु तयोर्भेदस्याग्रहणे, तस्याभावरूपस्याप्रापकत्वेन प्राप्त्यभावादित्यर्थः ।

इतश्च विवेकबुद्धिः प्रतिषेधात्मिका न भवतीत्याह— रजतस्येति, कर्मणि षष्ठी । रजतं स्मरन् चक्षुःसंयुक्तस्य च शुक्तिवस्तुनः शुक्लभास्वरादिरूपसामान्यं दृष्ट्वा विपर्ययानुदयेऽपि स्मृताद्रजताच्छुक्तेर्विविक्ततां चक्षुषोऽप्रसादात् प्रथममबुद्ध्वा पश्चाच्चक्षुषः प्रसादाद्विशेषिकरूपज्ञाने सति 'शुक्तिरियम्' इति रजताच्छुक्तिं विविञ्चन् 'नेदं रजतम्' इत्येवमन्यनिषेधेन न प्रत्येति, शुक्तिरजतयोरविवेकग्रहणाभावात्, अप्रसक्तस्य च प्रतिषेधानुपपत्तेः । अतश्च तत्र यथा विवेकज्ञानमप्रतिषेधात्मकम्, एवं च भ्रमेऽपि स्यात्, न चैवम् ।

ननु सामान्यदर्शने यत्रापि विपर्ययो न भवति तत्रापि संशयः स्यात्; तदपनोदकं च निर्णयज्ञानमेककोटिनिषेधात्मकमेव ; अतः कथमुच्यते—'विविञ्चन्नैवं प्रत्येति' इति, इत्याशङ्क्याह — सामान्येति । स्यादेवं यदि नियोगतो नियमेन सामान्यदर्शने संशय एव स्यात् । स तु कोटिद्वयस्मरणोत्थः ; तदभावे कचिन्न भवत्यपि । तेन तदभिप्रायेणास्माभिरिदमुक्तम्—'विविञ्चन्नैवं प्रत्येति' इति । ननु सामान्यदर्शने यदि संशयो न भवति, विपर्ययस्तर्हि स्यात् । तदपबाधकं च ज्ञानं निषेधात्मकमेव । अतः कथमुच्यते—'नैवं प्रत्येति' इति इत्याशङ्क्य वृत्तावुक्तम्— न च

P.143-20 विपर्यय इति । 'भवति' इत्यादिना 'न चैकत्वम्' इत्यन्तेन विपर्ययाभाव एव दर्शितः । यत्तु 'नान्यत्वम्' इत्युक्तम्, तद्विविक्तताबुद्धेरस्य विषयप्रदर्शनार्थं प्रसङ्गादुक्तमिति मन्तव्यम् । तस्माद्यत्र सामान्यदर्शने संशयविपर्ययौ न स्तः, तत्र विवेकज्ञानमात्रम् । न च तत्प्रसक्तप्रतिषेधात्मकम्, शुक्तिरजतयोरेकत्वाप्रतीतेः, शुक्तौ रजतस्य प्रसक्त्यभावात् । विवेकग्रहणाभावादिति । स्मृतस्य च रजतस्य वर्तमाने काले कालतो वर्तमानत्वे; कालग्रहणमुपलक्षणम्, देशतश्च; संनिधेः संवित्तितः रजतस्य पुरोवर्तिवत् पुरोवर्तिनो वा रजतवदवभासात् रजतस्य प्राप्तौ प्रतिषेधोपपत्तयेऽभ्युपेतायामसंनिहितस्य संनिधिप्रतीत्यभ्युपगमादन्यथाग्रहो विपरीता ख्यातिरिष्टा स्यात् । यदि परमसंनिहितत्वस्य शुक्तित्वस्य वा अग्रहस्तत्रान्यथाग्रहे निमित्तं स्यात्, तस्मिन्सति भावात् तदभावे चाभावात्, एतच्चेष्टमेव न इति भावः । अथवा नासंनिध्यग्रहो निमित्तम्, अभावस्यानिमित्तत्वात्; अपितु संनिधिग्रह एव भावरूपत्वान्निमित्तम् । कीदृशोऽसौ निमित्तमित्यपेक्षायामाह—भेदेति । संनिधिग्रहस्य हि 'न रजतं संनिहितम्, अपितु शुक्तिः' इति भेदस्य विवेकस्य ग्रहोऽपवादः; स यावन्नापतति तावत्तेन रहितः संनिधिग्रहोऽन्यथाग्रहस्य निमित्तम्; नापवादेनापोदितः । किंच विपर्ययस्य विपरीतख्यातेरनभ्युपगमे, विवेकाग्रह एव भ्रमः; सोऽग्रहनिबन्धन इति ब्रुवाणेन अग्रहोऽग्रहनिबन्धन उक्तः स्यात् । एतच्च शब्दैकगम्यं, न तु वस्तुवृत्तेनैकस्यैव निमित्तनैमित्तिकत्वभेदोऽस्तीति भावः। वृत्तौ सुव्याहृतमित्युपालम्भवचनम् । किंच स्मर्यमाणगृह्यमाणयोर्विवेकाग्रहश्चेत् भ्रमः, ततः स्वप्ने गृह्यमाणस्य कस्यचित् द्वितीयस्याभावात् न स्मर्यमाणस्याविवेको विवेकाग्रहो वा भ्रमः स्यात् । अथ गृह्यमाणाभावेऽपि स्मृतं मनोदोषात् स्मृतत्वेनाविविक्तं सत् गृह्यमाणं स्वप्ने भाति । न चैवमन्यथाख्यातिप्रसङ्गदोषः, यतो ग्रहणविशेष एव गृहीतग्रहणं स्मृतिर्नान्या । असौ गृहीतांशत्वप्रमोषे गृहीतिरवतिष्ठते । तेन स्वप्ने तद्विषयस्य गृह्यमाणत्वेनावभासो मिथ्या । तदुक्तम्,

"ग्रहणस्य विशेषो हि गृहीतग्रहणं स्मृतिः ।
सोऽगृहीतांशमोषेण गृहीतिरवतिष्ठते ॥"

इति ।

तत्र च स्मृतत्वेन विवेकज्ञानं बाधकमिति चेदत आह— स्मृतत्वेनेति । P. 144-5.
स्मृतत्वेनाविवेकेऽभ्युपगम्यमाने यथा स्मृतावज्ञातस्य स्मृतत्वधर्मस्य ज्ञानं बाधकं तत्त्वधर्मस्य ज्ञानं वा, यथा च तत्र स्मृतत्वरहितं तद्धर्ममात्रं गृह्णती स्मृतिर्भ्रमः, तथा दूरादनिरूपितरूपविशेषे धर्मिणि देवदत्तादौ ज्ञाते पुनः समीपे 'गौरोऽयम्' इति धर्मान्तरप्रतीतेर्बाधकत्वं पूर्वस्याश्च धर्मिमात्रप्रतीतेर्भ्रान्तित्वं स्यात् । किंच स्मृतिः परोक्षार्थग्राहिणी; सा गृहीतांशमोषेऽपि परोक्षार्थगृहीतिरूपेणावतिष्ठेत । स्वप्ने चापरोक्षार्थवदवभासस्तत्र न स्यात्; न चागृहीतिरित्येव सर्वागृहीतिरपरोक्षार्था, अनुमानादौ व्यभिचारात् । तस्मादसदेतत् । इतिः श्लोकार्थसमाप्तौ ।

यच्चोक्तं रजतं प्रतीयते, शुक्तिर्विषय इति प्रतीतिविरुद्धमिति; स स्वदोष एवासञ्जितः; यतः 'सितमिदं पुरोवर्तिद्रव्यं रजतम्' इति सामानाधिकरण्येन बोधादनयोरभेदप्रतीतिरस्ति; सा विवेकाग्रहवादिनो विरुध्यत इत्याह— य इति । भ्रमे शुक्तित्वस्याज्ञानात् शुक्लमात्रस्येदमंशस्य ज्ञानात् 'सितम्' इत्युक्तम् । तत्र यद्यप्येकमिदमभेदग्राहि सामानाधिकरण्यज्ञानं प्रतिभाति, तथाप्यन्यस्यान्यभावानुपपत्त्या स्मृतिगृहीतिरूपे भिन्ने इमे ज्ञाने इति कल्पयिष्याम इत्याशङ्क्याह— ज्ञानेति । सामानाधिकरण्यप्रतीतिसिद्धं चेत्, अन्यस्यान्यथाभावे को विरोधः ? न हि प्रतीतिसिद्धे विरोधोऽस्ति; अप्रतीतिनिबन्धनत्वात्तस्येति भावः । ननु नेदं रजतज्ञानमिन्द्रियजम्, असंनिहितेनेन्द्रियसंनिकर्षाभावात्; नापि लिङ्गादिजम्, लिङ्गादेरभावात्; अस्ति तु पूर्वानुभवजसंस्कारः प्रतीतिहेतुः । तस्मात्स्मृतेः कारणसद्भावात् स्मृतिरेव रजतज्ञानमिति प्रतीमः । मैवं वादीः । इन्द्रियजमेवेदं रजतज्ञानम् । ननु रजतेन्द्रियसंनिकर्षो नास्ति, असंनिधानात् । बाढम् । कथं तर्हि ज्ञानमनिन्द्रियजम् ? शुक्तीन्द्रियसंनिकर्षात् । अयं तु विशेषः— यददुष्टमिन्द्रियं तत्तथा, दुष्टस्त्वन्यथावभासयति दोषसामर्थ्यादित्यदोषः ।

इदानीमनाश्वासाच्चेति यदुक्तं तत्परिहरति— अनाश्वास इति । एकत्रान्यथात्वदर्शनात् सर्वत्र ज्ञायमानेऽर्थे तथात्वं प्रत्यनाश्वासो यः, स तज्ज्ञानेनैव तथात्वपरिच्छेदकेन बाध्यते । तथात्वपरिच्छेदकं ज्ञानमनिरुद्धान्यथात्वाशङ्कं नोत्थानमर्हतीत्युक्तं भवति । तथाहि— अनाश्वासनिवृत्त्यर्थमपि

यदयं परं ज्ञानमपेक्षते, तदप्यनाश्वासोऽपेतं तथात्वपरिच्छेदकमेव । अस्ति च तादृशं ज्ञानम् । अतस्तस्य कोऽपराधः? येनान्यन्मृग्यते । ननु परस्यान्यथाख्यातिमनिच्छतोऽनाश्वासो नास्त्येव; अतः कथं तं प्रतीदमुक्तम्? तस्याप्येकत्र विवेकाग्रहात् सर्वत्र विवेकाग्रहशङ्कया अनाश्वासस्तुल्य इति भावः ।

अथैकत्र व्यभिचारयोगात् सर्वत्रार्थपरिच्छेदं प्रत्यसमर्थं ज्ञानमप्रमाणं
P.144-13 स्यात्, तथा सति चानाश्वासमपि न निरुन्ध्यादित्युच्यते, तत्राह— व्यभिचारादिति । व्यभिचारादर्थपरिच्छेदे प्रमाणस्य नासामर्थ्यम्, अर्थपरिच्छेदस्य तत्कार्यस्य लाभतः प्रमाणस्य परिच्छेदफलत्वादेव सिद्धत्वात् । अतश्च परिच्छेदश्चेदस्ति, ततः सत्यपि व्यभिचारे प्रामाण्यं सिद्धम्; यतः परिच्छेदापरिच्छेदाभ्यां प्रामाण्याप्रामाण्ये; न तु व्यभिचाराव्यभिचाराभ्याम्, प्रामाण्याप्रामाण्ये प्रति तयोरतन्त्रत्वात्; तथाहि— धूमादेरव्यभिचारस्यापि संबन्धस्मरणादिवैकल्यात्कदाचित्परिच्छेदमकुर्वतोऽसति परिच्छेदे न प्रामाण्यम्; चक्षुषश्च कृष्णादिविषये व्यभिचारवतोऽपि सति परिच्छेदे प्रामाण्यं दृश्यते । किंच बाधकारणदोषावेव सर्वत्र प्रामाण्योपघातिनौ दृष्टौ, न व्यभिचारः, सत्यपि व्यभिचारे चक्षुषः प्रमाणत्वात्; उक्तं च 'यत्र च दुष्टं करणम्' इत्यादि । ननु--- व्यभिचाराद्प्यप्रामाण्यं दृष्टम्; यथा शब्दस्य नित्यानित्यत्वयोः साध्ययोः साधारणानैकान्तिकस्य प्रमेयत्वादेः । मैवम्, न तत्र व्यभिचारादप्रामाण्यम्; अपि तु परिच्छेदाख्यं कार्यमेव तत्र न लभ्यते, लिङ्गाभावात् । यस्मादव्यभिचारि लिङ्गं भवति; प्रमेयत्वादि च न तथा । यत्र तु चक्षुरादावव्यभिचारः परिच्छेदे न कारणम्, तत्र सति परिच्छेदे प्रामाण्यं व्यभिचारेऽप्यविवादम् । ज्ञानं चक्षुरादिवदेव व्यभिचार्यपि परिच्छेदे निमित्तम्, न तु लिङ्गवदव्यभिचारि । अथोच्यते— व्यभिचारः 'अर्थस्तथा, अन्यथा वा' इति संशयमुत्पादयन् प्रामाण्यमुपहन्ति; यथा ऊर्ध्वत्वस्य स्थाणुपुरुषद्वयगतत्वेन द्वैविध्यं संशयहेतुः, तथा ज्ञानस्यापि तथात्वान्यथात्वोभयकोटिसंस्पर्शितया द्वैविध्यं संशयहेतुः स्यादिति । तन्न; यतो ज्ञानमुत्पन्नमेवार्थं 'तथैव' इति परिच्छिनत्ति; तत्रासतो द्वैविध्यस्य कुतः संशयहेतुत्वम्? न हि स्थाणौ परिच्छिन्ने

द्वैविध्यादूर्ध्वत्वे संशेरते । अथ 'तथैव' इत्यवधारके सति मा भवतु P.145-6.
संशयः; अनवधारके तु स्यादित्युच्यते । तदयुक्तम्; यतस्तदप्रमाणमेव;
प्रमाणं चात्र क्वचिद्व्यभिचारात् 'प्रमाणम्, अप्रमाणं वा' इति
विचार्यमाणतयाधिकृतम् । तत्र कुतोऽप्रमाणस्य प्रसङ्गः । प्रमाणाच्च
'तथैव' इत्यवधारणम् । न च ततः 'अन्यथा वा' इत्यनवधारणं
युज्यते, विप्रतिषेधात् । तदेवमस्माकं तावदनाश्वासो नास्ति; प्रत्युत य
एव सर्वज्ञानानामव्यभिचारमाश्वासनार्थं प्रार्थयते, तस्यैवानाश्वासः । ननु
ज्ञानस्याव्यभिचारित्वज्ञानं यत्, सत्यमेव तत्; अतः कथमन्यस्यानाश्वासः?
मैवम्, सर्वज्ञानानामव्यभिचारित्वग्राहिणापि ज्ञानेनाश्वासात् । नन्वव्यभि-
चारग्राहि ज्ञानं सामान्येन सर्वज्ञानानामव्यभिचारं गृह्णाति; ततश्च स्वय-
मप्यव्यभिचारि सर्वेषामव्यभिचारं गृह्णदाश्वासकारणं भविष्यति । उच्यते—
यदि तत् स्वयं सिद्धाव्यभिचारं स्यात्, ततः स्वस्य ज्ञानान्तराणां चाव्यभि-
चारं गृह्णदाश्वासकारणं भवेत्; न चैतदस्ति; तथाहि— स्वयं सिद्धाव्यभि-
चारे तस्मिन् अन्याव्यभिचारनिर्णयः । तन्निर्णये च तस्य सिद्धाव्यभि-
चारित्वमितीतरेतराश्रयं स्यात् । अथ ज्ञानान्तरात् तस्याव्यभिचारसिद्धिः,
ततस्तत्राप्येवमित्यनवस्था । किंच ज्ञानस्यार्थपरिच्छेदकत्वलक्षणात् स्वरूपा-
द्यदि नाश्वासः, ततोऽर्थस्यैवासिद्धत्वान्न तेन सह ज्ञानस्याव्यभिचारो गृह्यत।
तस्मात्त्वयापि ज्ञानरूपादेवार्थाश्वास इति वाच्यम् । एवं चेदस्माकमपि
तथा भविष्यति । किंच ज्ञानस्य यथाभूतार्थपरिच्छेदकत्वं नाम यत्
स्वरूपं तद्विपरीतख्यातावयथार्थपरिच्छेदकत्वाद्विरुध्यत इत्येवं ज्ञानस्वरूपादेव
ज्ञानस्याव्यभिचारः कथ्यते । ततश्चाव्यभिचारार्थमपि चेत् ज्ञानस्वरूपमाश्र-
यितव्यम्, तथा सति तत एवार्थसिद्धिर्भविष्यति; ततः कुतो नाश्वासः?
येन तन्निवृत्त्यर्थमव्यभिचारः प्रार्थ्यते । न च वाच्यं व्यभिचारे सति
प्रामाण्यमेव न स्यादिति, यतो व्यभिचारः प्रामाण्यं नोपहन्तीत्युक्त-
मित्यर्थः ।

किंच उद्रेकस्य कार्याधिक्यस्य कारणदोषास्तिमिरादयो न हेतवः ।
किं तर्हि? कारणस्य कार्ये यत्सामर्थ्यं तस्य घातिनः । अतस्तेषां सत्त्वात्
कारणस्य ग्रहणाख्यकार्यसामर्थ्यप्रतिघातादग्रहः । असत्त्वाच्च कार्यसामर्थ्या-
प्रतिघातात् ग्रह इत्येवं दोषसदसत्त्वं स्मृतदृश्ययोर्विवेकाग्रहणे भ्रमे 'अत्र

विवेकाग्रहः, अत्र न' इति विवेकस्य निर्णयस्य यत्कारणं परस्येष्टं तद्वि-पर्ययदर्शनेऽपि भ्रमे न दण्डैर्निवार्यते । अतो विपर्ययदर्शने प्रमाणतदा-
P.145-15 भासविवेकान्नाभासव्यभिचारेण प्रमाणेऽप्यनाश्वास इत्यभिप्रायेणाह—अपि चेति । अत्र हेतुमाह—विपर्यय इति । यतः कार्यसामर्थ्यप्रतिघातिनो दोषा इति यदुक्तं तद्विपर्यये भ्रमेऽपि सुतरां प्रकल्पते घटते । कथमि-त्यपेक्षायामाह—दृष्टेति । अग्रहणे भ्रमे दोषेभ्य इष्टस्य ग्रहणाख्यकार्यस्य निरोधमात्रं भवति । विपर्ययलक्षणे तु भ्रमे न केवलं तत्त्वग्रहणस्य दोषेभ्यो निरोधः; अपितु तत्प्रतिपक्षविपरीतज्ञानोदयश्च भवति । तेन तत्त्वग्रहणाख्यमिष्टं कार्यस्वरूपतः प्रतिपक्षोत्थापनेन च दोषैरत्यन्तं निरुद्धमित्यतिशयार्थः । तस्मादग्रहणे भ्रमे दोषाणां सत्त्वादग्रहः; दोषा-सत्त्वाच्च ग्रह इति ग्रहाग्रहविवेको यः, स विपर्ययलक्षणेऽपि भ्रमे घटत इत्याह—तस्मादिति । यत्र दोषोऽसन्, तत्रादुष्टादिन्द्रियात् तत्त्वग्रह इत्याशङ्कानिवृत्तिरित्युक्तम्; तद्दूषयति—दोष इति । अत्र हेतुमाह—न हीति । यदि कारणसद्भावे कार्यसत्ता नियोगतो नियोगेन स्यात्, ततो निर्दोषेन्द्रियसद्भावे तत्त्वग्रहाख्यकार्यभावादग्रहाशङ्का निवर्तेत, न त्वेतदस्ति । तथाहि—सत्यपि निर्दोषे चक्षुषि विरहिते ज्ञानानुदयो दृश्यते । न च चक्षुर्मात्रं कारकम्, अपितु सामग्र्यपि; सा च तत्र नास्तीति कार्यानुदय इति वाच्यम् । यतः प्रत्येकवर्तिनी कारकशक्तिः, न समाहारवर्तिनी । कारकाणां हि कार्यसिद्धये समासः, न मिलितानां करणत्वम् । तस्माच्चक्षुरपि कारणम् । न च तस्मिन्नदुष्टेऽपि कार्य-सिद्धिरिति सूक्तम्—'न हि कारणसद्भावे' इति । अतो न परस्य ग्रहा-ग्रहविवेकसिद्धिरिति भावः ।

किंच एवं सति विपर्ययः स्यादित्याह—प्रत्यक्षमिति । प्रत्यक्षया हि संविच्या कारणमनुमीयत इति युक्तम्; परस्य तु प्रत्यक्षं संवित्तिलक्षणं कार्यमदुष्टेन करणेनानुमीयत इति विपर्ययः । अन्यथाख्यातौ तु दोषस्य हेतोरभावात् कार्यस्याभावो युज्यते । अतस्तत्र दोषाभावात् विपर्ययदर्श-नाख्यफलाभावानुमानं युक्तमित्याह—विपर्यय इति । तथा विपर्ययलक्षणात् फलाद्धेतोर्लिङ्गात् तद्धेतुदोषसंभवानुमानमपि युक्तमित्यपि द्रष्टव्यम् । अतो-ऽस्माकं दोषाभावभावाभ्यां प्रमाणतदाभासविवेकसिद्धिः, न परस्येति भावः ।

अन्यथाख्यातावनालम्बनं स्यादिति परोक्तो दोषः परस्याप्यस्तीत्याह—अनालम्बनेति । यथा अन्यथाख्यातौ शुक्तेराकारादाकारान्तरस्य P.146-10 रजतस्य समर्पणात् ज्ञानस्यानालम्बनतापत्तिः, एवमख्यातिवादिनस्तवाग्रहणेऽपि भ्रमे शुक्तिस्वरूपस्य विशिष्टस्य 'इदम्' इति ज्ञानेऽनर्पणात् अनालम्बनतापत्तिर्भवेदित्यर्थः । अथ तत्र विशेषानर्पणेऽपि 'इदम्' इति ज्ञानेन शुक्लभास्वरत्वादिसामान्यांशस्य कस्यचिदर्पणमस्ति; स च शुक्तेः स्वाकार इति तस्मिन् गृह्यमाणे शुक्तिरेवालम्बनमापन्नेति विशेषांशाग्रहेऽपि न निरालम्बनतापत्तिरित्युच्यते, तदन्यथाख्यातावपि तुल्यम्, यतस्तत्रापीदमंशख्यातिरस्त्येवेत्याह—कस्यचिदिति । अन्या व्याख्या—अथ कस्यचिदन्यस्य घटादेर्वस्तुनः स्वेन रूपेण ग्रहणमस्तीति कस्यचित् शुक्तिवस्तुनः शुक्तिरूपेणानर्पणेऽपि न निरालम्बनमित्याशङ्क्याह—कस्यचिदिति । विकल्पमात्रमेतत् । स्वाकारत्वादित्यस्यानन्तरं 'नानालम्बनत्वम्' इति योज्यम् । केषांचित्स्वाकाराणामिति शुक्लभास्वरत्वादीनामिति प्रथमव्याख्यायां तुल्यत्वहेतुः । केषांचित् घटादिवस्तूनामवभासनादिति च द्वितीयव्याख्यायां तुल्यत्वहेतुरूह्यः । यद्वा केषांचिदिति घटादिवस्तूनां स्वाकाराणामिति च शुक्लभास्वरादीनामवभासनादिति व्याख्याद्वये हेतुद्वयमुक्तम् ।

अथ तत्र विवेकाग्रहणे तच्चक्षुःसंयुक्तं न तथा आलम्बनमिष्यत इत्युच्यते, परस्याप्यन्यथाख्यातिवादिनः तत्रान्यथाख्यातौ एवं चक्षुःसंयुक्तस्य नालम्बनत्वमिष्टम् । अथ तत्रान्यथाख्यातौ तथा स्थितेः निरालम्बनस्य स्थितत्वात् सर्वत्र सम्यग्ज्ञानेष्वपि तथाभावो निरालम्बनता स्यादिति शङ्क्येतेत्युच्यते, ततस्तवापि विविक्तशक्त्यग्रहणे निरालम्बनता दृष्टेति सर्वत्र शङ्क्येत एतद्यथेत्यादिना विवृतम् । तत्र विपर्ययदर्शनेऽनिमित्तत्वान्निरालम्बनत्वाद्यथा सम्यग्ज्ञानेऽनिमित्तता निरालम्बनता शङ्क्यते, तथा शक्त्यग्रहे सा निरालम्बनता निरूपिता सर्वत्र घटादिग्रहेऽपि शङ्क्येत, अतस्तवापि सर्वत्रानाश्वासस्तुल्य इति भावः । अथ घटादिज्ञाने ज्ञानादेवार्थपरिच्छेदकादर्थसिद्धेरर्थस्य निमित्तत्वमालम्बनत्वम्, एतदन्येषामप्यन्यथाख्यातिवादिनां न विशिष्यत इत्यर्थः । किंच रजतख्यातिरपि शुक्तिमेवालम्बते, सैव हि रजतात्मना गृह्यते । न चान्यथालम्ब्यमानेऽर्थे ज्ञानस्य

निरालम्बनत्वं भवति । एवं च सति हेतुमात्रस्यानालम्बनत्वात् चक्षुरादिवदिति यदुक्तं तदपि प्रत्युक्तम् । न वयं हेतुमात्रमालम्बनं ब्रूमः,
P.147-11 अपितु यत्तथा अन्यथा वा आलम्ब्यते । चक्षुस्त्वन्यथापि नालम्ब्यत इति न भ्रान्तेरालम्बनम् । इतश्च शुक्तिरन्यथालम्ब्यते, यतो न यदाकारं यत् ज्ञानं तत्तस्यालम्बनम्, ज्ञानस्य निराकारत्वात् । अपितु यस्मिन् ज्ञाने सति यत् यथा व्यवहारयोग्यं भवति, तस्य तदालम्बनम् । शुक्तिश्च रजतज्ञाने रजततया व्यवहारयोग्या भवति, न शुक्तितया; तथाच रजतबुद्ध्यैव भ्रान्तस्तया व्यवहरति, न शुक्तिबुद्ध्या । तस्मान्न शुक्तिः स्वरूपेण रजतज्ञानस्यालम्बनम्, अपितु रजततयेति स्थितम् । वृत्तौ 'रजतरूपेण' इत्यत्र आलम्बितेत्यनुवर्तते ।

'आत्मा ज्ञातव्यः' इति विधौ ज्ञानक्रियानिष्ठे सति आत्मस्वरूपपरत्वाभावात् अपहतपाप्मानन्दादेरात्मस्वरूपस्यासिद्धिमाशङ्क्य तत्सिद्ध्यै कश्चिदाह—अवघातेति । "व्रीहीनवहन्ति" "व्रीहीन्प्रोक्षति" इत्यादौ दृष्टादृष्टसंस्कारयोर्व्रीह्यर्थता यथा स्थिता, व्रीहीनिति द्वितीयया चेप्सिततमत्वेन प्राधान्यावगमात्, तथा ज्ञानं स्वभावेन "आत्मा वारे द्रष्टव्यः" इति चात्मनः कर्मत्वेन निर्देशात् ज्ञेयभूतात्मद्रव्यार्थम् । अतो ज्ञानविषयोऽप्यात्मज्ञानविधिः आत्मस्वरूपमानन्दादि स्पृशति; न ज्ञानमात्रे पर्यवस्यति; यस्मादात्मस्वरूपेदमर्थ्येनैव ज्ञानस्य कर्तव्यता नियोगादवगम्यते । अतो नियोगेनात्मस्वरूपमप्यानन्दाद्याक्षिप्तमिति तस्य सिद्धिरिति भावः ।

अत्र परः शङ्कयति—भवत्विति । भवतु ज्ञानस्यार्थता, तथाप्यपहतपाप्मानन्दादिविशिष्टस्याभिप्रेतस्य सिद्धिः कुतः प्रमाणात्? न तावत्तत्र 'आत्मा ज्ञातव्यः' इति शब्दः प्रमाणम् । स हि 'अपहतपाप्मादिरूप आत्मा ज्ञातव्यः' इत्यात्मार्थतया ज्ञानस्य कार्यत्वे पर्यवसितः; 'एवंरूप आत्मा ज्ञातव्यः' इति हि तदा चोद्यते, न 'एवंरूप आत्मा' इत्यात्मस्वरूपनिष्ठा; यत्परश्च शब्दः स शब्दार्थः । तस्माच्छब्दस्तावदपहतपाप्माद्यात्मस्वरूपसिद्धौ न प्रमाणम् । न च तत्र प्रमाणान्तरं प्रक्रमते । तस्मादेवमपि नात्मस्वरूपसिद्धिरित्याशयः । एवमाशङ्क्याह—ज्ञानेति ।

ज्ञेयार्थत्वेन ज्ञानं कर्तव्यतया चोदितम्; न च तत्राकिंचित्करस्य तादर्थ्येन कर्तव्यतासिद्धिर्युज्यते। तस्मात् ज्ञानेन ज्ञेये कश्चिदर्थः कर्तव्यः। स च ज्ञेयभूतात्मस्वरूपप्रकाशनात् कोऽन्यः? अपितु तदेव। न हि तस्य दृष्टस्य संभवे सत्यदृष्टकल्पनोचिता। तस्माद्यथा प्रोक्षणादिविधेर्व्रीह्यर्थे प्रोक्षणविषयादपि व्रीहावकिंचित्करस्य प्रोक्षणस्य तादर्थ्यानुपपत्त्या व्रीहिष्वदृष्टा संस्कृतिर्गम्यते, तथा ज्ञानविधेरात्मार्थज्ञानविषयादप्यात्मनोऽपहतपाप्मादि रूपं गम्यत इत्यर्थः। यथा स्वर्गकाम। इत्यादेर्वृत्तिग्रन्थस्यायमर्थः--यः खलु यत्कामः, स तदुपायं कर्तव्यता प्रत्येति, अनुतिष्ठति च; नानुपायमित्यनुभवसिद्धम्। अनुपायो हि तत्कामेन नानुष्ठितः स्यात्, अन्यकामस्यान्यत्रानुष्ठानादर्शनात्। अतश्च स्वर्गानुपाये यागे नियोगानुष्ठाने स्वर्गकामस्य न भवतः। तस्मात्स्वर्गयागयोः साध्यसाधनभावो यथा यागविषयादपि विधेरवगम्यते, तथा अपहतपाप्मादिरूपमात्मानमुद्दिश्य ज्ञाननियोगो न युज्यते यदि तथाविध आत्मा ज्ञानेन न प्रतीयत इति ज्ञानविषयादपि विधेरात्मस्वरूपं बोध्यते। P.148-11

तदेतत्सिद्धान्ती दूषयति—उक्तेति। सत्यमेवमात्मा ज्ञानेन प्रतीयत इति सिध्यति, न तु स्वरूपेणेति; यस्मात्पररूपेणापि ज्ञानमर्थस्य भासकमनन्तरमेवान्यथाख्यातिप्रतिष्ठापनेन प्रदर्शितम्। तत्र किं स्वरूपेणात्मा ज्ञानेन प्रतीयते, पररूपेण वेति शब्दान्न निश्चयः स्यात्। न चात्र प्रमाणान्तरमस्ति, यतो निश्चयः स्यात्। अवश्यं चैवमभ्युपेयम्—यदात्मनोऽन्यथाप्रतीतिरस्तीति; अन्यथा ज्ञानविधेर्न किंचित्फलं स्यात्। स हि निष्प्रपञ्चोऽप्यात्मा शब्दात्मकप्रपञ्चरूपेण प्रकाशत इति तदवबोधनेन तत्त्वप्रतिपत्त्यर्थः। दृष्टा ह्यस्वरूपभूतरजताद्यवबोधनेन शुक्तितत्त्वप्रतीतिः। अतश्च निष्प्रपञ्चस्यात्मनः प्रपञ्चात्मना प्रतीतिरस्तीति नावश्यमात्मनोऽपहतपाप्मादिरूपेण ज्ञेयतया तद्रूपसिद्धिः; अध्यारोपेणापि "वाचं धेनुमुपासीत" इतिवत् तदुपपत्तेरित्युक्तं भवति।

अथ मतम्—द्विविधेयमविद्या; एका तत्त्वाज्ञानात्मिका बीजभूता तत्त्वमाच्छादयन्त्याच्छादिकेत्युच्यते; यथा रज्जुतत्त्वाज्ञानात्मिका रज्जुतत्त्वमप्रकाशयन्ती। अन्या च तत्कार्यभूता रज्जुमेव सर्पदण्डादिरूपेण आत्मा-

नमप्रपश्चं प्रपञ्चरूपेण विस्तारयन्ती विक्षेपिकेत्युच्यते । तत्राद्या बीजमात्ररूपेण सुषुप्ते तिष्ठति । द्वितीया च स्वप्नजागरितयोः प्रपञ्चात्मना । तत्र P.148-24 यद्यपि विक्षेपिकाया निवृत्तिर्नात्मज्ञानविधेः फलम्, तथाप्याच्छादिकाया निवृत्तिः फलं भविष्यतीत्यतो न ज्ञानविधेर्निष्फलत्वमित्याशङ्क्याह—लय इति । सांसारिकविविधदुःखनिवृत्तये प्रेक्षावतो ज्ञानविध्यर्थं प्रवृत्तिः । विक्षेपश्च प्रपञ्चात्मकः स्वप्नजागरितयोः शोकादिदुःखहेतुः, न लय आच्छादिका अविद्या । न ह्यसौ सुषुप्तगता दुःखहेतुः । दुःखहेतुश्च निवर्त्यः । अतो न लयस्तथा निवर्त्यो यथा विक्षेपः । स ह्यदुःखो दुःखहेतुर्न लयः। स तु दुःखात्मकत्वात् न केवलं न निवर्त्यः, प्रत्युत प्रार्थनीयः । तथाच सुषुप्ते विविधदुःखनिवृत्तेर्लय आनन्दवासनाक्त श्रुतौ श्रुतः ।

अपिच अविद्याद्वैविध्यमपि प्रसिद्धमख्यातिमात्रभ्रमवादिनस्तव न स्यादिति दूषणान्तरमाह—लयेति । लयः तत्त्वाग्रहणम्, विक्षेपो विपर्ययदर्शनम्; तयोर्भेदो न स्यादग्रहमात्रे भ्रमे । तस्मादग्रहणविपर्ययग्रहणलक्षणे द्वे अविद्ये अभ्युपेतव्ये । ते च पूर्वा कारणम्, उत्तरा कार्यमित्येवं व्यवस्थिते । तथाच रज्जुतत्त्वाग्रहणात् सर्पादिविपर्ययो दृश्यते । एवं सति च पूर्वा सुषुप्ते, परा च स्वप्नजागरितयोरित्येवमविद्याविभागोपपत्तिः । तथाच गौडपादैर्दर्शितम्—"कार्यकारणबद्धौ" इति । कार्यं विक्षेपात्मिका प्रपञ्चाविद्या, कारणमग्रहणात्मिका अविद्या; ताभ्यां बद्धावुभौ विश्वतैजसशब्दवाच्यौ जागरितस्थानस्वप्नस्थानावात्मानाविष्येते । प्राज्ञस्तु सुषुप्तस्थान आत्मा कारणेन तत्त्वाग्रहणात्मिकया अविद्यया बद्धः । उभे तु ते अविद्ये तुर्ये पूर्वोक्तस्थानत्रयापेक्षया तुर्ये "चतुरश्छयतावाद्यक्षरलोपश्च" इति स्मरणात् चतुर्थे मुक्तिस्थाने न सिध्यत इत्यर्थः ।

ननु अन्यथैवायमग्रहणासम्यग्ग्रहणभेदेनाविद्याभेदो भविष्यति, किं विपर्ययेण ? तत्राग्रहणं सुषुप्ते, जागरितस्वप्नयोस्त्वसम्यग्ग्रहणमिति व्यवस्थासिद्धिः। नन्वसम्यग्ग्रहणाग्रहणयोः किं भेदोऽस्ति ; बाढम् ; तथाहि—अभिन्नस्यैकस्य प्रपञ्चभेदैः रहितस्यात्मवस्तुनोऽप्रदेशस्य विमोग्रहणमसम्यग्ग्रहणम्, तथाभूतस्याभिन्नस्याप्रदेशस्य वा अग्रहणमग्रहणम् । तदेवं ग्रहणाग्रहण रूपत्वात्तयोः पृथक्त्वेन प्रतीतिः । अतोऽस्त्यनयोर्भेदः । नैतत्सारम्; यतो

यदि तावद्विपर्ययज्ञानादन्यद्विपर्ययांशशून्यग्रहणमात्रमसम्यग्ग्रहणमिष्यते, तत्किमव्यक्तावभासित्वम्? अथवा केनचिद्रूपेणार्थस्य ग्रहणं, न सर्वात्मना? तत्र यद्याद्यः पक्षः, तदा दूरस्थे सूक्ष्मे चार्थे भवत्यव्यक्तावभासकज्ञानम्; न च तदविद्या। तथा द्वितीये पक्षे तत्रैव दूरस्थे स्थाणावूर्ध्वतासामान्यमात्रं ज्ञातं विशेषाज्ञानान्न सर्वात्मना ज्ञातमित्यविद्या स्यात्; न चैवम्। किंचैवं सति सर्वमेव ज्ञानं न सर्वात्मनार्थस्य ग्राहकमिति सर्वज्ञानानामसम्यग्ज्ञानत्वान्मिथ्यात्वमापतेत्। तस्मादसम्यग्ग्रहणमविद्येति यदुक्तं तत्तावदयुक्तम्। यदप्यभिन्नस्यात्मनोऽप्रदेशस्याभेदग्रहणं द्वितीयाविद्योक्ता; तत्रापि यद्यभेदाग्रहणमात्रं प्रपञ्चग्रहणरहितमविद्या, तदा तत्राविद्याया निवर्तनीयं नास्ति। न हि अभेदाग्रहणं निवर्त्यम्, यतो दुःखत्रयहेतुतया यः पुरुषस्यापराध्यति स तेन निवर्त्यः; न चाग्रहणं तथा। किंतु, प्रपञ्चभेदः; स हि द्विविधदुःखायतनम्। तथाचान्यथाख्यातिरभ्युपेता स्यात्। P. 150-7.

अथ भिन्नं भेदेन भातीति न ब्रूमः, येनान्यथाख्यातिः स्यात्; किंत्वभिन्नमप्यात्मतत्त्वं प्रपञ्चभेदेन भिन्नमिव भातीति, तत्रोऽच्यते--किमत्र भिन्नेन सहाभिन्नस्य सादृश्यम्? यदिवशब्दस्यार्थः स्यात्। यदि यथा भिन्नमप्रकाशमानैकत्वं प्रकाशते, तथात्मतत्त्वमभिन्नमप्यप्रकाशमानैकत्वं प्रकाशत इतीदं सादृश्यमिवार्थः, तदैकत्वरहितस्यात्मतत्त्वस्य ग्रहणात् केनचिदंशेन ग्रहणं न सर्वात्मनेत्येकलक्षणमसम्यग्ग्रहणमुक्तं स्यात्; तत्र च न किंचिज्ज्ञानं सर्वात्मनार्थस्य ग्राहकमिति सर्वज्ञानमिथ्यात्वापात इत्युक्तम्। अथाभिन्नमात्मतत्त्वं भिन्नं प्रकाशत इव, न तु प्रकाशत एव; अतोऽन्यथाख्यातिप्रसङ्ग इत्युच्यते, तदापि भिन्नप्रकाशेन सहाभिन्नप्रकाशस्य किं सादृश्यं वाच्यम्। यथा भिन्नप्रकाशात् भेदव्यवहारप्रवृत्तिः, तथात्मतत्त्वस्याभिन्नस्य भेदव्यवहारादिदं सादृश्यमिति चेत्; न, अभिन्नेऽपि चेदात्मनि भेदव्यवहारो भवति, अस्ति तर्हि तत्राप्यात्मनि भेदप्रकाशनम्। यतो भेदप्रकाशो भेदव्यवहारस्य कारणम्। न चासति कारणे कार्यं भवति। ततश्चाभिन्नेऽप्यात्मनि भेदज्ञानोदयात् आपन्ना अन्यथाख्यातिः। अथाभिन्नस्यात्मतत्त्वस्याभेदाग्रहेऽभिमानमात्रमिदम्, न तु भेदग्रहः; एतदेव व्यवहारहेतुः; अतो नान्यथाख्यातिप्रसङ्ग इति चेदुच्यते, तदसत्; अभेदाग्रहो हि ग्रहणाभावः। न चासावभावमप्रमेयमभ्युपगच्छतां स्वरूपेण पररूपेण वा ग्राह्यः। न चागृहीते तस्मिन् भेदग्रहाभिमानोऽवकल्पते। न

ष्वगृहीतायां शुक्तौ रजतग्रहाभिमानो भवति । किंचाभिन्नस्यात्मनः प्रपञ्चात्मना भेदश्चेन्न प्रकाशेत, ततः कुतो भेदग्रहः? ननु न भेदग्रहः, किंतु तदभिमान इत्युक्तम् । सत्यमुक्तम्; किंतु भेदग्रहादन्यो नाभिमानो नाम निरूप्यते । अतो भेदग्रह एवासौ । स च भेदाप्रकाशने न युक्त इति सूक्तम् । किंच अभिन्न आत्मतत्त्वे प्रपञ्चात्मना भेदाभिमानो विपरीतज्ञानमविद्येत्यस्मत्पक्षं परित्यज्याभिन्नस्यात्मतत्त्वस्याभेदाग्रहे भेदग्रहाभिमानमङ्गी कुर्वता विपरीतख्यातिरेवाङ्गीकृता । अतः किं तेन परिहृतम्? तस्मात् 'लयविक्षेपभेदश्च न स्यादग्रहमात्रकं' इति सूक्तम् ।

वेदान्तानां ज्ञानविधिपरत्वे अपहतपाप्मादिरूपमात्मनो न सिध्यति;
P.151-1. यतो नात्मस्वरूपेणावभासकं ज्ञानमित्युक्तम्; तत्र चोदयति—नन्विति । अरूपेणानात्मरूपेण अपहतपाप्मत्वादिना आत्मनोऽवभासे दृष्टं प्रयोजनाभावाददृष्टकल्पना स्यात् । अपहतपाप्मादेरात्मरूपस्यावभासे तात्सिद्धिर्नाम दृष्टफलम् । यतोऽन्यत्रापि ज्ञेयस्वरूपसिद्धिरेव ज्ञानफलम् । न च दृष्टफले संभवत्यदृष्टकल्पनोचिता । तस्मात् ज्ञानविधिपरत्वेऽपि वेदान्तानामात्मनोऽपहतपाप्मादिरूपसिद्धिरित्यर्थः । अत्रोत्तरमाह—न दृष्टमात्रादिति । दृष्टमात्राद्यतः कुतश्चिदपुरुषार्थादपि दृष्टान्न दृष्टार्थं ज्ञानं भवति; किंतु पुरुषार्थेन विना विधेरनैराकाङ्क्ष्यात् पुरुषार्थानुगं पुरुषार्थसंस्पर्शि तत् दृष्टं फलं भवति । न चापहतपाप्मादेरात्मरूपस्यानात्मरूपस्य वावभासे पुरुषार्थस्य भावो भिद्यते विशिष्यते; उभयत्रापि पुरुषार्थफलत्वमविशिष्टमित्यर्थः । अविशेषं प्रपञ्चयति—यथेति । यथा प्रपञ्चशून्यत्वपक्षे अपहतपाप्मादिविशुद्धाद्वयात्मतत्त्वे ज्ञानेन प्रकाशिते शोकादिदुःखस्य कर्मणां रागादेश्च क्लेशस्य हानं त्यागः, तथापहतपाप्मादावतत्त्वेऽपि ज्ञानेन प्रकाशिते तेषां हानं भवेदित्यर्थः । तदुक्तम्—

"तस्माद्भूतमभूतं वा यद्यदेवातिभाव्यते ।
भावनाफलनिष्पत्तौ स्फुटकल्पा च धीः फलम् ॥"

इति । यश्च वृत्तौ जीवन्मुक्तः स मनोरपि संमतः । तथा चाह—

"कपालं वृक्षमूलानि कुचेलमसहायता ।
समता चैव भूतेषु एतन्मुक्तस्य लक्षणम् ॥"

इति ।

न चात्र रागादिमुक्तो मुक्तोऽभिमतः, विशेषस्यानुपादानात् । तस्मादगृह्यमाणविशेषत्वात् सर्वबन्धमुक्तोऽत्र मुक्त उक्त इति गम्यते । बन्धस्य हि मूलं कारणमविद्या । तस्यां च निर्लेपमपहतायां कारणनिवृत्त्यैव बन्धस्य निवृत्तेरुपपन्ना विदुषो जीवत एव मुक्तिः । या तु प्रपञ्चस्य बाधितस्याप्याभासमात्रेणानुवृत्तिः, तदुपपत्तिः पूर्वमुक्तेति न पुनरुच्यते । अत्र चाविर्भूताद्वयात्मप्रकाशो जीवन्मुक्तोऽभिप्रेतः, न वाक्यार्थमात्रविदिति विशुद्धाद्वयादिरूपमात्मतत्त्वमेवात्मनो ज्ञानेन प्रकाश्यत इति । इदमेवात्र युक्तम् । एवं हि द्वयग्राहिणां प्रत्यक्षादीनां विरोधो न भवति । कर्मविधानं च साध्यसाधनेतिकर्तव्यतादिभेदविषयं सत्यार्थं भवति । परमार्थे हि प्रपञ्चशून्यत्वे प्रपञ्चग्राहीणि प्रत्यक्षादीनि बाध्येरन् । कर्मविधयश्चाभूतविषयाः स्युः । तस्मात् "वाचं धेनुमुपासीत" इत्यादिवत् अभूतात्माद्वैतविषयज्ञानविधिरयमिति युज्यते । अनौपचारिकार्था इति; अनौपचारिकः कल्पितोऽर्थो विषयो येषामिति विग्रहः । अभूतस्य कल्पना, सैवोपादानं यस्य, स चासौ व्यवहारसिद्धश्चासावर्थश्च, तद्गोचरा इति वृत्तौ विग्रहः । P.151-11

ननु जानातिस्तत्त्वबोधविषयः; अतः सत्यमेवाद्वयादिरूपमात्मनो ज्ञानविषय इति शङ्कयति—जानातिरिति । तत्रोत्तरमाह—नेति । जानातिस्तत्त्वबोधे न वर्तते । कुतः? मिथ्याज्ञानं सम्यग्ज्ञानं संशयज्ञानमिति मिथ्यादिभिर्ज्ञानस्य विशेषणात् । अन्यथा सम्यग्ज्ञानमित्यत्र विशेष्यविशेषणपदयोः पौनरुक्त्यं स्यात् । मिथ्याज्ञानं संशयज्ञानमित्यत्र विरोधः ।

ननु 'आत्मा ज्ञातव्यः' इत्यात्मज्ञानं विधीयते । तत्र यद्यारोपितेनात्मरूपेण विशुद्धाद्वयादीनां ज्ञानं स्यात्, तथा सति नात्मा ज्ञातः स्यात् । आत्मरूपेण हि प्रतीत आत्मा ज्ञातो भवति, नान्यथा । ततश्चाद्वयादिरूपेणात्मज्ञानविधेरात्मनस्तद्रूपसिद्धिरित्याशङ्कयति—नात्मेति । तत्रोत्तरमाह—न तद्रूपेति । यदि 'आत्मा ज्ञातव्यः' इत्येतावदिदं वाक्यं स्यात्; तेन चात्मस्वरूपज्ञानं विधीयेत, ततः स्यादेवम्; न त्वेतदस्ति; आत्मनः प्रमाणान्तरसिद्धत्वे तस्यानुवादत्वात्, अनिर्ज्ञातस्वरूपस्य ज्ञातुमशक्यत्वात् । अतश्चात्मनः प्रमाणान्तरसिद्धत्वे, अन्यथा प्रमाणान्तरासिद्धत्वे च सुतरामात्मस्वरूपस्याविधानम् । यदि "अपहतपाप्मा विजरो विमृत्युः" इत्यादिशब्दसमर्पितेन रूपेण तस्यात्मनो ज्ञानं विधीयते, तदा तेनापहत

पाप्मादिरूपेण तत्त्वेनाप्यध्यारोपितेनापि "वाचं धेनुमुपासीत" इति वद्-स्यात्मनो ज्ञानमवकल्पते। तेन ज्ञानविधेरपहतपाप्मादेरात्मस्वरूपस्य सत्यत्व-सिद्धिरिति भावः।

P.152-7. किंच न तावदद्वयात्मप्रकाशलक्षणं ज्ञानमदृष्टार्थम्। न हि तेन किंचिददृष्टं जन्यते। तत्र यदि दृष्टार्थम्, तत्रोच्यते—ज्ञानमिति। तस्योपायो न ज्ञातः, तेनोपायाज्ञानात् दृष्टफलेऽपि ज्ञाने विधिमन्तरेण पुरुषो न प्रवर्तत इति ज्ञानं विधीयत इत्याशङ्कयति—तदिति। अत्रोत्तर-माह—तस्येति। अथ दृष्टार्थमपि ज्ञानमवघातादिवत् विधास्यत इत्या-शङ्कयति—अवघातेति। तत्रापि तण्डुलगतनियमादृष्टमस्ति; अवघाता-द्विलक्षणस्तुषादिविमोकः, ततो विलक्षणास्तण्डुलाः, ततो विलक्षणं पिष्टम्, ततो विलक्षणं पुरोडाश इत्येवं प्रणाड्या प्रधानापूर्वसिद्धेरेवादृष्टं तत्रास्तीति भावः। अथाद्वयात्मज्ञानमदृष्टपूर्वमलौकिकम्; अतोऽदृष्टार्थमपि तद्विधीयत इति, तत्राह—अलौकिकमिति। किमर्थं तद्विधीयते? न तावदात्मस्वरूपस्य सिद्ध्ये प्रतिपत्तये; यतो न प्रतिपत्तिमात्रफलो विधिः, अपितु कर्तव्यता अनुष्ठानं विधितो भवति। सा च दृष्टार्थे ज्ञाने दृष्टादेव फलात् भोज-नादिवत् प्रसिध्यति; किं विधिना? अतोऽलौकिके अपहतपाप्मादिरूपे आत्मतत्त्वेऽर्थे शब्देन प्रथमं परोक्षतया प्रतिपादिते तस्यापरोक्षज्ञाने तमप-रोक्षीकर्तुं तस्यापरोक्षज्ञानस्य ज्ञेयभूतात्मोपायत्वात् स्वयमेवोन्मुखः पुमान्। तथाहि—कस्यचिद्वाक्यादाश्चर्यभूतं गन्धर्वनगरादि श्रुत्वा तदपरोक्षीकरणे स्वयमेव पुमान् उन्मुखो भवतीति। अतः किं विधिनेति भावः। क्व नाम विधिर्युज्यत इत्याह—तादिति। उपसंहरति—नियोगेति। अतोऽप-हतपाप्मादिवचसां ज्ञाननियोगानुप्रवेशो भूते सिद्धरूपेऽर्थे तेषां प्रमाणतां विहन्ति, अतत्परत्वात्। इतिर्हेतौ। भूतस्य सिद्धस्यापहतपाप्मादेरर्थस्य गतिमिच्छता नियोगानुप्रवेशो नोपास्यो न मनसि कार्य इत्यर्थः।

तदेवं प्रागुक्तासु तिसृषु प्रतिपत्तिषु मध्ये प्रथमा शाब्दी प्रतिपत्तिः, तृतीया चाद्वयात्मप्रकाशरूपा न विधीयत इत्युक्तम्। अधुना उपासनाख्या या द्वितीया प्रतिपत्तिः, तस्याः प्रतिपत्तेर्विधिर्निरस्यते—अत एवेति।

भूतेऽर्थे प्रमाणाभावप्रसङ्गादित्यर्थः । 'निष्ठता' इत्यस्यानन्तरं सिद्धानां वेदान्तानामित्यध्याहार्यम् । अत एवेत्युपजीवितमर्थं दर्शयति—तत्रापीति । P 153-16 पूर्ववदिति; यथा तृतीयविधिपरत्वे अतत्परत्वाद्वाक्यस्य नात्मस्वरूपावगतिसिद्धिः, तथेत्यर्थः । यदि त्वपहतपाप्मादिवाक्यं स्वरूपनिष्ठमेव न नियोगनिष्ठम्; तेन तस्मात्प्रमितस्यात्मस्वरूपस्य "निदिध्यासितव्यः" इत्यादेर्वचोऽन्तरादुपासनविधानमिष्यते, तत् स्यादेव; न कश्चिद्दोषः । तथाच "विज्ञाय प्रज्ञां कुर्वीत" इत्यत्र 'विज्ञाय' इति क्त्वाप्रत्ययेनात्मतत्त्वज्ञानस्य वेदान्तजस्य प्रज्ञाकरणात् पूर्वसिद्धतां दर्शयतीत्याह—स्वरूपेति । तदपि चोपासनविधानं वृथा, विधेरप्राप्तार्थत्वात्; अस्य च दृष्टार्थतयैव भोजनादिवत् प्राप्तेरित्याह—प्राप्तेरिति । दृष्टार्थत्वमाह—अभ्यासेनेति । एतदुक्तं भवति—यदि स्वर्गादिवन्मुक्तिरदृष्टफलं स्यात्, ततस्तत्फलानुचिन्तनमदृष्टार्थत्वादप्राप्तं विधीयेत; किंतु स्वरूपाविर्भावमात्रं मुक्तिरिति वर्णितम् । स्वरूपाविर्भावश्च शब्दात्परोक्षतयावगतस्याद्वयात्मनः साक्षाद्भावः । स चानुचिन्तनस्य भोजनस्येव तृप्तिर्दृष्टं फलम्, ज्ञानाभ्यासेन प्रत्ययप्रकर्षदर्शनात् । तथाहि—अभूतमपि यदनुभाव्यते तत्र साक्षादनुभवमापद्यत इत्युक्तम्; किं पुनर्भूतम् । तदेवं दृष्टार्थमनुचिन्तनम् । न च दृष्टार्थं दृष्टनिराकाङ्क्षत्वाददृष्टं फलमाकाङ्क्षते । तस्माद्दृष्टार्थतया प्राप्तार्थमनुचिन्तनमविधेयमित्युपसंहरति—तस्मादिति । वृत्तौ 'यदपि' इत्यादिना पूर्वपक्षोपन्यासः । 'तत्त्वमसि' इति तत्त्वंपदार्थयोर्ब्रह्मजीवयोरभेदं धारयेदित्याचार्येणोक्ते शिष्याभिप्रायेण 'सदस्मि' इत्युत्तमपुरुषनिर्देशः । धारयेदिति धारणमनुचिन्तनमुच्यते । "तत्त्वमसि" इत्यत्राश्रुतोऽपि विधिः "पूषा प्रपिष्टभागः" इत्यत्रेव कल्प्यत इति परो मन्यते । श्रवणादिति; वेदान्तश्रवणोपलक्षितात् वेदान्तवाक्यार्थज्ञानादन्यदित्यर्थः । "स क्रतुं कुर्वीत" इत्यादिश्रुतिषु क्रतुप्रज्ञाशब्दाभ्यामनुचिन्तनमुक्तम् । ध्यायतिना तयोर्भेदे तुल्यवन्निर्देशानुपपत्तिर्मा भूदिति अभेददर्शनार्थमनुचिन्तनं ध्यानमिति पर्यायनिर्देशः । प्रत्ययप्रवाह इति च ध्यानविवरणम् । कर्मवदिति; यथाग्निहोत्रादि कर्म स्वर्गादिफलं तथेत्यर्थः ।

P. 154-8. याश्चोपासनाविधायकाः श्रुतय उक्ताः, तासु "स क्रतुं कुर्वीत" इत्येषा तावच्छ्रुतिः सकलविशेषनिर्मुक्तस्य निरुपाधेरात्मतत्त्वस्योपासनं निर्विशेषब्रह्मीभावफलं न विधत्ते; किंतु "मनोमयः प्राणशरीरो भारूपः" इत्यनुवृत्तेर्मनोमयादिविशेषोपाधिकस्य सोपाधेरात्मनोऽनुचिन्तनमैश्वर्यफलम्; ऐश्वर्यमनुभूय पश्चात् क्रमेण वा स्वरूपाविर्भावलक्षणं मुक्तिफलं विधत्ते, न तु साक्षान्मुक्तिफलम् । अतो न तत्र निर्विशेषात्मवादिनाम् "अपहत-पाप्मा विजरो विमृत्युः" इत्यादीनाम् "अस्थूलमनणु" इत्यादीनां वाक्यानामन्वयो घटते । नामरूपे शब्दार्थावुपाधी यस्य मनोमयादिरूपस्यात्मनः, तस्यानुध्यानमिति विग्रहः । तथा "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत" इत्यत्रापि 'रक्तः पटो भवति' इतिवत् उपपदसंक्रान्तो विध्यर्थः । तेन नास्योपासनाविधौ तात्पर्यम्; अपितु 'तमेव' इत्यन्यनिवृत्तौ । तथाहि—तत्राकाशादितत्त्वानां भेदं प्रतिपाद्यात्माभेदः प्रतिपादितः । तथाच "विरजः पर आकाशात्" इति पूर्वार्धे आकाशात्परत्वमुक्तम् । तत्र तथैव प्रज्ञाकरणे प्राप्ते 'तमेव' इत्येवकारेण 'नाकाशात्परत्वेनात्मनि प्रज्ञा कर्तव्या, अपित्वाकाशमन्तर्भाव्यैव केवलः' इत्येवकारार्थतात्पर्यम् । यदि तु नैवं व्याख्यायते, तदा एवकारोऽनर्थकः स्यात् । न चास्य निवर्त्यान्तरमस्ति । तथाच केवल एवात्मा ध्येयो नाकाशादीति । एतदेव "नानुध्यायाद्बहूञ्छब्दान् वाचो विग्लापनं हि तत्" इत्यनेन प्रज्ञाकरणवाक्यतापन्नेन प्रपञ्च्यते । न च वाच्यम्—शब्दस्यानुध्याननिषेधोऽयम्, नार्थस्येति; यतः शब्दमात्रस्यानुध्यानमप्रसक्तत्वान्न निषेध्यम् । अतः शब्दपूर्वकत्वात् शब्दार्थानुध्याननिषेध एवायमिति । तथा "आत्मेत्येवोपासीत" इत्यत्रमप्येवकारश्रवणादन्यनिवृत्तिपरो विधिः, नोपासनापरः । तथा "निदिध्यासितव्यः" इत्ययमपि नोपासनाविधिः; यस्मात् "आत्मनस्तु कामाय" इत्युपक्रमात् "इदं सर्वं यदयमात्मा" इत्युपसंहाराच्च आत्मस्वरूपपरमेकमिदं वाक्यम् । अतो यथा "जामि वा एतत्क्रियते" इत्युपक्रमात् "उपांशुयाजमन्तरा यजतेऽजामित्वाय" इत्युपसंहारादेकवाक्यत्वे स्थिते, तदन्तर्गतानां "विष्णुरुपांशु यष्टव्यः" इत्यादीनां न पृथग्विधित्वम्, एवं न केवलं "निदिध्यासितव्यः" इत्यादयस्तदन्तर्गता न पृथग्विधयः, अपितु यस्मादीदृक्स्वरूपोऽयमात्मा, तस्मात् दर्शनादिकमर्हतीत्येवम् अर्हे कृत्य-

स्मरणात् स्तुतिपरः । पृथग्विधिपरत्वे तु तेषामुपक्रमोपसंहारयोरेकार्थानुवृत्ताववगतमेकत्वं हीयेतापि । "तत्त्वमसि" इत्यत्राश्रुतविधौ स्वरूपनिष्ठे या विधिकल्पना, साप्यध्याहारादिप्रमाणाभावात् स्वमतिकल्पितेत्युपेक्षा । P. 155-6
"पूषा प्रपिष्टभागः" इत्यत्र तु नाकृते पेषणे पूषा प्रपिष्टभागो भवतीत्यर्थात् पेषणकर्तव्यतावगमः । तस्मात्त्रिस्त्रः खलु ब्रह्मणि प्रतिपत्तय इत्यत्रोक्तस्य त्रिविधस्यापि ज्ञानस्य विध्यसंभवात् विधिं विनापि वेदान्तवाक्यादर्थप्रतीतेरपौरुषेयत्वेन वानपेक्षत्वाद्भूतेऽप्यर्थे वेदान्तानां प्रामाण्यसिद्धिरित्ययमनन्तरकाण्डोक्तकृत्स्नार्थोपसंहारः । इदं तु सूत्रकृतोऽपि संमतम् । "तत्तु समन्वयात्" इति तुशब्देन चोदनालक्षणाद्धर्माद् ब्रह्म पृथक्; तत्तु, समन्वयः पदानामन्योन्यसंसर्गो विनियोगवाच्यः, तद्गम्यं न चोदनागम्यमित्युक्तम् ।

ननु वेदाध्ययनानन्तरम् "अथातो धर्मजिज्ञासा" इति धर्मस्योपलक्षणत्वात्कृत्स्न एव वेदार्थो जिज्ञास्यतया प्रतिज्ञातः । तेन कृत्स्न एव वेदार्थे चोदनालक्षणसूत्रेण चोदना प्रमाणत्वेनोक्ता । इत्थं च कृत्स्ने वेदार्थे चोदना प्रमाणं भवति, यदि मन्त्रार्थवादोपनिषदां चोदनैकवाक्यत्वेनापृथग्वेदत्वं स्यात्; नान्यथा । एवं च कृत्स्न एव वेदश्चोदना । सा च कार्यैकविषयेत्यविशेषेण कार्य एवार्थे कृत्स्नो वेदः प्रमाणमिति सूत्रकृतोक्तम् । अतः सूत्रविरुद्धमुपनिषदां भूतेऽर्थे प्रामाण्यम् । नैतत्सारम् । एवं हि चोदनाप्रामाण्याधीना चेत् वेदार्थस्य कार्यात्मता, ततश्चोदनाप्रामाण्यात् प्रागसिद्धस्य कार्यात्मनो वेदार्थस्यानुवादासंभवात् न चोदनाप्रामाण्यानुवादेनैव वेदार्थो विचार्यतया प्रतिज्ञेयः । सिद्धं चानूद्यते । तत्रानन्तरमौत्पत्तिकसूत्रेण चोदनाप्रामाण्यप्रतिपादनं न युज्येत । किंचैवं सति प्रमेयलक्षणं स्यात्, न प्रमाणलक्षणम् । तत्र द्वितीयाध्यायादौ "प्रथमाध्याये प्रमाणलक्षणं वृत्तम्" इति यदुक्तं तदपि न युज्येत । किंचात्रैव यदि कृत्स्नवेदस्य कार्यार्थता निर्णीता, ततो मन्त्रार्थवादयोः कार्यार्थत्वे विप्रतिपत्तिरुपरिष्टान्न स्यात् । सा चोपरिष्टाद्वेदार्थवादाद्यधिकरणेन निरसिष्यते । तस्मादेवमादिदोषदुष्टत्वादस्य पक्षस्य, धर्ममात्रजिज्ञासैव तत्र प्रतिज्ञाता; तत्रैव चोदना प्रमाणमुक्तम्, न कृत्स्नवेदार्थ इत्यलमतिप्रसङ्गेन ।

किंच अननुवादत्वमपौरुषेयागमजत्वेनादुष्टकारणजत्वं निरपेक्षत्वं च
कार्ये प्रामाण्यकारणत्रयं, तत्सिद्धेऽप्यर्थे समानम् । अतस्तत्रापि प्रामाण्यं
P.155-18 युक्तमित्याह — यथेति । अन्येषां प्रत्यक्षादिमानानां, व्यतिभेदः संस्पर्शः,
तेन मुक्ता मतिः अपौरुषेयागमलब्धजन्मा कार्येऽर्थे यथा निरपेक्षत्वात्प्रामाण्यमुपैति, तथा सिद्धेऽप्यर्थ इत्यर्थः । तत्रान्यमानेत्यनेनाननुवादत्वमुक्तम्; अपौरुषेयेति कारणदोषराहितत्वम्; निरपेक्षभावादिति संवादकप्रमाणानपेक्षत्वमिति विवेकः ।

इति श्रीब्रह्मसिद्धिव्याख्याने शङ्खपाणिकृते
नियोगकाण्डव्याख्यानं समाप्तम् ॥

---

ओम्

# ब्रह्मसिद्धिव्याख्या शङ्खपाणिकृता ।

---

## चतुर्थः (सिद्धि)काण्डः ।

इदानीमप्रामाण्यवादी चोदयति—नन्विति । न तावद्ब्रह्मादिपदानि P. 156-1.
ब्रह्मणि प्रमाणम्, तेषां संबन्धज्ञानापेक्षित्वात्; प्रमाणान्तरेण पूर्वसिद्धेऽर्थे ज्ञानहेतुत्वेनासिद्धे ब्रह्मणि सामर्थ्याभावात् । न च वाक्यम्; न हि तत्साक्षाद्वाचकम्, अपितु गुणप्रधानभावेन परस्परान्वितपदार्थद्वारेण विशिष्टार्थबोधकम् । अन्यथा ह्यपदार्थज्ञोऽपि वाक्यार्थं प्रतीयात् । न त्वेवम् । अतश्च पदार्था एव परस्परसंस्पृष्टा वाक्यार्थ इति स्थिते ब्रह्मणोऽपदार्थत्वेन न वाक्यगम्यत्वम् । पदार्थत्वे तु पदानामधिगतविषयत्वादन्य एकः प्रमाणान्तरगोचरो ब्रह्मपदार्थः स्यात् । अतश्च आम्नायैकगम्यत्वप्रतिज्ञा हीयेतेत्यभिप्रायः । न संसृज्येरन्निति; संसर्गो वाक्यार्थ इति मतेनोक्तम् । स च पदार्थानामन्योन्यमन्वयः । न भिद्येरन्निति; भेदो वाक्यार्थ इति मतेनोक्तम् । स चातद्व्यावृत्तिः; यथा 'नीलमुत्पलम्' इति अनीलानुत्पलयोः । चोदना इत्यपौरुषेयवचनाभिप्रायम् । न हि चोदनात्र विचार्यतया प्रस्तुता । परस्य वा पूर्वोक्तन्यायेन कृत्स्न एव वेदश्चोदनात्मक इति तदभिप्रायेणेदमुक्तम् । अपूर्वपदार्थावगम इति प्रमाणान्तरापूर्वस्य ब्रह्मपदार्थस्यावगम इत्यर्थः । सा हीत्यादिना कार्य एवापौरुषेयं वचः प्रमाणमिति सिद्धमित्युक्तं भवति । नन्वप्रामाण्ये निष्फलत्वाद्वेदान्तानां त्रैविद्यपरिग्रहः कथमित्याशङ्क्य, त्रैविद्येत्यादिना प्रयोजनमुक्तम् ।

एवमपदार्थत्वात् ब्रह्म न वाक्यार्थ इति चोदिते प्रतिविधीयते—सामान्येनेति । यथा सामान्येन लोके पक्षिणः प्रमाणान्तराधिगतस्य संबन्धज्ञानसंभवात्पदार्थत्वे सिद्धे मरतकपादत्वादिभिरनन्यपक्षिसाधारणैर्गुणैरपूर्वस्य प्रमाणान्तरानधिगतस्य पक्षिविशेषस्य वाक्येन प्रतिपादना भवति; तथा कारणमात्रस्य सन्मात्रस्य वा सामान्येन कारणपदार्थत्वे सत्पदार्थत्वे वा लोकसिद्धे, अस्य जगत्कारणविशेषस्य स्थूलादिसकलविशेषरहितस्य "यतो

वा इमानि" "अस्थूलम्" इति च वाक्यद्वयेन लोकसिद्धपदार्थकेन प्रतिपादना शक्येत्यर्थः। एतदुक्तं भवति—यथा सामान्येन लोकसिद्धस्य पक्षिपदार्थस्य मरकतपदादिभिर्लोकसिद्धैरेव पदार्थैः संसर्गादपूर्वपक्षिविशेषप्रतिपत्तिः, तथा लोकसिद्धस्य कारणसामान्यस्य "यतो वा इमानि भूतानि" "अस्थूलम्" इत्यादिभिर्लोकसिद्धैः पदार्थैः संसर्गादपूर्वं जगतः कारणमपेतसमस्तविशेषं प्रतीयते। अतो नानवबोधकत्वं न चानुवादकत्वं वेदान्तानामिति।

P.157-10 परिहारान्तरमाह—सर्वेति। पर एवैकः प्रकाशोऽविद्याकल्पितेन तेन तेन नीलादिरूपेण सर्वेषु प्रत्ययेषु वेद्यते भासते; वेद्य इत्यविवक्षितकर्मकनिर्देशः; तथाहि- सर्वत्र नीलादिविशेषे प्रकाशसामान्यमनुगतमेकमवभासते। न ह्यप्रकाशमाने प्रकाशे किंचित्प्रकाशते। तथाच "स एष नेति नेत्यात्मनः" इति भेदोपसंहारेणावशिष्टं सामान्यरूपं ब्रह्म सत्यं प्रदर्शितम्। अथ "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति दृष्टान्तात् सर्वभेदानुस्यूतस्य मृत्तिकावत्कारणमात्रस्य सत्यत्वं दर्शितम्। तेन मृत्तिकेव घटादिष्वत्यन्तं प्रसिद्धं ब्रह्म। अतः पदार्थत्वाद्वाक्यार्थत्वमिति भावः। ननु सर्वप्रत्ययसिद्धं चेद्ब्रह्म, किं तर्हि शब्दैः प्रतिपाद्यत इत्याशङ्क्याह—प्रपञ्चस्येति। सप्रपञ्चं तत्सिद्धम्, अप्रपञ्चं त्वस्थूलादिशब्देन प्रतिपाद्यते। न चात्राप्रतीतपदार्थत्वात् संसर्गाप्रतीतिः, नञर्थस्य स्थूलादेश्च प्रसिद्धत्वादिति भावः। नन्वेवं प्रमाणान्तरगोचरत्वं ब्रह्मणः प्राप्तम्, अतः कथमाम्नायैकगोचरत्वं प्रतिज्ञातमित्याशङ्क्याह—प्रविलीनेति। प्रपञ्चरूपेण मानान्तरात्सिद्धम्, अप्रपञ्चरूपेण न सिद्धमिति प्रमाणान्तरागोचरमुच्यत इत्यर्थः।

परः पुनरन्यथा प्रत्यवतिष्ठते—नन्विति। तत्रोच्यते—प्रमाणस्येति। उपेक्षापि प्रमाणफलमिष्टम्। न च पुरुषार्थवत्ता प्रमाणलक्षणम्, अपितु परिच्छेदकत्वम्; तच्चात्राप्यस्तीति भावः। एतच्च परास्कन्दनमात्रम्; तत्त्वतस्तु नाध्ययनविधिविषयस्य तुल्यसांप्रदायिकस्योपेक्षाफलत्वमुचितम्। न जपार्थताध्ययनविधेः, अर्थविबोधार्थत्वादित्यपरितोषात्परिहारान्तरमाह—अपिचेति। ननु ज्ञानादन्यत्पुरुषार्थात्मकं फलं दृश्यते, यत्र ज्ञानं स्वयम-

पुरुषार्थः । इदं तु निर्दोषस्वभावात्मतत्त्वज्ञानमज्ञानोत्थशोकाद्यनिष्टनिवर्तकत्वादिष्टस्यानन्दस्याविर्भावाच्च स्वयं पुरुषार्थो मतम् । अतो नापुरुषार्थत्वम्, न च पुरुषार्थान्तरापेक्षेति भावः । विरुद्धभावोत्पत्तिरेव पूर्वनिवृत्तिः । अतो ज्ञानमेवाज्ञानोत्थशोकादिनिवृत्तिर्नान्येति तन्निवृत्तिर्ज्ञानमिति सामानाधिकरण्यनिर्देशः । न च वाच्यम् -बाधितमपि शोकित्वादिमिथ्याज्ञानमविद्यासंस्कारादनुवर्तते, ततस्तस्य निवृत्तिरेव नास्ति; कथं सा आशास्यात्मतत्त्वज्ञानस्य फलमिति; यतो यद्यपि तदनुवर्तते, तथापि यथा सत्यत्वेनाभिमन्यमानं तदविद्यावन्तं पुरुषमभिनिवेशयद्विह्वलयति, नैवमुत्पन्नज्ञानदृढीकृतशोकित्वादिज्ञानमिथ्यात्वं शाब्दमात्मनोऽशोकित्वादिज्ञानमनुसंदधानम् । न हि मायासुवर्णज्ञानमबाधितं यथा पुरुषमभिनिवेशयति, तथा बाधितम् । न च शोकित्वादिमिथ्याज्ञानं संस्कारादनुवर्तमानं सन्न निवर्तत एव, अपितु क्रमेण निवर्तते । भवति च व्यवहितमपि फलम् , यथा स्वर्गादि । दृष्टश्च ज्ञानोत्पत्तेः पुरुषार्थत्वमित्याह—कस्मिन्निति । यथाश्चर्यविशेषमतिशयेन दिदृक्षोः कस्यचित्कुतूहलिनः तद्दर्शनाकुलितस्य दुःखिनस्तद्दर्शनमेव तद्दुःखापनोदि पुरुषार्थः, तथेत्यर्थः । किंच यदि प्रवृत्तिनिवृत्तिविषयस्यैव पुरुषार्थतेति नियमः स्यात्, ततो भूतार्थनिष्ठानां वेदान्तानामपुरुषार्थता स्यात्; न चैवमस्ति, प्रत्यक्षादिषु व्यभिचारादित्याह—अक्षादाविति । प्रवृत्तिग्रहणमुपलक्षणम् , निवृत्तिरपि द्रष्टव्या । P. 158-8.

अथ प्रत्यक्षादिज्ञेयं सलिलादिवस्तु तत्र पुरुषार्थः; तेन हि पुरुषस्य स्नानपानाद्युपकारः क्रियते; अतः प्रत्यक्षादीनां सिद्धार्थनिष्ठानामपि स्वप्रमेयद्वारेण पुरुषार्थतेत्युच्यते, तत्रापि वेदान्तजन्यतत्त्वज्ञानेन ज्ञेयं ब्रह्म पुरुषजरादिदुःखोपशमानन्दात्मकत्वाच्च सुप्रसन्नं स्वयमेव पुरुषार्थः । सलिलादेः पुरुषार्थहेतोर्विशेषप्रदर्शनार्थं स्वयमित्युक्तम्, यत एव च ब्रह्म स्वयं पुरुषार्थो लभ्यो भवतीति श्वेतकेतुमुखेनानुशासनीयाय शिष्याय "तत्त्वमसि" इत्यभिन्नं ब्रह्म शिष्यं उपदिश्यते । तथा चोक्तम्—"आत्मलाभान्न परं विद्यते" इति । अभिन्नं हि इत्यादिवृत्तेरयमर्थः—तद्धि शिष्यात् भिन्नम् , अभिन्नमप्यविद्यया भेदेन प्रतीयमानम् , उभयथापि न पुरुषार्थत्वम् । अभेदे तु यथोक्तस्य ब्रह्मणः 'तदेवाहम्' इति शिष्यस्य तादात्म्यज्ञाने च, शिष्यस्य तथाभावात् यथोक्तब्रह्मभावात् सर्वेषामाध्या-

P. 159-9. त्मिकादिदुःखात्मकानामशिवानामकल्याणानामुपशमात् , परमस्य चानन्दाख्य-शिवस्य च भावात् पुरुषार्थ आप्तो भवतीति । दुःखोपशमसुखे प्रत्येक-मसंपूर्णावन्यत्र पुरुषार्थौ; इह तूभयमपि; अतः पूर्ण इत्युक्तम् । परस्या-मुत्तरकालिक्यां हानोपादानादिप्रवृत्तावङ्गत्वात्प्रत्यक्षादीनां प्रामाण्यमिति चेत् , एवं तर्हि शब्दात्प्रमिते ब्रह्मणि तत्साक्षात्करणायोपासनादिप्रवृत्तेर्वेदान्तजज्ञानस्य तदङ्गत्वे इष्यतामपुरुषार्थानां वेदान्तानां प्रामाण्यमिति भावः । इतिः ग्रन्थकरणपरिसमाप्तौ ॥

इति श्रीब्रह्मसिद्धिव्याख्याने शङ्खपाणिकृते

चतुर्थ(सिद्धि)काण्डव्याख्यानं

समाप्तम् ॥

॥ ब्रह्मसिद्धिव्याख्यानं समाप्तम् ॥

---

## APPENDIX I.

ब्रह्मसिद्धिव्याख्योदाहृतानां वाक्यानामकारादिक्रमेणा-
नुक्रमणिका.

2

## MADRAS GOVERNMENT ORIENTAL MANUSCRIPTS SERIES.

---

1. Sarvasiddhāntasaṅgraha of Śrī Śaṅkarācārya. Edited with an English translation by Rao Bahadur M. Rangacharya, M.A., 1909. Price Re. 0-12-0

2. Gaṇitasārasaṅgraha of Mahāvīrācārya. Edited with English translation and Notes by Rao Bahadur M. Rangacharya, M.A., 1912. Price Rs. 2-4-0

3. Padyacūḍāmaṇi of Buddhaghoṣa. Edited by Rao Bahadur M. Rangacharya, M.A. and S. Kuppuswami Sastri, M.A. with a commentary written by Pandits K. Venkateswara Sastri and D. S. Satakopacharya, 1921. Price Rs. 2-8-0

4. Brahmasiddhi of Maṇḍanamiśra and a Commentary thereon by Śaṅkhapāṇi. Edited by Mahāmahopādhyāya Vidyāvācaspati S. Kuppuswami Sastri, M.A., with a Foreword by Vidyāsāgara Vidyāvācaspati P. P. S. Sastri, B.A. (Oxon), M.A. (Madras), 1937. Price Rs. 7-12-0

5. Mahābhāṣya of Patañjali with Kaiyaṭa's Pradīpa, Annambhaṭṭa's Uddyotana and Nīlakaṇṭhadīkṣita's Prakāśa, with English translation, etc. Edited by Vidyāsāgara Vidyāvācaspati P. P. S. Sastri, B.A. (Oxon), M.A. (Madras) (in the press).




## PRESS ASSOCIATION OFFICE-BEARERS

The annual general body meeting of the Press Association, New Delhi, on Saturday elected the following office-bearers for 1960-61: Mr J. P. Chaturvedi (president), Mr Sailen Chatterji (vice-president), Mr G. M. ... (secretary), Mr S. R. Ba... (joint secretary) and Mr A. J. George (treasurer).

Members of the executive: Mr P. Ramaswamy, Mr D. B. Karnik, Mr M. L. Rustogi, Mr T. S. Nilakantan and Mr Mohammed Sabir Suleiman.

Panel for the executive: Mr S. Bhatia, Mr R. Rangarajan and Mr R. Satkopan.

... The Committee also decided to exempt the Harijan huts on Reading Road from scavenging charges. Originally the Committee proposed to levy Re 1 for keeping each of the huts clean.

The civic body referred to its financial adviser the question of writing off more than Rs 10,000 recoverable from people who were once municipal employees and who migrated to Pakistan.

The meeting appointed a sub-committee to prepare a scheme for shops selling foodstuffs. The NDMC had earlier admitted that it had no clear-cut policy with regard to these shops which had no water taps and sewer connections and where food was prepared "in the most primitive conditions."

## At The Cinema

# BETWEEN LOVE AND MONEY

BY OUR FILM CRITIC

KALA BAZAR (Regal, Majestic, Alka, Eros): The chief flaw in this film is that it deals with two themes (black market and love) and in so doing inevitably develops its second flaw—the inordinate length of nearly 17,000 ft. Mr Vijay Anand, youngest of the three Anands, who writes, directs, and also acts, has not been able to make up his mind whether to make it a boy-meets-girl type of movie or a stark social drama. The result is that the story swings from ... and their ... to ...

... may have a lot of witty things to say about it or pinch, some dames in the process but that would not turn a good serious film into a comedy. Alec Guinness, a near genius himself, fills the role of a half-genius, half-tramp painter, to perfection and towers above what the Hollywood critics call the "zany comedy".

There is a lot of sense and little braying in *The Horse's Mouth*.

• • • •

RIO BRAVO (...): Another ...

## Plan To Remodel Tihar Village

BY A STAFF CORRESPONDENT

The Delhi Municipal Corporation proposes to discuss with the Union Rehabilitation Ministry the question of remodelling Tihar Village.

Giving this information to the villagers, Mr K. N. Sahni, Deputy Mayor, said on Saturday that the DMC had earmarked Rs 6 lakhs for amenities in the West Delhi colonies.

Filtered water to the colonies on Najafgarh Road would be supplied in nine months.

## Probe Into Cloth Prices Demanded

BY A STAFF CORRESPONDENT

The Delhi Hindustani Mercantile Association on Saturday urged the Government to institute an inquiry to determine whether the mills or the traders were responsible for the recent rise in cloth prices.

A spokesman of the Association alleged that the cloth prices were being increased by the mills and that the traders had no alternative but to follow suit.

Opposing the railways' proposal to enhance freight charges, he pointed out that the trade was already "over-burdened" with taxes.



... Saturday that Punjab had achieved its second Plan target for food production within three years.

The Minister was speaking on "Progressive Punjab" at the Punjab Government pavilion at the World Agriculture Fair. He said the State had made great strides in other fields too.

Mr Harbans Lal, Deputy Minister for Law and Order, said that any move for a further division of Punjab would not be tolerated.

Prof. Abdul Majid Khan, member of the Punjab Public Service Commission, said there was no student indiscipline in the State and Punjab could take legitimate pride in the fact that 25 per cent of the budget was being spent on education.

## FLOWER SHOW AT UNIVERSITY

BY A STAFF CORRESPONDENT

Over 1,200 entries—a record number—have been received for the annual flower show of Delhi University, opening on Tuesday.

Participation in the show is restricted to university departments, constituent colleges and staff members.

Mrs H. A. Helb, wife of the Netherlands Ambassador, will give away the prizes.

## STUDENTS PRESENT DANCE-DRAMA

BY OUR BALLET CRITIC

The students of the Modern School, New Delhi presented a dance-drama, 'Meera,' on Saturday to celebrate the Founder's Day of the school.

Produced by Narendra ...